मधुकोशव्याख्या ।

कफगुल्मं हरतः । उक्तं हि चरके-"कफे लंघनसाध्ये तु कर्तरि ज्वरगुल्मयोः। तुल्येऽपि देशकालादौ लंघनं न च संमतम्" इति। तथा-"न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डुरोगिणम्" इति। यत्तु व्याधिहरं तदवश्यं दोषहरं तद्व्याधिं शमयत्तदारम्भकदोषमपि शमयति; अन्यथा स रोगो जित एव न स्यात्, कारणतादवस्थ्यात्-इति। तन्नातिसङ्गतम्, इत्यन्ये । यतो दोषस्तत्र समवायि निमित्तं वा। न च समवायिनिमित्ताभावप्रयुक्तो नियमेन कार्याभावः, किन्त्वसमवायिनिमित्ताभावप्रयुक्तोऽपि, यथा-कपालमालासंयोगस्यासमवायिकारणस्याभावाद्घटाभावः; तथा रोगेऽपि संप्राप्तिलक्षणस्य संयोगस्य विनाशाद्रोगस्यापि विनाशः । दोषस्तु स्वतः क्रियान्तरेण वा निवर्तते । किंच, यदि व्याधिप्रत्यनीकमवश्यं दोषं निवर्तयेदिति स्वीक्रियते, तदोभयप्रत्यनीकाद्भेदो दुरुपपादेयः स्यादिति। ननु, यदि निमित्तकारणं दोषस्तत्कथं तदारब्धविकारे वमनादिना दोषहरणं विधीयते ? न हि दण्डकुलालाद्युच्छेदे घटोच्छेद इति । उच्यते, यत्र यावन्निमित्तस्थायिकार्यं तत्र निमित्तकारणनाशादपि कार्यनाशः; यथा-वर्तितैलनाशाद्दीपनाशः; तथाभूताश्च दोषाः प्रायश इति। अन्नं यथा-अतिसारे स्तम्भनं मसूरादि। विहारो यथा-उदावर्ते प्रवाहणम्। मन्त्रौषधिविधारणवल्युपहारनियमप्रायश्चित्तहोमगुरुदेवशुश्रूषादयोऽपि व्याधिविपरीता विहारा इति वाप्यचन्द्रः । अथ हेतुव्याधिविपरीतानि। औषधं यथा-वातशोथे दशमूलं वातहरं शोथहरं च । यदुक्तं चरके षड्विरेचनशताश्रितीयेऽध्याये-"पाटला" इत्यादि यावत्-"दशेमानि शोथहराणि" इति। अन्नं यथा-वातकफग्रहण्यां तक्रम्। शीतवातोत्थे ज्वरे पेया। सा ह्युष्णवीर्यत्वाद्वातं हन्ति प्रभावाज्ज्वरं च। यदुक्तं चरके-"ज्वरघ्नो ज्वरसात्म्यत्वात्" इति। सुश्रुते च-"ज्वरे चैवातिसारे च यवागूः सर्वदा हिता" इति । विहारो यथा-स्निग्धदिवास्वप्नप्रजातायां तन्द्रायां रूक्षं तन्द्राविपरीतं रात्रिजागरणमिति । अथ हेतुविपरीतार्थकारीणि। औषधं यथा-पित्तप्रधाने पच्यमाने व्रणशोथे पित्तकर उष्ण उपनाहः। अन्नं यथा-तत्रैव व्रणशोथेऽन्नं विदाहि। विहारो यथा-वातोन्मादे त्रासनमिति। अथ व्याधिविपरीतार्थकारीणि। औषधं यथा-छर्द्यां वमनकारकं मदनफलम् । अन्नं यथा-अतिसारे विरेचनार्थं विरेचनं क्षीरम् । विहारो यथा-छर्द्यां वमनार्थं प्रवाहणमिति।

आतङ्कदर्पणव्याख्या ।

हेतुव्याधिविपरीतो विहारो यथा-स्निग्धायां दिवास्वप्नजायां तंद्रायां रूक्षं तंद्राविपरीतं स्निग्धताहरणं च रात्रौ जागरणमिति । अथ हेतुविपरीतार्थकारी औषधं यथा-पित्तप्रधाने पच्यमाने व्रणशोथे पित्तकर उष्ण उपनाहः। हेतुविपरीतार्थकार्यन्नं यथा-पित्तशोथेऽन्नं विदाहि। हेतु-

मधुकोशव्याख्या ।

अथ हेतुव्याधिविपरीतार्थकारीणि । औषधं यथा—अग्निप्लुष्टे उष्णोऽगुर्वादिलेपः, विषे वा विषम्। अन्नं यथा—मद्यपानोत्थे मदात्यये मदकारकं मद्यम् । विहारो यथा—व्यायामजनितसंमूढवाते जलप्रतरणरूपव्यायाम इति । ननु, छर्द्यां बहुश्लेष्मजायां वमनयोग्यायां यदि वमनं न क्रियते तदा चिरानुवर्ती रोगोऽनुच्छेद्यो वा स्यात्, ततश्च वमनं प्रयुक्तं दोषप्रत्यनीकमेव भवति । यदुक्तं सुश्रुते—"छर्दिषु बहुदोषासु वमनं हितमुच्यते" इति । एवमग्निप्लुष्टेऽप्युष्णक्रियया रक्तस्य विलयनेन स्थानान्तरगमनात् हेतुप्रत्यनीकत्वं । अन्यथा रक्तं दाहप्रकुपितं तत्रस्थं पाकमारभेत् । यदुक्तं सुश्रुते—"अग्निना कोपितं रक्तं भृशं जन्तोः प्रकुप्यति । ततस्तेनैव वेगेन पित्तमस्याप्युदीर्यते इति । शीतक्रिया च तत्र निषिद्धा, रक्तस्य स्त्यानत्वहेतुत्वात् । यदाह सुश्रुतः—"प्रकृत्या ह्युदकं शीतं स्कन्दयत्यपि शोणितम्। तस्मात्सुखयति ह्युष्णं न तु शीतं कथंचन" इति । स्कन्दयति स्त्यानीकरोति। तथा जंगमविषे ऊर्ध्वगस्वरूपे मौलविषमधोगस्वरूपं हेतुविपरीतमेव। यदुक्तं चरके—"विषं विषघ्नमुक्तं यत्प्रभावस्तत्र कारणम् । ऊर्ध्वानुलोमिकं यच्च तत्प्रभावप्रभावितम्" इति । अस्यायमर्थः—विषत्वाविशेषेऽपि कुतो गतिभेद इत्यत उक्तं प्रभावप्रभावितमिति। तथा मद्यकृते मदात्यये यन्मद्यं तदपि मातुलुंगचुक्रादियुतं सुश्रुतादिभिर्विहितं केवलाच्च द्रव्यान्तरसंयुक्तमन्यदेव, अथ वा वातमदात्यये रूक्षमाध्वीकादिना जनिते स्निग्धपैष्टिकादिमद्यं प्रयुज्यमानं हेतुविपरीतमेव। यदुक्तं सुश्रुते—"यथा नरेन्द्रोपहतस्य कस्यचिद्भवेत्प्रसादस्तत एव नान्यतः । ध्रुवं तथा मद्यहतस्य देहिनो भवेत्प्रसादस्तत एव नान्यतः" इति । तन्मद्यजातीयाभिप्रायेणैव । यच्चोरुस्तम्भे जलप्रतरणं तत्रापि जलस्य शैत्येन बहिरनिर्गच्छन् देहोष्मा लिप्तकुम्भकारपवनन्यायेनान्तःपिण्डितौ मेदःश्लेष्माणौ विलाययति । व्यायामश्च तौ शोषयति, ततश्च निरावरणो वायुः स्वमार्गप्रतिपन्नो भवतीति हेतुप्रत्यनीकत्वं । अनेनैव न्यायेन सर्वमेव तदर्थकारि यथासंभवं हेतुप्रत्यनीकादावेवान्तर्भवतीति। उच्यते, यद्यप्येवं तथाप्यवान्तरवैधर्म्यप्रतिपादनार्थमाचार्यैः

आतङ्कदर्पणव्याख्या ।

विपरीतार्थकारी विहारो यथा—वातोन्मादेन्नाशनमिति । अथ व्याधिविपरीतार्थकार्यौषधं यथा—कफे वमनकारकं मदनफलादि । व्याधिविपरीतार्थकार्य्यन्नं यथा—अतीसारे विरेकक्रुत्क्षीरम् । व्याधिविपरीतार्थकारी विहारो यथा—छर्द्यामंगुष्ठोत्पलनालादिना वमनं वमनविरेकाभ्यां छर्द्यतीसारयोर्वृद्धिरेव कर्तुं युक्ता । इह तु शमनकारणाद्विपरीतार्थकारित्वम् । अथ हेतुव्याधिविपरीतार्थकार्य्यौ-

**यथा दुष्टेन दोषेण यथा चानुविसर्पता॥**
**निर्वृत्तिरामयस्यासौ संप्राप्तिर्जातिरागतिः॥१०॥**

मधुकोशव्याख्या।

पृथग्दर्शितम्। तथा चरकेऽप्युक्तं–"उपशयः पुनर्हेतुव्याधिविपरीतानां विपरीतार्थकारिणामौषधाहारविहाराणामुपयोगः सुखानुबन्धः" इति। वैधर्म्यं च हेतुसमानधर्मकत्वेऽपि रोगप्रशमकत्वमिति। विपरीतोऽनुपशय इति। औषधादीनां दुःखकर उपयोगोऽनुपशय इत्यर्थः। तत्पर्यायमाह–व्याध्यसात्म्य इति। व्याधिग्रहणेन दोषोऽपि बोध्यः। ननु, अनुपशयः किं व्याधिविशेषं बोधयति नो वा? नेति चेत्, तदुपन्यासो निदाने व्यर्थः, प्रतिपादयतीति चेत्, 'विज्ञानं रोगाणां पञ्चधा' इति व्याहन्येत, तस्य षष्ठत्वापत्तेः। नैवं, प्रतिपादयत्येव; यदाह चरकः–"गूढलिङ्गं व्याधिमुपशयानुपशयाभ्यां परीक्षेत" इति। किंतु निदाने तस्यान्तर्भावो दोषस्य रोगस्य च वर्द्धकत्वात्–इत्यनुपशयस्य निदानेऽन्तर्भावान्न षष्ठत्वापत्तिः। वक्ष्यति च–"निदानोक्तोऽनुपशयः" इति। इत्युपशयलक्षणम्॥ ८॥ ९॥ संप्राप्तिमाह–यथेत्यादि। नानाविधा हि दोषाणां दुष्टिः प्राकृता वैकृता वा, अनुबन्ध्यरूपा अनुबन्धरूपा वा, एकशो द्विशो वा, समस्ता वा, रूक्षादिभिः समस्तैर्भावैः अल्पैर्वा एवमादिदुष्टिदुष्टेन दोषेण आमयस्य रोगस्य निर्वृत्तिरुत्पत्तिः असौ संप्राप्तिरुच्यते। यथा चानुविसर्पतेति अनेकधा दोषाणां विसर्पणं गतिः ऊर्ध्वाधस्तिर्यगा-

आतङ्कदर्पणव्याख्या।

नर्थं यथा–अग्निप्लुष्टे उष्णो गुर्वादिलेपः। वधे विषम्। हेतुव्याधिविपरीतार्थकार्यन्नं यथा–मद्यपानोत्थे मदात्यये मदकारकं मद्यम्। हेतुव्याधिविपरीतार्थकारी विहारो यथा–व्यायामजनिते मूढवाते जलप्रतरणरूपो व्यायाम इति। एवमपरोऽपि बोद्धव्याः। औषधान्नविहाराणामित्युपलक्षणं, तेन देशकालावपि बोद्धव्यौ॥ ८॥ हिशब्दः पादपूरणे। स उपशयो व्याधेरामयस्य सात्म्यमिति स्मृतः। दुष्टिगुणविपरीतो य आहारो विहारश्च प्रायेण स व्याधिसात्म्यः। उक्तं च चरके–"देशानामामयानां च विपरीतगुणं गुणैः। सात्ममिच्छंति सात्म्यज्ञाश्चेष्टितं चाद्यमेव च" इति। उपशयकथनप्रस्तावादनुपशयोऽपि वाच्य इति। विपरीत इत्यादि–अतो यथानिर्दिष्टलक्षणादुपशयाद्यो विपरीतलक्षणः स अनुपशय इत्युच्यते, स एवं व्याधेरसात्म्यमितिसंज्ञितः। आभिमुख्येन संकेतित इति॥ ९॥ अथ संप्राप्तिलक्षणमाह–येन प्रकारेण दुष्टः कुपितो वाताद्यन्यतमो दोषो यथा दुष्टस्तेन यथा दुष्टेन दोषेण यथा चानुविसर्पता देहमनुधावता सन्निवेशविशेषेण गच्छता प्रत्यामयं या निर्वृत्तिरुत्पत्तिर्निर्दिष्टा सा संप्राप्तिः। सा च जातिरागतिश्च कथ्यते पर्यायशब्दत्वेन व्याधिजन्यसंप्राप्तिरित्येके। यथा–ज्वरस्य मलमूत्रेत्यादिलक्षणलक्षिता। तत्र मलानामामाशयप्रवेशनेन, तथा चानु

**संख्याविकल्पप्राधान्यबलकालविशेषतः ॥**
**सा भिद्यते यथात्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥ ११ ॥**

मधुकोशव्याख्या ।

दिभेदेन तथा विसर्पता संसर्पता । संप्राप्तिपर्यायावाह शास्त्रे व्यवहारार्थं लक्षणार्थं च जातिरागतिरिति । जात्यादिभिः शब्दैर्योऽर्थोऽभिधीयते सा संप्राप्तिरिति । जातिरागतिरिति जन्माऽपि ज्ञानकारणम्, अजातस्य ज्ञानाभावात्—इत्याह हरिचन्द्रः । एतेनैतदुक्तं भवति—न हि निदानादिवद्बोधकत्वेन ज्ञानकारणत्वं, किंतु बोधविषयत्वेन। तन्न इत्यन्ये, आलोकचक्षुरादेरिव एवंविधसंप्राप्तेश्चिकित्सायामनुपयोगात् । न चास्ति नियमः जातमेव ज्ञायत इति, अजातस्यापि व्याधेर्निदानपूर्वरूपाभ्यां वृष्ट्यादेरिव मेघादिना ज्ञायमानत्वात् । अथ जातमिति जन्मावच्छिन्नमुच्यते वृष्ट्यादिकं च भविष्यजन्मावच्छिन्नमेव यस्य तु कालत्रयेऽपि जन्म नास्ति तन्न ज्ञायत एव । तथापि न व्याधिजन्म संप्राप्तिः, जन्मवदालोकचक्षुरादेरपि वाच्यत्वापत्तेः, तैरपि विना ज्ञानाभावात् । तस्माद्दोषेति कर्तव्यतोपलक्षितं व्याधिजन्मेह संप्राप्तिः, न तु केवलं जन्म । वाग्भटेनापि 'यथा दुष्टेन' इत्यादि वदता विशिष्टमेव व्याधिजन्म संप्राप्तिरुक्ता । तथा सति क्रियाविशेषोऽपि लभ्यते । यथा—ज्वरे आमाशयदूषणाग्निहननादिबोधे लंघनपाचनस्वेदादिकरणमिति । संप्राप्तिश्चैवंविधा यद्यपि दोषाणामवान्तरव्यापारत्वेन दोषग्रहणेन प्राप्यते, तथापि चिकित्साविशेषार्थमेव पृथक् क्रियते; यथा—व्याधेर्ज्ञापकत्वाविशेषेऽपि पूर्वरूपमेव रूपात्पृथगिति ॥ १० ॥ तस्या औपाधिकभेदमाह—संख्येत्यादिना, सा भिद्यत इत्यन्तेन । अत्र च प्राधान्योपादानादप्रा—

आतङ्कदर्पणव्याख्या ।

गमनेन, तथा स्रोतोनिरोधेन, तथा च पक्तिस्थानाज्ज्वलननिरसनेन । तथा च तेनैव जाठरेण वह्निना, तथाभिसरणेन सकलं गात्रमुष्णं कुर्वता एवंविधयात्मप्राप्त्या ज्वरोऽयमिति निश्चीयते । एवमतीसारादिष्वप्येवंविधैव संप्राप्तिः ॥ १० ॥ अथ संप्राप्तिभेदानाह—सा च संप्राप्तिः संख्यादि

---

१ अत्रैकेऽन्त्यकारणव्यापारजन्यं व्याधिमात्रं सम्प्राप्तिमाहुस्तदर्थकानां शब्दानां निदानादिवद्व्याधिबोधकत्वाभावेऽप्यनुत्पन्नस्य ज्ञानाभावादुपलम्भकत्वं बोधयन्ति, तच्चान्ये नानुमन्यन्ते, निदानपूर्वरूपाभ्यामनुत्पन्नव्याधेरपि भावित्वेनोपलम्भात्, व्याधिजन्मैव सम्प्राप्तिः व्याधिविशेषबोधिका यथा ज्वरे "स यदा प्रकुपितः प्रविश्यामाशयम्" इत्यारभ्य—"तदा ज्वरमभिनिर्वर्तयति" इत्यन्तेन।न चामाशयदूषकत्वेन कारणधर्मत्वान्निदानग्रहणेन गृहीता स्यादिति वाच्यम् । कारणधर्मोऽपि व्याधिजनकदोषविशेषबोधकत्वेन सम्प्राप्तिशब्देन पृथगुच्यते । यथा लिंगत्वाविशेषेऽपि पूर्वरूपं पृथगुच्यते ॥

**दोषाणां समवेतानां विकल्पोंशांशकल्पना ॥**
**स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ॥१२॥**

मधुकोशव्याख्या ।

धान्यं च तत्प्रतियोगितया बोद्धव्यम् । अत एव विवरणे स्वातन्त्र्यपारतन्त्र्याभ्यामिति वक्ष्यति । एवं बलेऽपि व्याख्येयम् । संख्यादिकमेव विवृणोति-यथेत्यादि । अष्टौ ज्वरा इति संख्याविवरणम् । अष्टत्वं च वातादिकारणभेदात्, एकजास्त्रयो द्वन्द्वजास्त्रयः सन्निपातजश्चैक आगन्तुजश्चैक इति । यद्यपि वृद्धैर्दोषैः सन्निपातास्त्रयोदश, यदुक्तं चरके-"द्व्युल्बणैकोल्बणैः षट् स्युर्हीनमध्याधिकैश्च षट् । समैश्चैको विकारास्ते सन्निपातास्त्रयोदश" इति । तथाप्यत्र त्रिदोषजत्वसामान्यात्सान्निपातिक एकत्वेन गणितः । एवं कामशोकभयाद्यनेककारणजोऽप्यागन्तुज आगन्तुत्वसामान्यादेकत्वेन निर्दिष्ट इत्यष्टौ ज्वरा इति । विकल्पं विवृणोति-दोषाणामित्यादि । दोषाणां समवेतानां परस्परसंबद्धानां; तेन द्वन्द्वसन्निपातयोर्ग्रहणम् । अंशांशकल्पनेति । अंशा वातादिगतरौक्ष्यादयः, तैरेकद्वित्र्यादिभिः समस्तैर्वा वातादिकोपावधारणं विकल्पना । यदुक्तं सुश्रुते-"सर्वैर्भावैस्त्रिभिर्वापि द्वाभ्यामेकेन वा पुनः । संसर्गे कुपितः क्रुद्धं दोषं दोषोऽनुधावति" इति । एवंविधश्च दोषकोपो निदानवैचित्र्याद्भवति । तद्यथा-वातस्य रौक्ष्यशैत्यलाघववैशद्यादिगुणस्य एवंगुणः कषायरसः कलायश्च सर्वैरंशैर्वर्द्धकः, तथा रौक्ष्यशैत्यलाघवैस्तण्डुलीयकः, रौक्ष्यशैत्याभ्यां काण्डेक्षुः, रौक्ष्येण सीधुः; पित्तस्य सर्वैर्भावैर्वर्द्धकः कटुको रसो मद्यं च, हिङ्गु कटुतीक्ष्णोष्णत्वैः, दीप्यकः तैक्ष्ण्यौष्ण्याभ्याम्, औष्ण्येन तिलाः, तथा श्लेष्मणः सर्वैर्भावै-

आतङ्कदर्पणव्याख्या ।

विशेषेण भिद्यते संख्या च विकल्पश्च प्राधान्यं च बलञ्च कालश्च त एवं तैः । विशेषः संख्याविकल्पप्राधान्यबलकालविशेषस्तस्मात्सांप्राप्तिर्बहुधा संपद्यते । तत्र संख्याविशेषो यथा-इहैवास्मिन्ग्रंथे संवक्ष्यते अष्टौज्वरा इति ॥११॥ एवमपि पञ्च कासा इति पञ्च गुल्मा इत्यादि, एवमादयः संख्याविशेषाः संप्राप्तिभेदाः । संख्यानंतरं विकल्पं विवृणोति-दोषाणां वातादीनां समवेतानामेकस्मिन् व्याधौ संघट्टितानामंशांशविभागेन कार्यानुमेयेनानुमानेन । यथा-पर्वतोऽयं वह्निमान् धूमवत्त्वात् इतिवन्निरूपणं सविकल्पः । अंशश्च अंशश्च, अंशांशौ । ताभ्यां कल्पना अनेकविधो विशेषः । वातादिगतत्वात् रौक्ष्यादिको यथा-किमयं वातः सर्वैर्गुणैः कुपितः त्रिभिः किं द्वाभ्यां किं वैकेन । किमिदं पित्तं सर्वैर्गुणैः कुपितं, किं त्रिभिः, किं द्वाभ्यां, किमेकेन । किमयं श्लेष्मा सर्वैं रसैः कुपितः,

हेत्वादिकार्त्स्न्यावयवैर्बलाबलविशेषणम् ॥
नक्तंदिनर्तुभुक्तांशैर्व्याधिकालो यथामलम् ॥ १३ ॥

मधुकोशव्याख्या ।

वर्द्धका मधुररसः माहिषं च पयः, स्नेहगौरवमाधुर्यै राजादनफलं, कशेरुः शैत्यगौ-रवाभ्यां, शैत्येन क्षीरिणी कल्याण—इति । अपरगुणोदाहरणप्रकारा जेज्जटगयदा-वाप्यचन्द्रव्याख्याविशेषाश्च विस्तरत्वभयेनेह न लिखिताः । प्राधान्यं विवृणोति—स्वातन्त्र्यपारतन्त्र्याभ्यामिति । अनुबन्ध्यानुबन्धभावेनेत्यर्थः । अत्रापि दोषाणां समवेतानामित्यनुवर्तनीयम् । अप्राधान्यं च इति शेषः, गम्यमानत्वान्नोपदिष्टम् । तेन स्वातन्त्र्यात्प्राधान्यं पारतन्त्र्यादप्राधान्यमिति सिध्यति । बलं विवृणोति—हेत्वा-दीत्यादि । हेतुपूर्वरूपरूपाणां साकल्याद्व्याधेर्बलवत्त्वं, तेषामवयवैनैकदेशेनाबल-त्वम् । कालं विवृणोति—नक्तमित्यादि । नक्तं रात्रिः, दिनमहः, ऋतवो वसन्ता-दयः, भुक्तमाहारः,एषामंशा एकदेशाः; व्याधिकालो व्याधेर्वृद्धिशान्तिहेतुकालः । अत्र ऋतोरंशाः कतिपयान्यहोरात्राणि । यदाह वाग्भटः—"ऋत्वोरन्त्यादिसप्ताहावृतुस-न्धिरिति स्मृतः" इति । अथ वा संवत्सररूपस्य कालस्य ऋतुरूपांश ऋत्वंश इत्येव-मपि योज्यं, न त्वेकस्य ऋतोर्दिनादिवदादिमध्यान्ता ऋत्वंशाः, ऋतोः समुदितस्य तत्र कारणत्वेनोक्तत्वात् । यथामलं यथादोषं; तद्यथा—रात्रेरादौ श्लेष्मा, मध्ये पित्तं, शेषे वायुः, एवं दिनस्य । वसन्ते कफस्य, शरदि पित्तस्य, वर्षासु वायोः कोपः; एवं भुक्तादौ भुक्तमात्रे कफस्य, मध्ये पच्यमानावस्थायां पित्तस्य, अन्ते सम्यक्परिणते

आतङ्कदर्पणव्याख्या ।

स्यैवंगुणश्च कषायो रसः कषायरसः कलायश्च सर्वैरंशैश्च वायोर्वर्द्धकः । रौक्ष्यशैत्यलाघवैस्त्रिभि-स्तंडुलीयकः, रौक्ष्यः शैत्याभ्यां कांडेक्षुः, रौक्ष्येणैकेन गुणेन सीधुः, तथा सर्वैरंशैः कट्वम्लतीक्ष्णो-ष्णैः पित्तस्य कटुको रसो मद्यञ्च । कट्वम्लतीक्ष्णैर्हिंगुर्दीप्यकं तीक्ष्णोष्णाभ्याम् । उष्णेनैकेनतिलाः। एवं सर्वैरंशैः स्नेहगौरवमाधुर्य्यशैत्यगुणस्य श्लेष्मणो मधुरो रसः माहिषं पयश्च, स्नेहगौरवमाधुर्यै राजादनफलम् । केसरुः शैत्यगौरवाभ्याम् । शैत्येनैकेन मृणालं श्लेष्मवर्द्धकम् । एवमपरेपि ज्ञेयाः । दोषाणामिति बहुत्वे पृथग्ग्रहणं समवेतानामिति द्वंद्वसन्निपातयोर्ग्रहणम् । उक्तं हि सुश्रुते—"सर्वैरंशै-स्त्रिभिर्वापि द्वाभ्यामेकेन वा पुनः । संसर्गे कुपितः क्रुद्धं दोषं दोषोनुधावति ॥" अथ प्राधान्यं विवृणोति—स्वातंत्र्यं च पारतंत्र्यं च, ताभ्यां प्राधान्यं व्याधेरादिशेत् । अप्राधान्यं चेति शेषः। स्वातन्त्र्य-स्य व्याधेः स्वनिर्दिष्टोपक्रमसाध्यत्वात्प्राधान्यं यथा ज्वरस्य ॥१२॥ अथ बलाबलं विवृणोति—कृत्स्नस्य भावः कार्त्स्न्यं च अवयवाश्च तैः, बलं च अबलं च बलाबले व्याधिसंबंधिनी तयोर्विशेषणम् । विशि-ष्टताबलाबलविशेषणम् । तद्यथासंख्येन कार्त्स्न्यावयवैरादिशेत् । आदिशब्देन प्राग्रूपादयो गृह्य-

**इति प्रोक्तो निदानार्थस्तद्व्यासेनोपदेक्ष्यते ॥**
**सर्वेषामेव रोगाणां निदानं कुपिता मलाः ॥ १४ ॥**

मधुकोशव्याख्या ।

वायोरिति । तदुक्तं वाग्भटेनैव—"ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः । वयोहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात्" इति । अत्र ते इति क्रमेण वात-पित्तश्लेष्माणः । ननु, संप्राप्तिभेदे चरकेण संख्यादिवद्विधिरप्युक्तः; यथा—"द्विविधा व्याधयो निजागन्तुभेदेन" "द्विविधं रक्तपित्तम्" इत्यादि; तत्कुतोऽत्र-विधिर्नोक्तः? उच्यते, संख्याग्रहणेन विधेरवरोधः, तस्याव्यभिचरितसंख्यायोगित्वात् । विधिसंख्ययोश्चायं भेदः, विधिर्हि प्रकारः स चाभिन्नजातीयानामेव कस्यचिद्धर्मान्तरस्यान्वयाद्भवति, यथा—रक्तपित्तत्वाविशेषेऽपि ऊर्ध्वगादिप्रकारो भवति, संख्या तु भिन्नत्वमात्रेऽपि, यथा—चत्वारो घटाः, अष्टौ ज्वरा इति । अत्रैव विधिर्हि प्रकारः स च भिन्नेषु न युक्तः अतः संख्यादिभिन्नेष्वपि कारणधर्मानुगतप्रकारो युज्यते । तथा च न्यायविदो ब्रुवते—समानेन धर्मेण परिग्रहो भेदानां यत्र क्रियते स विधिः, संख्या तु भेदमात्रमिति वैयाकरणा अपि व्याचक्षते, अन्वयवान्प्रकारो निरन्वयो भेद इति वाप्यचन्द्रो लिखितवान् । ननु, यथांशांशविकल्पनादिना ज्वरो ज्ञायते न तथा संख्यया । उच्यते, संख्याभेदेन व्याधेर्दोषभेदो ज्ञायते, यतो ज्वरादिकं स्वरूपतो ज्ञात्वा चिकित्सार्थं विशेषो जिज्ञास्यः कतमोऽयं ज्वर इति । अत्र यदुत्पन्न एवासौ दोषभेदाद्भिन्नो जातस्ततो युक्तमस्य पर्येषणं कतमोऽयमिति ॥ ११ ॥ ॥ १२ ॥ १३ ॥ उक्तनिदानपञ्चकमुपसंहरति—इति प्रोक्तो निदानार्थ इति । इतिशब्दः

आतङ्कदर्पणव्याख्या ।

ते । तेषां साकल्याद् व्याधेर्बलत्वं तेषामवयवैकदेशेनाबलत्वम् । तत्र प्रतिरोगं यन्निदानमुद्दिष्टं तत्किं कार्त्स्न्येनास्य व्याधेरुत्पादकमुतैकदेशेन? एवं प्राग्रूपमपि किं तत्समस्तव्याधेर्लक्ष्यते उताव्यवयवैरेकेन च? उपशयोऽप्यस्य व्याधेस्तर्पणातर्पणरूपः । स किं कार्त्स्न्येन सुखानुबंधं करोति उतावयवेन च । तत्र कार्त्स्न्येन यथा रक्तशाल्यादिमांसघृतक्षीरदधिवसामज्जातैलादिना, अवयवेन यथा-रक्तशालिना मांसाद्यन्यतमैकेन वा, एवमन्यदपि चिन्त्यम् । कालं विवृणोति—नक्तं रात्रिः, दिनमहः, ऋतवो वसन्तादयः, भुक्तमाहारः, एषामंशैरादिमध्यांतलक्षणैरेकदेशैर्वा तैर्यथामलं यथादोषं व्याधि-कालः । व्याधिवृद्धिहानिहेतुकालः । यथा रात्रिमुखे श्लेष्मा, मध्ये पित्तं, शेषे वायुः । एवं दिनस्यापि पूर्वाह्णे श्लेष्मा, मध्याह्ने पित्तम्, अपराह्णे वायुः । एवं ऋतुषु वसंते श्लेष्मा, ग्रीष्मे पित्तं, वर्षासु वायुः कुप्यति । एवं भुक्तमात्रे कफस्य, मध्ये पच्यमानावस्थायां पित्तस्य, सम्यक्परिणतौ वायोः कोपः । अत्र संवत्सररूपस्य कालस्य ऋत्वंश इति योज्यं, न तु एकस्य ऋतोर्दिनादिवत् । केचन ऋत्वंशः कतिपयाहोरात्राणि कथयंति । यदुक्तं वाग्भटे—"ऋत्वोरंत्यादिसप्ताहावृतुसंधिरिति स्मृतः" ॥ १३ ॥ उक्तनिदानप्रपञ्चमुपसंहरति । इतिशब्दः प्रकारे । अनेन संक्षेपाख्येन प्रकारेण यथा निर्दिष्टेन

मधुकोशव्याख्या ।

समासौ । निदानशब्दोऽत्र सामान्यवचनः, अर्थोऽभिधेयः । तन्निदानं संक्षेपेण स्वरूपलक्षणमात्रेणोक्तम्, अधुना व्यासेन विस्तरेण उपदेक्ष्यते कथयिष्यते; सकलेन ग्रन्थेन प्रतिरोगं निदानपूर्वरूपादय एव तत्तद्विशेषैर्वक्तव्या इत्यर्थः ॥ द्विविधं हि रोगस्य कारणं विप्रकृष्टं सन्निकृष्टं च; तत्र विप्रकृष्टं विरुद्धाहारादि, सन्निकृष्टं वातादि, तस्य वातादेः सर्वरोगेष्वव्यभिचरितकारणत्वमाह--सर्वेषामित्यादि । यदाह चरकः--"नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः । अनुक्तमपि दोषाणां लिङ्गैर्व्याधिमुपाचरेत्" इति । आगन्तुव्याधिषु यद्यप्युत्पत्तौ दोषकोपो नास्ति, तथाऽप्युत्पत्त्यनन्तरमवश्यम्भावी; उत्पन्नद्रव्ये गुणयोगवत् । यदुक्तं चरके--"आगन्तुर्हि व्यथापूर्वसमुत्पन्नो जघन्यं वातपित्तश्लेष्मणां वैषम्यमापादयति" इति । निदानं कारणम् । मला दोषाः, मलिनीकरणात् । ननु, वातादीनां किमिदं दोषत्वम् । अत्राहुरेके--स्वातन्त्र्येण दूषकत्वं दोषत्वं, रसादिदूष्यव्यवच्छेदार्थं 'स्वातन्त्र्येण' इति पदम्; ते हि वातादिदुष्टाः सन्तो दूष्यान्तरदूषकाः । अत्राहुरन्ये--किमिदं स्वातन्त्र्यं ? किं दोषान्तरनिरपेक्षत्वं ? हेत्वन्तरनिरपेक्षत्वं वा ? आद्ये वातस्यैव दोषत्वं स्यात्, न तु वातसापेक्षयोः कफपित्तयोः। यदुक्तम्--"पित्तं पंगु कफः पंगुः पङ्गवो मलधातवः । वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत्" इति । द्वितीये वातस्यापि न दोषत्वं, कफपित्तयोरिव निदानसापेक्षस्यैव तस्य दूषकत्वात् । तस्मात् "प्रकृत्यारम्भकत्वे सति दुष्टिकर्तृत्वं दोषत्वम्" इति लक्षणम् । रसरक्तादिनिवृत्त्यर्थं प्रकृत्यारम्भकत्वमिति विशेषणम्। न हि वातादिप्रकृतिवच्छास्त्रे रसरक्तादिप्रकृतिरुक्ता, वातादिप्रकृतित्वं च शरीरस्य वातादिदूषितशुक्रशोणितारब्धत्वम् । यदाह चरकः-"दोषानुशयिता ह्येषां देहप्रकृतिरुच्यते" तथा--"वातलाद्याः सदातुराः" इति । सुश्रुतेनापि प्रकृतिलक्षणे "वातप्रकृतिः स्फुटितचरणो जागरूकोऽनवस्थितचित्तः" इत्यादि पठितम् । प्रकृतिरोगयोश्चायं विशेषः--प्रकृतिरपथ्यसेवया नात्यन्तं बाधते, यदुक्तं--"विषजातो यथा कीटो विषेण न विपद्यते । तद्वत्प्रकृतिभिर्देहस्तज्जातत्वान्न बाध्यते" इति संक्षेपः । विस्तरस्तु सुश्रुतश्लोकवार्तिके प्रश्नविधानाख्ये टीकासु च द्रष्टव्यः । ननु, प्रकृत्यारम्भकत्वं दोषत्वमित्येवास्तु । सत्यं, विपक्षाद्व्यावृत्तिर्भवत्येव किंतु दोषस्वरूपत्वं नोक्तं स्यादिति । सुश्रुतादिभिर्वातादेरिव प्रकोपकालप्रकोपणनिर्हरणस्थानविशेषरोगविशेषलिङ्गविशेषचिकित्साविशेषाणामभिधानाद्रक्तस्यापि दोषत्वं

आतङ्कदर्पणव्याख्या ।

निदानार्थो निदानाभिधेयः समासतः संक्षेपतः कथितः । निदानशब्दोऽत्र सामान्यं प्राग्रूपादिषु य एव निदानार्थः समासेन प्रोक्तस्तमेव व्यासतो विस्तरेण उपदेक्ष्यते, कथयिष्यते । ते सकलेन ग्रंथेन

**तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥**
**निदानार्थकरो रोगो रोगस्याप्युपजायते ॥ १५ ॥**
**तद्यथा ज्वरसन्तापाद्रक्तपित्तमुदीर्यते ॥**
**रक्तपित्ताज्ज्वरस्ताभ्यां शोषश्चाप्युपजायते ॥ १६ ॥**

मधुकोशव्याख्या।

पूर्वटीकाकारैराषाढधर्मदासादिभिः स्वीकृतं तदप्येतेन व्यवच्छिन्नम्, अधुनातनैरस्वीक्रियमाणत्वात्। ननु, दोषाश्चेत्कारणं तर्हि तेषां सर्वदा इह सद्भावात्सर्वदा रोगोत्पादकत्वप्रसङ्ग इत्यत आह—कुपिता इति, विकृतिमापन्नाः। ननु, तत्प्रकोपः स्वभावात्? कारणान्तराद्वा? नाद्यः, पूर्ववत्प्रसङ्गात्। अथ कारणान्तरादिति किं तदित्याह—विविधाहितसेवनमिति। विविधस्य नानाविधस्य, अहितस्यासात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामलक्षणस्य सेवनमिति ॥ १४ ॥ ननु, किमेतदेव निदानमुताऽन्यदप्यस्तीत्यतश्चरकवचनमुपन्यस्यति—निदानार्थकर इत्यादि। अपिशब्दोऽत्र भिन्नक्रमे। रोगोऽपि निदानार्थकरो रोगस्य। अयमर्थः—निदानेन योऽर्थः क्रियते व्याध्याख्यः स रोगेणापीति। रोगोऽपि रोगकर इति वाच्ये यन्निदानार्थकर इत्यकरोत्, तेनैवं गमयति रोगोऽपि रोगान्तरं कुर्वाणो निदानान्तरोपबृंहितबल एव करोतीत्येवं रोगो रोगस्य निदानमुपजायते इत्येव योजना ॥ १५ ॥ अत्रैव दृष्टान्तमाह—तद्यथेत्यादि। ताभ्यामिति रक्तपित्तात् ज्वराच्च। दुःखमिति दुःखं पीडाकरम्। अयं च दुःखशब्दो लिङ्गविपरिणामेन सर्वेष्वेव ज्वरादिषु योज्य इति वाप्यचन्द्रः। गुल्मश्चाप्युपजायत इति अर्शोभ्य एव। कासात्संजायते क्षय इति ओजःप्रभृतीनामिति शेषः। स च क्षयो रोगस्य हेतुत्वे उपजायते। कस्य रोगस्येत्याह शोषस्येति राजयक्ष्मणः।

आतङ्कदर्पणव्याख्या।

प्रतिरोगं निदानपूर्वरूपादय एवं तत्तद्विशेषैर्वक्तव्या इत्यर्थः। सन्निकृष्टकारणत्वेन वातादीनां सर्वरोगेष्वव्यभिचरितकारणमाह—कुपितत्वेन हि धातूनां मलिनीकरणदोषा एव मला इत्युच्यन्ते। कुपिता विकृतिमापन्ना वातपित्तकफाः सर्वेषामेव रोगाणां निदानं कारणम् ॥ १४ ॥ तत्प्रकोपस्येति। तदित्यनेन वातादयः परामृश्यन्ते। तस्य तु वातादिप्रकोपस्य निदानं कारणं विविधं नानाप्रकारमहितसेवनमहितानुष्ठानं प्रोक्तं कथितम्। ननु किमेतदेव निदानमन्यदप्यस्तीत्याह—रोगस्य व्याधेः रोगोऽपि निदानार्थकर उपजायते। निदानेन योऽर्थः क्रियते व्याध्याख्यः स रोगेणापीत्यर्थः ॥ १५ ॥ अत्रैव दृष्टांतमाह—तद्यथेति। कारणभूतात् ज्वरसंतापात् रक्त-

**प्लीहाभिवृद्ध्या जठरं जठराच्छोथ एव च ॥**
**अर्शोभ्यो जाठरं दुःखं गुल्मश्चाप्युपजायते ॥ १७ ॥**
**( दिवास्वापादिदोषैश्च प्रतिश्यायश्च जायते )**
**प्रतिश्यायादथो कासः कासात्संजायते क्षयः ॥**
**क्षयो रोगस्य हेतुत्वे शोषस्याप्युपजायते ॥ १८ ॥**
**ते पूर्वं केवला रोगाः पश्चाद्धेत्वर्थकारिणः ॥**
**कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति ॥ १९ ॥**

---

मधुकोशव्याख्या ।

अत्र केचित् हरिचन्द्रादिभिर्व्याख्यातं पाठान्तरं पठन्ति--"क्षयो रोगस्य हेतुत्वे शोषश्चाप्युपजायते" इति । अस्यायमर्थः--क्षयो राजयक्ष्मा, रोगः उरःक्षतः, समाहारद्वन्द्वेनैकवचनं तस्य हेतुत्वे शोषो धातुक्षय उपजायत इति । ननु, चरके सर्वं निदानं त्रैविध्येन संगृहीतम्--"असात्म्येन्द्रियार्थसंयोगः" इत्यादिना, ततश्च रोगस्यापि निदानत्वमाचक्षाणः स्वोक्तं निदानत्रैविध्यसंग्रहं कथं न विरुणद्धि । अत्रैके समाधिमभिदधति, त्रिविधं यन्निदानमुक्तं तत्सर्वव्याधिविषयम्, इदं तु प्रतिनियतविषयं, यतो न सर्वे रोगा रोगाज्जायन्ते. किं तर्हि कश्चिदेव व्याधिः कुतश्चिद्रोगाज्जायते चतुर्थमेवैतन्निदानं रोगाख्यमिति । अन्ये त्वाहुः--रोगस्य रोगोऽपि निदानं भवन् त्रिविधनिदानव्यतिरेकेण न भवत्येव,यतो यावदयं ज्वरोऽसात्म्येन्द्रियार्थसंयोगादिभिरुपबृंहितबलो न भवति न तावद्रक्तपित्तमारभते, तस्मात् व्याध्युत्पादे त्रिविध एव हेतुः साक्षात्पारम्पर्येण वेति ॥१६॥१७॥१८॥ ननु, य इमे रोगा रोगान्तरस्य निदानत्वेनोक्तास्ते किमुत्पन्नमात्रा एव रोगं जनयन्ति, उतानन्तरकालं वा, इत्यत आह--ते पूर्वमित्यादि। ते व्याधय उपबृंहकहेत्वलाभात् प्राक् केवलाः स्वतन्त्राः रोगा रुजाकर्तृ-

आतङ्कदर्पणव्याख्या ।

पित्तमुदीर्यते उत्पाद्यते । ताभ्यां रक्तपित्तज्वराभ्यां श्वासश्च उपजायते ॥ १६ ॥ प्लीहाभिवृद्ध्या जठरमुदरविकारस्तस्मात् जठरात् शोफः अर्शोभ्य एव जठरं गुल्मश्चाप्युपजायते दुःखमिति । दुःखं पीडाकरं दुःखशब्दो लिंगविपरिणामेन सर्वेष्वेव ज्वरादिषु योज्यः ॥ १७ ॥ अथ प्रतिश्यायात्कासो जायते, कासात्क्षयः संजायते । ओजःप्रभृतीनामिति शेषः । स च क्षयः रोगस्य हेतुत्वे उपजायते । कस्य रोगस्येत्याह--शोषस्येति ॥१८॥ ते व्याधयः प्राक् केवलाः स्वतंत्राः संतो रोगा एव, रुजाकर्तृत्वात् । ऊर्ध्वमुपबृंहकहेतुलाभाद्धेतोर्निदानस्य योऽर्थः प्रयोजनं व्याधिजन-

**न प्रशाम्यति चाप्यन्यो हेतुत्वं कुरुतेऽपि च ॥**
**एवं कृच्छ्रतमा नृणां दृश्यन्ते व्याधिसंकराः ॥ २० ॥**
**तस्माद्यत्नेन सद्वैद्यैरिच्छद्भिः सिद्धिमुद्धताम् ॥**
**ज्ञातव्यो वक्ष्यते योऽयं ज्वरादीनां विनिश्चयः ॥ २१ ॥**
**इति श्रीमाधवकरविरचिते माधवनिदाने पञ्चलक्षणनिदानं समाप्तम् ॥ १ ॥**

---

मधुकोशव्याख्या ।

त्वात्पश्चादुपबृंहकहेतुलाभात् हेतोर्निदानस्य योऽर्थः यत्प्रयोजनं व्याधिजननाख्यं तत्कुर्वन्ति । यथा ज्वरात् रक्तपित्तमिति ॥ तस्यैव रोगजनकस्य व्याधेर्वैचित्र्यमाह--कश्चिदित्यादि । एवमुक्तप्रकारेण व्याधिसंकरा व्याधिमेलका दृश्यन्ते । यथा—प्रतिश्यायो न निवर्तते, कासश्च जायते, अर्शो न निवर्तते, जठरगुल्मौ स्यातामिति । कृच्छ्रतमत्वं चैषां बहुविधदुःखजनकत्वात्, प्रायो विरुद्धोपक्रमाच्चेति ॥ १९ ॥ २० ॥ उक्तनिदानपञ्चकस्य रोगनिवृत्तिलक्षणसिद्ध्यादिहेतुत्वेनावश्यज्ञातव्यतामाह--तस्मादित्यादि । उद्धतां बहुविषयत्वेन महतीम् । विनिश्चयो निदानमिति । अथ वक्ष्यमाणविकारेषु प्रकृतिसमसमवायविकृतिविषमसमवायादिज्ञानार्थं चरकोक्ता वातादिगुणाः लिख्यन्ते--"रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः । विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥ सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं सरं कटु । विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ॥ गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः । श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः" इति ॥ २१ ॥ इति श्रीमा० विजयरक्षितकृतायां मधुकोशव्याख्यायां पञ्चलक्षणनिदानं समाप्तम् ॥ १ ॥

आतङ्कदर्पणव्याख्या ।

नाख्यं कुर्वन्ति, यथा ज्वरो रक्तपित्तमिति । तस्यैव रोगजनकव्याधेर्वैचित्र्यमाह--कश्चिदिति । एवमुक्तप्रकारेण व्याधिसंकरा व्याधिमेलकाः कृच्छ्रतमा दृश्यंते, कथं, कश्चिद्रोगः रोगांतरस्य कारणं भूत्वा स्वयं प्रशाम्यति, अन्यश्च न प्रशाम्यति । यथा प्रतिश्यायो न निवर्त्तते, कासश्चोत्पद्यते, अर्शो न व्यावर्त्तते, जठरगुल्मौ स्याताम् । कृच्छ्रतमत्वं चैषां बहुविधदुःखजनकत्वात्प्रायो विरुद्धोपक्रमत्वाच्च ॥ १९॥ २० ॥ उक्तनिदानपंचकस्य रोगनिवृत्तिलक्षणसिद्ध्यादिहेतुत्वेनावश्यं ज्ञातव्यमाह—तस्मादिति । तस्मात्कारणात् उत्तमां बहुविषयत्वेन महतीं सिद्धिमिच्छद्भिर्वैद्यैर्योऽयं ज्वरादीनां विनिश्चयो वक्ष्यते कथ्यते स यत्नेन ज्ञातव्यः ॥ २१ ॥ इति श्रीमा० वैद्यवाचस्पतिकृते आतंकदर्पणे निदानटीकायां सर्वरोगनिदानादिपंचककथनम् ॥ १ ॥

## अथ ज्वरनिदानम् २.

**दक्षापमानसंक्रुद्धरुद्रनिःश्वाससंभवः ॥**
**ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः ॥ १ ॥**

मधुकोशव्याख्या ।

अथ सर्वरोगप्राधान्यात्प्रथमं ज्वरो वाच्यः । प्राधान्यं च तस्य शारीररोगेषु प्रथमोत्पन्नत्वात् बलवत्वाच्च, देहेन्द्रियमनस्तापित्वाच्च, जन्मनिधनयोरवश्यंभावित्वाच्च, स्थावरजङ्गमरूपसर्वभूतव्यापित्वाच्च, नैवमन्ये विकाराः । यदुक्तं चरके- "देहेन्द्रियमनस्तापी सर्वरोगाग्रजो बली । ज्वरः प्रधानो रोगाणामुक्तो भगवता पुरा ॥ तस्य प्राणिसपत्नस्य ध्रुवस्य प्रलयोदये" इत्यादि-यावद् "भगवन् वक्तुमर्हसि" इति । तथा-"ज्वरेणाविशता भूतं न हि किंचिन्न तप्यते" इत्यादि । उक्तं च वैद्यके-"पाकलः स तु नागानामभितापस्तु वाजिनाम् । गवामीश्वरसंज्ञश्च मानवानां ज्वरो मतः । अजावीनां प्रलापाख्यः करभे चालसो भवेत् । हारिद्रो महिषाणां तु मृगरोगो मृगेषु च । पक्षिणामभिघातस्तु मत्स्येष्विन्द्रमदो मतः । पक्षपातः पतंगानां व्याडेष्वाक्षिकसंज्ञकः" इत्यादि । तथान्यत्र-"जलस्य नीलिका भूमेरूषरो वृक्षस्य कोटरः" इत्यादि । तस्य प्रागुत्पत्तिमाह-दक्षापमानेत्यादि । दक्षापमानेन दक्षप्रयुक्तपरिभवेण क्रुद्धस्य रुद्रस्य निःश्वासात् संभव उत्पत्तिर्यस्य स तथा । निःश्वासोऽत्र क्रोधलिंगत्वेन निर्दिष्टः । अत एव सुश्रुतेन "रुद्रकोपाग्निसंभूतः"

आतङ्कदर्पणव्याख्या ।

अथ सर्वरोगप्राधान्यात्प्रथमं ज्वरो वाच्यः । प्राधान्यञ्चास्य शारीररोगेषु प्रथमोत्पन्नत्वात् बलवत्त्वाद्देहेंद्रियमनस्तापित्वाच्च जन्मनिधनयोरवश्यंभावित्वाच्च स्थावरजंगमभूतव्यापित्वाच्च नैवमन्ये विकाराः । उक्तञ्च चरके "देहेन्द्रियमनस्तापी सर्वरोगाग्रजो बली । ज्वरः प्रधानो रोगाणामुक्तो भगवता पुरा" इति । तथा ज्वरेणाविशता भूतानि कानि न पच्यन्त इति, उक्तं च गजवैद्यके- "पाकलः स तु नागानामभितापस्तु वाजिनाम् । गवामीश्वरसंज्ञस्तु मानवानां ज्वरो मतः ॥ अजावीनां प्रलापाख्यः करभेष्वलसो भवेत् । हारिद्रो महिषाणान्तु मृगरोगो मृगेषु च ॥ पक्षिणामभिघातस्तु मत्स्येष्विंद्रमदो मतः । पक्षपातः पतंगानां व्याडेष्वक्षिकसंज्ञकः" इत्यादि । तथा तन्त्रान्तरेपि "जलस्य निलिका भूमेरूषरो वृक्षस्य कोटरः" इत्यादि ॥ तस्य प्रागुत्पत्तिमाह-दक्षापमानेन दक्षप्रयुक्तपरिभवेन क्रुद्धस्य रुद्रस्य निःश्वासात्संभव उत्पत्तिर्यस्य स तथा निःश्वासोत्र क्रोधलिंगत्वेन निर्दिष्टः । अथ सुश्रुते-"रुद्रकोपाग्निसंभूतः सर्वभूतप्रतापनः" इति । क्रुद्धेन रुद्रेण ललाटे तृतीयमाग्नेयं चक्षुः स्पृष्ट्वा ततोऽप्याग्नेयो बाणो निर्मितः। उक्तञ्च चरके-"स्पृष्ट्वा ललाटे चक्षुर्वै दग्ध्वा तानसुरान्प्रभुः ।

१ 'सर्पमांसात्पशू व्याडौ' इत्यमरः ।

**मिथ्याहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः ॥**
**बहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगाः ॥ २ ॥**

---

मधुकोशव्याख्या।

इत्युक्तम्। क्रुद्धेन रुद्रेण ललाटे तृतीयमाग्नेयं चक्षुः सृष्ट्वा ततोऽप्याग्नेयो बाणो निर्मितः। यदाह चरकः—"सृष्ट्वा ललाटे चक्षुर्वै दग्ध्वा तानसुरान्प्रभुः। बाणं क्रोधाग्निसन्तप्तमसृजच्छत्रुनाशनम्" इति। एषा च ज्वरोत्पत्तिकथा चरकचिकित्सिते सविशेषा श्रोतव्या। एतेन रुद्रकोपस्य विप्रकृष्टकारणत्वमुक्तं, यदि हि ततो ज्वरो नोदपत्स्यत, अधुनाप्यपचारान्नोदपत्स्यत इति भट्टारहरिचन्द्रः। एतदभिधानस्य चिकित्सानुपयोगित्वेनान्ये टीकाकृतोऽन्यथा व्याचक्षते कोपोद्भवत्वेन तैजसत्वं प्रकाश्यते। यदाह चरकः—"क्रोधात्पित्तम्" इत्यादि। तेन सर्वज्वरे पित्ताविरोधिनी क्रिया कार्येति सिध्यति। यदुक्तं वाग्भटेनैव—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना। तस्मात्पित्तविरुद्धानि त्यजेत्पित्ताधिकेऽधिकम्" इति। अत एव चरके कट्वम्ललवणान् पाचनान् परित्यज्य तरुणज्वरे पाचकत्वेन तिक्तको रसः पित्तघ्नो निर्दिष्टः। यदाह—"लङ्घनं स्वेदनं कालो यवागूस्तिक्तको रसः। पाचनान्यविपक्वानां दोषाणां तरुणज्वरे" इति। कालोऽत्राष्टाह इति। अन्ये त्वाहुः—रुद्रकोपसंभवत्वेन दैवतात्मकत्वात् पूजार्हत्वमुपदर्शितम्। यदाह विदेहः—"ज्वरस्तु पूजनैर्वापि सहसैवोपशाम्यति॥"। हरिवंशेऽपि—"ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः। भस्मप्रहरणो रौद्रः कालान्तकयमोपमः" इति मूर्तिमानेवोक्तः। बहुविधमपि ज्वरं संक्षेपेणाह—ज्वरोऽष्टधेति। अष्टत्वं विवृणोति—पृथगित्यादि। तच्च संप्राप्तौ विवृतम्॥१॥ संप्राप्तिमाह—मिथ्येत्यादि। आहारस्य मिथ्यात्वं प्रकृत्यादीनामाहारोपयोगहेतूनां विरु-

आतङ्कदर्पणव्याख्या।

बाणं क्रोधाग्निसंतप्तमसृजच्छत्रुनाशनम्" इति। एतावता क्रोधोद्भवत्वेन तस्य तैजसत्वं प्रकाश्यते। तदुक्तं चरके—"क्रोधात्पित्तम्" इति। तेन सर्वज्वरे पित्ताविरोधिनी क्रिया कार्येति सिध्यति। यदुक्तं वाग्भटे—"ऊष्मा पित्तादृते नास्ति नास्त्यूष्माणं विना ज्वरः। तस्मात्पित्तविरुद्धानि त्यजेत्पित्ताधिकेऽधिकम्" इति। अन्ये त्वाहुः—रुद्रसंभवत्वेन देवतात्मकत्वात्पूजार्हत्वमुपदर्शितम्॥ यथाह विदेहः—"ज्वरस्तु पूजनैर्वापि सहसैवोपशाम्यति"। उक्तं च हरिवंशेपि। "ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः। भस्मप्रहरणो रौद्रः कालांतकयमोपमः" इति मूर्त्तिमानेवोक्तः। बहुविधमपि संक्षेपेणाह—ज्वरोष्टधेति। अष्टधात्वं विवृणोति पृथग्वातिकः, पैत्तिकः, श्लैष्मिकः एवं त्रयः। वातपैत्तिकः, वातश्लैष्मिकः, श्लैष्मपैत्तिकः। एवं द्वंद्वजास्त्रयः। संघातिकः सांनिपातिक एकः, आगंतुज एकः। एवमष्टौ ज्वरा इति॥ १॥ ज्वरस्य संप्राप्तिमाह—मिथ्याहारेति। "अकाले चातिमात्रं च असात्म्यं यच्च भोजनम्। विषमाशनं च यदुक्तं

मधुकोशव्याख्या ।

द्धत्वेनोपयोगः ॥ यदाह चरकः-"तत्र खल्विमान्यष्टावाहारविधिविशेषायतनानि भवन्ति, तद्यथा-प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपयोक्त्रष्टमानि" इति । अत्र प्रकृतिर्द्रव्याणां स्वाभाविकगुरुत्वलघुत्वादिगुणयोगः, यथा—माषमुद्गयोः, करणं संस्कारः, यथा—व्रीहेर्गुरोः लघवो लाजाः,संयोगः संहतीभावः,यथा—क्षीरमत्स्ययोः,राशिराहारस्य द्रवाद्रवस्यावयवेन समुदायेन वा परिमाणम्; देशो द्रव्योत्पत्तिप्रचारादिस्थानम्; कालो नित्यगश्चावस्थिकश्च, उपयोगसंस्था उपयोगनियमः, यथा—जीर्णान्न एव भुञ्जीत; उपयोक्ता स्वयं निरूपितात्मप्रकृत्यादिकः पुरुषः'इति। 'विहारस्य मिथ्यात्वमयथाबलमारम्भादि ।' आमाशयाश्रया इत्यनेनामाशयप्राप्तिव्यतिरेकेण दोषा ज्वरं नारभन्त इति प्रतिपादयन्ति।आमाशयश्च "नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः" इति चरकेणोक्तम् । बहिर्निरस्य कोष्ठाग्निमिति कोष्ठाग्निरेव दोषैराक्षिप्तो बहिर्निर्गत ऊष्मतया प्रतिभाति । कोष्ठाग्निमिति धात्वग्निनिरासार्थम् । ज्वरदा ज्वरकारिणः । रसानुगा रससंबद्धाः, अवश्यं रसं दूषयित्वा ज्वरोत्पादका इति । एषा च संप्राप्तिः शारीराणामेव न त्वागन्तूनां, तेषां व्यथापूर्वकत्वं ततो वाताद्यनुबन्धः, इति जेज्जटः । अत एव सुश्रुते आगन्तुसंप्राप्तिः पृथगेव पठ्यते । यथा—"श्रमक्षताभिघातेभ्यो देहिनां कुपितोऽनिलः । पूरयित्वाऽखिलं देहं ज्वरमापादयेद् भृशम्" इति । अत्र न आमाशयगत एव वायुः किन्तूर्ध्वाधस्तिर्यग्रसवाहिस्रोतश्चरः । चरकेऽप्युक्तम्—"तत्राभिघातजो वायुः प्रायो रक्तं प्रदूषयन् । सव्यथाशोथवैवर्ण्यं करोति सरुजं ज्वरम्" इति । ननु, आगन्तुज्वरेऽपि ऊष्मोपलभ्यते- "ऊष्मा पित्तादृते नास्ति"

आतङ्कदर्पणव्याख्या ।

मिथ्याहारः स उच्यते" । मिथ्याहारो देशकालप्रकृत्यादिविरुद्धः, संयोगविरुद्धश्च क्षीरमत्स्ययोरिव, "अशक्तः कुरुते कर्म शक्तिमान्न करोति च । मिथ्याविहार इत्युक्तः सदा चैव विवर्जयेत्" । मिथ्याविहारोऽयथाबलमारंभः । ईदृशस्य पुरुषस्य आमाशयाश्रया दोषा वातपित्तश्लेष्माणः कोष्ठाग्निं बहिर्निरस्य ज्वरदाः स्युः ज्वरकारिणो भवेयुः । "नाभिस्तनांतरं जन्तोरामाशय इति स्मृतः" । किंविशिष्टा रसानुगाः । रससंबद्धाः रसं दूषयित्वा ज्वरोत्पादका इति । कोष्ठाग्निमिति धात्वग्निनिरासार्थः। एषा च संप्राप्तिः शारीराणामेव न त्वागंतूनां तेषां तु व्यथापूर्वको वाताद्यनुबंधः। उक्तं च सुश्रुते यथा—"श्रमः क्षताभिघातेभ्यो देहिनः कुपितोऽनिलः । पूरयित्वाखिलं देहं ज्वरमापादयेद्भृशम्" इति । उक्तं च चरके—"तत्राभिघातजो वायुः प्रायो रक्तं प्रदूषयेत् । सव्यथाशोथवैवर्ण्यं करोति सरुजं ज्वरम्" इति । नन्वागंतुरपि शारीरः स्यात् । यथा आगंतुज्वरे चोष्मा उपलभ्यते । ऊष्मा च पित्तादृते नास्तीत्युक्तं, मैवम्,उत्तरकाले तदुत्पत्तिः,यदुक्तम् "आगंतुर्हि व्यथा-

**स्वेदावरोधः संतापः सर्वाङ्गग्रहणं तथा ॥**
**युगपद्यत्र रोगे च स ज्वरो व्यपदिश्यते ॥ ३ ॥**

---

मधुकोशव्याख्या ।

इत्युक्तम् । अत आगन्तुरपि शारीरः स्यात् । नैवम्, उत्तरकालं तदुत्पत्तेः । यदुक्तम्–"आगन्तुर्हि व्यथापूर्वो ज्वरोऽष्टमो भवति; स किंचित्कालमागन्तुः केवलो भूत्वा पश्चाद्दोषैरनुबध्यते" तथा–"आगन्तुरन्वेति निजं विकारं निजस्तथागन्तुमपि प्रवृद्धः" इति । ननु, मिथ्याहार इत्यादिना एकैव संप्राप्तिरुक्ता एतच्च न युक्तं, यतः संप्राप्तिः संयोगभेदः संयोगभेदश्च संयोगिभेदनिबन्धनः. संयोगिनश्चात्र वातादयो नानाविधाः, अतः संप्राप्तेरपि नानात्वं स्यात्; न हि वातपित्तयोर्यः संयोगः स एव कफपित्तयोरिति । उच्यते–अनेकैव संप्राप्तिः किंत्वेकजातीया, आशयदृष्ट्यादेः सर्वत्राविशेषणाभिधानात् । एवमागन्तुसंप्राप्तिरपि संयोगभेदाद्भिन्नेति ॥२॥ ज्वरलक्षणमाह–स्वेदावरोध इत्यादि । स्वेदावरोधो घर्मानिर्गमः। ताप इति वक्तव्ये संतापग्रहणाद्देहेन्द्रियमनसां तापं लक्षयति । तदुक्तं चरके–"देहेन्द्रियमनस्तापी" इति । तथा–"वैचित्त्यमरतिर्ग्लानिर्मनःसन्तापलक्षणम्" इति।सर्वांगग्रहणं सर्वांगवेदना । युगपदिति मिलितमेतल्लक्षणं, प्रत्येकशो व्यभिचारात् । स्वेदावरोधो हि कुष्ठपूर्वरूपे, तथा संतापो दाहाख्ये रोगे, सर्वांगग्रहणं सर्वांगवातरोगे इति । ननु, पैत्तिके स्वेदागमात् वातिके विषमारम्भविसर्गित्वेन सर्वांगग्रहणाव्यवस्थितेश्चाव्यापकं लक्षणमिति । अत्र जेज्जटकार्तिककुण्डादयः समादधुः। उत्सर्गापवादभावेन व्यवस्थितिरिति । तन्न संगतमित्यन्ये, विधौ उत्सर्गापवादभावो न तु लक्षणे, अव्याप्त्यतिव्याप्त्योर्लक्षणदोषात् । तस्मात् स्वेदोऽग्निः स्विद्यतेऽनेनेति व्युत्पत्त्या तस्यावरोधो दोषव्याप्तिः । वातज्वरे यद्यपि वायोश्चलत्वेनारम्भविसर्गयोर्वैषम्यं, तथापि सर्वदेहगतज्वरारम्भकदोषप्रदुष्टत्वानिवृत्तेरनुद्भूतसर्वांगग्रहणस्य विद्यमानतैवेति न व्यभिचारः । चरके तु ज्वरलक्षणं "ज्वरप्रात्यात्मिकं लिंगं सन्तापो देहमानसः" इति । ननु, "शारीरो जायते पूर्वं देहे

आतङ्कदर्पणव्याख्या ।

पूर्वो जायते पश्चान्निजैर्दोषैरनुबध्यते" । "आगंतुरन्वेति निजं विकारं निजस्तथागंतुमपि प्रवृद्धम्" इति ॥२॥ ज्वरलक्षणमाह–यत्र यस्मिन् रोगे युगपत् एककाले ईदृशलक्षणं दृश्यते स ज्वरः कथ्यते । स्वेदावरोधः स्वेदानिर्गमः, अन्ये पैत्तिक स्वेदावगमाल्लक्षणे व्यभिचारस्तेन स्वेदोऽग्निः स्विद्यतेऽनेनेति व्युत्पत्त्या तस्यावरोधो दोषव्याप्तिः । संतापः सशब्दाद्देहेन्द्रियमनसः संतापं लक्षयति । सर्वांगग्रहणं सर्वांगवेदनेत्याहुः । स्वेदावरोध इत्यत्र वेगोपरोध इत्यन्ये पठंति । तत्र वेगोपरोधो वातमूत्रपुरीषादीनामनिर्गमनम्, तदयुक्तम्, पित्तज्वरे पुरीषादीनां निर्गमनेन तत्राऽव्याप्तेः ॥ ३ ॥

श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः ॥
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥ ४ ॥
जृम्भाङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः ॥
अप्रहर्षश्च शीतं च भवत्युत्पत्स्यति ज्वरे ॥ ५॥
सामान्यतो विशेषात्तु जृम्भात्यर्थं समीरणात् ॥
पित्तान्नयनयोर्दाहः कफादन्नारुचिर्भवेत् ॥ ६ ॥

---

मधुकोशव्याख्या ।

मनसि मानसः" इति चरकवचनाद्देहमनसोरन्योन्यव्यभिचारादलक्षणमिति चेत्, तन्न, सूक्ष्मतरकालव्यवहितस्यान्यतररूपस्यावश्यंभावित्वात् । यथा-गुणवद् द्रव्यं द्रव्यलक्षणमिति ॥ ३ ॥ पूर्वरूपमाह-श्रमेत्यादि । श्रमः श्रान्तत्वमिव । अरतिरनवस्थितचित्तत्वं, क्रीडाभावोऽरतिरिति कार्त्तिकः । विवर्णत्वं म्लानगात्रत्वम् । यत्तु "दुष्टाः स्वहेतुभिर्दोषाः" इत्यारभ्य "स्वकालेषु ज्वरागमं जनयन्त्यथ बुद्धिं च स्ववर्णं च त्वगादिषु " इति संप्राप्तौ वृद्धसुश्रुतवचनं, तदत्यर्थजृम्भादिवद्विशिष्टपूर्वरूपाभिप्रायेण, संप्राप्त्यवस्थापन्नदोषजन्यत्वात्पूर्वरूपस्येति । वैरस्यमिति मुखस्य विरुद्धरसता । नयनप्लवोऽश्रुपूर्णनेत्रत्वम् । यदुक्तं चरके-"आलस्यं नयने सास्रे" इत्यादि । आदिशब्दादम्बुज्वलनयोरपि अनिश्चितेच्छाद्वेषयोर्ग्रहणम् । उक्तं हि चरके-"ज्वलनातपवाय्वम्बुभक्तिद्वेषावनिश्चितौ" इति । अन्ये तु शैत्यौष्ण्यसाधर्म्याज्जलानलौ ग्राहयन्ति, आदिशब्देन तु शयनासनादिकम् । तमोऽन्धकारप्रविष्टस्येवासं-

आतङ्कदर्पणव्याख्या ।

पूर्वरूपमाह-श्रम इति । श्रांतत्वमिव श्रमः, अरतिरनवस्थितचित्तत्वम् अरतिः क्रीडाभाव इत्यपरे । विवरणत्वं मलिनगात्रता, वैरस्यं मुखस्य, विरसता विरुद्धरसता, नयनप्लवः-अश्रुपूर्णनेत्रत्वम् । शीतवातातपादिषु विषये इच्छाद्वेषौ अभिलाषविद्वेषौ, आदिशब्दादम्बुज्वलनयोर्ग्रहणम् । उक्तं हि चरके-"ज्वलनातपवाय्वंबुभक्तिद्वेषावनिश्चितौ" इति । अन्ये तु शैत्योष्णासाधर्म्याज्जलानलौ गृह्णंति । ते तु आदिशब्देन शयनादिकं मन्यंते ॥ ४ ॥ जृम्भेति । जृंभा-जृंभणम्, अंगमर्दोंगमोटनं, गुरुता गात्राणां, रोमहर्षो-रोमांचः । अरुचिर्भोज्ये तमः-अंधकारप्रविष्टस्येवार्थासंवित्तिः । अप्रहर्षः-आनंदाभावः । शीतमिति-शीतादौ मुहुरिच्छाद्वेषाविति सिद्धे पुनरपि शीतवचनं विशेषेण शीतप्रादुर्भावदर्शनार्थम्, उत्पत्स्यति भाविनि ज्वरे तानि लक्षणानि भवन्ति ॥ ५ ॥ सामान्यमिति भाविनि वातिके ज्वरेऽत्यर्थं जृंभा, पैत्तिके नयनयोर्दाहः, कफजे नान्नाभिनंदनमिति न

**रूपैरन्यतराभ्यां तु संसृष्टैर्द्वन्द्वजं विदुः ॥**
**सर्वलिङ्गसमावायः सर्वदोषप्रकोपजे ॥ ७ ॥**
**वेपथुर्विषमो वेगः कण्ठौष्ठपरिशोषणम् ॥**
**निद्रानाशः क्षवस्तम्भो गात्राणां रौक्ष्यमेव च ॥ ८ ॥**

---

मधुकोशव्याख्या ।

वित्तिः । अप्रहर्षः प्रीत्यभावः । ज्वलनेच्छया शीते लब्धे शीतं चेति वचनं विशेषेण शीतबोधनार्थम् । चकारेण वातप्रद्वेषादिग्रहणमित्याहुः । उत्पतस्यतीति भविष्यति ज्वरे । उत्पतस्यतीति आत्मनेपदानित्यत्वेन; तच्च चक्षिङ इकारेणानुदात्तेनात्मनेपदे सिद्धे तदर्थं ङित्करणेन ज्ञापितमिति शाब्दिकाः।गदाधरस्तु"उत्पित्सति" इति पठित्वा "पद् गतौ" इत्यस्यैव सन्नन्तस्य "सनिमिमीमाघुरभलभशकपतपदाम्" इत्यादिना इसि कृते 'पूर्ववत्सनः' इत्यत्र भिन्नवाक्यतया परस्मैपदम्—इति व्याचष्टे इति ॥४-७॥ वातपित्तकफानां यथापूर्वं भूरिदारुणविकारकर्तृत्वेन प्राधान्यम् । यदुक्तं चरके— "अशीतिर्वातविकाराश्चत्वारिंशतिपित्तविकाराः विंशतिः श्लेष्मविकाराः" इति । तथा दारुणाश्च वातविकाराः आक्षेपकपक्षाघातादयः । अतः प्राधान्यात् प्रथमं वातज्वरलक्षणमाह—वेपथुरित्यादि । एवमन्यत्रापि वातादिक्रमनिर्देशेन बोद्धव्यम् । विषमो वेग इति वेगो ज्वरस्य प्रवृत्तिर्वृद्धिर्वा तस्य वैषम्यमनियतकालत्वम्, अङ्गेषु चौष्ण्याद्यनियतत्वम् । क्षवश्छिक्का 'हाँचि' इति लोके । स्तम्भो गात्राणां जडिमा । रौक्ष्यमपि गात्राणामेवेति गदाधरादयो व्याचक्षते । तच्चानवधानाद्व्याख्यातमिति लक्ष्यते; क्षवस्य स्तम्भः क्षवस्तम्भ इत्येकपदतात्र युज्यते । यदाह वाग्भटः—"हर्षो रोमांगदन्तेषु वेपथुः क्षवथोर्ग्रहः । भ्रमः प्रलापो घर्मेच्छा विलापश्चानिलज्वरे" इति । चरकेऽपि निदाने "क्षवथूद्गारविनिग्रहः" इत्येव पठितम् । विनिग्रहशब्दस्तु तत्र निरोधार्थ एवाचार्येण निर्दिष्टः; यथा वातगुल्मनिदाने—"रुक्षान्नपानं विषमातिमात्रं विचेष्टितं

आतङ्कदर्पणव्याख्या ।

अन्नाभिलाषः ॥६॥७॥वातपित्तकफानां यथापूर्वभूरिदारुणविकारकर्तृत्वेन वायोः प्राधान्यमतस्तत्प्राधान्यात् प्रथमं वातज्वरलक्षणमाह । वेपथुः—कंपः, विषमो वेगो ज्वरस्य हीनाधिकभावेन अंगेषु चोष्माद्यनियतत्वं, कण्ठौष्ठपरिशोषणं सुगमम्। निद्रानाशः तथा क्षवस्तंभः। क्षवः—छिक्का तस्याः स्तंभोऽनिर्गमनम् । केचित्तु क्षव इति भिन्नं पदं पठंति, तन्मते क्षवः ; छिक्का स्तंभो गात्राणां शरीरे नमनाभावः—इत्यादिलक्षणमनिलज्वरे, चरकेपि निदाने—"क्षवथूद्गारविनिग्रहः" इति निग्रहशब्दस्तन्निरोधार्थ एव यथांतर्वेगज्वरलक्षणे दोषवर्चोविनिग्रह इत्येव पठितः । रौक्ष्यं गात्राणामेव । चकारात् कृष्णविण्मूत्रनेत्रत्वं समुच्चीयते । अन्ये तु रौक्ष्यमेवेत्यत्र स्थाने श्यावांगमलमूत्रतेति

**शिरोहृद्गात्ररुग्वक्त्रवैरस्यं गाढविट्कता ॥**
**शूलाध्माने जृम्भणं च भवत्यनिलजे ज्वरे ॥ ९ ॥**
**वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः ॥**
**कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते ॥ १० ॥**

---

मधुकोशव्याख्या ।

वेगाविनिग्रहश्च" इति । तथान्तर्वेगज्वरलक्षणे--"दोषवर्चोविनिग्रहः" इत्येवं पठितम् । एतेन--"ज्वरमुक्तिलक्षणे क्षवस्य भावात्कथमेतल्लक्षणम्" इति यदाशङ्कितं कार्तिकुण्डेन तदपि निरस्तम् । आध्मानं वायुना सवेदनमुदरपूर्णत्वम् । गात्रग्रहणेन शिरोहृद्ग्रहणे सिद्धे तदभिधानं विशेषेण शिरसि हृदि वेदनार्थम् । एतानि रूपाणि प्रायाभावित्वेन निर्दिष्टानि सुश्रुतेन, तेन चकारेणान्यान्यपि चरकनिदानोक्तानि बोद्धव्यानि । तान्येव गद्येनोक्तानि सुखग्रहणार्थं श्लोकेन प्रदर्श्यन्ते--"भवन्ति विविधा वातवेदनाः पादसुप्तता । पिण्डिकोद्वेष्टनं कर्णस्वनो वक्त्रकषायता ॥ ऊरुसादो हनुस्तम्भो विश्लेषः संधिजानुनोः । शुष्ककासो वमिर्लोमदन्तहर्षः श्रमभ्रमौ ॥ अरुणं नेत्रमूत्रादि तृट्प्रलापोष्णकामिता" इति ॥ ८ ॥ ९ ॥ पित्तज्वरलक्षणमाह--वेगस्तीक्ष्ण इत्यादि । अतिसारः पित्तस्य सरत्वेन सद्रवा प्रवृत्तिर्न त्वतिसार एव, तस्य ज्वरोपद्रवत्वात् । निद्राल्पत्वम् अल्पनिद्रात्वम् । उक्तं हि सुश्रुते--"निद्रानाशोऽनिलात्पित्तात्" इत्यादि । वमिः पित्तस्य कफस्थानगतत्वात् । स्वेदो घर्मागमनं, प्रायेण सामदोषेण स्रोतसां निरोधात्सर्वज्वरेषु घर्मनिरोधः । अत्र तु पित्तस्य तैक्ष्ण्यात् ज्वरप्रभावाद्वा स न भवतीति । प्रलापोऽसंबद्धभाषणम् । वक्त्रकटुता मुखतिक्तत्वम् । चरके हि पैत्तिकनानात्मजचत्वारिंशद्विकारमध्ये तिक्तास्यतायाः पाठादनुभवाच्च । कार्तिकस्त्वरोचके--"कट्वम्लमुष्णं विरसं च पूति पित्तेन विद्याल्लवणं च वक्त्रम्" इति वचनं दृष्टान्तमुपन्यस्य कटुमुखत्वमपीच्छति । तन्न, तत्रापि सन्देहात् । यदुक्तं--"कटु स्यात्कटुतिक्तयोः" इति । तस्मात् "योऽम्लं भृशोष्णं कटुतिक्तवक्त्रः पीतं सरक्तं

आतङ्कदर्पणव्याख्या ।

पठंति॥८॥नन्वत्र गात्रग्रहणेन शिरोग्रहणे सिद्धे तदभिधानं विशेषेण शिरसि हृदि वेदनादर्शनार्थं । शिरसि हृदि गात्रेषु रुक्पीडा वैरस्यं विरसता गाढविट्कता बद्धमलता । शूलाध्माने उदरशूलम्, आध्मानं वायुना सवेदनमुदरपूर्णत्वमित्यर्थः । जृंभणं जृंभाबाहुल्यम् अनिलजे ज्वरे एतानि लक्षणानि भवंति एतानि प्रकृतिसमवेतानि ॥ ९॥ पैत्तिकमाह--वेगस्तीक्ष्णस्तीव्रवेगः अतीसार इति पित्तस्य सरत्वेन सद्रवाप्रवृत्तिर्न त्वतीसारस्तस्य ज्वरोपद्रवत्वात्, निद्राल्पत्वं स्वल्पनिद्रात्वम्, वमिः पित्तस्य कफस्थानगतत्वात् । कंठौष्ठमुखनासानां पाक इति सुगमम् । स्वेदो घर्मांबुनिर्गमनम् । प्रायेण

**प्रलापो वक्त्रकटुता मूर्च्छा दाहो मदस्तृषा॥**
**पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च॥ ११॥**
**स्तैमित्यं स्तिमितो वेग आलस्यं मधुरास्यता॥**
**शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च॥ १२॥**

---

मधुकोशव्याख्या।

हरितं वमेद्वा। सदाहचोषज्वरवक्त्रशोषं सा पित्तकोपप्रभवा हि छर्दिः" इति सुश्रुतवचनात्कटुमुखत्वमप्येष्टव्यमिति॥ मूर्च्छेति। मूर्च्छा रूपाद्यविज्ञानम्, तमःप्रवेशो विस्मृतिरित्याहुः। मदो मत्तत्वमिव, यथा—पूगकोद्रवधत्तूरभक्षणादौ॥ भ्रम इति। भ्रमश्चक्रस्थितस्येव भ्रमद्वस्तुदर्शनमित्याहुः। अन्ये तु स्वदेहभ्रमणज्ञानम्। ननु, भ्रमस्याशीतिवातविकारपठितस्य वातनानात्मजत्वात्कथं पित्तविकारे पाठः? उच्यते-"न रोगोऽप्येकदोषजः" इति वचनात्पैत्तिकेऽपि वातानुबन्धाद् भ्रमः, इति जेज्जटः समाधानमुक्तवान्। अथवा दोषदूष्यसंमूर्च्छनप्रभावात्कारणादृष्टस्यापि रूपस्य कार्ये उपलम्भः। यथा—अरूपवातारब्धातिसारादाविवारुणत्वं, हरिद्राचूर्णसंयोग इव लौहित्यम्। यत्तूक्तं सुश्रुते—"रजःपित्तानिलाद् भ्रमः" इति। तत्रापि वातानुगतपित्तजत्वमेव बोद्धव्यम्, अन्यथा भ्रमस्य वातिकनानात्मजत्वमेव न स्यादिति। अपरे तु पित्तदूषितनेत्रत्वेन विपर्यस्तज्ञानं पीतः शंख इत्यादिवत्। चकारः पूर्ववदनुक्तसमुच्चयार्थः। तद्यथा—तीव्रोष्मता रक्तकोठता शीतेच्छताऽरुचिरिति॥ १०॥ ११॥ कफज्वरलक्षणमाह—स्तैमित्यमित्यादि। स्तैमित्यमङ्गानामार्द्रपटावगुण्ठितत्वमिव।

आतङ्कदर्पणव्याख्या।

सामज्वरे स्वेदनिरोधः। अत्र तु पित्तस्य तैक्ष्ण्याज्ज्वरप्रभावाद् वा स न भवति॥१०॥ प्रलापोऽसंबद्धभाषणं, वक्त्रकटुता—मुखतिक्तत्वम्। यदुक्तमभिधानान्तरे "कटुः स्यात्कटुतिक्तयोः" इति। यदुक्तं सुश्रुते—"योऽम्लं भृशं वा कटुतिक्तवक्त्रः पीतं सरक्तं हरितं वमेद्वा। सदाहशोषज्वरवक्त्रशोषं सा पित्तकोपप्रभावा हि छर्दिः" इति सुश्रुतवचनात् कटुमुखत्वमप्येष्टव्यमिति। मूर्च्छा रूपाद्यपरिज्ञानं, तमःप्रवेशो विस्मृतिरित्याहुः। मदो मत्तत्वमिव, यथा दुष्टकोद्रवधत्तूरभक्षणादौ। भ्रम इति चक्रस्थितस्येव संभ्रमाद्वस्तुदर्शनमाहुः। अन्ये तु स्वदेहभ्रमणज्ञानम्। ननु भ्रमस्य अशीतिवातविकारपठितस्यनानलजत्वात्कथं पित्तविकारे पाठः? उच्यते—न रोगोप्येकदोषजः। इति वचनात्॥ अथवा दोषदूष्यसंमूर्छनप्रभावात्। यदुक्तं सुश्रुते—"रजः पित्तानिलाद्भ्रमः" इति। अपरे तु पित्तदूषितनेत्रत्वेन विपर्यस्तज्ञानं भ्रमः पीतः शंख इत्यादिवत्। तृषापीतविण्मूत्रत्वं सुगमं पैत्तिके ज्वरे एतानि लक्षणानि भवंति॥११॥ अथ श्लैष्मिकमाह—स्तैमित्यमंगानामार्द्रवस्त्रावगुंठितमिव, स्तिमितो वेगो—मंदवेगः, आलस्यं "यः शक्तस्याप्यनुत्साहः कर्मण्यालस्यमुच्यते"। मधुरास्यता—मधुरवक्त्रत्वम्।

( नात्युष्णगात्रता छर्दिरङ्गसादोऽविपाकिता )
गौरवं शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता ॥
प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता ॥ १३ ॥
तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा ॥
कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तमः ॥ १४ ॥

---

स्तिमितो वेगो मन्दो वेगः । आलस्यमिति—"समर्थस्याप्यनुत्साहः कर्मण्यालस्यमुच्यते" इत्यालस्यलक्षणमाहुः । स्तम्भोऽङ्गस्तब्धता । तृप्तिस्तृप्तस्येवान्नानभिलाषः । उत्क्लेद उपस्थितवमनत्वमिव । अरुचिरत्र सत्यभिलाषे अभ्यवहारासामर्थ्यमिति भेदः । चकारः पूर्ववत् । तेन तथाङ्गे पीडकाः शीताः प्रसेकश्छर्दितन्द्रिके हृदुपलेप उष्णाभिलाषिता वह्निमार्दवमिति ॥ १२ ॥ १३ ॥ वातपित्तज्वरलक्षणमाह—तृष्णेत्यादि । पर्वाणि भिद्यन्त इव वेदना पर्वभेदः । एतानि च लिङ्गानि विकृतिविषमसमवायारब्धस्य बोद्धव्यानि । विकृतिविषमसमवायारब्धत्वं चैषां केवलवातिकपैत्तिकज्वरलक्षणानां मध्ये केषांचिदेव नियमेन पाठात्तदतिरिक्तलक्षणपाठाच्च बोद्धव्यम् । यथा—अत्रैव वातपैत्तिकेऽरुचिरोमहर्षौ, वक्ष्यमाणवातश्लैष्मिके संतापः, इति कार्तिकः । एवं कफपित्तजे अनवस्थितशीतदाहौ । एवं सन्निपातजे सास्रकलुषादिनेत्रत्वं शिरसो लोटनादि । प्रकृतिसमसमवेते तु वातजादिज्वरलिङ्गान्येव समस्तानि कतिपयानि वा भवन्ति । अत एव चिकित्सिते चरकः विकृतिविषमसमवायारब्धानां द्वन्द्वसन्निपातज्वराणां लक्षणानि साक्षात्पठित्वा निदानस्थानोक्तवातादिज्वरलिङ्गातिदेशेन प्रकृतिसमसमवेतानां द्वन्द्वसन्निपातज्वराणां लक्षणमुक्तवान् । यदाह—"निदाने त्रिविधा प्रोक्ता या पृथक्त्वे ज्वराकृतिः । संसर्गसन्निपातानां तथा चोक्तं स्वलक्षणम्" इति । एवं वक्ष्यमाणं द्वन्द्वसन्निपातलक्षणं व्याख्येयम् । प्रकृतिसमसमवायविकृतिविषमसमवाययोश्चायमर्थः । प्रकृत्या हेतुभूतया

आतङ्कदर्पणव्याख्या ।

मूत्रपुरीषयोः शौक्ल्यम्, अंगस्तब्धता । तृप्तिः—तृप्तस्येवान्नानभिलाषः ॥ गौरवं—गुरुगात्रता, शीतं—शीताविर्भावः । उत्क्लेदः उपस्थितवमनत्वमिव अपरे श्लेष्मानिष्ठीवनमिव, रोमहर्षो रोमांचः, अतिनिद्रता—निद्राधिक्यम्, प्रतिश्यायः—नासास्रवणम् । अरुचिः—अत्र सत्यप्यभिलाषेऽभ्यवहारासामर्थ्यमिति तृप्तितो भेदः । श्रोतोरोधो रसवाहिनां श्रोतसां रोधः । कासः प्रसिद्धः । अविपाकता अन्नाविपाकः । चकारः पूर्ववत् अनुक्तसमुच्चयार्थः, कफजे ज्वरे एतानि लक्षणानि भवंति ॥ १२ ॥ १३ ॥ इदानीं द्वंद्वजज्वरमाह । तृष्णाद्याः शिरोरुजांताः सुगमाः, कंठास्यशोषः कंठशोषो मुखशोषश्च, वमथुश्छर्दि-

**पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ॥**
**स्तैमित्यं पर्वणां भेदो निद्रागौरवमेव च ॥ १५ ॥**
**शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्तनम् ॥**
**संतापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ १६ ॥**

---

मधुकोशव्याख्या ।

समः कारणानुरूपः समवायः कार्यकारणभावसंबन्धः प्रकृतिसमसमवायः कारणानुरूपं कार्यमित्यर्थः॥यथा--शुक्लतन्तुसमवायारब्धस्य पटस्य शुक्लत्वम्; विकृत्या हेतुभूतया विषमः कारणाननुरूपः समवायो विकृतिविषमसमवायः । यथा--हरिद्राचूर्णसंयोगे लौहित्यमिति ॥ १४ ॥ वातश्लेष्मज्वरलक्षणमाह--स्तैमित्यं पर्वणां भेद इत्यादि । स्वेदाप्रवर्तनं स्वेदस्य आ समन्तादकारणेन प्रवृत्तिः, विकृतिविषमसमवायारब्धत्वादिति कार्तिकः । युक्तं चैतत् । यदाह हारीतः.--"शिरोग्रहः स्वेदभवश्च कासो ज्वरस्य लिङ्गं कफवातजस्य" इति । स्वेदभवः स्वेदोत्पत्तिः । मध्यवेगो नाति

आतङ्कदर्पणव्याख्या ।

भेदः धुगधुगीतिलोके । रोमहर्षः—रोमांचः, अरुचिः प्रसिद्धा, तमः—अंधकारे प्रविष्टस्येवार्थासंवित्तिः ॥ १४ ॥ पर्वभेदः—पर्वाणि भिद्यंत इति संधिषु वेदनाभेदः, द्वंद्वजेषु, सान्निपातिकेषु च कानिचिल्लक्षणानि विकृतिसमवायारब्धानि भवंति । कानिचित्प्रकृतिसमवायारब्धानि भवंति । दोषाणामेव लक्षणानि दृश्यंते प्रकृतिसमवायारब्धानि विपरीतानि तु विकृतिसमवायारब्धानि । यथात्रैव वातपैत्तिके ज्वरे अरुचिः, रोमहर्षश्च, वक्ष्यमाणवातश्लैष्मिके संतापः । एवं कफपित्तजे लिप्ततिक्तास्यत्वं सन्निपातजे सास्रकलुषादिनेत्रत्वं शिरोलोठनादि, प्रकृतिसमसमवायविकृतिविषमसमवाययोश्चायमर्थः। प्रकृत्या हेतुभूतया समः कारणानुरूपः समवायः कार्यकारणभावसंबंधः प्रकृतिसमसमवायः । कारणानुरूपं कार्यमित्यर्थः । यथा शुक्लतंतुसमवायारब्धस्य शुक्लत्वं पटस्य विकृत्य हेतुभूतया विषमः—कारणाननुरूपः समवायो विकृतिसमवायः । यथा हरिद्राचूर्णसंयोगजं लौहित्यमिति । यथा वातपित्तयोर्लक्षणेषु अरुचिरोमहर्षौ इमौ तु विकृत्यारब्धौ दृश्येते । वातश्लेष्मणोर्लक्षणेषु संतापो नास्ति, सन्निपातिकज्वरलक्षणे दृश्यते, सोपि विकृत्यारब्धः । शिरसो लोठनं, वातपित्तश्लेष्मणां लक्षणेषु न दृश्यते सान्निपातिकज्वरलक्षणे दृश्यते सोपि विकृत्यारब्धः। एवं द्वंद्वजसन्निपातजेषु सर्वेष्वपि रोगेषु बोद्धव्यम्॥ वातश्लेष्मज्वरलक्षणमाह—स्तैमित्यम् । आर्द्रवस्त्रावगुंठितमिव, अन्ये निश्चलत्वं ज्वरितस्य । पर्वणां भेदो वेदनाविशेषः संधिषु, निद्रा प्रसिद्धा, गौरवम् अंगानाम्॥ १५॥शिरोग्रहः शिरोगृहीतमिव मन्यते, प्रतिश्यायो नासास्रावः, स्वेदाप्रवर्तनं स्वेदस्य आसतान् प्रवर्तनम् । यदुक्तं हारीते "शिरोग्रहः स्वेदभवश्च कासो ज्वरस्य लिंगं कफवातजस्य" इति ।

लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा ॥
मुहुर्दाहो मुहुः शीतं पित्तश्लेष्मज्वराकृतिः ॥ १७ ॥
क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा ॥
सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥ १८ ॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः ॥
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ॥ १९ ॥

मधुकोशव्याख्या ।

तीक्ष्णो नातिमृदुरिति ॥ १५ ॥ १६ ॥ पित्तश्लेष्मज्वरलक्षणमाह--लिप्तेत्यादि । श्लेष्मणा लिप्तं च पित्तेन तिक्तं च आस्यं मुखं यस्य तस्य भावो लिप्ततिक्तास्यता । तन्द्रा निद्रावत्क्लान्तिः । मोहो मूर्च्छा । एतानि लिङ्गानि प्रायोभावित्वेन निर्दिष्टानि, अन्यान्यपि चरकोक्तानि बोद्धव्यानि । तद्यथा--"तथा स्तम्भश्च संस्वेदः कफपित्त-प्रवर्तनम्" इति ॥ १७ ॥ सान्निपातिकज्वरलक्षणमाह--क्षणे दाह इत्यादि । रुजा शूलम्, अस्थ्यादिभिः संबध्यते । सास्रावे साश्रुणी । कलुषे आविलवर्णे । निर्गता भुग्नता संकुचितता ययोस्ते निर्भुग्ने विस्फारिते इत्यर्थः । इति जेज्जटः, "अन्तःप्रविष्टे" इत्यन्ये, "अतिकुटिले" इति चक्रः । शूकैः शूकशिम्बिधान्यादेः । परिदग्धा दग्धवत् कृष्णवर्णा । खरस्पर्शा गोजिह्वादिवत् । स्रस्ताङ्गता निःसहावयवता । ष्ठीवनं रक्तस्य पित्तस्य वा मुखेन स्वल्पोद्गिरणम् । शिरसो लोठनमिति इतस्ततः शिरश्चालनम् । कृशत्वं नातिगात्राणां दोषपूर्णत्वेन । प्रततं निरन्तरम् । कोठो भालुकितन्त्रे पठितः । तद्यथा--"वरटीदष्टसंकाशः कण्डूमाँल्लोहितोऽस्रकफपित्तात् । क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः" इति । मूकत्वं मन्दवचनत्वम्, अवचनता वा । गुरुत्व-

आतङ्कदर्पणव्याख्या ।

स्वेदभावः स्वेदो नास्ति । इदमपि लक्षणं विकृतिसमवायारब्धम् । संतापोऽपि विकृतिसमवायारब्धो नात्यर्थो नातितीक्ष्णो नातिमृदुरिति ॥ १६ ॥ श्लेष्मपित्तज्वरमाह--श्लेष्मणा लिप्तं पित्तेन तिक्तं च मुखं यस्य तस्य भावो लिप्ततिक्तास्यता, लिप्तास्यता तिक्तास्यता चेत्यर्थः । तन्द्रा निद्रावत्क्लांतिः । तंद्रा-लक्षणमाह--"इन्द्रियार्थेष्वसंप्राप्तिर्गौरवं जृंभणं क्लमः । निद्रार्तस्येव यस्येतं तस्य तंद्रां विनिर्दिशेत्" इति । मोहो मूर्च्छा । अन्यत् सुगमम् ॥ १७ ॥ अथ सान्निपातिकज्वरलक्षणमाह--"रुजाऽस्थ्यादिभिः संबध्यते लोचने सास्रावे साश्रुणी, कलुषे आविले, रक्ते लोहितवर्णे निर्भुग्ने विस्फारिते इति जेज्जटः । अतिकुटिले इति चक्रः । कर्णौ सस्वनौ सशब्दौ, सरुजौ वेदनायुक्तौ भवतः । कंठः शूकैर्धान्याग्रसूक्ष्मकंटकाकारैः । अन्ये कपिकच्छूशूकैरिवावृतः व्याप्त इव । तन्द्रा प्रसिद्धा मोहो-

परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम् ॥
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥ २० ॥
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा ॥
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥ २१ ॥
कृशत्वं नातिगात्राणां प्रततं कण्ठकूजनम् ॥
कोठानां श्यावरक्तानां मण्डलानां च दर्शनम् ॥ २२ ॥
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ॥
चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥ २३ ॥

---

मधुकोशव्याख्या।

मुदरस्य चिरात्पाकश्च दोषाणामिति चातिसामत्वारब्धत्वेन। चकारादन्यान्यपि बोद्धव्यानि। यदाह वाग्भटः—"तद्वच्छीतं महानिद्रा दिवा जागरणं निशि। स वा नैव वा निद्रा महास्वेदोऽति नैव वा॥ गीतनर्तनहास्यादिविकृतेहाप्रवर्तनः" इति। एतच्च लक्षणं त्रयोदशसन्निपातेषु मध्ये स्वप्रमाणाहृद्धैर्दोषैस्तुल्यैरारब्धस्य ज्वरस्य चरकेण पठितं द्व्युल्बणैकोल्बणादीनां च द्वादशानां लक्षणं बोद्धव्यम्। तथा च काश्मीरपाठे चरकः—"भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक्। वा पित्तोल्बणे विद्यालिङ्गं मन्दकफे ज्वरे॥ शैत्यं कासोऽरुचिस्तन्द्रापिपासादाहहृद्व्यथाः वातश्लेष्मोल्बणे व्याधौ लिङ्गं पित्तावरे विदुः॥ छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थि वेदना। मन्दवाते व्यवस्यन्ति लिङ्गं पित्तकफोल्बणे॥ सन्ध्यस्थिशिरसां शू

आतङ्कदर्पणव्याख्या।

ऽचैतन्यं भवति, प्रलापोऽसंबद्धभाषणम्, जिह्वा परिदग्धा दग्धवत् कृष्णवर्णा, खरस्पर्शा कंटकि च। स्रस्तांगता निःसहावयवता, अन्ये विकलांगत्वमाहुः। ष्ठीवनं मुखेन रक्तपित्तस्य ईषत्कफमिश्रितस्योद्गिरणम्, शिरसो लोठनम् इतस्ततः शिरश्चालनम्, तृष्णा पिपासा, निद्रानाशः, हृ व्यथा, स्वेदमूत्रपुरीषाणां चिरेणाल्पशो दर्शनं चिरात् स्रुतिः, कृशत्वं नातिगात्राणां नातिदौर्ब दोषपूर्णत्वात्। प्रततं निरंतरं, कंठकूजनम् अव्यक्तशब्दः। कोठानां श्यावरक्तवर्णानां दर्शनं मंडला च तथा। कोठलक्षणं भालुकिः—"वरटीदंशसंकाशः कंडूमाँल्लोहितोऽस्रकफपित्तात्। क्षणिकोत्पत्ति नाशः कोठ इत्यभिधीयते सद्भिः" अथवा कोठाः अव्यक्तमुखाः पिडिकाप्रायाः तेषां च श्याव रक्तानां दर्शनं शरीरे मंडलानां च सकलानां च दर्शनं, मूकत्वं मंदवचनता अवचनता वा, स्रोतः मुखनासादिरंध्राणां पाकः अतिसामत्वारब्धेन दोषाणामेकत्र मिलितानां चिरकालेन पाको निर मता। चकारादन्यान्यपि बोद्धव्यानि। यदाह वाग्भटः—"तद्वच्छीतं महानिद्रा दिवा जागरणं निशि

मधुकोशव्याख्या ।

प्रलापो गौरवं भ्रमः । वातोल्बणे स्याद्द्वयनुगे तृष्णा कण्ठास्यशुष्कता ॥ रक्तविण्मूत्रता दाहः स्वेदस्तृष्णा बलक्षयः । मूर्च्छा चेति त्रिदोषे स्याल्लिङ्गं पित्ते गरीयसि ॥ आलस्यारुचिहृल्लासदाहवम्यरतिभ्रमैः । कफोल्बणं सन्निपातं तन्द्रा कासेन चादिशेत् ॥ प्रतिश्याच्छर्दिरालस्यं तन्द्रारुच्यग्निमार्दवम् । हीनवाते पित्तमध्ये लिङ्गं श्लेष्माधिके मतम् ॥ हारिद्रमूत्रनेत्रत्वं दाहस्तृष्णा भ्रमोऽरुचिः । हीनवाते मध्यकफे लिङ्गं पित्ताधिके मतम् ॥ शिरोरुग्वेपथुश्वासप्रलापश्छर्द्यरोचकाः । हीनपित्ते मध्यकफे लिङ्गं वाताधिके मतम् ॥ शीतता गौरवं तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक् । हीनपित्ते वातमध्ये लिङ्गं श्लेष्माधिके विदुः ॥ वर्चोभेदोऽग्निदौर्बल्यं तृष्णा दाहोऽरुचिर्भ्रमः । कफहीने वातमध्ये लिंगं पित्ताधिके विदुः ॥ श्वासः कासः प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक् । कफहीने पित्तमध्ये लिंगं वाताधिक मतम्" इति । विकृतौ नियमो नास्ति तेन विकृतिविषमसमवाया अनेकप्रकारा भवन्ति । अतः सुश्रुतेनाप्यन्यादृशं सन्निपातलक्षणं पठितम्—"नात्युष्णशीतोऽल्पसंज्ञो भ्रान्तप्रेक्षी हतप्रभः । खरजिह्वः शुष्ककण्ठः स्वेदविण्मूत्रवर्जितः ॥ सास्रुनिर्भुग्ननयनो भक्तद्वेषी हतस्वरः । श्वसन्निपतितः शेते प्रलापोपद्रवान्वितः ॥ अभिन्यासं तु तं प्राहुर्हतौजसमथापरे । सन्निपातज्वरं कृच्छ्रमसाध्यमपरे जगुः" इति । तथा भालुकितन्त्रे ह्युल्बणादिलक्षणमप्यन्यथा पठितम् । तद्यथा—"वातपित्ताधिको यस्य सन्निपातः प्रकुप्यति । तस्य ज्वरोऽङ्गमर्दस्तृट्तालुशोषप्रमीलकाः ॥ आध्मानतन्द्रारुचयः

आतङ्कदर्पणव्याख्या ।

सदा वा नैव वा निद्रा महास्वेदोति नैव च ॥ गीतनर्त्तनहास्यादिविकृतेहाप्रवर्त्तनम्" इति । एतच्च लक्षणं त्रयोदशसन्निपातेषु सामान्यं वृद्धैर्दोषैस्तुल्यैरारब्धस्य चरकेण पठितम् एवं ह्युल्बणैः षट् स्युरित्यादिद्वादशसन्निपातानां च लक्षणं बोद्धव्यं तथा च काश्मीरपाठे चरकः—"भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक् । वातपित्तोल्बणे विद्याल्लिंगं मंदकफज्वरे ॥ १ ॥ शैत्यं कासोऽरुचिस्तंद्रा पिपासादाहहृद्व्यथाः ॥ वातश्लेष्मोल्बणे व्याधौ लिंगं पित्तावरे विदुः ॥२॥ छर्दिः शैत्यं बहिर्दाहस्तृष्णा मोहोऽस्थिवेदना ॥ मंदे वाते व्यवस्यंति लिंगं पित्तकफोल्बणे ॥ ३ ॥ संध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः ॥ वातोल्बणे त्रिदोषे तु तृष्णा कंठास्यशुष्कता ॥ ४ ॥ रक्तविण्मूत्रनेत्रत्वं दाहस्तृट् च बलक्षयः ॥ मूर्छा चेति त्रिदोषे स्याल्लिंगं पित्ते गरीयसि ॥ ५ ॥ आलस्यारुचिहृल्लासदाहवम्यरतिभ्रमाः ॥ कफोल्बणे सन्निपाते तंद्रा कासोपि जायते ॥ ७ ॥ मूर्छा च्छर्दिः प्रतिश्यायस्तन्द्रा रुच्यग्निमार्दवम् ॥ हीनवाते मध्यपित्ते लिंगं श्लेष्माधिके मतम् ॥७॥ हारिद्रमूत्रनेत्रत्वग्दाहस्तृष्णाऽरुचिर्भ्रमः ॥ हीनवाते मध्यकफे लिंगं पित्ताधिके मतम् ॥ ८ ॥ शिरोरुग्वेपथुः श्वासप्रलापश्च्छर्द्यरोचकः । हीनपित्ते मध्यकफे लिंगं वाताधिके मतम् ॥ ९ ॥

मधुकोशव्याख्या ।

श्वासकासभ्रमश्रमाः । पित्तश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति ॥ अन्तर्दाहो बहिः शीतं तस्य तन्द्रा च बाधते । तुद्यते दक्षिणं पर्श्वमुरःशीर्षगलग्रहाः ॥ निष्ठीवेत्कफपित्तं च तृष्णा कण्ठश्च दूयते । विड्भेदश्वासहिक्काश्च बाधन्ते सप्रमीलकाः ॥ विधुफल्गू च तौ नाम्ना सन्निपातावुदाहृतौ । श्लेष्मानिलाधिको यस्य सन्निपातः प्रकुप्यति ॥ तस्य शीतज्वरो निद्रा क्षुत्तृष्णा पार्श्वसंग्रहः । शिरोगौरवमालस्यमन्यास्तम्भप्रमीलकाः ॥ उदरं दह्यते चास्य कटी बस्तिश्च दूयते । सन्निपातः स विज्ञेयो मर्करीति सुदारुणः ॥ वातोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति । तस्य तृष्णाज्वरग्लानिपार्श्वरुग्दृष्टिसंक्षयाः ॥ पिण्डिकोद्वेष्टनं दाह ऊरुसादो बलक्षयः । सरक्तं चास्य विण्मूत्रं शूलं निद्राविपर्ययः ॥ निर्भिद्यते गुदं चास्य बस्तिश्च परिकृष्यते । आयम्यते भिद्यते च हिक्कते विलपत्यपि ॥ मूर्च्छति स्फायते रौति नाम्ना विस्फुरकः स्मृतः । पित्तोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति ॥ तस्य दाहो ज्वरो घोरो बहिरन्तश्च

आतङ्कदर्पणव्याख्या ।

शीतकं गौरवं तंद्रा प्रलापः शिरसोऽतिरुक् ॥ हीनपित्ते वातमध्ये लिंगं श्लेष्माधिके मतम् ॥१०॥ पर्वभेदोंगदौर्बल्यं तृष्णा दाहोऽरुचिर्भ्रमः ॥ कफे हीने मध्यवाते लिंगं पित्ताधिके विदुः ॥ ११ ॥ श्वासः कासः प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक् ॥ कफे हीने मध्यपित्ते लिंगं वाताधिके मतम्॥१२॥" इति । विकृतौ नियमो नास्ति तेन विकृतिविषमसमवाया अनेकप्रकारा भवंति । प्रकृतिसमवायस्तु--सन्निपाते पृथक्वातादिज्वरस्यैव लक्षणं ज्ञेयम् । हीनमध्यादिकक्रमेण सन्निपाताः । एवं षट्, द्व्युल्बणेन त्रयः, एकोल्बणेन त्रयः, समत्वेनैकः एवं त्रयोदशसन्निपाताः प्रकृतौ । अत्र, सुश्रुतस्तु दोषोत्कर्षापकर्षतारतम्येन धात्वाद्यावरणभेदेन च सन्निपातभेदानामानन्त्यात्पृथक्पृथग्लक्षणं नोक्तवान् । किंतु तुल्यकुपितैर्दोषैरेकमेव सन्निपातलक्षणं पठितम् । तद्यथा—"नात्युष्णशीतोऽल्पसंज्ञो भ्रांतप्रेक्षी हतप्रभः ॥ खरजिह्वः शूककंठः स्वेदविण्मूत्रवर्जितः ॥ सास्रुनिर्भुग्ननयनो भक्तद्वेषी हतस्वरः ॥ श्वसन्निपतितः शेते प्रलापोपद्रवैर्युतः ॥ अभिन्यासं तु तं प्राहुर्हतौजसमथापरे ॥ सन्निपातज्वरं कृच्छ्रमसाध्यमपरे विदुः ॥ निद्रोपेतमभिन्यासं क्षीणमेनं हतौजसम् ॥ संन्यस्तगात्रं संन्यासं विद्यात्सर्वात्मकं ज्वरम्" इति । अथ भालुकितंत्रे द्व्युल्बणैकोल्बणादिलक्षणमन्यथा पठितम् । तद्यथा—"आमोद्याहारदोषात्प्रथममुपचितो हंति वह्निं शरीरे श्लेष्मत्वं याति भुक्तं सकलमपि ततोऽसौ कफो वायुदुष्टः । स्रोतांस्यापूर्य्य रुंध्यादनिलमथ मरुत्कोपयेत्पित्तमंतः संमूर्च्छ्यान्योन्यमेते प्रबलमिति नृणां कुर्वते सन्निपातम्॥ वातपित्ताधिको यस्य सन्निपातः प्रकुप्यति ॥ तस्य ज्वरोंगमर्दस्तृट् तालुशोषप्रमीलकौ ॥ आध्मानतन्द्रारुचयः श्वासकासभ्रमश्रमाः ॥ पित्तश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति ॥ अन्तर्दाहो बहिः शैत्यं तस्य तंद्रा च वर्द्धते ॥ तुद्यते दक्षिणं पार्श्वमुरः शीर्षगलग्रहः । निष्ठीवेत्कफपित्तं च कृच्छ्रात्कंडूश्च जायते ॥ विड्भेदः श्वासहिक्काश्च वर्द्धते सप्रमीलकाः ॥

मधुकोशव्याख्या

वर्धते । शीतं च सेवमानस्य कुप्यतः कफमारुतौ ॥ ततश्चैनं प्रधावन्ते हिक्काश्वास-प्रमीलकाः । विसूचिका पर्वभेदः प्रलापो गौरवं क्लमः ॥ नाभिपार्श्वरुजा तस्य स्विन्नस्याशु विवर्धते । स्विद्यमानस्य रक्तं च स्रोतोभ्यः संप्रवर्तते ॥ शूलेन पीड्य-मानस्य तृष्णा दाहश्च वर्धते । असाध्यः सन्निपातोऽयं शीघ्रकरीति कथ्यते ॥ न हि जीवत्यहोरात्रमेतेनाश्लिष्टविग्रहः । कफोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति ॥ तस्य शीतज्वरस्तम्भगौरवालस्यतन्द्रयः । छर्दिमूर्च्छातिपाददाहतृट्स्वरोचककण्ठग्रहाः ॥ ष्ठीवनं मुखमाधुर्यं श्रोत्रदृष्टिनिग्रहः । कफोल्बणो निग्रहं चास्य यदा प्रकुरुते भिषक् ॥ तदा तस्य भृशं भिन्नं कुर्यात्सोपद्रवं ज्वरम् । निगृहीते तु पित्ते च भृशं वायुः प्रकु-प्यति ॥ निराहारस्य सोऽत्यर्थं- मेदोमज्जास्थि बाधते । तथात्र स्नाति भुंक्ते वा त्रिरात्रं नहि जीवति ॥ मेदोगतः सन्निपातः कफ्फणः स उदाहृतः । कामान्मो-हाच्च लोभाच्च भयाच्चायं प्रपद्यते ॥ मध्यहीनाधिकैर्दोषैः सन्निपातो यदा भवेत् । तस्य रोगास्त एवोक्ताः प्रायो दोषबलाश्रयाः" इत्यादि । ननु, वातादयः परस्परं विरुद्धगुणाः विरुद्धगुणानां च संभूयैककार्यारम्भकत्वं नोपपद्यते । परस्परोपघातात्तुहिनदहनयोरिव तत्कथं सान्निपातिकविकारोत्पाद इति । अत्र समाधानमुक्तं दृढबलेन,-"विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम् । दोषाः सहजसात्म्यत्वाद् घोरं विषमहीनिव" इति । एतच्चान्ये दूषयन्ति । सहजत्वादित्यनैका-न्तिकं, यतः सहजानपि धातून् दोषा उपघ्नन्ति; सात्म्यत्वादित्यपि साध्याविशिष्टं, यतः सात्म्यत्वमबाधकत्वं तदेव च दोषाणां परस्परमिह साध्यम् । अत्रोच्यते दोषा नोपघ्नन्तीति कोऽयमनुपघातः साध्यते ? विकृतेरकारकत्वम्, अविनाशकत्वं वा ? नाद्यः, दोषाणां परस्परं विकृतिकर्तृत्वात् । यथोक्तं चरके-"विशोषयेद्धरितगतं

आतङ्कदर्पणव्याख्या ।

विभुः फल्गुश्च तौ नाम्ना सन्निपातावुदाहृतौ । श्लेष्मानिलाधिको यस्य सन्निपातः प्रकुप्यति ॥ तस्य शीतज्वरो निद्राक्षुत्तृष्णा पार्श्वनिग्रहः । शिरोगौरवमालस्यमन्यास्तंभप्रमीलकाः ॥ उदरं दह्यते चास्य कटी बस्तिश्च दूयते । सन्निपातः स विज्ञेयो मकरीति सुदारुणः ॥ वातोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति । तस्य तृष्णा ज्वरो ग्लानिः पार्श्वरुक् दृष्टिसंक्षयाः । पिंडिकोद्वेष्टनं दाह उन्मादो बलक्षयः । सरक्तं चास्य विण्मूत्रं शूलं निद्राविपर्ययः ॥ निर्भिद्यते गुदश्चास्य बस्तिश्च परिगृह्यते । आयम्यते भिद्यते च हिक्कते विलपत्यपि । मूर्च्छते स्फार्यते रौति नाम्ना विस्फुरकः स्तनः ॥ पित्तोल्बणः सन्निपातो यस्य जंतोः प्रकुप्यति । तस्य दाहज्वरो घोरो बहिरन्तश्च वर्द्धते । शीतं च सेवमानस्य कुप्यतः कफमारुतौ । ततश्चैनं प्रबाधन्ते हिक्काश्वासप्रमीलिकाः ॥ विषूचिका पर्वभेदः प्रलापो गौरवं क्लमः । नाभिपार्श्वरुजा तस्य स्विन्नस्याशु विवर्द्धते ॥ स्विद्यमानस्य रक्तं च

**दोषे विबद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः ॥**
**सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥ २४ ॥**

---

मधुकोशव्याख्या ।

सशुक्रं मूत्रं सपित्तं पवनः कफं वा । यदा तदाऽश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः" इति । यथोक्तं वाग्भटेन—"सश्लेष्ममेदः पवनः साममत्यर्थसंचितम् । अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते ॥ सक्थ्यास्थिनी प्रपूर्यान्तः श्लेष्मणा स्तिमितेन च । तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ" इति । अविनाशकत्वं तु विधत्त एव धातुदोषयोः परस्परं च दोषाणां सर्वथोच्छेदप्रतिपादकागमाभावात्, मरणप्रसङ्गाच्च दोषाणामपि देहधारणकारणत्वात् । तस्मात्सर्वथोच्छेदनिषेधाभिप्रायेणैव दृष्टान्तवचनमिह द्रष्टव्यं, तत्कुतोऽनैकान्तिकता । न चैवं सति विषस्य विषादिकर्तृके दृष्टान्तविफलत्वम्, विषस्य विषादावन्तर्व्यापारस्य प्राणविनाशकत्वात्; न च सर्वात्मना दृष्टान्तो भवतीति । सात्म्यत्वादित्यस्यायमर्थः । सात्म्यत्वेन प्रतीयमानत्वात्. दोषाः परस्परं नोपघ्नन्ति अनुपघातकत्वेन प्रतीयमानत्वात्, यद्यथा प्रतीयते तत्तथा निर्दिश्यते यथाग्निकार्यो धूमोऽग्निकार्यत्वेनेति कुतः साध्याविशिष्टत्वमिति । चक्रदत्तस्तु सहजसात्म्यत्वादित्येकमेव हेतुं व्याख्यातवान् सहजं स्वाभाविकं दोषाणां सात्म्यत्वमिति । दृढबलोक्तहेतुद्वयास्वरसेन । गयादासस्तु हेत्वन्तरमुक्तवान्—"दैवाद्दोषस्वभावाद्वा दोषाणां सान्निपातिके। विरुद्धैश्च गुणैः कश्चिन्नोपघातः परस्परम्" इति संक्षेपः॥१८–२३॥तस्य सन्निपातज्वरस्यासाध्यलक्षणमाह—दोषे विबद्ध इत्यादि।

आतङ्कदर्पणव्याख्या ।

स्रोतोभ्यः संप्रवर्तते। शूलेन पीड्यमानस्य कृष्णा श्वासः प्रबाधते। अत्राभ्यः सन्निपातोऽयं शीघ्रकारीति कथ्यते। न हि जीवत्यहोरात्रमनेनाविष्टविग्रहः ॥ कफोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति। तस्य शीतज्वरः स्वप्नगौरवालस्यतन्द्रिकाः। छर्दिमूर्च्छातृषादाहतृष्णारोचकहृद्ग्रहाः। प्रीवनं मुखमाधुर्यं श्रोत्रवाग्दृष्टिनिग्रहः। अथात्र स्वाति भुंक्ते वा त्रिरात्रं नैव जीवति। मेदोगतः सन्निपातो द्व्युल्बणः परिकीर्तितः। कामान्मोहाच्च लोभाच्च भयाच्चापि प्रजायते। मध्यहीनाधिकैर्दोषैः सन्निपातो यदा भवेत्। तस्य रोगास्तु एवोक्ताः प्रायो दोषबलाश्रयाः"। ननु वातादयः परस्परं विरुद्धगुणाः परस्परं विरुद्धगुणानां च संभूयैककार्यारम्भकत्वं नोपपद्यते परस्परोपघातकत्वात् दहनतुहिनयोरिव तत्कथं सान्निपातिकविकारोत्पत्तिरित्यत्र समाधानमुक्तं दृढबलेन, उच्यते "विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहजसात्म्यत्वाद्घोरं विषमहीनिव" इति। दृढबलोक्तहेतुद्वयात् गयादासश्चोक्तवान्—"दैवाद्दोषस्वभावाद्वा दोषाणां सान्निपातिके। विरुद्धैश्च गुणैः कश्चिन्नोपघातः परस्परम्॥"इति॥१८-२३॥संक्षेपतःतस्य सन्निपातज्वरस्यासाध्यलक्षणमाह-दोषेमले वातादिश्च॥

सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ॥
शोथः संजायते तेन कश्चिदेव प्रमुच्यते ॥ २५ ॥
( त्रयः प्रकुपिता दोषा उरःस्रोतोऽनुगामिनः ॥
आमाभिवृद्धया ग्रथिता बुद्धीन्द्रियमनोगताः ॥ १ ॥
जनयन्ति महाघोरमभिन्यासं ज्वरं दृढम् ॥
श्रुतौ नेत्रे प्रसुप्तिः स्यान्न चेष्टां कांचिदीहते ॥ २ ॥
न च दृष्टिर्भवेत्तस्य समर्था रूपदर्शने ॥
न घ्राणं न च संस्पर्शं शब्दं वा नैव बुध्यते ॥ ३ ॥

---

मधुकोशव्याख्या ।

दोषो मलं, वातादिश्च । जेज्जटस्तु मलमेवाह, विबद्ध इति वचनात् । नष्टाग्नित्वम् आहारापाचकत्वम् । यदुक्तं चरके-"अग्निं जरणशक्त्या" इति । असाध्यकृच्छ्रसाध्याभिधानेन सुखसाध्यो न भवतीति दर्शितम् । उक्तं च चरके "सन्निपातो दुश्चिकित्स्यानाम्" इति । तथा भालुकिः-"मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता" इति । सर्वसंपूर्णलक्षण इति सर्वाणि समग्राणि संपूर्णानि बलीयांसि लक्षणानि यस्य स तथा ॥ २४ ॥ सन्निपातज्वरोपद्रवमाह-सन्निपातेत्यादि ॥ २५ ॥ आगन्तुज्वर-

आतङ्कदर्पणव्याख्या ।

जेज्जटस्तु मलं पुरीषमाह-विबद्ध इति वचनात् ।नष्टाग्नित्वमिति अन्नाविपाकादवगंतव्यम्।सर्वाणि संपूर्णानि लक्षणानि यस्य स तथा । ईदृशः असाध्यः ततोन्यथा गिसदृशः अविबद्धदोषः अल्पलक्षणः कृच्छ्रसाध्यः । असाध्यत्वकृच्छ्रसाध्यत्वाभिधानेन सुखसाध्यो न भवतीति दर्शितम् । उक्तं च भालुकिना-" मृत्युना सह योद्धव्यं संनिपातं चिकित्सता । यस्तु तत्र भवेज्जेता स जेतामयसंकुले ॥ संनिपातार्णवे मग्नं योभ्युद्धरति मानवम् । कस्तेन न कृतो धर्मः कां वा पूजां न सोर्हति " ॥ सुश्रुतेऽपि सन्निपातज्वरस्य मोक्षवधयोरवधिकालो दर्शितः-"सप्तमे दिवसे प्राप्ते दशमे द्वादशेपि वा । पुनर्घोरतरो भूत्वा प्रशमं याति हंति वा" । भालुकिनाप्युक्तं "सप्तमी द्विगुणा यावन्नवम्येकादशी तथा । एषा त्रिदोषमर्य्यादा मोक्षाय च वधाय"च इति । उक्तं च "पित्तकफानिलवृद्धया दशदिवसद्वादशाहसप्ताहात् । हंति विमुंचति वापि त्रिदोषजो धातुमलपाकात्"वाताधिकः सप्तमे दिने पित्ताधिको दशमे,श्लेष्माधिको द्वादशे,मलपाकाद्विमुंचति, धातुपाकाद्धंति।धातुपाकलक्षणं तंत्रांतरोक्तं-"संबाध्यमानो हृदि नाभिदेशे गात्रेषु वा पाकरुजान्वितेषु । पक्वेषु वातेषु रुजा ज्वरार्तः स धातुपाकी कथितो भिषग्भिः॥ "तंत्रांतरेप्युक्तं-"दशद्वादशसप्ताहैः पित्तश्लेष्मानिलाधिकः ।देहोष्मणा धातुमलान्हंति मुञ्चति वा ज्वरः" इति॥२४॥सन्निपातोपद्रवमाह॥ सन्निपातज्वरस्य अंते अवसाने सन्निपातक्षपितशरीरस्य पुंसः कर्णमूले कर्णपर्यंते सुदारुणः कष्टतमः शोफ-

शिरो लोठयतेऽभीक्ष्णमाहारं नाभिनन्दति ॥
कूजति तुद्यते चैव परिवर्तनमीहते ॥ ४ ॥
अल्पं प्रभाषते किंचिदभिन्यासः स उच्यते ॥
प्रत्याख्यातः स भूयिष्ठः कश्चिदेवात्र सिध्यति ॥ ५ ॥)
अभिघाताभिचाराभ्यामभिशापाभिषंगतः ॥
आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥ २६ ॥
श्यावास्यता विषकृते तथातीसार एव च ॥
भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया ॥ २७ ॥
औषधिगन्धजे मूर्च्छा शिरोरुग्वमथुः क्षवः ॥
कामजे चित्तविभ्रंशस्तन्द्रालस्यमभोजनम् ॥ २८ ॥

---

मधुकोशव्याख्या।

माह—अभिघातेत्यादि। अभिघातोऽभिहननं शस्त्रलोष्टमुष्टिलगुडादिभिः, अभिचारः श्येनादियागकृतो विपरीतैर्मन्त्रैर्लोहस्रुचा सर्षपादिहोम इत्याहुः। अभिषङ्गः कामादीनां भूतानां च संबन्धः, यदुक्तं चरके—"कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः। सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः" अभिशापो ब्राह्मणगुरुवृद्धसिद्धानामनिष्टाभिशंसनम्। तं चागन्तुज्वरं यथास्वं दोषैर्जानीयात्। यदुक्तम्—"कामशोकभयाद्वायुः" इत्यादि। अयं च दोषसंबन्धः पश्चाद्भावी न त्वारम्भक इति संप्राप्त्यवसरे निरूपितम्। श्यावास्यतेति—श्यावः शुक्लानुविद्धः कृष्णो वर्णः, श्यामवर्ण इत्येके। विषकृते स्थावरविषभक्षणकृते, अतीसारः, तद्विषस्याधोगत्वात्। ओषधिगन्धज इति। तीव्रौषधिघ्राणजे, "पुष्पेभ्यो गन्धरजसी ओजस्विभ्यो यदानिलः" इत्यादिना

आतङ्कदर्पणव्याख्या।

संप्राप्तिविशेषात्कर्मवैचित्र्यात्संजायते तेन शेषेन कश्चिदेवातुरो विमुच्यते प्रायो मारयतीत्यर्थः॥२५॥ अथागंतुज्वरलक्षणमाह—अभिघातो लोहशस्त्रकाष्ठादिना, अभिचारः—विपरीतैर्मंत्रैः लोहस्रुचा सर्षपादिहोमः। अभिषंगः—कामादीनां भूतादीनां च सम्बन्धः, अभिशापः—ब्राह्मणगुरुवृद्धसिद्धानामाक्रोशोऽनिष्टापादनमभिशपनं तं चागंतुकज्वरं यथास्वैर्दोषैर्जानीयात्। यदुक्तं "कामशोकभयाद्वायुः" इत्यादि। अयं च दोषसम्बन्धः पश्चाद्भावी न त्वारम्भक इति संप्राप्त्यवसरे निरूपितम्॥ २६ ॥ आगंतुज्वराणां वैचित्र्यमाह—श्यावः शुक्लानुविद्धः कृष्णो वर्णः, श्याववर्ण इत्यन्ये। विषकृते—स्थावरादिविषभक्षणादिकृते विषस्य त्रिदोषकर्तृत्वेपि अत्यंतपित्तकरत्वात् श्यावमुखत्वम्, अतिसारः स्थावरविषस्याधोगत्वात्तोदो व्यथाशेषं सुगमम्॥ २७ ॥ तीव्रौषधिगंधघ्राणजे, वमथुः,

( हृदये वेदना चास्य गात्रं च परिशुष्यति ॥ )
भयात्प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः ॥
अभिचाराभिशापाभ्यां मोहस्तृष्णाच जायते ॥ २९ ॥

---

मधुकोशव्याख्या ।

वृद्धसुश्रुतेन पठितं तृणपुष्पाख्यं ज्वरमत्रैवान्तर्भावयन्ति । कामज इत्यादि। अभिमत कामिन्याद्यप्राप्तिनिमित्ते चित्तविभ्रंशो भ्रमादिः । यदाह वाग्भटः-"कामाद्भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः" इत्यादि। भयादिति भयाज्जाते ज्वरे । एवं शोकात् कोपादित्येतयोर्बोद्धव्यं, शोकाच्च प्रलाप इति संबन्धः। प्रलापश्चात्र वातकार्यः, तस्य वातकोपितपित्तकार्यत्वात् । विशेषनिश्चयस्तु निदानात्, निदानमपि लक्षणं भवति । उक्तं च-"कामशोकभयाद्वायुः क्रोधात्पित्तं त्रयो मलाः" इत्यादि । यद्येवं तत्कुतः क्रोधजे वेपथुस्तस्य वातकार्यत्वात् । उच्यते-"एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्" इति वचनात्पित्तकोपितवातजन्य एवात्र वेपथुः, अथवा क्रुद्धश्च वेपमानो दृश्यते न हि दृष्टेरनुपपन्नमिति जेज्जटः । क्रोधः पित्तमिव वातं च कोपयतीति तच्चुक्तम् । यदाह विदेहः-"क्रोधशोकौ स्मृतौ वातरक्तपित्तप्रकोपणौ" इति । कोपाच्चेति चकारेण शिरोरुजं समुच्चिनोति । यदाह वाग्भटः-"क्रोधात्कम्पः शिरोरुक् च प्रलापो भयशोकजः" इति । मानसत्वाविशेषेऽपि भयजादीनां पृथगुपपादो हेतुभेदात्, हेतुभेदाच्च भेदाभिधानं हेतुप्रत्यनीकचिकित्सार्थमिति । अभिचारेत्यादि । तृष्णा चेति चकारेणाभिचारजे दाहादिकं समुच्चिनोति । यदुक्तं हारीतदर्शिना वाग्भटेन-"तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते । पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः । सदाहमूर्च्छाग्रस्तस्य प्रत्यहं वर्धते ज्वरः" इति । भूताभिषङ्गादिति भूता देवग्रहादय

आतंकदर्पणव्याख्या ।

छर्दिः, क्षवः, छिक्का शेषं सुगमम् ॥ कामजे--अभिमतकामिन्याद्यप्राप्तिनिमित्तजे चित्तविभ्रंशः किंकर्तव्यतामूढत्वं यदुक्तं वाग्भटे- "कामाद् भ्रमोरतिर्दाहो ह्रीनिद्राधीधृतिक्षयः । ध्याननिःश्वासबहुलं लिंगं कामज्वरे स्मृतम्"इति।शेषं सुबोधम् ॥ २८ ॥ भयशोककोपाभिषंगज्वरमाह--भयादिति।एवं शोकात्कोपादित्यत्रापि बोद्धव्यम् । प्रलाप असंबद्धभाषणं, वेपथुः कंपः, भयाज्जाते ज्वरे तथा शोकात्कोपादित्येतयोर्बोद्धव्यम् । शोकात्प्रलाप इति संबंधः । विशेषनिश्चयश्च निदानात्--अन्ये निदानमपि क्वचिल्लक्षणं भवति । प्रलापश्चात्र वातकार्यः सर्वदैव तस्य वातकार्यत्वात्, यद्येवं तत्कथं क्रोधाद्वेपथुः, तस्य अपि वातकार्यत्वात् । उच्यते--"एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्"इति । पित्तकोपितवातजन्य एवात्र वेपथुः, क्रुद्धश्च वेपमानो दृश्यते

भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् ॥
कामशोकभयाद्वायुः क्रोधात्पित्तं, त्रयो मलाः ॥ ३० ॥
भूताभिषङ्गात्कुप्यन्ति भूतसामान्यलक्षणाः ॥
दोषोऽल्पोऽहितसंभूतो ज्वरोत्सृष्टस्य वा पुनः ॥ ३१ ॥

मधुकोशव्याख्या ।

उन्मादनिदाने वक्ष्यमाणास्तेषामभिषङ्गः संबन्धः । उद्वेग उद्विग्नचित्तता ॥ आगन्तुजेषु प्रतिनियतदोषानुबन्धप्रदर्शनार्थमाह—कामशोकेत्यादि । त्रयो मला भूताभिषङ्गात्कुप्यन्तीति भूतप्रभावात् । यच्च चरकेण निदानस्थाने "अभिषङ्गजः पुनर्वातपित्ताभ्याम्"—इत्युक्तं तत्प्रायिकं मन्तव्यमिति जेज्जटः । चक्रस्त्वाह—"अभिषङ्गज इत्यनेन कामाद्यभिषङ्गज उच्यते न तु भूताभिषङ्गजः" इति । भूतसामान्यलक्षणा इति । यस्य भूतस्य देवग्रहादेरभिषङ्गात्कुप्यन्ति तस्य यल्लक्षणं रोदनादि तेन सामान्यं सदृशं लक्षणं येषां ते तथा इति व्याचक्षते जेज्जटादयः । दोषलक्षणानि भूतलक्षणानि च भवन्तीत्यर्थः॥ २६—३० ॥ अथ विषमज्वरसंप्राप्तिमाह—दोषोऽल्प इत्यादि । अल्प इत्यनेनानतिबलत्वात्कालविशेषमवाप्य लब्धबलो ज्वरयति, यस्तु बलवान् स नित्यज्वरमेव करोति ॥ अहितसंभूत इति । अहिताहाराचारादिसंभूतो वृद्धः । ज्वरोत्सृष्टस्य सहसा निवृत्तज्वरस्य । वाशब्देन प्रथमतोऽपि विषमज्वरो

आतंकदर्पणव्याख्या ।

न हीदृशे दृष्टे अनुपपन्नं नामेति जेज्जटः । क्रोधः पित्तमिव वातं च कोपयतीति--युक्तं यदाह विदेहः—"क्रोधशोकौ स्मृतौ वातरक्तपित्तप्रकोपनौ" इति । कोपाच्चेति चकारेण शिरोरोगं समुच्चिनोति । यदाह वाग्भटः "क्रोधात्कंपः शिरोरुक् च प्रलापो भयकोपजः" इति । मानसत्त्वाविशेषेपि भयजादीनां पृथगुपादानं हेतुभेदात्, हेतुभेदाच्च भेदाभिधानं न तु प्रत्यनीकचिकित्सार्थमिति । अभिचाराभिशापाभ्यां जाते ज्वरे मोहः अचैतन्यं च जायते, अभिचारो—मंत्रादिभिर्मारणप्रयोगः । अभिशापो-ब्रह्मर्षिगुरुसिद्धादीनामभिशापनमाक्रोशः । तृष्णा चेति चकारेणाभिचारजे दाहादिकं समुच्चिनोति । यदुक्तं हारीतमतानुवादिना वाग्भटेन—"तन्त्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते: । पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः । सदाहमूर्छाग्रस्तस्य प्रत्यहं वर्द्धते ज्वरः" इति॥२९॥ भूता देवग्रहादयः उन्मादनिदाने वक्ष्माणाः तेषामभि समंतात्संगस्तस्मात्।उद्वेगः उद्विग्नचित्तता; आगंतुजेषु प्रतिनियतदोषानुबंधान्प्रदर्शयन्नाह—कामशोकभयैर्वायुः कुप्यति क्रोधेन पित्तं भूताभिषंगात्त्रयो दोषाः कुप्यंति । भूतसामान्यलक्षणा इति । यस्य भूतस्य देवग्रहादेरभिषंगात्प्रकुप्यंति तस्य लक्षणं रोदनादि तेन सह सामान्यं लक्षणं येषां ते तथा—इति व्याचक्षते जेज्जटादयः । दोषलक्षणानि भूतलक्षणानि च भवंतीत्यर्थः । अथ विषमज्वरसंप्राप्तिमाह—ज्वरोत्सृष्टस्य पुंसोऽल्पो दोषः पुनरहितसंभूतः सन् अन्यतमं धातुं प्राप्य विषमज्वरं करोति । अल्प इत्य-

**धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥**
**(सन्ततःसततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ ६ ॥ )**
**सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः ॥ ३२ ॥**

---

मधुकोशव्याख्या ।

भवतीति दर्शयति । यदुक्तम्-"आरम्भाद्विषमो यस्तु" इत्यादि । धातुमन्यतमं रसरक्तादिकम् । विषमज्वरं तृतीयकादिकम् । विषमज्वरसामान्यलक्षणं च भालुकिना पठितम्- "यः स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च । वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः" इति ॥ ३१ ॥ सन्ततादिज्वराणां प्रतिनियतदूष्यान् धातूनाह-- सन्ततमित्यादि । सन्ततशब्दः सततस्योपलक्षणः । तेनैतदुक्तं भवति रसस्थः सन्ततं, रक्तस्थः सततमिति । यदुक्तं चरके "रक्तधात्वाश्रयः प्रायो दोषः सततकं ज्वरम्" इति । प्रायोग्रहणात्सततको रक्तव्यतिरिक्तं रसधातुमाश्रयते । रसग्रहणं चात्र विशेषपरं, सर्वज्वरेषु रसस्यावश्यदूष्यत्वात् । अन्ये तु सततग्रहणार्थं 'सन्ततौ रसरक्तस्थौ' इति पठन्ति । तन्नातियुक्तम्, अत्र हि सन्ततसततशब्दौ संज्ञापरौ, न तु सातत्यवचनौ, तेन सन्ततशब्देन सततकस्यानभिधानात् कथमेकशेष इति दोषः ।

आतंकदर्पणव्याख्या ।

नेनाबलत्वात्कालविशेषमवाप्य लब्धबलो ज्वरयति । यस्तु बलवान्स नित्यमेव ज्वरं करोति ॥ अहितसंभूत इति ॥ अहिताहाराचारादिजनितः ज्वरोत्सृष्टस्य सहसा निवृत्तज्वरस्य वाशब्देन प्रथमतोपि विषमज्वरो भवतीति । यदुक्तं "आरंभाद्विषमो यस्तु" इति । धातुमन्यतमं रसरक्तादिकं विषमज्वरं तृतीयादिकं विषमज्वरसामान्यलक्षणं च भालुकिना पठितं-"यः स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च । वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः"इति । संततादिज्वराणां प्रतिनियतदूष्यान्धातूनाह--रसरक्तस्थो दोषः संततं कुर्यादित्यध्याहार्यमानेन सम्बंधः । सन्ततशब्दः सततस्योपलक्षणः तेनैतदुक्तं भवति--रसस्थः संततं, रक्तस्थः सततकमिति । यदुक्तं चरके "रक्तधात्वाश्रयः प्रायो दोषः सततकं ज्वरम्" इति । रसग्रहणं चात्र विशेषपरं सर्वज्वरेषु रसस्यावश्यं दुष्टत्वात् । अन्ये तु सततग्रहणार्थं "संततौ रसरक्तस्थौ" इति पठंति । तन्न युक्तम् । अत्र हेतुः--संततसततशब्दौ संज्ञापरौ न तु सातत्यवचनौ तेन संततशब्देन सततकस्यानभिधानात् कथमेकशेषः? भिन्नरूपयोस्समानार्थयोरेव एकशेषविधानात् । तथा च वार्तिकम् "विरूपाणामपि समानार्थानाम्" इति । केचित्तु "संततं रसरक्तस्थः" इति पाठं पठित्वा रसरक्तस्थो दोषः सततकं ज्वरं करोतीति । अत्र संततमिति छत्रं वर्णयित्वा संततं रसस्थः सततं रक्तस्थः कुर्यादित्याचक्षते ॥ सोन्येद्युरिति । स इति--

मेदोगतस्तृतीयेऽह्नि अस्थिमज्जगतः पुनः ॥
कुर्याच्चतुर्थकं घोरमन्तकं रोगसंकरम् ॥ ३३ ॥
"स्रोतोभिर्विवृता दोषा गुरवो रसवाहिभिः ॥
सर्वदेहानुगाः सर्वे कुर्वते संततं ज्वरम् ॥"
सप्ताहं वा दशाहं वा द्वादशाहमथापि वा ॥
सन्तत्या योऽविसर्गी स्यात्सन्ततः स निगद्यते ॥ ३४ ॥
अहोरात्रे सततको द्वौ कालावनुवर्तते ॥
अन्येद्युष्कस्त्वहोरात्र एककालं प्रवर्तते ॥ ३५ ॥

मधुकोशव्याख्या।

अन्येद्युरिति अन्येद्युष्कम्। घोरं दुःसहम्। अन्तकं यममिव मारकत्वात्। रोगसंकरम् अनेकरोगसंकुलम् ॥ ३२ ॥ ३३ ॥ अथैषां लक्षणान्याह--सप्ताहमित्यादि। एते विकल्पा यथाक्रमं वातपित्तकफोल्बणत्वेन ज्ञेयाः। यथोक्तम् "पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात्। हन्ति विमुञ्चति वाशु त्रिदोषजो धातुमलपाकात्" इति। अयं च सन्ततस्त्रिदोषज एव द्वादशाहाश्रयत्वेन। यदुक्तं चरकेण- "यथा धातूंस्तथा मूत्रं पुरीषं चानिलादयः। युगपच्चानुपद्यन्ते नियमात्सन्तते ज्वरे" इति। सन्तत्या अविच्छेदेन सप्ताहादीन् व्याप्य अविसर्गी अपरित्यागी, अत्यन्तसंयोगे द्वितीया। ननु, यद्येवं कथमस्य विषमज्वरप्रकरणे पाठः? मुक्तानुबन्धित्वं विषमत्वं तच्चात्र नास्ति। नैवम्, अस्यापि तथाभावात्। तथा च तल्लक्षणे चरकः--"विसर्गं द्वादशे कृत्वा दिवसे व्यक्तलक्षणः। दुर्लभोपशमः कालं दीर्घमप्यनुवर्तते" इति। यदुक्तं खरनादेन--"ज्वराः पूर्वं मयोक्ता ये पञ्च सन्ततकादयः। चत्वारः सन्ततं हित्वा

आतङ्कदर्पणव्याख्या।

दोषः पिशिताश्रितो मांसाश्रितः। अन्येद्युरिति अन्येद्युष्कं दोषोऽस्थिमज्जगतश्चतुर्थेऽह्नि चातुर्थकं कुर्यात्। कीदृशं चातुर्थकं घोरसुदुःसहम् अन्तकं यममिव मारकत्वात्, रोगसंकरमनेकरोगसंकुलं यतो गम्भीरस्थानत्वाच्चिरक्लेशनत्वाच्च रोगानन्यानप्यावहति। संततसंप्राप्तिमाह--सर्वगात्रानुगाः सर्वे दोषाः वातादयः संततमविच्छिन्नं संतापं ज्वरं कुर्वंति। किंभूताः, रसवाहिभिः स्रोतोभिः विवृताः विस्तृतिं प्राप्ताः, गुरवो दुःसहाः, सर्वगात्रानुगाः संतापादिना समग्रं गात्रं व्याप्नुवते। संतत्या नैरंतर्येण सप्ताहादीन् व्याप्य अविसर्गी अत्यागशीलः स ज्वरः संततः, अयं सुखसाध्यः। तदुक्तं तंत्रांतरे "संततज्वर एवान्यः स्वल्पो दुर्बलकारकः। एकदोषो द्विदोषो वा सुखसाध्यः प्रकीर्तितः" इति। तथा च--"वातिकः सप्तरात्रेण दशरात्रेण पैत्तिकः। श्लैष्मिको द्वादशाहेन

तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ॥
"अहोरात्रादहोरात्रं स्थानात्स्थानं प्रपद्यते ॥
ततश्चामाशयं प्राप्य करोति विषमज्वरम्"
केचिद्भूताभिषंगोत्थं ब्रुवते विषमज्वरम् ॥ ३६ ॥

---

मधुकोशव्याख्या ।

ज्ञेयास्ते विषमज्वराः" इति । तत्सन्तते मुक्तानुबन्धित्वस्य एकदा भावित्वेनाल्पत्वात् न तद्व्यपदेशः, एकतण्डुलाभ्यवहारेऽनशनशब्दस्य व्यपदेशवत् । न हि तृतीयकादिवदावृत्त्या मुक्तानुबन्धित्वमस्येत्यभिप्रायेण द्रष्टव्यम् । अथवा या विषमज्वरोल्लेखेनोक्ता चिकित्सा सा सन्ततवर्जं सततादिषु कार्येति प्रतिपादनार्थम् । हरिचन्द्रेणापि "कर्म साधारणं जह्यात्तृतीयकचतुर्थकौ" इति चरकवचनाद्विषमज्वरोक्तचिकित्सा तृतीयकचतुर्थकयोरेव, अन्येषु दोषप्रत्यनीकचिकित्सा कार्येति व्याख्यातम् । अस्यां हरिचन्द्रव्याख्यायां कर्मसाधारणं सर्वत्रैव विषमज्वरे कार्यं विशेषेण तृतीयकचतुर्थकयोरिति द्रष्टव्यम्, अन्यथा उक्ततन्त्रान्तरविरोधः ॥ अहोरात्रे सततको द्वौ कालवनुवर्तत इति । अह्नि द्वौ कालौ रात्रौ द्वौ कालौ वा, अह्नि एककालं रात्रावेककालमेवं वा । द्वौ कालौ इतीशानदेवः, नियमानभिधानात्, तथा दर्शनाच्च । अनुवर्तते वेगं करोति । तृतीयेऽह्नि तृतीयक इति वेगदिनापेक्षया तृतीयेऽह्नि यो भवति स तृतीयकः । एवं चतुर्थकेऽपि वाच्यम् ॥ विषमज्वरस्यैकीयमतेन भूताभिषङ्गजत्वमाह—

आतङ्कदर्पणव्याख्या ।

ज्वरः पाकं नियच्छति" प्रकृतिसमसमवेतत्वात् । ननु कथमस्य विषमज्वरे पाठः ? यदुक्तं खरनादेन- "ज्वराः पञ्च मयोक्ता ये पूर्वं संततकादयः । चत्वारः संततं हित्वा ज्ञेयास्ते विषमज्वराः" इति । मुक्तानुबंधित्वाद्विषमत्वं विमुच्यानुबध्नातीति तच्चात्र नास्ति । नैवम्, अस्यापि तथाभावात् । तथा च तल्लक्षणे चरकः—"विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षण. । दुर्लभोपशमः कालं दीर्घमप्यनुवर्तते" इति । सततकादीनां कालानुवर्तनत्वेन लक्षणमाह—कालाः षट्, पूर्वाह्णमध्याह्नापराह्णप्रदोषार्द्धरात्रप्रत्यूषाः । पूर्वाह्णप्रदोषयोः कफस्य कालः, मध्याह्नार्द्धरात्रयोः पित्तस्य, अपराह्णप्रत्यूषयोर्वातस्य । पूर्वाह्णादीनां षण्णां कालानां मध्ये कालद्वयमप्यनुवर्तते वेगं करोति । सततः अन्येद्युष्को ज्वर एककालमनुवर्तते वेगं करोति । अहोरात्रादन्यस्मिन्नहोरात्रे एककालमागच्छतीत्यर्थः ॥३०—३५॥ तृतीयकः तृतीयेह्नि एककालमिति संबध्यते । चातुर्थकश्चतुर्थेह्नीत्यत्राप्येकं कालमिति । एवं द्वौ कालाविति ईशानो यदुक्तवान् तत्र दोषोत्कर्षापकर्षाभ्यामधिककालत्वं हीनकालत्वमपि ज्ञातव्यं न तु नियमः । एते चत्वारो विषमज्वराः । यदुक्तं खरनादेन--'ज्वराः पञ्च मयोक्ताः' इत्यादिना ।

मधुकोशव्याख्या ।

केचिदित्यादि परवचनमप्रतिषिद्धमनुमतं सुश्रुतेन, अत एव विषमज्वरे दैवव्यपाश्रयं बलिहोमादि भूतोचितं युक्तिव्यपाश्रयं कषायपानादि दोषोचितं विधीयते। यदाह चरकः—"कर्म साधारणं जह्यात्तृतीयकचतुर्थकौ । आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे" इति । अत्र साधारणमिति दैवयुक्तिव्यपाश्रयमिति व्याचक्षते

आतङ्कदर्पणव्याख्या ।

एषां चोत्पत्तिक्रमो वृद्धसुश्रुतादवगन्तव्यः, स तदाह—"अहोरात्रादहोरात्रं स्थानात्स्थानं प्रपद्यते ततश्चामाशयं प्राप्य करोति विषमज्वरम्" इति । "तथा प्रलेपको ज्ञेयः शोषिणां प्राणनाशनः । दुश्चिकित्स्यतमो मंदः स कष्टो धातुशोषकृत् ॥ कृशानां व्याधिमुक्तानां मिथ्याहारविहारिणाम् । दोषः स्वल्पोऽपि संवृद्धो देहिनामनिलेरितः ॥ कफस्थानविभागेन यथासंख्यं करोति हि । सततान्ये-द्युष्कत्र्याख्यचतुर्थान्सप्रलेपकान्" इति।अस्यायमर्थः—आमाशयहृदयकंठशिरःसंधय इति पंच कफ-स्थानानि एषु स्थितैर्दोषैर्यथासंख्यमहोरात्रात् स्थानं प्रपद्य आमाशयं गत्वा सततादयः क्रियंते । तत्रामाशयस्थितेन दोषेण सततः क्रियते परंतु द्विकालं न च सर्वदा । न चामाशयप्राप्त्या सर्वदास्य संभवप्रसंगेऽप्यहोरात्रे स्वप्रकोपकालापेक्षया ज्वरोत्पत्तेः । हृदयस्थितेन दोषेण एकस्मिन् दिने आमा-शयमागत्यान्येद्युः क्रियते सततारंभकदोषापेक्षया अस्य व्यवहितत्वात् । कंठस्थितेन दोषेणैकस्मिन् दिने हृदयमागम्यते अन्यस्मिन् दिने आमाशयमागत्य ज्वरमारभ्यते स तृतीयकः । एवं शिरसि स्थितेन दोषेण कंठहृदयामाशयान् त्रिभिर्दिनैः क्रमेण प्राप्य चतुर्थेऽह्नि चातुर्थकः क्रियते । पुनः स्वस्थानगमनं तु दोषाणां हृतवेगत्वेन लाघवाद्वेगदिन एव भवति । संधिस्थितेन दोषेण प्रलेपकः, संधयश्चामाशयेऽपि संतीति स सर्वदा भवति । अविषमोऽप्ययं विषमसहचरितः पठितः । कफस्थानोत्पादकानुरोधात् । उक्तं हि सुश्रुते "प्रलेपकस्तु विषमः प्रायः क्लेशाय शोषि-णाम्" । "विषमज्वर एवान्यश्चातुर्थकविपर्ययः" इति । अत्र तंत्रांतरे—"अस्थिमज्जोभयगते चातुर्थिकविपर्ययः । मध्येऽहनि ज्वरयति ह्यादावन्ते च मुंचति ॥" आदावेकदिनं न भूत्वा मध्ये दिनद्वयं भूत्वा अन्ते एकदिनं न भवति इति व्याचक्षते जेज्जटादयः—"अस्थिमज्जो-भयगते चातुर्थकविपर्ययः । त्र्यहाद्द्व्यहं ज्वरयति ह्यादावन्ते विमुञ्चति॥" चातुर्थिकविपर्ययो नाम्ना ज्वरः अस्थि च मज्जा च अस्थिमज्जानौ अस्थिमज्ज्ञोरुभयं तत्र गतो यो मलोऽस्थिषु मज्जसु वा गतस्तस्मिन् त्रिप्रकारो जायते । केचिदिति—केचन आचार्या विषमज्वरं भूताभिषंगोत्थं कथयंति । अत एव विषमज्वरे दैवव्यपाश्रयं बलिमंगलहोमादिभूतोचितं युक्तिव्यपाश्रयं कषायपानादिकं दोषो-चितं विधीयते । यदाह चरकः—"कर्म साधारणं जह्यात्तृतीयकचतुर्थकौ । आगंतुरनुबंधो हि

**कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः ॥**
**वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः ॥ ३७ ॥**
**चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः ॥**
**जंघाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसंभवः ॥ ३८ ॥**

---

मधुकोशव्याख्या ।

इति ॥३४-३६ ॥ उल्बणदोषभेदेन तृतीयकचतुर्थकयोर्लक्षणान्तरमाह-कफपित्तादित्यादि । त्रिकग्राही वेदनया त्रिकव्यापी, त्रिकस्य वातस्थानत्वेन तद्गतौ पित्तकफावन्यस्थानगतत्वेन दुर्बलौ तृतीये दिने वेगं कुरुतः । यदि तु स्वस्थानस्थितौ स्यातां तदा सन्ततमेव कुर्यातामिति जेज्जटः । एवं शिरसि कफस्थाने पृष्ठे च पित्तस्थाने बोद्धव्यम् । पृष्ठादिति ल्यब्लोपे कर्मणि पञ्चमी, पृष्ठं वेदनया व्याप्येत्यर्थः । न च वाच्यं यदि त्रिकं वातस्थानं तत्कथं तत्र पित्तकफाविति, प्रकृतिस्थानां दोषाणां स्थाननियमात्, न तु प्रकुपितानां तेषां सर्वदेहगत्वात् । यदाह सुश्रुतः-"कुपितानां हि दोषाणां शरीरे परिधावताम् । यत्र संगःस्ववैगुण्याद्व्याधिस्तत्रोपजायते" इति । एवमन्यस्थानगतत्वेन दोषदौर्बल्यादि चतुर्थकेऽपि वाच्यम् । प्रभावं रुजारूपशक्तिम् । द्वैविध्यं विवृणोति-जङ्घाभ्यां शिरस्त इति । एतच्च पञ्चमीद्वयं पूर्ववत् । पूर्वमिति प्रथमं तत्र भूत्वा सर्वदेहं व्याप्नोति । श्लैष्मिक इति श्लेष्मोल्बणः, सन्ततसततकान्येद्युष्कतृतीयकचतुर्थकानां पञ्चानां सन्निपातजत्वात् । यदुक्तं चरके-"प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः । सन्निपाते तु यो भूयान्स दोषः परिकीर्तितः" इति । अथवा प्रायोग्रहणेन एकदोषजा द्विदोषजा अपि भवन्ति । अन्ये त्वाहुः-विकृतिविषमसमवायारब्धाः सन्ततादयः सन्निपातजाः, तेषामेवोद्भूतदोषेण व्यपदेशः; प्रकृतिसमसमवायारब्धास्ते त्वेकदोषजा अपि भवन्ति इति जेज्जटः । चतुर्थकस्तु पित्तेन न क्रियत एव, व्याधि-

आतङ्कदर्पणव्याख्या ।

प्रायशो विषमज्वरः" इति । अत्र साधारणमिति दैवयुक्तिव्यपाश्रयमिति व्याचक्षते ॥ ३६ ॥ उल्बणदोषभेदेन तृतीयकचतुर्थकयोर्लक्षणांतरमाह-तृतीयको ज्वरस्त्रिविधो भवति । कफपित्तात्त्रिकग्राही वेदनया त्रिकव्यापी त्रिकस्य वातस्थानत्वेन तद्गतौ कफपित्तौ अन्यस्थानगतत्वेन दुर्बलौ तृतीयदिने वेगं कुरुतः । यदि तु स्वस्थानस्थितौ स्यातां तदा संततमेव कुर्यातामिति जेज्जटः । एवं शिरसि कफस्थाने पृष्ठे च पित्तस्थाने बोद्धव्यम् । न च वाच्यं यदि त्रिकं वातस्थानं तत्कथं तत्र पित्तकफाविति उच्यते । प्रकृतिस्थानां दोषाणां स्थाननियमो न तु कुपितानां, तेषां सर्वगतत्वात् । यदाह सुश्रुतः-"कुपितानां हि दोषाणां शरीरे परि-

मधुकोशव्याख्या।

स्वभावात्; पित्तजगलगण्डवत्। ननु, अस्ति पैत्तिकोऽपि चतुर्थकः; तथा च हारीतो व्याहरति--"चतुर्थको नाम गदो दारुणो विषमज्वरः। शोषणः सर्वधातूनां बलवर्णाग्निनाशनः॥ त्रिदोषजो विकारः स्यादस्थिमज्जगतोऽनिलः। कुपितं पित्तमेवं तु कफश्चैवं स्वकालतः॥ शीतदाहकरस्तीव्रस्त्रिकालं चानुवर्तते। स सन्निपातसंभूतो विषमो विषमज्वरः॥ ऊर्ध्वं कायस्य गृह्णाति यः पूर्वं सोऽनिलात्मकः। पूर्वं गृह्णात्यधःकायं श्लेष्मपूर्वज्वरश्च सः" इति। अत्राहुः--अनुबन्धरूपमत्र पित्तं, न त्वारम्भकम्; कथमेषा प्रतीतिरिति चेत्, स्थानविशेषानभिधानात्। अत एव हारीतेनापि स्थानं नोदाहृतमेव जङ्घादिवदिति चरकटीकाकृतो व्याचक्षते। किन्त्वेषा व्याख्या तदा संगच्छते यदि पित्तलिङ्गं समुद्भूतं न दृश्यते। भेडेऽपि पैत्तिकः पठ्यते--"आमाशयस्थः पवनो ह्यस्थिमज्जगतोऽपि वा। कुपितः कोपयत्याशु श्लेष्माणं पित्तमेव च" इति। किंच नागभर्तृतन्त्रे स्थानमप्युक्तमेव--"ऊर्ध्वकायं तु यः पूर्वं गृह्णाति सोऽनिलात्मकः। मध्यकायं तु गृह्णाति पूर्वं यस्तु स पित्तजः॥ पूर्वं गृह्णात्यधःकायं श्लेष्मवृद्धश्चतुर्थकः" इति। तस्मात्प्रायेण कफवाताभ्यां भवति इति पैत्तिकश्चतुर्थकश्चरकादिभिर्नोदाहृतः, प्रायोऽसंभवादिति मन्तव्यम्। एषां चोत्पत्तिक्रमो वृद्धसुश्रुतादवगन्तव्यः। स यदाह--"अहोरात्रादहोरात्रात्स्थानात्स्थानं प्रपद्यते। ततश्चामाशयं प्राप्य करोति विषमज्वरम्॥ कफस्थानविभागेन यथासंख्यं करोति हि। सततान्येद्युष्कत्र्याख्यचतुर्थान्सप्रलेपकान्" इति। अस्यार्थः--आमाशयहृदयकण्ठशिरःसन्धयः पञ्च कफस्थानानि एषु स्थितैर्दोषैर्यथासंख्यं सततादयः क्रियन्ते। तत्रामाशयस्थितेन दोषेण सततकः क्रियते द्विकालं; न चामाशयप्राप्त्या सर्वदा प्रसङ्गः,

आतङ्कदर्पणव्याख्या।

धावताम्। यत्र संगः स्ववैगुण्याद्व्याधिस्तत्रोपजायते" इति। एवमन्यस्थानगतत्वेन दोषदौर्बल्यादिचतुर्थकेऽपि वाच्यं, चातुर्थिको द्विप्रकारां शक्तिं दर्शयति॥ जंघाभ्यां श्लैष्मिकः, अनिलसंभवः शिरसः वेदनयेत्यर्थः। चातुर्थिकः पित्तेन क्रियते इत्येके। व्याधिस्वभावात् पित्तजगलगंडवत्। हारीतः--चातुर्थिकोपि पैत्तिकोऽस्तीति वदति "चातुर्थिको नाम गदो दारुणो विषमज्वरः। शोषणः सर्वधातूनां बलवर्णाग्निनाशनः॥ त्रिदोषजो विकारः स्यादस्थिमज्जागतोनिलः। कुर्वन्ति पित्तमेवं तु कफश्चैव स्वभावतः" इत्यादि। अत्राहुः--अनुबंधरूपमात्रं पित्तं, न त्वारंभकं, कथमेषा प्रतीतिरिति चेत्, स्थानविशेषानभिधानात्, अत एव हारीतेनापि स्थानं नोदाहृतं, जंघादिवत् इति चरकटीकाकृतो व्याचक्षते। किं त्वेषा व्याख्या तदा संगच्छते यदि पित्तलिंगं नोद्भूतं दृश्यते, दृश्यते च। तथा च भेडेपि पठितम्--"आमाशयस्थः पवनो ह्यस्थिमज्जगतोपि वा। कुपितः कोपयत्याशु

विषमज्वर एवान्यश्चतुर्थकविपर्ययः ॥
मध्येऽहनि ज्वरयति ह्यादावन्ते च मुञ्चति ॥ ३९ ॥

मधुकोशव्याख्या ।

अहोरात्रे प्रकोपकालापेक्षया ज्वरोत्पत्तेः । हृदयस्थितेन दोषेण आमाशयमागत्यान्येद्युष्कः क्रियते एककालं, सततारम्भकदोषापेक्षयाऽस्य व्यवहितत्वात् । कण्ठास्थितेन दोषेण एकस्मिन्दिने हृदयमागम्यते अपरस्मिन्नामाशयमागत्य ज्वर आरभ्यते तृतीयकः । एवं शिरःस्थितेन दोषेण कण्ठहृदयामाशयान् त्रीन् त्रिभिर्दिनैः क्रमेण प्राप्य चतुर्थकः क्रियते । पुनः स्वस्थानगमनं तु दोषाणां हृतवेगत्वेन लाघवाद्वेगदिन एव भवति । सन्धिस्थितेन दोषेण प्रलेपकः क्रियते, सन्धयश्च आमाशयेऽपि सन्तीति सर्वदा भवति । अयं चाविषमोऽपि विषमसहचरितः पठितः कफस्थानोत्पादानुरोधात् । उक्तं हि सुश्रुते—"प्रलेपकस्तु विषमः प्रायः क्लेशाय शोषिणाम्" इति ॥ ३७ ॥ ३८ ॥ चतुर्थकविपर्ययमाह--विषमेत्यादि । अत्र तन्त्रान्तरम् —"अस्थिमज्जोभयगते चतुर्थकविपर्ययः । मध्येऽहनि ज्वरयाति ह्यादावन्ते च मुञ्चति" इति आदावेकदिनं न भूत्वा मध्ये दिनद्वयं भूत्वा अन्ते एकदिनं न भवतीति व्याचक्षते जेज्जटादयः । "अस्थिमज्जोभयगते चतुर्थकविपर्ययः । त्र्यहाद्व्यहं ज्वरयत्यादावन्ते च मुञ्चति" इति पराशरवचनस्यापि स एवार्थः । त्र्यहादिति त्र्यहस्यादिदिनं विमुञ्चति दिनद्वयं ज्वरयति त्र्यहस्यान्ते चतुर्थदिने मुञ्चतीति तात्पर्यतो व्याचक्षते । हरिचन्द्रस्त्वाह—द्वे अहनी निरन्तरं ज्वरयित्वा उपरम्यैकमहः पुनर्ज्वरयतीति एष चतुर्थकविपर्यय इति । आदिदिनाभावश्चोत्तरोत्तरपालिदिवसेष्ववधार्यः । चतुर्थकविपर्ययस्योपलक्षणत्वेन तृतीयकादिविपर्ययोऽप्यूह्यः इत्याहु । तद्यथा--मध्ये एकदिनं ज्वरयति आद्यन्तयोर्मुञ्चतीति तृतीयकविपर्ययः । कालद्वये मुञ्चति सर्वमहोरात्रं ज्वरयतीति सततकविपर्ययः । एककालं विमुच्य सर्वमहोरात्रं व्याप्नोतीत्यन्येद्युष्कविपर्ययः । अत्र दोषविकृतिरेव नानाविधा हेतुरिति "कफस्थानेषु वा तिष्ठन्दोषो द्वित्रिचतुर्षु च ।

आतङ्कदर्पणव्याख्या ।

श्लेष्माणं पित्तमेव वा" इति। किंच वाग्भटतंत्रे स्थानमप्युक्तमेव "ऊर्ध्वकायं तु यः पूर्वं गृह्णाति सोऽनिलात्मकः । मध्यकायं तु गृह्णाति पूर्वं यस्तु स पित्तजः ॥ पूर्वं गृह्णात्यधःकायं श्लेष्मा वृद्धश्चतुर्थकाः" इति । तस्मात् प्रायेण कफवाताभ्यां भवतीति पैत्तिकश्चातुर्थकज्वरकादिभिर्नोदाहृत एव, प्रायोसंभवादिति मंतव्यम् ॥ ३७ ॥ ३८ ॥ चातुर्थिकविपर्ययमाह—चातुर्थकविपर्ययोऽन्यो विषमज्वरः त्र्यहाद्व्यहमिति । त्र्यहाद्व्यहं त्रिदिनं ज्वरयति एकं दिनं विमुंचति, एवं द्वितीयतृतीयके विपर्ययो वाच्यः। अत्र दोषविकृतिरेव हेतुरिति पूर्वोक्तेषु कफस्थानविभागेषु तिष्ठन् दोषो द्वित्रिचतुर्षु विपर्ययं कुरुते । उक्तं च—

१ त्र्यहात्त्र्यहं ज्वरयाति दिनमेकं विमुञ्चतीति पाठ आ० द० ।

नित्यं मन्दज्वरो रूक्षः शूनकस्तेन सीदति ॥
स्तब्धाङ्गः श्लेष्मभूयिष्ठो नरो वातबलासकी ॥ ४० ॥

मधुकोशव्याख्या।

विपर्ययाख्यान्कुरुते विषमान्कृच्छ्रसाधनान्" इति वृद्धसुश्रुतवाक्यं व्याचक्षाणो जेज्जटः—अन्येद्युष्कतृतीयकचतुर्थकमात्रस्य विपर्ययमुदाहरति, तद्यथा—आमाशयहृदयस्थदोषेण यथोदाहृत एवान्येद्युष्कविपर्ययः। आमाशयहृदयकण्ठस्थितेन तृतीयकविपर्ययः, तत्र एकस्मिन् दिने हृदयस्थो दोष आमाशयमागत्य तत्स्थेन सह ज्वरयति तद्दिने कण्ठस्थो हृदयमायाति अपरदिने सोप्यामाशयमागत्य ज्वरयति एवं दिनद्वये भूत्वा पश्चादेकदिनं न भवतीति तृतीयकविपर्ययः। आमाशयहृदयकण्ठशिरःस्थेन दोषेण चतुर्थकविपर्ययः क्रियते, तत्र यस्मिन् दिने हृदयस्थो दोष आमाशयमागत्य ज्वरयति तस्मिन्नेव कण्ठस्थो हृदयं शिरस्थः कण्ठमायाति, अपरदिने हृदिस्थ आमाशयमागत्य ज्वरयति कण्ठस्थितश्च हृदयमायाति। अपरदिने हृदिस्थ आमाशयमागत्य ज्वरयति एवं दिनत्रये भूत्वा पश्चादेकदिनं न भवतीति चतुर्थकविपर्यय इति। एते च सर्व एव पक्षा न विरुद्धाः सर्वेषामेव मुनिप्रणीतत्वात्। यथोक्तं स्मृतिशास्त्रे—"स्मृतद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ मतौ" इति। दृश्यन्ते च नानाविधा एव विषमज्वराः। एष च न्यायश्चरकसुश्रुतयोः कुष्ठवैधर्म्ये वाप्यचन्द्रेण दर्शितः। न वा चिकित्साभेदोऽप्येषामुक्तः यैव तृतीयकादौ चिकित्सा सैव तद्विपर्ययेऽपीति ॥ ३९ ॥ उक्तसंगत्या प्रलेपकादनूपद्रत्वेन तत्समधर्मिणि वातबलासके वाच्ये प्रतिलोमतन्त्रयुक्त्या वातबलासकमेवाह—नित्यमित्यादि। वातबलासकाख्यो ज्वरोऽस्यास्तीति वातबलासकी नरस्तेन ज्वरेण शूनकः शोथी सीदत्यवसन्नो भवति, शोथिनः स उपद्रव इत्यर्थः। शूनः कृच्छ्रेण सिध्यतीति

आतङ्कदर्पणव्याख्या।

"कफस्थानेषु वा तिष्ठन्दोषो द्वित्रिचतुर्षु वा। विपर्ययाख्यान्कुरुते विषमान्कृच्छ्रसाधनान्" इति। नानाविधा एव विषमज्वरा दृश्यंते एष न्यायश्चरकसुश्रुतयोः।कुष्ठवैधर्म्ये वाप्यचंद्रेण दर्शितः। सुश्रुते विषमज्वराणामुपशांतवेगानामपि देहे स्थानं दर्शितम्। तद्यथा—"स चापि विषमो देहं न कदाचिद्विमुंचति। यस्माद्गौरववैवर्ण्यकार्श्येभ्यो न विमुच्यते ॥ वेगे तु समतिक्रांते गतोयमिति लक्ष्यते। गौरवं शिरसो ग्लानिर्नातिश्रद्धा च भोजने ॥ माधुर्यमथ वैरस्यं तिक्तत्वमथवा पुनः। वक्त्रस्य जायते यस्मात्प्रवेगेपि गते सति। तस्मात्तु नियतो पुष्टः शरीरे विषमज्वरः" इति ॥३९॥ वातबलासकज्वरमाह—वातबलासको ज्वरोऽस्यास्तीति वातबलासकी नरस्तेन ज्वरेण शूनकः शोथी सीदति अवसन्नो भवति, शोथितः सोपद्रव इत्यर्थः। कीदृशो, नित्यं मंदज्वरो मंदवेगः,

**प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण च ॥**
**मन्दज्वरविलेपी च सशीतः स्यात्प्रलेपकः ॥ ४१ ॥**
**विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते ॥**
**तेनार्धं शीतलं देहे चार्धं चोष्णं प्रजायते ॥ ४२ ॥**

मधुकोशव्याख्या ।

पाठान्तरे तेनेति शेषः । वातबलासकमेके कुम्भाह्वयपाण्डुरोगविषयमाहुरिति गयादासः। वातबलासकारब्धत्वाद्वातबलासकः, बलासकः श्लेष्मा, पित्तमप्यत्र बोद्धव्यम् । तन्त्रान्तरे यदुक्तं-"वायुः प्रकुपितो दोषावुदीर्योभौ विधावति । स शिरस्थः शिरः शूलम्" इत्यादि । यच्चोक्तं सुश्रुतेन-"प्रलेपकं वातबलासकं वा कफाधिकत्वात्प्रवदन्ति तज्ज्ञाः" इति। तत्तु श्लेष्मणो नित्यानुषक्तत्वेनेति जेज्जटः । रूक्षत्वं चास्य वातपित्ताभिभूतत्वात्कफस्नेहस्य व्याधिप्रभावाद्वेति ॥ ४० ॥ प्रलेपकमाह-प्रलिम्पन्नित्यादि। मन्दज्वरश्चासौ विलेपी चेति मन्दज्वरविलेपी, विलेपित्वं चास्य यस्मात् घर्मगौरवाभ्यां लिम्पति संबध्नातीत्यर्थः । अयं च कफपित्तजः । यदुक्तं सुश्रुतन- "प्रलेपकं वातबलासकं वा" इत्यादि। यथा यक्ष्मणि "ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः" इत्युक्तं, यक्ष्मणि चायं भवतीति । अन्ये तु त्रिदोषजयक्ष्मजनितत्वेन त्रिदोषज एवायम्, उद्भूतत्वेन तु कफपित्तव्यपदेशः ॥ ४१ ॥ विषमज्वरविशेषानाह--विदग्ध इत्यादि । विदग्धेऽन्नरसे दुष्टे आहाररसे तथा

आतङ्कदर्पणव्याख्या ।

नित्यं सततं वातबलासकारब्धत्वाद्वातबलासकः बलासः श्लेष्मा पित्तमत्रापि बोद्धव्यम् । यदुक्तं तंत्रांतरे-"वायुः प्रकुपितो दोषावुदीर्योभौ विधावति। स शिरस्थः शिरःशूलम्"इत्यादि।यदुक्तं सुश्रुतेन- "प्रलेपकं वातबलासकं वा कफाधिकत्वात्प्रवदंति तज्ज्ञाः" इति । ततः श्लेष्मणा पित्तानुषक्तत्वेनेति जेज्जटः । रूक्षत्वं चास्य वातपित्ताभिभूतत्वात्कफस्य व्याधिप्रभावाद्वा स्तब्धाङ्गश्लेष्मभूयिष्ठ इति स्तब्धांगश्च श्लेष्मभूयिष्ठश्च, तदुक्तं सुश्रुते-"प्रलेपकं वातबलासकं वा कफाधिकत्वेन वदन्ति तज्ज्ञाः" इति । अन्यत्र तु वाताधिकत्वेन दर्शितः । तत्कथमत्र श्लेष्मभूयिष्ठमुक्तम् । अत्रोच्यते-वातेरितसर्वसंधिरूपकफारब्धत्वात्, वातबलासकस्तु यथार्थनामा वातेरित इति बलासक आरम्भको यस्येति शूनः कृच्छ्रेण सिध्यतीति पाठांतरम्, तेन वातबलासकमेके कुम्भाह्वयपाण्डुरोगविषयमाहुरिति गयादासः ॥ ४० ॥ मंदज्वरश्चासौ विलेपी च मंदज्वरविलेपित्वं चास्य धर्मेणेति । आतपेनेव गौरवेण गुरुत्वेन वा लिंपति संबध्नाति स प्रलेपकाख्यो ज्वरः शीतयुक्तः । अयं च कफपित्तजः । यदुक्तं सुश्रुतेन यक्ष्मणि-"ज्वरो दाहोतिसारश्च पित्ताद्रक्तस्य चागमः ।" यक्ष्मणि चायं भवतीति । अन्ये तु त्रिदोषजनितत्वेन त्रिदोषज एवायं तद्भूतत्वेन कफपित्तव्यपदेशः । गात्राणि प्रलिंपतीव प्रलेपकोन्वर्थसंज्ञः ॥४१॥ विषमज्वरविशेषानाह-देहे विदग्धे अन्नरसे दुष्टे आहारे रसे तथा

काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः ॥
तेनोष्णत्वं शरीरस्य शीतत्वं हस्तपादयोः ॥ ४३ ॥
काये श्लेष्मा यदा दुष्टः पित्ते चान्ते व्यवस्थितम् ॥
शीतत्वं तेन गात्राणामुष्णत्वं हस्तपादयोः ॥ ४४ ॥
त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे ॥
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च ॥ ४५ ॥
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च ॥
तस्मिन्प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः ॥ ४६ ॥
द्वावेतौ दाहशीतादिज्वरौ संसर्गजौ स्मृतौ ॥
दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः ॥ ४७ ॥

---

मधुकोशव्याख्या ।

दुष्टे पित्ते दुष्टे श्लेष्मणि व्यवस्थिते सति तेन हेतुना देहेऽर्धं शीतलं कफेनार्धं चोष्णं पित्तेन प्रजायते । अर्धत्वं चार्धनारीश्वराकारेण नरसिंहाकारेण वा, यथादोषं व्यवस्थाननियमहेतोरभावादिति । काय इत्यादि । कायेऽन्तरग्नौ कोष्ठ इति यावत् । अन्ते हस्तपादे । उक्तार्थस्य विपर्ययेण ज्वरान्तरमाह—काय श्लेष्मेत्यादि । त्वक्स्थावित्यादि । त्वक्शब्देन त्वक्स्थो रस उच्यते, तात्स्थ्यात्तदुपचारेणेति गदाधरः । जेज्जटस्तु त्वचमेवाह । एतदभिप्रायेणैव चरकेण ज्वरेऽभ्यङ्गार्थं तैलादीनभिधाय उक्तं—"तैराशु प्रशमं याति बहिर्मार्गगतो ज्वरः" इति । तयोः श्लेष्मानिलयोः । प्रशान्तयोरिति प्रशान्तवेगयोः, न हि विषमेषु दोषस्य प्रशान्तिर्भवति पुनर्वेगागमात् । यदाह सुश्रुतः—"स चापि विषमो देहं न कदाचिद्विमुञ्चति । ग्लानिगौरवकार्श्येभ्यः स यस्मान्न विमुच्यते ॥ वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते। धात्वन्तरस्थो लीनत्वात्सौक्ष्म्यान्नैवोपलभ्यते" इति। इतरौ वातकफौ। दाहशीता-

आतङ्कदर्पणव्याख्या ।

श्लेष्मपित्ते दुष्टे व्यवस्थिते सति तेन हेतुना देहेऽर्द्धे शीतत्वं कफेन, अर्द्धे चौष्णत्वं पित्तेन प्रजायते, अर्द्धत्वं चार्द्धनारीश्वराकारेण नरसिंहाकारेण वा, यथादोषव्यवस्थाननियमहेतोरभावादिति । काय इत्यादि—कायेऽन्तराग्नौ कोष्ठे यदा पित्तं दुष्टं भवति श्लेष्मा चान्ते दुष्टो चाव्यवस्थितो भवति तेन हेतना शरीरस्य उष्णत्वं हस्तपादयोः शीतत्वं, विपरीतत्वे तु पूर्ववद्व्याख्येयम् । अतः परं संततादीनां शीतदाहपूर्वकत्वेन भेदमाह—द्वावेतौ दाहशीतादिज्वरौ संसर्गजौ स्मृतौ कथि-

मधुकोशव्याख्या ।

दीति एको दाहादिः, अपरः शीतादिः । ननु, एतयोः संप्राप्तौ त्रिदोषजत्वमुक्तं तत्कथं संसर्गजावित्युक्तम्, संसर्गो हि द्वयोर्भवति त्रयाणां सन्निपात इति स्थितिः । उच्यते, संसर्गः संबन्धः स च द्वयोः बहूनां च भवति, अत्र त्रयाणामुक्तः, नचैवं सर्वत्र । अथवा संसर्गः सौम्याग्नेयदोषकोटिद्वयमेलकः । तत्र शीतादौ ज्वरे पित्तमनुबन्धः, दाहादौ वातकफावनुबन्धौ; अनुबन्ध्यश्च प्राधान्येन चिकित्स्योऽनुबन्धाविरोधेनेति प्रयोजनमेतस्य । तयोर्दाहशीतादिज्वरयोर्मध्ये दाहपूर्वो दाहादिः कष्ट इति दुःखप्रदः । दाहादेः कष्टसाध्यत्वाभिधानेन शीतादेरर्थतः अकष्टत्वमिति । उक्तविषमज्वराणामुपलक्षणत्वादन्येऽपि विषमज्वरा रात्रिज्वरादयो बोधव्या इति जेज्जटः । उक्तं च तन्त्रान्तरे-"समा वातकफौ यस्य हीनपित्तस्य देहिनः।प्रायो रात्रौ ज्वरस्तस्य दिवा हीनकफस्य तु" इति । सर्वेषु च विषमज्वरेष्ववश्यंभावी वायुः । यदाह सुश्रुतः- "नर्तेऽनिलाद्धि विषमज्वरः समुपजायते । कफपित्ते हि निश्चेष्टे चेष्टयत्यनिलः सदा" इति । तथा विदेहेऽपि-"पवनो गतिवैषम्याद्विषमज्वरकारणम्" इति । एषां च ज्वराणामृत्वादिहेत्वन्तरलाभादन्यथाभावोऽपि दृश्यते । तद्यथा-सन्ततः स्वरूपं त्यक्त्वा सततादीनामन्यतमत्वं प्रतिपद्यते, तथा चतुर्थकस्तृतीयकादिरूपत्वम् । यदाह चरकः- "ऋत्वहोरात्रदोषाणां मनसश्च बलाबलात् । कालमर्थवशाच्चैव ज्वरस्तंतं प्रपद्यते" इति । अस्यार्थः-बलाबलादिति ऋत्वादिमनोऽन्तेन संबध्यते, बलं चाबलं च बलाबलम्, अर्थशब्दः प्राक्तनकर्मवाची तंतं कालं सततकाद्युक्तं ज्वरः प्रतिपद्यते इति योजना । उदाहरणं च ऋत्वहोरात्रबलाबलाद्यथा-यदा निदाघोत्पन्नः वातप्रधानश्चतुर्थको वर्षासमयमाप्नोति तदा तेनर्तुनाप्यायितबलस्तृतीयकान्तानां

आतङ्कदर्पणव्याख्या ।

तौ मुनीन्द्रैरिति शेषः । एतौ कौ, ज्वरे आदौ पूर्वकफवातौ त्वक्स्थौ संतौ शीतमुत्पादयतस्तयोः श्लेष्मानिलयोः प्रशान्तयोः सतोः अंते पित्तं दाहं करोति, तथा तेनैव प्रकारेण आदौ पित्तं त्वक्स्थं सत् अतीव दाहं करोति । तस्मिंस्तु पित्ते प्रशान्ते सति इतरौ वातकफौ शीतं कुरुतः । त्वक्शब्देन त्वक्स्थो रस उच्यते--तात्स्थ्यात्तदुपचारेणेति गदाधरः । जेज्जटस्त्वचमेवाह-तयोः श्लेष्मानिलयोः प्रशान्तवेगयोः स्वकालापगमात् प्रत्यनीकप्राप्त्या वा विषमेषु दोषस्य प्रशान्तिर्भवति परं वेगोपगमात् । यदुक्तं सुश्रुतेन-"स चापि विषमो देहं न कदाचिद्विमुंचति" । पूर्वमेवोक्तं यदा तौ प्रशान्तवेगौ भवतः तदा पित्तमंतर्दाहं करोति चकारान्मूर्च्छादि । यदा तु पित्तं त्वक्स्थं भवति तदा त्वचि अतीव दाहं करोति, त्वग्दाहकारके पित्ते प्रशान्तवेगे सति तावपि इतरौ श्लेष्मानिलौ अंततः शीतं कुरुतः । आदिशब्दाद्भ्रमथुतंद्रादयः । द्वावेतौ दाहशीतादी संसर्गजौ

मधुकोशव्याख्या ।

सन्ततकादीनामन्यतमत्वं प्राप्नोत्युत्कर्षात् । एवं वर्षासु समुत्पन्नः सन्ततः शरदं प्राप्यापकृष्टबलः सततादीनामन्यतमत्वमेत्यपकर्षात् । एवं पित्तकफयोरपि उत्कर्षापकर्षौ ऋतुकृतौ व्याख्येयौ । अहोरात्रशब्देन कतिपयान्यहोरात्राणि गृह्यन्ते । न हि एकस्मिन्नहोरात्रे सन्ततादीनामुत्कर्षापकर्षाभ्यामन्यथाभाव उपपद्यते, किंतु कतिपयैरेव । यदा वर्षाशरद्वसन्तप्रारम्भे वातादयो ज्वरं चतुर्थकम् आरभन्ते तदा मध्यानि कतिपयदिनानि अवाप्य स एव तृतीयकपूर्वकत्वेन विपरिणमते उत्कर्षात् । अपकर्षात्तु यदान्त्यानि दिनान्याप्नोति तदा सन्ततो वातारब्धः प्रावृषः, पित्तारब्धः शरदः, वसन्तस्य च श्लेष्मारब्धः, प्रतनुकत्वाद्दोषस्य सततादीनामन्यतमत्वेन विपरिणमत इति । दोषबलाबलाद्यथा—यदा सततादीनामन्यतमकारी दोषः श्लेष्मा मधुरस्निग्धादीन् दिवस्वप्नादींश्च हेतूनाप्नोति तदा सन्ततं करोति । एवं वातपित्तयोरप्युदाहार्यम् । मनोबलाबलाद्यथा—यदा सन्ततज्वरी सत्त्वगुणोद्रेकात्प्रहर्षाविष्टम्भबहुलो भवति तदा सततादीनामन्यतमत्वं प्राप्नोति यदा चतुर्थकज्वरी तमोगुणभूयिष्ठत्वाद्विषादादिभिरभिभूयते तदा तृतीयकादीनामन्यतमो भवति, "विषादो रोगवर्धनानाम्" इत्यागमात् । अन्ये तु मनःशब्देन बुद्धिं व्याख्यानयन्ति, कारणे कार्योपचारात् । तस्याश्च बलाबलं यथा—यदा चतुर्थकज्वरी प्रज्ञापराधाद्देवतादीनभिभूयाहितान्याचरति तदा तृतीयकपूर्वेषामन्यतमत्वमाप्नोति; यदा तु शुद्धसत्त्वोत्कर्षाद्विवेकिन्या बुद्ध्या युक्तः स्यात्तदा शुभानि देवताराधनेष्टिबल्युपहारादीन्याचरति तदा सन्ततज्वरी सततादीनामन्यतमत्वं प्राप्नोति । अर्थवशाद्यथा—सन्ततज्वरिणोऽपि यदि चतुर्थकवेदनीयं कर्म स्यात्तदा सन्ततोऽपि चतुर्थकत्वेन विपरिणमते । अथ चतुर्थकादिज्वराविष्टस्य यदि तत्कालपरिपाकि कर्म

आतङ्कदर्पणव्याख्या ।

कथितौ, एको दाहादिः, अपरः शीतादिस्तयोर्दाहशीतपूर्वकयोर्ज्वरयोर्मध्ये दाहपूर्वकः कष्टोऽत्यंतदुःखप्रदः, कष्टः कृच्छ्रसाध्यतम इति विशेषणद्वयोपादानादत्यर्थं दुःसाध्यत्वं दर्शितं, शीतादेरर्थतोऽकष्टत्वमिति । कुतः, रोगशक्तेरचिंत्यत्वात् । नन्वेतयोस्त्रिदोषजत्वमुक्तं तत्कथं संसर्गजावित्युक्तम् । उच्यते—संसर्गः सम्बन्धः स च द्वयोर्बहूनां च भवति अतोऽत्र त्रयाणामुक्तः, न चैवं सर्वत्र । अथवा संसर्गः सौम्याग्नेयदोषद्वयमेलकः । तत्र शीतादौ ज्वरे पित्तानुबंधः, दाहादौ ज्वरे वातकफानुबन्धश्च । संसर्गे प्राधान्येन चिकित्स्यत इति अनुबंधात्संसर्गजावित्युक्तमिति न विरोधः । उक्तविषमज्वराणामुपलक्षणत्वादन्येपि विषमज्वरा रात्रिज्वरादयो बोद्धव्याः—इति जेज्जटादयः । उक्तं च तंत्रान्तरे—"समौ वातकफौ यस्य हीनपित्तस्य देहिनः । रात्रौ प्रायो ज्वरस्तस्य दिवा हीनकफस्य तु ॥" सर्वेषु विषमज्वरेष्ववश्यं भावी वायुः । यदाह वृद्धसुश्रुतः—

गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ ॥
रसस्थे तु ज्वरे लिंगं दैन्यं चास्योपजायते ॥ ४८ ॥
रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ ॥
प्रलापः पीडिका तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥ ४९ ॥
पिण्डिकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता ॥
ऊष्मान्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥ ५० ॥
भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च ॥
दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता ॥ ५१ ॥
भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च ॥
विक्षेपणं च गात्राणामेतदस्थिगते ज्वरे ॥ ५२ ॥
तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा ॥
अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे ॥ ५३ ॥
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे ॥
शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥ ५४ ॥

---

मधुकोशव्याख्या ।

बलीयो भवति तदा सन्ततत्वेन परिणमते । एतच्च कर्मवशत्वम् ऋत्वहोरात्रदोषबलाबलेष्वपि बोद्धव्यं, तदनन्तरं तन्निर्देशादिति ॥ ४२–४७ ॥ उक्तवातादिज्वराणां धातुविशेषदूष्यतयाधिकलक्षणानि भवन्ति । यदुक्तं–"वातपित्तकफोत्थानां ज्वराणां लक्षणं यथा । तथा । तेषां भिषग्ब्रूयाद्रसादिष्वपि बुद्धिमान्" इति। एतदभिधानं च रसादिधात्वविरोधेन वातादिचिकित्साकरणार्थम् । अतस्तानाह–गुरुतेत्यादि । हृदयोत्क्लेशः हृदयस्थितस्य दोषस्य उपस्थितवमनत्वमिव, रसस्य हृदयस्थत्वात्। रसस्थ

आतङ्कदर्पणव्याख्या ।

"नर्तेऽनिलाद्द्वि विषमो ज्वरः समुपजायते । कफपित्ते तु निश्चेष्टे चेष्टयत्यनिलो बली ॥" तथा विदेहेपि–"पवनो गतिवैषम्याद्विषमज्वरकारणम् ।" इति॥ ४२–४७॥ अथ रसादिधातुगतज्वरमाह–गुरुता गात्राणां हृदयोत्क्लेशः हृदयस्थस्य दोषस्योपस्थितवमनत्वमिव रसस्य हृदयस्थितत्वात्सदनमंगग्लानिः, दैन्यं क्लांतचित्तता, रसस्थे रसधातुगते ज्वरे यद्यपि रसैकधातुप्राप्त्या संतत एवायं तथाप्यनुक्रमधातुगतकथनार्थमत्र निर्देशः । रक्तगं ज्वरमाह–मोहो विगतचित्तता। अन्ये-

मधुकोशव्याख्या ।

इत्यनेन विशेषेणात्र रसो दूष्यः सर्वेषामेव ज्वराणां रसानुगतत्वात्। दैन्यं क्लान्तचित्तत्वम्। पिण्डिकेत्यादि । पिण्डिका जान्वधोजङ्घामांसपिण्डस्तस्या उद्वेष्टनं दण्डादिना पीडनेनेव वेदना पिण्डिकोद्वेष्टनम्, एवमन्यत्रापि । सृष्टमूत्रपुरीषता प्रवर्तमानमूत्रपुरीषता । ऊष्मा बहिः । एतच्च विशेषपरं, प्रायः सर्वज्वरेषु तथाभावात् । "ऊष्मान्तर्मोहविक्षेपौ" इति पाठान्तरे, ऊष्मान्तः अन्तर्दाह इत्यर्थः । विक्षेपो हस्तादिचालनम् । भृशं स्वेद इति घर्मस्य मेदोमलत्वात्; तद्विकृत्यैव दौर्गन्ध्यं गात्रे । असहिष्णुता वेदनाया असहिष्णुत्वं, क्रोधनत्वमिति कार्तिकः । भेदोऽस्थ्नामिति । भेद इव भेदः भङ्गवत्पीडेत्यर्थः । परपदार्थेषु प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति यथाग्निर्माणवकः । एवमन्यत्रापि भेदादौ द्रष्टव्यम् । कूजनम् अस्फुटध्वनिः, 'कुञ्चनम्' इति पाठान्तरेऽस्थ्नामेव संकोच इत्यर्थः । तमःप्रवेशनम् अन्धकारप्रविष्टस्येवासंवित्तिः । महाश्वासः श्वासाधिकारे वक्ष्यमाणलक्षणः । मर्मशब्देन हृदयमुच्यते प्राधान्यादिति कार्तिकः तस्य छेद इव मर्मछेदः । मरणमित्यादि । तत्रैतेषु रसादिधातुगतज्वरेषु मध्ये शुक्रस्थानगते मरणं प्राप्नुयादिति योज्यम् । शुक्रं च तत्स्थानं चेति शुक्रस्थानं; न तु शुक्रस्य स्थानं शुक्रस्थानं, शुक्रस्य सर्वदेहगत्वेन

आतङ्कदर्पणव्याख्या ।

पिंडिका तृष्णेति । मांसगतमाह—पिंडिका जान्वधोभागे मांसपिंडः, तस्योद्वेष्टनं दंडादिनिर्पीडनेनेव वेदनाविशेषः । सृष्टमूत्रपुरीषता--प्रवर्तमानमूत्रपुरीषत्वम्, एतच्च विशेषणं प्रायः सर्वज्वरेषु तथाभावात् । उष्मान्तर्दाहविक्षेपौ तत्र उष्मा बहिः, अन्तर्दाहः, "उष्मांतर्मोहविक्षेपौ" इति पाठान्तरे—उष्मा अन्तर्दाहः, विक्षेपो—हस्तादिचालनम् । मेदोगतमाह—भृशं स्वेद इति । मेदोमलत्वात् तद्विकृत्यैव दौर्गंध्यं गात्रेऽसहिष्णुता वेदनासहत्वं क्रोधनत्वमिति कार्तिकः । अस्थिगतमाह—भेदोऽस्थ्नामिति भेद इव भेदः भंगवत्पीडेत्यर्थः । परपदार्थेषु प्रयुज्यमानाः शब्दा इवांतरेणापि इव इत्यर्थं गमयंति । यथा अग्निर्माणवकः-एवमन्यत्रापि । कूजनं कुंथनं, कुंचनमिति केचन पठंति, तच्च सान्निध्यादस्थ्नामित्यनेन संबध्यते । मज्जगतमाह—तमःप्रवेशनम् अन्धकारप्रविष्टस्येवार्थासंवित्तिः । महाश्वास इति श्वासनिदाने वक्ष्यमाणलक्षणः । मर्मशब्देन हृदयमुच्यते । प्राधान्यादिति कार्तिकः । तस्य छेद इव मर्मच्छेदः । शुक्रगतलक्षणमाह—तत्र तेषु रसादिधातुगतज्वरेषु मध्ये शुक्रस्थानगतत्वेन मरणं प्राप्नुयादिति योज्यं,ननु शुक्रगे ज्वरे मरणमित्युक्तं तच्च शुक्रं सर्वदेहगं, ततश्च रसादिधात्वभिभवेपि शुक्रप्राप्तेः तद्गतेपि मरणमिति । नैवम्—सर्वशरीरस्थस्यापि शुक्रस्य कलांतरितत्वेन क्रमेण त्वचि प्राप्तेः । क्रमेणापि शुक्रं ज्वरेण कथं प्राप्यमिति चेत् धात्वंतरादतिक्रम्य शुक्रगमनादिति । विशेषत इति पदेन शुक्रस्य बाहुल्येन विसर्गः । अन्यस्यापि रक्तादेरिति वदंतीत्युक्तम् । सुश्रुते "दग्धेंधनो यथा वह्निर्धातून्

( रसरक्ताश्रितः साध्यो मांसमेदोगतश्च यः ॥
अस्थिमज्जगतः कृच्छ्रो शुक्रस्थस्तु न सिध्यति ॥ )
वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ॥
वैकृतोऽन्यः स दुःसाध्यः प्राकृतश्चानिलोद्भवः ॥ ५९ ॥

---

मधुकोशव्याख्या ।

नियतस्थानासंभवादिति । यदुक्तं-"यथा पयसि सर्पिस्तु गुडश्चेक्षुरसे यथा । शरीरेषु तथा नृणां शुक्रं विद्याद्भिषग्वरः" इति । विशेषत इति पदेन शुक्रस्य वाहुल्येन विसर्गः, अन्यस्यापि रक्तादेरिति वदन्ति ॥ ४८-५४ ॥ उक्तवातादिज्वराणां कालप्रकृतिमुद्दिश्य प्राकृतत्वं वैकृतत्वं चाह--वर्षेत्यादि । वर्षादिषु वाताद्यैः क्रमाद्यो ज्वरः स प्राकृतः, वर्षासु वातिकः, शरदि पैत्तिकः, वसन्ते श्लैष्मिकः । अस्मादन्यो वैकृतः, यथा-वर्षासु पैत्तिक इत्यादि । स इति वैकृतो दुःसाध्यः, अर्थात्सुखसाध्यः प्राकृतः इति । यदुक्तम्-"प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः" इत्यादि । अत्र वाग्भटेन वातजस्य प्राकृतत्वप्रणयनं यत्कृतं तदन्ये नानुमन्यन्ते, दुःसाध्यत्वेन वैकृतादभिन्नत्वात् । जतूकर्णेनाप्यसौ न पठितः । यदाह-"वसन्तशरदोः प्रायः प्राकृतोऽन्यश्च वैकृतः" इति । अत्रोच्यते न प्राकृतत्वं सुखसाध्यत्वख्यापनपरा संज्ञा, किंतु कुम्भकारादिवत् यौगिकत्वं; यतो यथर्तुकुपितो दोषः प्रकृतिरुच्यते ततो भूतः प्राकृतः, तेन प्राकृतत्वेऽपि दोषप्रभावाद्वातिकस्य दुःखसाध्यत्वं वैकृतवदिति । दुःखसाध्यत्वेन वैकृतसाधर्म्यात्तु चरकजतूकर्णाभ्यां नोक्तः, न तु प्राकृतत्वाभावादित्यभिप्रायो वाग्भटस्येति । अन्यरोगेषु प्राकृतत्वेन दुःखसाध्यत्वं, ज्वरस्य तु व्याधिप्रभावात्सुखसाध्यत्वम् । तन्त्रान्तरं हि-"ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता । रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्"

आतङ्कदर्पणव्याख्या ।

हत्वा यथाविषम् । कृतकृत्यो व्रजेच्छांतिं देहं हत्वा तथा ज्वरः॥" इति । ग्रन्थान्तरेऽपि--"रसरक्ताश्रितः साध्यो मांसमेदोगतस्तथा । अस्थिमज्जागतः कृच्छ्रः शुक्रस्थाने न जीवति" ॥ ४८-५४॥ अथ कालभेदेन ज्वरस्य साध्यासाध्यलक्षणमाह--वर्षादिषु ऋतुषु वाताद्यैः क्रमाद्यो ज्वरः स प्राकृतः, वर्षासु वातिकः, शरदि पैत्तिकः, वसंते श्लैष्मिकः । अस्मादन्यो वैकृतः क्रमात् यथा वर्षासु पैत्तिकः, शरदि श्लैष्मिको, वसन्ते वातिकः, स इति वैकृतो दुःसाध्यः । अर्थात्सुखसाध्यः प्राकृत इति । यदुक्तं-"प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः" इति । अनिलोद्भवश्च प्राकृतो दुःसाध्यः ॥५९॥

**वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम् ॥**
**कुर्यात्पित्तं च शरदि तस्य चानुबलः कफः ॥ ६६ ॥**

---

मधुकोशव्याख्या ।

इति ॥ ६५ ॥ तेषामेव प्राकृतज्वराणां चिकित्साविशेषार्थमुत्पत्तिक्रममाह- वर्षास्वि-त्यादि । दुष्ट इति कुपितः, ग्रीष्मे संचितत्वात् । पित्तश्लेष्मान्वित इति तत्कालो-चितपित्तकफानुबन्धः । यदुक्तं-"भूबाष्पान्मेघनिष्पन्दात्पाकादम्लाज्जलस्य च । वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः" इति । कुर्यादिति छेदः । पित्तं च शर-दीति दुष्टं ज्वरं कुर्यादिति पूर्वोक्तेन संबध्यते । एवं कफो वसन्ते इत्यपि योज्यम् । पित्तदुष्टिश्च शरदि वर्षासु संचितत्वेन । अनुबलोऽनुबन्धः, तस्य च हेतुर्वार्षिकक्ले-दानुवृत्तिरेव । तत्प्रकृत्येति तयोः पित्तश्लेष्मणोः प्रकृत्या स्वभावेन तत्कृतयोर्ज्वर-योरनशनात् लंघनात् न भयं भवति । यदुक्तम्-"कफपित्ते द्रवे धातू सहेते लंघनं महत्" । विसर्गाच्च हेतोर्नानशनाद्भयम् । वर्षाशरद्धेमन्ता विसर्गः तत्रोपचितबलाः प्राणिनो भवन्ति सोमबलत्वात्, शिशिरवसन्तग्रीष्मास्त्वादानं तत्रापचितबलाः प्राणिनः सूर्यबलत्वादिति व्युत्पादितं शास्त्रे । "तत्प्रकृत्या विसर्गस्य" इति पाठान्तरे तत्प्रकृत्या कफपित्तप्रकृत्या, विसर्गस्य च प्रकृत्येति योज्यम् । कफ

आतङ्कदर्पणव्याख्या ।

तेषामेव प्राकृतज्वराणां चिकित्साविशेषार्थमुत्पत्तिक्रममाह--ग्रीष्मे संचितत्वात् वर्षासु दुष्टः कुपितो वायुः पित्तश्लेष्मान्वित इति तत्कालोचितपित्तकफानुबन्धं ज्वरं कुर्यात् । यदुक्तम्-"भूबाष्पा-न्मेघनिष्पंदात्पाकादम्लजलस्य च । वर्षास्वग्निबले क्षीने कुप्यंति पवनादयः ॥" । पित्तं च शरदि दुष्टं सत् ज्वरं कुर्यादिति पूर्वोक्तेन संबध्यते । एवं कफो वसंत इत्यत्रापि योज्यम् । पित्तं दुष्टं च शरदि वर्षासु संचितत्वेनेति । एतस्य च पित्तज्वरं कर्तुमुद्यतस्य शरदि अनुबलो अनुबंधी कफो भवति । तस्य च हेतुर्वार्षिकक्लेदानुवृत्तिरेव । अनुबलमिवानुबलं यथा स्वतंत्रस्य कस्यचिद्राज्ञो गजरथतुरगपुरुषादिबलवतो वैरिभिः सह युध्यमानस्य पश्चादन्यबलं तच्छक्तेरनुबलो बृंहणार्थमाग-च्छति । एवं स्वतंत्रस्य पित्तस्य ज्वरं कुर्वतो बलोपबृंहणं शरदि कफः करोति । तयोः पित्तश्ले-ष्मणोः प्रकृत्या स्वभावेन तत्कृतयोर्ज्वरयोरनशनाल्लंघनाद्भयं न भवति ॥ यदुक्तम् "कफपित्ते द्रवे धातू सहेते लंघनं महत्" इति । कस्माद् विसर्गाच्च हेतोर्नानशनाल्लंघनाद्भयम् । वर्षाशरद्धेमन्ता विसर्गकालाः तत्रोपचितबलाः प्राणिनो भवंति सोमबलत्वात् । शिशिरवसंतग्रीष्मास्त्वादानकालः तत्रापचितबलाः प्राणिनो भवंति सूर्यबलत्वात् । "तत्प्रकृत्या विसर्गस्य" इतिपाठांतरे तत्प्रकृत्या पित्तकफविसर्गस्य च प्रकृत्येति योज्यं, चंद्रनन्दनस्त्वेवं व्याचष्टे-तत्र शरदि पित्तज्वरेऽनशनाल्लंघ-नाद्भयं न भवति, केन कारणेन तत्प्रकृत्या, तयोः पित्तकफज्वरयोः लंघनसाध्यत्वेन । तथा च

तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ॥
कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ ९७ ॥
काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ॥
निदानोक्तानुपशयो विपरीतोपशायिता ॥ ९८ ॥

मधुकोशव्याख्या ।

इत्यादि । तं कफमनु वातपित्ते भवतः, अनुबन्धरूपे भवत इत्यर्थः । हेतुश्चात्र वसन्तस्यादानमध्यत्वेनाग्नेयरूक्षत्वाद्वातपित्तप्रकोपकत्वम् । यदुक्तं चरके—"आदानमध्ये तस्यापि वातपित्तं भवेदनु" इति । अत्र कफपित्तप्रकृत्या लंघनं युक्तमेव, किंत्वादानमध्यत्वेन निर्भयं तन्न कार्यम् । अत एव तत्र नानशनाद्भयमिति एतस्मात् पूर्वमेव पठितम्, अन्यथा सर्वशेषे पठितं स्यादिति ॥ ९६ ॥ ९७ ॥ कालोऽपि दोषविशेषस्य लक्षणमित्याह- काल इत्यादि । यथास्वं काले यस्य वातादेर्यः प्रकोपकालः तत्र तज्जस्य ज्वरस्य प्रवृत्तिरुत्पादो वृद्धिर्वा भवति । अथवा प्रवृत्तिर्नित्यज्वरस्य, वृद्धिर्विषमज्वरस्येति । तथोपशयानुपशयावपि लक्षणमित्याह—निदानेत्यादि ।

आतङ्कदर्पणव्याख्या ।

विसर्गाच्च कालस्य विसर्गाख्यभावात्तत्र लंघनात्प्रत्यवायशङ्का नोत्पद्यते, ज्वरस्यामाशयसमुत्थत्वात् । पित्तश्लेष्मणोर्लंघनसाध्यत्वात् । उक्तं च—"कफपित्ते द्रवत्वाच्च सहेते लंघनं महत् । आमक्षयादूर्ध्वमपि वायुर्न सहते क्षणम्" इति । अरुणदत्तस्त्वेवं व्याचष्टे—तच्छब्देन वर्षाशरदुद्भूतौ वातज्वरपित्तज्वरौ परामृष्येते । तयोः प्रकृतिस्तया तत्प्रकृत्या—तत्स्वभावेन तत्र प्राकृते ज्वरेऽनशनाद्भयं न भवतीति शेषः । विसर्गाच्च—वर्षाशरदुपलक्षितो हि कालो विसर्गः सौम्यस्वभावः, अस्माच्च कारणात्तस्मिन् काले ज्वरोत्पत्तेर्लंघनान्मृत्युप्रत्यवायशङ्का न तथा भवति यथाऽन्यस्मिन् ज्वरे आदानकालस्वाभाव्याद्वातपित्तानुबलत्वाच्चानशनाद्भयं भवतीत्यर्थः । वसंते काले कफो दुष्टो ज्वरं कुर्यादिति तं कफमनु वातपित्तं भवेदिति अनुबंधरूपे भवत इत्यर्थः । हेतुश्चात्र वसंतस्यादानमध्यत्वेऽग्नेरुष्णत्वाद्वातपित्तप्रकोपनम् । यदुक्तं चरके—"आदानमध्ये तस्यापि वातपित्तं भवेदनु" इति । अतः कफपित्तप्रकृत्या च लंघनं युक्तमेव किंत्वादानमध्यत्वेन निर्भयं तन्न कार्यम् । अत एव तत्र नानशनाद्भयमिति तस्मात्पूर्वमेव पठितम् । अन्यथा सर्वशेषे पठितं स्यादिति ॥ ९६ ॥ ९७ ॥ यथास्वं काले वातादेर्यः प्रकोपकालः तत्र तज्जन्यस्य ज्वरस्य प्रवृत्तिरुत्पादः अभिवृद्धिर्वा भवत्यथवा प्रवृत्तिर्नित्यज्वरस्य वृद्धिर्विषमज्वरस्येति । कालोपि दोषविशेषलक्षणं तथोपशयानुपशयावपि लक्षयति । निदानत्वेन ये उक्ता आहाराचारादयस्तैरनुपशयो दुःखं निदानोक्तोपशयो विपरीतैर्दोषाहाराचारैरुपशायिता सुखजनकशीलत्वं विपरीतोपशायितेति निदानत्वेनोपयुक्त आहाराचारादिस्स दोषस्य दुःखजनकत्वेनानुपशयो विपरीत-

अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ॥
सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः ॥ ५९ ॥
अन्तर्वेगस्य लिंगानि ज्वरस्यैतानि लक्षयेत् ॥
सन्तापो ह्यधिको बाह्यस्तृष्णादीनां च मार्दवम् ॥ ६० ॥
बहिर्वेगस्य लिंगानि सुखसाध्यत्वमेव च ॥
लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकाः ॥ ६१ ॥

मधुकोशव्याख्या ।

निदानत्वेन ये उक्ता आहाराचारादयस्तैरनुपशयो दुःखं निदानोक्तानुपशयः । विपरीतैर्दोषादिविपरीताहाराचारैरुपशायिता सुखजननशीलत्वं विपरीतोपशायितेति॥५८॥ उक्तज्वराणां मध्ये संप्राप्तिवशात्कश्चिदन्तर्वेगो भवति कश्चिद्बहिर्वेगस्तयोर्लक्षणमाह— अन्तर्दाह इत्यादि । श्वसनं श्वासः । सदनमिति पाठान्तरं, तत्र युक्तमिति जेज्जटः, यतोऽन्तर्वेग एव सुश्रुते गम्भीराख्यः पठितः तत्र च श्वासः पठितः इति । विनिग्रहोऽप्रवृत्तिः । तृष्णादीनामित्यादिशब्देनोक्तप्रलापादीनां ग्रहणम् । मार्दवं स्वल्पत्वम् । अस्य सुखसाध्यत्वाभिधानेनान्तर्वेगस्य कृच्छ्रसाध्यतां सूचयति असाध्यतां वा, "गम्भीरतीक्ष्णवेगार्तं ज्वरितं परिवर्जयेत्" इति सुश्रुतदर्शनादिति ॥५९॥६०॥ चिकित्साविशेषार्थमामपच्यमानपक्वलक्षणमाह—लालेत्यादि । ननु, न दद्यात्तत्र भेषजमिति विरुद्धं द्विविधं हि भेषजम्, उक्तं च चरकेण—"द्रव्यभूतमद्रव्यभूतं च" इति । तत्र द्रव्यभूतं कषायादि, अद्रव्यभूतं लंघनस्वेदादि । तत्र लंघनादिकं षडङ्गार्धेशृतं च प्रयुज्यते ? उच्यते, भेषजशब्देनात्रानुपानसाधनव्यतिरिक्ता कल्पनोच्यते, न तु सामान्येनौषधमात्रम्; कथमेषा प्रतीतिरिति चेत्, तरुणज्वरे भेषजनिषेधेऽपि

आतङ्कदर्पणव्याख्या ।

स्त्वाहाराचारादिर्दोषानुत्पादकत्वात्, उपशायितोपशयश्चेति पिंडार्थः ॥ ५८ ॥ उक्तज्वराणां मध्ये संप्राप्तिवशादंतर्वेगो भवति, कश्चिद्बहिर्वेगस्तयोर्लक्षणमाह—एतैर्लिंगैरंतर्वेगज्वरं लक्षयेत् । श्वसनं श्वासः अन्ये सदनमिति पठंति । दोषस्य वायोर्वर्चसः पुरीषस्य च विनिग्रहोऽप्रवृत्तिः । बहिर्वेगस्य लक्षणमाह—एतैर्लिंगैर्बहिर्वेगं लक्षयेत् । तृष्णादीनामित्यादिशब्देन प्रलापादीनां ग्रहणं, मार्दवं स्वल्पत्वम्।अस्य तु सुखसाध्यत्वाभिधानेन अन्तर्वेगस्य कृच्छ्रसाध्यत्वं दर्शितम् असाध्यत्वं वा। सुश्रुते अन्तर्वेगो गंभीराख्यया पठितः—"गंभीरतीक्ष्णवेगार्तं ज्वरितं परिवर्जयेत्" इति ॥५९॥६०॥ चिकित्साविशेषदर्शनार्थमामज्वरलक्षणमाह—लालाप्रसेकः—लालास्रावः, हृल्लासः—उपस्थितवमनत्वमिव हृदयाशुद्धिः हृदयं पूर्णमिव गुरु इव चापरे। क्षुन्नाशः छिकाया अनिःसरणम्, अथवा क्षुत्—

तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ॥
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवाञ्ज्वरः ॥ ६२ ॥
आमज्वरस्य लिंगानि न दद्यात्तत्र भेषजम् ॥
भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ॥ ६३ ॥
"शोधनं शमनीयं च करोति विषमज्वरम् ॥"
ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ॥
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ६४ ॥
क्षुत्क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ॥
दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम् ॥ ६५ ॥

---

मधुकोशव्याख्या ।

तषां विधानदर्शनात् । एवं पच्यमानेपि बोद्धव्यं, तत्रापि सामतायाः सद्भावात् । क्षुदित्यादि । असमासकरणात् क्षुदादयो व्यस्ताः समस्ताश्च बोद्धव्याः । अष्टाहः पक्वलक्षणमिति जेज्जटः । हरिचन्द्रस्त्वाह—असत्यप्यष्टाहे क्षुदादिभिर्निरामत्वं दोषप्रवृत्त्या वा क्षुधाद्यभावेप्यष्टाहेनैव शिष्यहितैषितया कालं लक्षणं च निर्दिष्टवानिति द्विविधा हि सामता—एका रसस्य अपरा दोषस्य, रससामता तु मुखवैरस्यादिलक्षणा, दोषसामता तरुणत्वरूपा, साष्टाहेनैवापैति । अत्र च हरिचन्द्रेण हेतुरुक्तः-"सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः । निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि" इति । सप्तानां धातूनां धात्वग्निना सप्ताहेनामपाकादष्टाहेनैव नैराम्यमिति । रससामता तु अष्टाहात्परतोऽप्यनुवर्तते । एवमर्थं जेज्जटोऽपीच्छति, यदेवं लिखति चरकसुश्रुतटीकायां—"तरुणा सामताष्टाहादपैति, रससामता तु परेणापि" इति । एतत्प्रयोजनं च तरुणसामतायामौषधं नोपयुज्यते,रससामतायां तु पाचनं दीयत । अत एवाह चरकः—"ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम् । पाचनं शमनीयं वा कषायं पाययेत्तु तम्" इति । तथा—"मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च । पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम्" इत्यभिधायापि यत्सुश्रुतेन पठितम्—

आतङ्कदर्पणव्याख्या ।

क्षुधा तस्या नाशः, बलवान् ज्वरो बलाधिकः एतानि लक्षणानि आमज्वरे भवंति, तत्र भेषजं पाचनादि न देयं यदि दत्तं भेषजं भूयो ज्वरं वर्द्धयति शोधनं यच्च शमनीयं तद्विषमज्वरं कुर्यात् । तत्र सामता द्विधा—एका रसस्यापरा दोषस्य, दोषसामता तरुणरूपा, रससामताऽष्टाहा-

मधुकोशव्याख्या।

'सप्तरात्रात्परं केचिन्मन्यन्ते देयमौषधम्। दशरात्रात्परं केचिद्दातव्यमिति निश्चितम्" इति। तेनैवं ज्ञापयति सप्ताहादर्वाक् पाचनमपि न दीयते इति कार्तिककुण्डेनापि व्याख्यातम्। ननु, "ज्वरितं षडहेऽतीते" इति चरकवचनस्य "सप्तरात्रात्परम्" इत्यादिना सुश्रुतवचनेन विरोधः, यतः षडहेऽतीते सप्तमदिनं भवति तत्र कषायं विधत्त इति। उच्यते, षडहेऽतीते सप्तमे लघ्वन्नप्रतिभोजितमष्टमे कषायं पाययेदिति, अष्टमपदलोपाद्योज्यं रसौदनवत्—इति चक्रः। "भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्" इति दोषश्रुतेः सुश्रुतविरोधाच्च प्रकारान्तरेण एवमर्थं कार्तिककुण्डोऽप्याह, तद्यथा—षडहेऽतीते इति ज्वरोत्पाददिनं परित्यज्य गणना, बस्तिदानदिनपरिहारेण परिहारकालगणनावत्। एवं—"पाययेदातुरं साममौषधं सप्तमे दिने। शमनेनाथवा दृष्ट्वा निरामं तमुपाचरेत्" इत्येतदपि वचनं व्याख्येयम्। भट्टारहरिचन्द्रेणापि सप्तमदिने कषायपानं यद्व्याख्यातं तस्यायमेवाभिप्रायो गवेषणीयः, सुश्रुतादिविरोधात्। चन्द्रिकाकारेणापि व्याख्यातम्—"अक्षिरोगदिनचतुष्टयवत् ज्वरस्य सप्ताहं सामताकालः, तत्र न पाचनं न वा शमनं न शोधनम्" इति। यत्तु पेयाद्यनन्तरं हारीतेनोक्तम्—"एतां क्रियां प्रयुञ्जीत षड्रात्रं सप्तमेऽहनि। पिबेत्कषायसंयोगाञ्ज्वरघ्नान्साधुसाधितान्" इति, तथा—" इति षड्रात्रिकः प्रोक्तो नवज्वरहितो विधिः। अतः परं पाचनीयं शमनं वा ज्वरे हितम्" इति खरनादवचनं च पूर्ववदष्टाहप्रतिपादकं द्रष्टव्यम्। अथ वा पित्तज्वराभिप्रायेणैव तद्वचनद्वयम्। यदाह सुश्रुतः—"सप्तरात्रात्परम्" इत्यारभ्य, यावत्—"पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते। अचिरज्वरितस्यापि भैषज्यं दोषपाकतः" इति। सप्ताहादर्वागपि यदेतत्पाचनं कषायपानमुक्तं तदनुभूतसामतायां द्रष्टव्यम्। यदाह वाग्भटः—"सप्ताहादौषधं केचिदाहुरन्ये दशाहतः। केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु॥ तीव्रज्वरपरीतस्य दोषवेगोदयो यतः। दोषेऽथ वातिनिचिते तन्द्रास्तैमित्यकारिणि। अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम्" इति। "अयमर्थोऽभियुक्तैश्च कैश्चिदुक्तश्चिकित्सकैः। सप्ताहात्परतोऽस्तब्धे सामे स्यात्पाचनं ज्वरे॥ निरामे शमनं स्तब्धे सामे नौषधमाचरेत्" इति संक्षेपः। विस्तरस्तु कषायनिर्णयप्रकरणे द्रष्टव्यः। पक्वज्वरलक्ष-

आतङ्कदर्पणव्याख्या।

त्परतो निवर्तते तरुणसामतायामौषधं नोपयुज्यते। उक्तं च सुश्रुते—"सप्तरात्रात्परं केचिन्मन्यंते देयमौषधम्। दशरात्रात्परं केचिद्दातव्यमिति निश्चितम्॥" एतच्च मधुकोशे बहु विस्तृतम्॥

पच्यमानज्वरलक्षणमाह—ज्वरवेगोधिको भवति यथा निर्वाणावस्थायां दीपः प्रज्वलति तद्वत्पच्यमानावस्थायां ज्वरस्य वेगाधिक्यं भवति, मलप्रवृत्तिश्च भवति। पच्यमानस्य दोषस्य लक्षणं

बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ॥
हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः ॥ ६६ ॥
ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ॥
ज्वरः क्षीणस्य शूनस्य गम्भीरो दैर्घरात्रिकः ॥ ६७ ॥
असाध्यो बलवान्यश्च केशसीमन्तकृज्ज्वरः ॥
गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया ॥ ६८ ॥
आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च ॥
आरम्भाद्विषमो यस्तु यश्च वा दैर्घरात्रिकः ॥ ६९ ॥
क्षीणस्य चातिरूक्षस्य गम्भीरो यस्य हन्ति तम् ॥
विसंज्ञस्ताम्यते यस्तु शेते निपतितोऽपि वा ॥ ७० ॥
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥
यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान् ॥ ७१ ॥
वक्त्रेण चैवोच्छ्वसिति तं ज्वरो हन्ति मानवम् ॥
हिक्काश्वासतृषायुक्तं मूढं विभ्रान्तलोचनम् ॥ ७२ ॥
सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ॥
हतप्रभेन्द्रियं क्षीणमरोचकनिपीडितम् ॥
गम्भीरतीक्ष्णवेगार्तं ज्वरितं परिवर्जयेत् ॥ ७३ ॥

---

मधुकोशव्याख्या ।

णेन जीर्णज्वरलक्षणमपि चिकित्सोचितं बोद्धव्यम् । यदुक्तं तन्त्रान्तरे-"आसप्तरात्रम्" इत्यादि । जतूकर्णेनाप्युक्तम्-"जीर्णस्त्रयोदशदिवसः" इति । "त्रिसप्ताहव्यतीतस्तु ज्वरो यस्तनुतां गतः । प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते" इति तु तन्त्रान्तरम् अतिपुराणाभिप्रायेण द्रष्टव्यम् ॥ ६१—६५॥ ज्वरस्य साध्यलक्षणमाह-बलवत्स्वित्यादि । बलवत्सु पुरुषेषु साध्यः, यदुक्तं-"बलाधिष्ठानामारोग्यम्",

आतंकदर्पणव्याख्या ।

जानीयात् । अथ निरामज्वरलक्षणमाह-क्षुच्छिक्का तस्याः प्रादुर्भावः । अन्ये क्षुत्-क्षुधा' क्षामता-कृशत्वं, ज्वरमार्दवं-ज्वराल्पत्वं, दोषप्रवृत्तिः-वायोः प्रवर्तनं गुदेनेति शेषः । उत्साह इत्यत्राष्टाहादिति पठंति । अष्टदिनेभ्यः परत एतन्निरामज्वरलक्षणं, तत्रौषधं देयं ज्वरस्य ॥ ६१—६९ ॥ साध्यज्वरलक्षणमाह-बलवत्सु-बलयुक्तेषु पुरुषेषु ज्वरः साध्यो भवति । यदुक्तं-"बलाधिष्ठान-

मधुकोशव्याख्या।

इति। अल्पदोषेषु नातिप्रबलदोषेषु। अनुपद्रव इति ज्वरस्योपद्रवाः कासादयः। यदुक्तं तन्त्रान्तरे—"कासो मूर्च्छारुचिश्छर्दिस्तृष्णातीसारविड्ग्रहाः। हिक्काश्वासाङ्गभेदाश्च ज्वरस्योपद्रवा दश" इति॥ ज्वरस्यासाध्यलक्षणान्याह—हेतुभिरित्यादि। ननु, यो हेतुभिर्बलिभिर्बहुभिर्जायते स बहुलक्षण एवोत्पद्यते तत्किं बहुलक्षणवचनेन? उच्यते, यथा स्वहेतुकुपिता दोषाः सर्वस्यैव रोगस्य हेतवो भवन्ति, प्राक्तनकर्मापेक्षया तु यदा विशिष्टां सामग्रीं संप्राप्तिलक्षणामासादयन्ति तदा ज्वरमापादयन्ति, तथा दूष्यादिसहकारिकारणसान्निध्यासान्निध्याभ्यां बहुलक्षणतामल्पलक्षणतां च कुर्वन्ति। तथाहि तन्त्रान्तरम्—"एकं द्वौ त्रीन्बहून्वापि देहे धात्वादियोगतः। दर्शयन्ति विकारांश्च कुपिताः पवनादयः" इति। अपि च, "विकृतिविषमसमवायाद्बहुहेतुकोऽप्यल्पलक्षणः, अल्पहेतुकोऽपि बहुलक्षणः" इति। प्राणान्तकृदिति छेदः। शीघ्रमिन्द्रियनाशन इति उत्पन्नमात्र एव चिकित्स्यमानोऽपि इन्द्रियशक्तिं रूपादिग्रहणलक्षणामुपहन्ति सोऽप्यसाध्यो न तूपेक्षया; अन्येऽपि हि रोगा उपेक्ष्यमाणा इन्द्रियमुपघ्नन्ति असाध्यतां चाधिरोहन्ति। एवं बहुलक्षणोऽपि आदावेव चिकित्स्यमान एव बोद्धव्यः। इन्द्रियाण्यत्र एकादश बोद्धव्यानि सांख्यसिद्धान्तेन, तथा चरकसुश्रुतनिर्दिष्टत्वात्; चक्षुः श्रोत्रं घ्राणं रसनं स्पर्शनं चेति धीन्द्रियाणि। हस्तपादगुदोपस्थजिह्वाश्चेति कर्मेन्द्रियाणि। उभयात्मकं मनः; एवमन्यत्रापि द्रष्टव्यम्। ज्वरः क्षीणस्य शूनस्य इति। अपरमसाध्यलक्षणम्। गम्भीरो दैर्घरात्रिक इति गम्भीरोऽन्तर्धातुस्थः; अथ वा गम्भीर इव गम्भीरः, यत्र वातादीनां निश्चयं कर्तुं न शक्यते। अन्ये त्वाहुः गम्भीरोऽन्तर्वेगः। दैर्घरात्रिक इति "दीर्घरात्रानुबन्धी" इति जेज्जटः, "दीर्घां मरणरूपां रात्रिमनुवर्तते इति दैर्घरात्रिकः" इति चक्रः। असाध्य इत्यर्थः। अत्र पक्षे दैर्घरात्रिक इति पूर्वेण संबध्यते, असाध्य इति

आतङ्कदर्पणव्याख्या।

मारोग्यम्" इति। स्वल्पदोषेषु—नातिबलदोषेषु, पुरुषेष्वनुपद्रवः—ज्वरस्योपद्रवा हिक्कादयः। यदुक्तं तंत्रांतरे—"कासो मूर्च्छा रुचिश्छर्दिस्तृष्णातीसारविड्ग्रहाः। हिक्का श्वासोंगभेदश्च ज्वरस्योपद्रवा दश॥"। ज्वरस्यासाध्यलक्षणमाह—यो ज्वरो बलिभिः प्रबलैर्हेतुभिः कारणैर्जातोऽत एव बहुलक्षण सम्पूर्णलक्षण इत्यर्थः। स त्वसाध्यो, यश्च शीघ्रमिंद्रियनाशनो भवति सोपि ज्वरः प्राणांतकृत्—मरणात्मक इत्यर्थः। उत्पन्नमात्र एव चिकित्सितमात्रोपि इंद्रियशक्तिं रसरूपादिग्रहणलक्षणामुपहरति सोप्यसाध्यो न तूपेक्षया अन्येपि हि रोगा उपेक्ष्यमाणा इंद्रियशक्तिमुपघ्नंति। असाध्यतां नाधिरोहंति, एवमुक्तलक्षणोप्यादावेव चिकित्स्यमान एव बोध्यः। इंद्रियाणि चात्र चक्षुः श्रोत्रं घ्राणं रसनं स्पर्शनं चेति पंच बुद्धींद्रियाणि। हस्तपादगुदोपस्थजिह्वाः पंच कर्मेंद्रियाणि, उभयात्मकं मनः। एवमे-

मधुकोशव्याख्या ।

पर्णं । केशसीमन्तकृदिति अकस्मात् केशेषु सीमन्तान् यः करोति । उक्तं हि तन्त्रान्तरे-"केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ । लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे" इति । गम्भीरार्था ये जेज्जटादिभिर्व्याख्याताः तेषु मध्ये गम्भीरोऽन्तर्वेग इत्ययमर्थो माधवकरस्याभिमतः, यत एतदनन्तरं सौश्रुतं गम्भीरलक्षणं लिखति-गम्भीर इत्यादि । यस्तु चरकेऽन्तर्वेगः स एव सुश्रुते गम्भीरः पठितः, समलक्षणत्वात् पृथक्पाठाभावाच्चेति । आनद्धत्वेन चेति विबद्धमलत्वेन ॥ आरम्भादित्यादि । आरम्भादुत्पादात्प्रभृति यो विषमज्वरः सोऽसाध्यः, यस्य तु नित्यज्वरिणो ज्वरोत्सृष्टस्य वापचारादिना विषमः, स साध्य एव । एतच्च विषमत्वं सन्ततादिरूपं बोद्धव्यं, न तु विषमत्वमात्रेण वातिकज्वरेऽपि प्रसङ्गादिति । दैर्घरात्रिकः व्याहृत एव । न चास्य पुनरुक्तत्वं, तन्त्रान्तरीयवाक्यत्वात्; अधिकार्थप्रतिपादनार्थं तद्वाक्यं लिखितम् । एवं गम्भीरेपि वाच्यम् । अतिरूक्षस्येत्यत्रानिमिषाक्षस्येति पाठान्तरं सदा स्फारितनेत्रस्येत्यर्थः ॥ विसंज्ञः विह्वलस्ताम्यते मुह्यति । शेते निपतित इति शयितो निपतित एवास्ते नोत्थातुं समर्थः । शीतार्दितोऽन्तरुष्णश्चेति शीतार्दितो बहिः, अन्तरुष्णो दाहवान् ॥ हृष्टरोमा रोमाञ्चितगात्रः । हृदि संघातशूलवानिति संघातरूपेण वस्तुना अष्ठीलिकादिनाक्रान्तमिव हृदयं मन्यते यः । अन्ये त्वाहुः-नानाप्रकारशूलवानिति । वक्रेण चैवोच्छ्वसितीत्येवकारेण नासिकां व्यवच्छिनत्ति, व्यापादितास्यखरश्वास इत्यर्थः ॥ हिक्केत्यादि । हिक्कादिभिर्मिलितैरेकेनाप्यतिबलवताऽसाध्यत्वम् । मूढं मोहयुक्तम् । विभ्रान्तलोचनं भ्रान्तप्रेक्षणम्, चलितनेत्रं वा । सन्ततोच्छ्वासिनं निरन्तरखरश्वासयुक्तम् ॥ हतप्रभेत्यादि । हतप्रभाणि हतशक्तीनि स्वविषयाग्राहीणि चक्षुरादीनि यस्य स तथा । अथ वा हता प्रभा दीप्तिरिन्द्रियाणि च यस्य स तथा ।

आतंकदर्पणव्याख्या ।

कादशेन्द्रियाणि । अपरमसाध्यलक्षणमाह-शूनस्य शोथयुक्तस्य पुरुषस्य ज्वरक्षीणस्य ज्वरेण क्षीणस्य गंभीरो दैर्घ्यरात्रिकः, गम्भीरोन्तर्धातुस्थः अथ वा गंभीर इव गंभीरः यत्र वातादीनां निश्चयः कर्तुं न शक्यते । अन्ये-गंभीरोंतर्वेगः दैर्घ्यः रात्रिक इति दीर्घरात्रानुबंधीति जेज्जटः । दीर्घां मरणरूपां रात्रिमनुवर्त्तत इति चक्रः । असाध्य इत्यर्थः । केशसीमन्तकृदिति अकस्मात्केशेषु सीमंतान् करोति यः । उक्तं च तंत्रांतरे-"केशाः सीमंतिनो यस्य संक्षिप्ते वितते भ्रुवौ । लुलंति चाक्षिपक्ष्माणि सोचिराद्याति मृत्यवे ॥" इति ॥ सुश्रुतोक्तं साध्यगंभीरज्वरलक्षणमाह-गंभीरस्त्विति । आनद्धत्वेनेति दोषपुरीषविबंधनेति । गंभीरस्यासाध्यलक्षणमाह-आरंभात्प्रभृति यस्य विषमो ज्वरः सोऽसाध्यः । तच्चविषमत्वं सतताद्रिरूपत्वं बोद्धव्यं न तु विषमत्वं रोगादिना दैर्घ्यरात्रिकः पूर्वमेव व्याख्यातोऽपि न

मधुकोशव्याख्या ।

अरोचकनिर्पीडितमित्यत्र स्थाने जेज्जटः पाठान्तरद्वयं पठति—"दुरात्मानमुपद्रुतम्"
इति व्याचष्टे च दुरात्मानं दुष्टान्तःकरणम्, उपद्रुतमिति श्वासादिभिरुपद्रवैरुपद्रु-
तम् । "दुरात्मभिरुपद्रुतम्" इति पाठान्तरे तु राक्षसादिभिर्जुष्टमित्यर्थः । एषाम-
साध्यलक्षणानामुपलक्षणत्वादन्यान्यपि तन्त्रान्तरेषु द्रष्टव्यानि । तद्यथा—"प्रेतैः सह
पिबेन्मद्यं स्वप्ने यः कृष्यते शुना । सुघोरं ज्वरमासाद्य स जीवमपसृज्यते ॥ ज्वरः
पौर्वाह्णिको यस्य शुष्ककासश्च दारुणः । बलमांसविहीनस्य यथा प्रेतस्तथैव सः ॥
ज्वरो यस्यापराह्णे तु श्लेष्मकासश्च दारुणः । बलमांसविहीनस्य यथा प्रेतस्तथैव
सः ॥ सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः । विश्लेषणं च सन्धीनां
मुमूर्षोरुपजायते ॥ गोसर्गे वेदनाद्यस्य स्वदः प्रच्यवते भृशम् । लेप-
ज्वरोपसृष्टस्य दुर्लभं तस्य जीवितम् ॥ मृत्युश्च तस्मिन्बहुपिच्छिलत्वाच्छी-
तस्य जन्तोः परितः सरत्वात् । स्वेदो ललाटे हिमवन्नरस्य शीतार्दित
स्यैति सुपिच्छिलश्च ॥ कण्ठे स्थितो यस्य न याति वक्षो नूनं यमस्यैति गृहं स
मर्त्यः ॥ स्रुतस्वेदो ललाटाद्यः श्लथसन्धानबन्धनः । मुह्येदुत्थाप्यमानस्तु स स्थू-
लोऽपि न जीवति ॥ यस्य स्वेदोऽतिबहुलः पिच्छिलो याति सर्वतः । रोगिणः
शीतगात्रस्य तदा मरणमादिशेत्" इति । "आधानजन्मनिधनप्रत्ययाख्ये
विपत्करे । नक्षत्रे व्याधिरुत्पन्नः क्लेशाय मरणाय वा ॥ ज्वरस्तु जातः षड्रात्राद्
श्विनीषु निवर्तते" इत्यादिना ग्रन्थेन नक्षत्रभेदेन ज्वरस्य साध्यत्वासाध्यत्वं यद्-
भिहितं, तत् हारीतवृद्धवाग्भटयोर्द्रष्टव्यम्, इह तु विस्तरभयान्न लिखितम् ।
सन्निपातासाध्यप्रकरणं यथा—"पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात् ।

आतङ्कदर्पणव्याख्या ।

पौनरुक्तः । तंत्रांतरीयवाक्यत्वात् अधिकार्थप्रतिपादनार्थं तद्वाक्यं पठंति । अतिरूक्षस्येत्यत्रानिमिपा-
क्षस्येति पाठं पठंत्यन्ये । तत्र सर्वदा स्फारितनेत्रस्येत्यर्थः॥ अन्यदप्यसाध्यलक्षणमाह—विसंज्ञो विह्वलस्ता-
म्यति प्रमुह्यति शेते निपतित इति । शयितोऽपि निपतित इव आस्ते नैवोत्थातुं समर्थः । शीता-
र्दितो बहिरंतर्दाहवान् । अन्यदप्यसाध्यलक्षणमाह—हृष्टरोमा—रोमांचितः, हृदि संघातशूलवानिति
संघातरूपेण वस्तुना अष्ठीलकादिना आक्रान्तमेव हृदयं मन्यते यः, अष्ठीलापाषाणलोष्टिकाऽनेन
प्रकारेण शूलवानिति ।अन्ये त्वाहुः—"नानाप्रकारशूलवान्" इति।वक्त्रेण चैवोच्छसितीति एवं प्रकारेण
नासिकाभ्यां व्यवच्छिनत्ति हिक्केत्यादिभिर्मिलितैरेकेन वाप्यतिबलवताऽसाध्यम् । मूढं—मोहयुक्तं,
विभ्रांतलोचनं भ्रांतप्रेक्षणं चलितनेत्रं वा, संततोच्छ्वासिनं—निरंतरोच्छ्वासिनम् । लक्षणांतरमाह—
हतप्रभाणि हतशक्तीनि स्वविषयाग्राहीणि च इन्द्रियाणि चक्षुरादीनि यस्य स तथा । अथ वा हता

मधुकोशव्याख्या ।

हन्ति विमुञ्चति वाशु त्रिदोषजो धातुमलपाकात्" इति । सप्ताहाद्वाताधिकः, दशाहात्पित्ताधिकः, द्वादशाहात्कफाधिकः, पित्ताधिकवद्वातपित्ताधिकः, कफाधिकवद्वातकफाधिकः, योगवाहित्वाद्वायोः । यदाह चरकः—"योगवाही परं वायुः संयोगादुभयार्थकृत् । दाहकृत्तेजसा युक्तः शीतकृत्सोमसंश्रयात्" इति । धातुपाकात् हन्ति मलपाकाद्विमुञ्चतीति व्यवस्थितविकल्पः, धातुमलपाकविकल्पे च दैवमेव हेतुः । उत्तरोत्तररोगवृद्धिबलहानिभ्यां शुक्रादिधातुसहितमूत्रादिना च धातुपाको ज्ञेयः । यदुक्तम्—"निद्रानाशो हृदि स्तम्भो विष्टम्भो गौरवारुची । अरतिर्बलहानिश्च धातूनां पाकलक्षणम्" इति । अन्यथा च मलपाकः—"दोषप्रकृतिवैचित्र्यं लघुता ज्वरदेहयोः । इन्द्रियाणां च वैमल्यं दोषाणां पाकलक्षणम्" इति । ननु, तरतमादिभावव्यवस्थितशीघ्रमध्यमन्दशक्तित्वाद्दोषाणां कथं सप्ताहादिनियम इति चेत् । न, तथा स्वभावाद्व्याधेः, विचित्रा हि प्रतिरोगं स्वभावाः, यथाग्निरोहिणी सप्ताहेन हन्ति न तथाऽन्ये रोगा इति । अतः—"सप्तमी द्विगुणा या तु नवम्येकादशी तथा । एषा त्रिदोषमर्यादा मोक्षाय च वधाय च" इति हारातवचनसंवादार्थमेवं व्याचक्षते—दशमीप्रत्यासत्या नवमी, द्वादशीप्रत्यासत्त्या एकादशी च गृह्यते; ततो वृद्धेति पदमावर्त्य सर्वत्र द्वैगुण्यं कार्यम् । एवं—"सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा । पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा" इत्यत्र सुश्रुतवाक्ये पुनःशब्देन द्वैगुण्यं व्याख्यातवान् कार्तिककुण्डः । एवं—"दशद्वादशसप्ताहैः पित्तश्लेष्मानिलाधिकः । दग्धोष्मणा धातुमलान्हन्ति मुञ्चति वा ज्वरः" इत्यत्राधिकशब्दमावर्त्य क्रियाविशेषणं कृत्वा द्वैगुण्यं बोद्धव्यम् ।

आतङ्कदर्पणव्याख्या ।

प्रभा दीप्तिरिंद्रियाणि च यस्य स तथा । अरोचकनिपीडितमित्यत्र जेज्जटः पाठद्वयं पठति "दुरात्मानमुपद्रुतमिति । दुरात्मानं दुष्टांतःकरणमुपद्रुतमुपद्रवयुक्तम् । दुरात्मभिरुपद्रुतमिति पाठांतरे राक्षसादिभिर्जुष्टमित्यर्थः । गंभीरोंतर्वेगः, तीक्ष्णोऽतिदुःसहो, बहिरंतश्च ताभ्यामन्योन्यमार्तं पीडितं तमित्थंभूतं ज्वरितं स्वार्थविघातयशोहानिभयादसाध्यत्वात्परिवर्जयेत्। एषामसाध्यलक्षणानामुपलक्षणत्वादन्यान्यपि तन्त्रांतरेषु द्रष्टव्यानि । तद्यथा—"प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना । स घोरं ज्वरमासाद्य नरो जीवाद्विमुच्यते ॥ ज्वरः पूर्वाह्णिको यस्य शुष्ककासश्च दारुणः । बलमांसविहीनस्य यथा प्रेतस्तथैव सः"—"गोसर्गे वेदना यस्य स्वेदः प्रच्यवते भृशम् । लेपज्वरोपसृष्टस्य दुर्लभं तस्य जीवितम्" इति । अत्र गोसर्गे—प्रत्यूषे । "मृत्युश्च तस्मिन्बहुपिच्छिलत्वाच्छीतस्य जंतोः परितः सरत्वात् । स्वेदो ललाटे हिमवन्नरस्य शीतार्दितस्यापि सुपिच्छिलश्च ॥ कण्ठे स्थितो यस्य न याति वक्षो नूनं यमस्यैति गृहं स मर्त्यः ॥", तथान्यत्रापि "आविलाक्षं प्रताम्यन्तं निद्रा-

दाहः स्वेदो भ्रमस्तृष्णा कम्पविड्भिदसंज्ञिता ॥
कूजनं चास्यवैगन्ध्यमाकृतिर्ज्वरमोक्षणे ॥ ७४ ॥

मधुकोशव्याख्या।

तथा—"वातपित्तकफैः सप्तदशद्वादशवासरान्। प्रायोऽनुयाति मर्यादा मोक्षाय च वधाय च" इत्यत्राग्निवेशपठे प्रायोग्रहणेन द्वैगुण्यमिति। ननु, सप्तमीत्यादौ कथं तर्हि दशविंशतिद्वादशचतुर्विंशतीनां ग्रहणमिति चेत्। उच्यते, एकादशीत्यत्र एकेति पदमावर्तनीयं तेन नवमी एकेति दशमी लभ्यते, एकादशी एकेति द्वादशी, ततः सर्वत्र द्वैगुण्यम्। तुशब्दः समुच्चये, तेन सप्तमी गृह्यते सा द्विगुणा च। एवं नवम्यादिषु योज्यम्। चतुर्विंशत्यधिकस्तु मर्यादादिवसो नास्ति, तत्प्रतिपादकागमादर्शनात् ॥६६–७३॥ ज्वरविमुक्तिपूर्वरूपमाह—दाह इत्यादि। विड्भिदिति विड्भेदः। संपदादिपाठात् क्विप्। असंज्ञिता संज्ञानाशः। कूजनम् अस्फुटध्वनिः। यदुक्तं—"ज्वरप्रमोक्षे पुरुषः कूजन्वमति चेष्टते" इति। वाग्भटोऽप्याह—"धातून्प्रक्षोभयन्दोषो मोक्षकाले बलीयते। ततो नरः श्वसन् स्विद्यन्कूजन्वमति चेष्टते" इति। वैगन्ध्यं दुर्गन्धता गात्रे ज्वरमोक्षणे भविष्यति आकृतिर्लक्षणं भवतीति शेषः। ननु, दोषक्षयं विना न व्याधिनिवृत्तिः, क्षीणश्च दोषः कथमेवंविधं लक्षणं कुर्यात्? उच्यते, कश्चिद्भावः क्षीणोऽपि विनाशकाले स्वशक्तिं दर्शयति, यथा—निर्वा-

आतङ्कदर्पणव्याख्या।

युक्तमतीव च। क्षीणशोणितमांसं च नरं क्षपयति ज्वरः॥ स्रुतस्वेदो ललाटाद्यः श्लथसन्धानबन्धनः। गुह्यमुत्थाप्यमानस्तु स स्थूलोऽपि न जीवति॥ यस्य स्वेदोऽतिबहुलः पिच्छिलो याति सर्वतः। रोगिणः शीतगात्रस्य तदा मरणमादिशेत्॥ यस्ताम्यति स्वपिति शीतलगात्रयष्टिरंतर्विदाहसहितं स्मरणादुपेतम्। सोच्छ्वासिनं दुषितरोमचयं सशूलं तं वर्जयेद्भिषगिह ज्वरितं विधिज्ञः॥ ज्वरस्तु जातः पङ्क्त्रादश्विनीषु प्रवर्तते" इत्यादि नक्षत्रभेदेन ज्वरस्यासाध्यत्वम्। यदुक्तं तद्धारीतवाग्भटयोर्द्रष्टव्यम्॥ ६६-७३॥ ज्वरमुक्तिपूर्वरूपमाह—ज्वरमोक्षकाले एतादृश्याकृतिर्लक्षणं भवतीतिशेषः। विड्भिदिति। विड्भेदः, असंज्ञता—संज्ञानाशः, कूजनं कुंथनम्। यदुक्तम्—"ज्वरमोक्षे पुरुषः कूजन्नतिविचेष्टते" इति वाग्भटोप्याह—"धातून्प्रक्षोभयन्दोषो मोक्षकाले बलीयते। ततो नरः श्वसन्स्वद्यः कूजन्नतिविचेष्टते" इति। वैगन्ध्यं दौर्गन्ध्यमतीव गात्रे। ननु दोषक्षयं विना न व्याधिनिवृत्तिः। क्षीणश्च दोषः कथमेवंविधं लक्षणं कुर्यात्? उच्यते "क्षीणोपि विनाशकाले स्वशक्तिं दर्शयति यथा निर्वाणस्थोपि दीपो विशेषात्प्रज्वलति"। अथ वा दोषाभिभूतानां धातूनां दोषापगमेन क्षोभाद्दाहादयः तरलतरवानरपरिहीयमानतरुणतरुवल्लरीशिखरकंपवत् इति। एतच्च दाहमारभ्य

स्वेदो लघुत्वं शिरसः कण्डूः पाको मुखस्य च ॥
क्षवथुश्चान्नलिप्सा च ज्वरमुक्तस्य लक्षणम् ॥ ७९ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने ज्वरनिदानं समाप्तम् ॥ २ ॥

---

मधुकोशव्याख्या ।

णावस्थो दीपो विशेषात्प्रज्वलति । अथ वा दोषाभिभूतानां धातूनां दोषापगमन क्षोभाद्दाहादयः, तरलतरवानरपरिहीयमानतरुणतरुवल्लरीशिखरकम्पवदिति ॥ ७४ ॥ ज्वरमुक्तिलक्षणमाह—स्वेद इत्यादि । स्वेदो घर्मागमनं स्रोतसां स्फुटत्वात् । लघुत्वं गात्रस्य । शिरसः कण्डूरिति सर्वो हि ज्वरस्तैजसो, विरोधिव्यपगमात् सौम्यः श्लेष्मा लब्धबलः सन् शिरसि स्वस्थानेऽसाधारणात्मलक्षणं कण्डूं करोति, व्याधिमहिम्ना तु नान्यत्र कफस्थाने इति वदन्ति । पाको मुखस्येति ज्वरोष्मकोपितात्पित्तात्, यत्तु पूर्वं नाकार्षीदन्यत्र वा तदपि व्याधिमहिम्नैव । एतच्च दाहमारभ्य लक्षणं त्रिदोषजेऽन्तर्वेगे ज्वरे भवति नतु सर्वत्र । तथा च एतदनन्तरं भालुकिः प्राह—"त्रिदोषजे ज्वरे ह्येतदन्तर्वेगे च धातुगे । लक्षणं मोक्षकाले स्याद-न्यस्मिन्स्वेददर्शनम्" इति । ननु, ज्वरस्य प्रत्यक्षत्वात्तस्याभावोऽपि प्रत्यक्षः तत्किं तल्लक्षणपाठेन ? तथापि वा पठितव्यं, तदा सर्वविकारेषु पठ्यताम् ? उच्यते, विषमज्वरशङ्कानिरासार्थं, विषमज्वरे हि निवृत्तोऽपि ज्वरः पुनरायाति दोषाणां धातुलीनत्वात्, एतल्लक्षणे तु निःशेषदोषनिवृत्त्या न पुनरागमः । यत्र चैवंविधा शंका तत्रैव लक्षणं पठति न सर्वत्र, यथा प्रमेहातीसारादिष्वपि सर्वं सुस्थम् ॥ ७९ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां ज्वरनिदानं समाप्तम् ॥ २ ॥

आतङ्कदर्पणव्याख्या ।

लक्षणं त्रिदोषजे भवति न सर्वत्र। एतदनंतरं भालुकिः प्राह—"त्रिदोषजे ज्वरे ह्येतदंतर्वेगे च धातुजे । लक्षणं मोक्षकाले स्यादन्यस्मिन्स्वेददर्शनम्" इति ॥ ७४ ॥ ज्वरमुक्तलक्षणमाह—ज्वरमुक्तस्य पुरुषस्यैवं विधं लक्षणं भवति । स्वेदो घर्मागमः स्रोतसां स्फुटत्वात् । लघुत्वं गात्रस्य शिरसः कंडूरिति । सर्वो हि ज्वरस्तैजसः विरोधिव्यपगमात् । सौम्यः श्लेष्मा लब्धबलः सन् शिरसः स्थानेऽसाधारणात्मकलक्षणं कंडूं जनयति । व्याधिमहिम्ना नान्यत्र स्थाने इति वदंति । पाको मुखस्येति ज्वरोष्मकोपितात्पित्तात्क्षवथुः छिक्का । परमते—"देहो लघुर्व्यपगतक्लममोहतापः पाको मुखे करणसौष्ठवमव्यथत्वम् । स्वेदः क्षवः प्रकृतियोगिमनोऽन्नलिप्सा कंडूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥ ७९ ॥

इति श्रीवैद्यवाचस्पतिविरचितायां माधवनिदानटीकायामातंकदर्पणाभिधायां ज्वरनिदानं समाप्तम् ॥ २ ॥

# अथातीसारनिदानम् ३.

गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः ॥
विरुद्धाध्यशनाजीर्णैर्विषमैश्चापि भोजनैः ॥ १ ॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः ॥
शोकाद्दुष्टाम्बुमद्यातिपानैः सात्म्यर्तुपर्ययैः ॥ २ ॥
जलाभिरमणैर्वेगविघातैः क्रिमिदोषतः ॥
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥ ३ ॥

मधुकोशव्याख्या।

पित्तज्वरेऽतीसारपाठात् ज्वरातीसारयोरन्योन्योपद्रवत्वाच्च ज्वरानन्तरमतीसारमाह—गुर्वतिस्निग्धेत्यादि। गुरुशब्देन मात्रागुरु गृह्यते, तथा स्वभावगुरु च माषादि, अथ वा गुणतः पाकतश्च। अतिशब्दः स्थूलान्तैः संबध्यते। स्थूलं संहतावयवं, यथा लड्डुकपिष्टकादि। शीतलं स्पर्शाद्वीर्याच्च। विरुद्धमिति संयोगदेशकालमात्रादिभिर्विरुद्धं, यथा क्षीरमत्स्यादि; तच्च बहुप्रकारं सुश्रुते हिताहितीयेऽध्याये चरके चात्रेयभद्रकाप्यीयाध्याये द्रष्टव्यम्। अध्यशनं पूर्वदिनाहाराजीर्णे भोजनम्। उक्तं हि चरके—"भुक्तं पूर्वान्नशेषे तु पुनरध्यशनं मतम्" इति। एवं सर्वत्र। अजीर्णमपक्वमन्नम्। विषममकालभोजनादि। उक्तं हि सुश्रुते—"बहुस्तोकमकाले च तज्ज्ञेयं विषमाशनम्" इति; एवं सर्वत्र। विषमैरित्यत्र स्थाने असात्म्यैरिति पाठान्तरम्। भोजनैरिति विरुद्धादिभिः सर्वैः संबध्यते। स्नेहाद्यैरिति स्नेहः स्नेहपानं, स्नेह आद्यो येषां ते स्नेहाद्याः स्वेदवमनविरेचनानुवासननिरूहाः, तैरतियुक्तैरिति अतियोगयुक्तैः। एतच्च यथायोग्यं बोध्यं, वमनाति-

आतंकदर्पणव्याख्या।

पित्तज्वरेऽतीसारपाठाज्ज्वरातीसारयोरन्योपद्रवत्वाच्च ज्वरानंतरमतीसारमाह—गुरुशब्देन मात्रागुरुर्गृह्यते। तथा स्वभावगुरु माषादि। अथ वा गुणतः पाकतश्च अतिशब्दः स्थूलांतैः सह प्रत्येकं संबध्यते। स्थूलं संहतावयवं यथा लड्डुकपिष्टकादि शीतलं वीर्यतः स्पर्शाच्च विरुद्धमिति—संयोगदेशकालमात्रादिभिर्विरुद्धं क्षीरमत्स्यादि तच्च बहुप्रकारं सौश्रुते हिताहितीयाध्याये चरके चात्रेयभद्रकाप्यीयाध्याये द्रष्टव्यम्। अध्यशनं—पूर्वदिनाहारेऽजीर्णे भोजनम्। उक्तं च चरके "भुक्तं पूर्वान्नशेषे तु पुनरध्यशनं मतम्" इति। अजीर्णमपक्वान्नं चर्वणादि, अन्येऽजीर्णम् आमविदग्धादिविषमाशनम्। उक्तं हि सुश्रुते—"बहु स्तोकमकाले च तज्ज्ञेयं विषमाशनम्" इति। विषमैरित्यत्र स्थाने असात्म्यैरिति पाठांतरम्। अन्ये भोजनैरिति विरुद्धादिभिः सर्वैरेव संबध्यते। स्नेहाद्यैरिति। स्नेहस्वेदवमनविरेचनानुवासननिरूहास्तैरतियुक्तैः—अतियोगयुक्तैः एतच्च यथायोगं ज्ञेयम्। वमनातियोग-

**संशम्यापां धातुरग्निं प्रवृद्धः शकृन्मिश्रो वायुनाधःप्रणुन्नः ॥**
**सरत्यतीवातिसारं तमाहुर्व्याधिं घोरं षड्विधं तं वदन्ति ॥**
**एकैकशः सर्वशश्चापि दोषैःशोकेनान्यः षष्ठ आमेन चोक्तः॥४॥**

मधुकोशव्याख्या ।

योगस्यातिसारकारणायोगात् । मिथ्यायुक्तैरिति हीनयोगयुक्तैः, वमनादिकर्मणां मिथ्यायोगाभावात् । हीनयोगास्तु ते दोषानुत्क्लेश्यातीसाराय स्युः। ननु, कदाचिद्वमनं प्रयुक्तं विरेकं करोति, विरेकश्च वमनमिति दर्शनात्तेषां मिथ्यायोगः संभवत्येव । न, सोऽप्ययोग एवेति सिद्धान्तः । यदुक्तं चरके-"योगः सम्यक्प्रवृत्तिः स्याद-तियोगोऽतिवर्तनम् । अयोगः प्रातिलोम्येन यश्चाल्पं वा प्रवर्तनम्" इति । विषं चात्र स्थावरमुच्यते अधोगत्वात्, कार्तिककुण्डस्त्वाह-विषं दूषीविषं तल्लक्षणेऽतीसार-पाठात् । दुष्टाम्बुमद्यातिपानैरिति दुष्टं व्यापन्नं, दुष्टयोरम्बुमद्ययोः पानात् अदु-ष्टयोरप्यतिपानात् । तथाह चरकः-"दुष्टमद्यपानीयातिपानात्" इति । सात्म्यर्तु-पर्ययैरिति सात्म्यविपर्ययैर्ऋतुविपर्ययैश्च, सात्म्यविपर्ययोऽसात्म्यम् । न च पूर्वोक्ता-सात्म्यैरित्यनेन पौनरुक्त्यं, विविधं हि सात्म्यं प्रकृतिसात्म्यमभ्याससात्म्यं च । आहाराचारभेदादनुपानभेदाद्वा न पौनरुक्त्यम्-इत्यन्ये । जलाभिरमणैरिति जल-क्रीडादिभिः । वेगविघातैरिति मूत्रपुरीषादीनाम् । क्रिमिदोषत इति क्रिमिभिः पक्वा-शयदूषणात्, क्रिमिजनितवातादिकोपाद्वा । एतानि च निदानानि यथासंभवं वाता-दीनां बोध्यानि, दोषव्याधिहेतुत्वख्यापनार्थं पठितानि । एवमन्यत्रापि निदान-विशेषपाठे प्रायो द्रष्टव्यम् ॥ १-३ ॥ सर्वातिसारसाधारणीं संप्राप्तिमाह-संशम्ये-त्यादि । संशम्य शमयित्वा; अत्र अन्तर्भावितो ण्यर्थ इति गदाधरः । अग्निं

आतङ्कदर्पणव्याख्या ।

स्यातिसारकारकत्वायोगात् । मिथ्यायुक्तैरिति हीनं च योगयुक्तैः वमनादिकर्मणां मिथ्यायोगाभा-वात् । हीनयोगास्तु ते दोषानुत्क्लेश्याऽतिसाराय स्युः।ननु वमनं प्रयुक्तं कदाचिद्विरेकं करोति, विरे-कश्चावमनमिति दर्शनात्।तेषां मिथ्यायोगः संभवत्येव न सोप्यतियोग एवेति सिद्धांतः।यदुक्तं चरके-"योगः सम्यक्प्रवृत्तिः स्यादतियोगोतिवर्तनम् । अयोगः प्रातिलोम्येन यश्चाल्पं वा प्रवर्तते ।" इति । विषं स्थावरमधोगत्वात्, दूषीविषं वा, शोको बंधुवियोगादीनां । दुष्टांबु व्यापन्नजलम्, मद्यं प्रसिद्धं तयोरतिपानं सात्म्यविपर्ययात् ऋतुविपर्ययाच्च । जलातिरमणैः-पानीयातिक्रीडनैः, वेगविघातैरिति मूत्रपुरीषादीनां वेगनिरोधनैः, कृमिदोषतः कृमिभिः पक्वाशयदूषणात्, कृमिजनित-वातादिकोपाद्वा। एतानि च निदानानि यथासंभवं वातादीनां बोद्धव्यानि दोषहेतुव्याधिहेतुत्वख्या-नार्थम् । एवमन्यत्रापि निदानविशेषपाठे प्रायो द्रष्टव्यं 'लक्षणं तस्य वक्ष्यते' इति ॥१-३॥ सर्वातिसारसाधारणीं संप्राप्तिमाह-संशम्येति । यस्माद्वायुनाधः प्रणुन्नः प्रेरितः अपां धातुः कफर-

मधुकोशव्याख्या ।

मन्दीकृत्येत्यर्थः । प्रवृद्धः प्रदुष्टः । अपां धातुरित्यनेनासमासकरणेन रसजलमूत्रस्वेदमेदःकफपित्तरक्तादयो ग्राह्याः । चरकेऽप्युक्तं—"शोणितादीन्धातून्दूषयन्ति" इति । अधः प्रणुन्नः प्रेरितः, सरति गच्छति अतीवेत्यनेन निरुक्तिमुक्तवान्, गुदेन बहुद्रवसरणमतिसार इत्यर्थः । निरुक्तिरपि लक्षणं भवति । एतेनाधोद्रवसरणत्वाविशेषेऽपि ग्रहण्यादीनां व्यवच्छेदः । वातातीसारे त्वल्पत्वं कफपित्तातीसारापेक्षया, न तु ग्रहण्यपेक्षया इति । उक्तषड्विधत्वं विभजते—एकैकश इत्यादि । ननु, चरकादौ दोषैरेकैकशः, सन्निपातेनैकः, भयशोकजौ द्वौ, एवं षड्विधः । अत्र त्वन्यथेति कोऽभिप्रायः? उच्यते, चरके भयशोकजौ लक्षणसंज्ञाकार्यभेदाद्भिन्नावुक्तौ, आमजस्तु अन्नाजीर्णकुपितत्रिदोषजत्वेन सन्निपातेन अवरुद्ध इति न संख्यातिरेकः, सुश्रुते तु हेतुप्रत्यनीकचिकित्सार्थं शोकजामजौ पठितौ, वातजत्वसन्निपातजत्वाभेदेऽपि यथा वातादिजत्वाभेदेऽपि मृत्तिकाजः पाण्डुरोग इति । एवं भयशोकजवापि चरके हेतुप्रत्यनीकचिकित्सार्थं पृथक् पठितौ; सुश्रुते भयजः केवलवातिकेऽवरुद्धः, मानसत्वाविशेषाद्वा भयजः शोकजेऽवरुद्ध इति जेज्जटः । ननु, षष्ठ आमेन चोक्त इति पृथक्करणमसंगतं; यतः सर्वेषामेवातीसाराणां प्रागवस्था आमशब्दवाच्या, जीर्णावस्था पक्वशब्दवाच्या; अत एव सर्वातीसारगोचरमुदाहरन्ति—"आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः । अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम्" इति । नैवम्, आमेनैवारभ्यत इति आमजः, दोषास्तु संसर्गिणः प्रेरयितारश्च न त्वारम्भकाः । आमश्च दुष्टान्नकार्यः दोषधातुमलव्यतिरिक्तो वातादिसंसृष्टो वातादिप्रेरितो वातरक्तादिवद्व्याध्यारम्भक इति । द्वन्द्वजास्त्वतीसाराः प्रकृतिसमसमवायारब्धत्वात् न पृथक् गणिताः, विकृतिविषमसमवायारब्धास्तु न भवन्त्येव व्याधिस्वभावात् । शैली चेयमाचार्याणां प्रायः प्रकृतिसमसमवायारब्धं द्वन्द्वं सन्निपातं च न गणयन्ति, विकृतिविषमसमवायारब्धं चावश्यं लिखन्ति । यथा चरके—"पञ्च गुल्मा" इत्यभिधाय, "संसृष्टरूपानपरांस्तु गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम्" इत्युक्तं, तथा सुश्रुते—"षडर्शांसि"

आतङ्कदर्पणव्याख्या ।

समूत्रस्वेदमेदः पित्तरक्तादिकः प्रवृद्धो दुष्टः—अंतराग्निं संशम्य मंदीकृत्य, वर्चोमिश्रः—पुरीषयुक्तः अतीवाधः सार्येत । आचार्या घोरं तं व्याधिमतीसारमाहुः, गुदेन बहुद्रवसरणादतीसार इत्यर्थः । तं पुनः षट्प्रकारं वदंति । उक्तषड्विधं विभजन्नाह—वातेन, पित्तेन, श्लेष्मणा त्रयः, सन्निपातेन चतुर्थः, शोकेन पंचमः, आमेन षष्ठः । एवं षट् अतीसाराः संख्यायां निर्देशादेव लब्धायां षडिति संख्याकरणं नियमार्थं तेन द्वंद्वजातीसारा न भवंतिं व्याधिस्वभावादिति सूचितम् । अत्र भयशो-

**हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधाः ॥**
**विट्सङ्ग आध्मानमथाविपाको भविष्यतस्तस्य पुरःसराणि॥५॥**
**अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः ॥**
**शकृदामं सरुक्शब्दं मारुतेनातिसार्यते ॥ ६ ॥**
**पित्तात्पीतं नीलमालोहितं वा तृष्णामूर्च्छादाहपाकोपपन्नम् ॥**
**शुक्लं सान्द्रं श्लेष्मणा श्लेष्मयुक्तं विस्रं शीतं हृष्टरोमा मनुष्यः ॥७॥**

---

मधुकोशव्याख्या ।

इत्यभिधाय-"अर्शःसु दृश्यते रूपं यदा वै दोषयोर्द्वयोः । संसर्गं तं विजानीयात्संसर्गः षड्विधश्च सः" इत्युक्तम् ॥ ४ ॥ सर्वातीसारपूर्वरूपमाह-हृन्नाभीत्यादि । तोदः सर्वैर्हृदादिभिः संबध्यते, अत्र कुक्षिशब्द उदरैकदेशवाची, तेन न पौनरुक्त्यम् । आनिलसन्निरोध इति वायोरप्रवृत्तिः । विट्सङ्गः पुरीषाप्रवृत्तिः । एतच्च दोषदूष्यसंमूर्च्छनावस्थाप्रतिनियतं पूर्वरूपं, तेन रूपावस्थायां नानुवर्तते, यद्यनुवर्तते तदा तत्र व्याधिरेव नोत्पद्यते विट्सङ्गातिप्रतिषेधात् । अविपाकोऽन्नस्य । पुरःसराणि पूर्वरूपाणीति ॥५॥ वातिकमाह-अरुणमिति । वायोररूपस्यापि दोषदूष्यसंमूर्च्छनाद्भवति, एवमन्यत्रापि फेनिलं सफेनम् । फेनादिलच् । शकृत् पुरीषम् । सरुक्शब्दमिति सशूलं सशब्दं चेति ॥ ६ ॥ पैत्तिकमाह-पित्तादित्यादि । दाहपाकोपपन्नमिति दाहः सर्वाङ्गे गुदे च, पाको गुद एव । तन्त्रान्तरं हि-"तृष्णादाहस्वेदमूर्च्छाब्रध्नसन्तापपाकपरीतः" इति । ब्रध्नो गुदः । अत्राप्यतिसार्यते शकृदित्यनुवर्तते । एवं श्लैष्मिकेऽपि । श्लैष्मिकमाह-शुक्लमित्यादि । शुक्लमित्यादिना हृष्टरोमा इत्यन्तेन श्लैष्मिकः । विस्रमा-

आतङ्कदर्पणव्याख्या ।

काम्यां वायुः प्रकुप्यति तर्हि द्वयोर्वातजे विरोधः । पृथग्ग्रहणं किमर्थं कृतं सुश्रुतेन, हेतुप्रत्यनीकचिकित्सार्थं पृथक् पठितम् ॥ ४ ॥ सर्वातीसारपूर्वरूपमाह-भविष्यतो भाविनोऽतीसारस्य हृदादीनि पुरस्सराणि रूपाणि भवंति । पायुर्गुदं तोदः सर्वैर्हृदादिभिः संबध्यते । अत्र कुक्षिशब्दः उदरैकदेशवाची तेन न पौनरुक्त्यम् । अनिलसन्निरोध इति वायोरप्रवृत्तिः, गात्रावसादो देहे ग्लानिः, विड्भंगः पुरीषाप्रवृत्तिः आध्मानञ्च, अविपाकोन्नस्य ॥ ५ ॥ वातातीसारलक्षणमाह-मारुतेन वायुना अरुणादियुक्तं शकृत्-पुरीषमतिसार्यते । अरुणमिति वायोरपि दोषदूष्यसंमूर्छनाद्भवति । एवमन्यत्रापि फेनिलं फेनयुक्तं, रूक्षं निःस्नेहमल्पमल्पं स्तोकं मुहुर्मुहुर्वारंवारमाममपक्वं सरुक्शब्दमिति सशूलं सशब्दं चेति ॥ ६ ॥ पित्तातिसारलक्षणमाह-पीतं-पीतवर्णं, नीलं-नीलवर्णं वा आ ईषल्लोहितं, तृषायुक्तं मूर्छा प्रसिद्धा दाहपाकोपपन्नमिति दाहः सर्वांगे पाको गुदस्यैव । श्लैष्मातिसारमाह-हृष्टरोमा मनुष्यः कंटकितदेहः

वराहस्नेहमांसाम्बुसदृशं सर्वरूपिणम् ॥
कृच्छ्रसाध्यमतीसारं विद्याद्दोषत्रयोद्भवम् ॥ ८ ॥
तैस्तैर्भावैः शोचतोऽल्पाशनस्य बाष्पोष्मा वै वह्निमाविश्य जन्तोः।
कोष्ठं गत्वा क्षोभयेत्तस्य रक्तं तच्चाधस्तात्काकणन्तीप्रकाशम्॥९॥
निर्गच्छेद्वै विड्विमिश्रं ह्यविड्वा निर्गन्धं वा गन्धवद्वातिसारः ॥
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं रोगो वैद्यैः कष्ट एष प्रदिष्टः १०

---

मधुकोशव्याख्या ।

मगन्धि ॥ ७ ॥ सान्निपातिकमाह—वराहस्नेहेत्यादिना । वराहस्नेहः शूकरस्य मेदो मज्जा वा, मांसाम्बु मांसप्रक्षालनोदकम्, तैः सदृशम् । सर्वरूपिणमिति उक्तवाताद्यतीसारत्रयलक्षणयुक्तम् । एवंविधमतीसारं दोषत्रयोद्भवं विद्यात्; तच्च कृच्छ्रसाध्यं. त्रिदोषजत्वादेव ॥ ८ ॥ शोकजमाह—तैस्तैर्भावैरिति धनबन्धुनाशादिभिः । शोचतः शोकं कुर्वतः । अल्पाशनस्य शोकादेवाल्पं भुञ्जानस्य; एतेन धातुक्षयोऽस्य स्यादित्युक्तम् । बाष्पो मन्यूद्भवनेत्रनासागलादिगतं जलं, तत्सहित ऊष्मा शोकजं देहतेजः बाष्पोष्मा, स कोष्ठं गत्वा वह्निमाविश्य व्याकुलीकृत्य, क्षोभयेत्तस्य रक्तम् । उष्मत्वद्रवत्वाभ्यां समानगुणत्वात् । तच्च रक्तं काकणन्तीप्रकाशं गुञ्जाफलसंकाशम् अधस्तान्निर्गच्छेत् । पित्तमाविश्येति पाठान्तरे स एवार्थः । गदाधरस्तु वह्निशब्देन पित्तमाह । तच्च रक्तं विडिमिश्रं निर्गच्छेत् । अविट् अल्पविट्, अल्पाशनत्वात् निर्गन्धं गन्धवद्वेति विकल्पः, अविड्सविड्भ्यामिति कार्तिकः । अन्ये तु पित्तस्य पूतित्वात्प्रबलगन्धवत्, तस्य नातिदुष्ट्या निर्गन्धत्वमिति, गन्धश्च विस्रमित्याहुः ।

आतङ्कदर्पणव्याख्या ।

पुमान्, शुक्लादिगुणयुक्तं पुरीषमतिसार्यते । शुक्लं श्वेतवर्णं सांद्रं घनं श्लेष्मसहितं विस्रम् आमगंधि शीतं शीतलमिति ॥७॥ सान्निपातिकातिसारलक्षणमाह—एवंविधमतीसारं दोषत्रयोद्भवं कृच्छ्रसाध्यं जानीयात् । वाराहस्नेहः सूकरस्य मेदो मज्जा वा, मांसाम्बु—मांसप्रक्षालनोदकं तैः सदृशं, सर्वरूपिणमिति—उक्तवाताद्यतीसारत्रयलक्षणयुक्तम् ॥८॥ शोकजमाह—तैस्तैर्भावैरिति । धनबंधुनाशादिभिः शोचतः—शोकं कुर्वतः, अल्पाशनस्य शोकादेवाल्पं भुंजानस्य एतेन धातुक्षयोऽस्य कारणं स्यादित्युक्तम् । एवंविधस्य जंतोर्बाष्पोद्भूतनेत्रनासागलादिगतजलं तत्सहितशोकज ऊष्मा देह-तेजो वा बाष्पोष्मा स कोष्ठं गत्वा वह्निमाविश्य व्याकुलीकृत्यास्य रक्तं क्षोभयति—चालयति उष्णद्रवत्वाभ्यां समानगुणत्वात् । तच्च रक्तगुंजाफलसंकाशमधस्तान्निर्गछेत् । पक्तिमाविश्येति पाठान्तरे स एवार्थः । गदाधरस्तु वह्निशब्देन पित्तमाह—तच्च रक्तं विड्भिमिश्रं निर्गच्छेत् ।

अन्नाजीर्णात्प्रद्रुताः क्षोभयन्तः कोष्ठं दोषा धातुसंघान्मलांश्च ॥
नानावर्णं नैकशः सारयन्ति शूलोपेतं षष्ठमेनं वदन्ति ॥ ११ ॥
संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति ॥
पुरीषं भृशदुर्गन्धि पिच्छिलं चामसंज्ञितम् ॥ १२ ॥
एतान्येव तु लिङ्गानि विपरीतानि यस्य वै ॥
लाघवं च विशेषेण तस्य पक्वं विनिर्दिशेत् ॥ १३ ॥

मधुकोशव्याख्या ।

क्षोभयेत्तस्य रक्तमित्यत्र स्थाने "शोषयेत्तस्य भुक्तम्" इति पाठान्तरमयुक्तं, काकणन्तीप्रकाशस्य हेत्वन्तराभावात् । तस्मादाद्यपाठो ज्यायान् । व्याख्यातश्च जेज्जटादिभिः सर्वैः । एवमयं वातपित्तज उक्तः । दुश्चिकित्स्योऽतिमात्रमिति शोकापनोदं विना केवलेन भेषजेनानुपशमात् । अत एवाह-कष्ट एष इति । वैद्यैर्ब्रह्मादिभिः । गदाधरस्त्वाह-एष इत्यनेनैवंसंप्राप्तिक एव कष्टो न त्वन्यः शोकज इति ॥ ९ ॥ १०॥ आमातीसारमाह-अन्नाजीर्णादित्यादि । अन्नं च तदजीर्णं चेति अन्नाजीर्णम् । अत एवाह क्षारपाणिः-"यथाभुक्तमशनमुपविशति"-इति । प्रद्रुता विमार्गगाः । क्षोभयन्तो दूषयन्तः । धातुसंघान् रक्तादीन् । मलान् पुरीषादीन् । नैकशो बहुशः॥११॥ सर्वातीसाराणां चिकित्सोपयोगित्वेनामलक्षणं पक्वलक्षणं चाह-संसृष्टमित्यादि । संसृष्टं संबद्धम्, एभिर्दोषैर्दुष्टिभिः उक्तवाताद्यतीसारलिङ्गैः । दुष्टयश्चात्र यथासंभवं

आतङ्कदर्पणव्याख्या ।

अविट् अल्पविट् निर्गंधं गंधवद्वेति विकल्पः । पित्तस्य पूतित्वादतिगंधता, तस्य चातिदुष्ट्या निर्गंधत्वमिति दुष्टातिगंधत्वमित्यर्थः । गंधश्च विस्र इत्याहुः ॥ दुश्चिकित्स्यातिमात्रमिति शोकापनोदनं विना केवलेन भेषजेन न शाम्यति अत एव शोकोत्पन्नोतिसारो विकारो वैद्यैः एष कष्टः दारुणः प्रविष्टः ॥९-१०॥ आमातीसारमाह-अन्नेति । अन्नं च तद् अजीर्णं चेति अन्नाजीर्णं तस्मात् प्रद्रुताः-उदीरिताः दोषाः कोष्ठं क्षोभयंतो दूषयंतः, कोष्ठशब्देन समस्तमुदरमध्यमुच्यते तत्र गता इत्यर्थः । धातुसंघान्-रक्तादीन्मलान्पुरीषादीन् नैकशो बहुशस्ते नानावर्णं सारयंति । भूयसेति-बहुवेगत्वं सूचितं, शूलोपेतं-शूलयुक्तम् । अत्र पुनः षष्ठ इति संख्यावचनं नियमार्थं तेन भयस्नेहाजीर्णविसूचिकार्शोजीर्णादिनिमित्ता अतीसारा न पृथग्गणनीयाः यतस्ते दोषजेष्वेवांतर्भूताः । प्रसंगादामलक्षणं लिख्यते-"आहारस्य रसः शेषो यो न पक्वोऽग्निलाघवात् । स हेतुः सर्वरोगाणामामभित्यभिधीयते" ॥११॥ अथामलक्षणमाह--संसृष्टं संबद्धम् एभिः पूर्वनिर्दिष्टैर्दोषैर्दुष्टिभिरुक्तवाताद्यतीसारलिङ्गैर्गुरुतरैर्व्याप्तमित्यर्थः । दुष्टयश्चात्र यथासंभवं व्यस्ताः समस्ताश्च

1 भूयसेति पाठान्तरे इति शेषः ।

**पक्वजाम्बवसंकाशं यकृत्पिण्डनिभं तनु ॥**
**घृततैलवसामज्जवेशवारपयोदधि ॥ १४ ॥**
**मांसधावनतोयाभं कृष्णं नीलारुणप्रभम् ॥**
**मेचकं स्निग्धकर्बूरं चन्द्रकोपगतं घनम् ॥ १५ ॥**

---

मधुकोशव्याख्या।

व्यस्तसमस्ता बोध्याः। तेन सर्वातिसाराणां न सान्निपातिकत्वप्रसङ्गः। न्यस्तमप्सु जले क्षिप्तम्; अवसीदति निमज्जति, आमस्य गौरवात्। भृशशब्दः पिच्छिलेनापि संबध्यते। दुर्गन्धि विस्रम्। पिच्छिलमामसंबन्धात्। एतानीति जलनिमज्जनादीनि। लाघवं कोष्ठस्य शरीरस्य च, चकारेण कफदुष्ट्यादिकं विना अम्बुनिमज्जनं लक्षणमिति समुच्चीयते। यदुक्तम्—"मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले। विनातिद्रवसंघातशैत्यश्लेष्मप्रदूषणात्" इति। अथ वा आमलिङ्गवैपरीत्येनैव लाघवे सिद्धे पुनर्लाघवकरणं तत् कफदुष्ट्यादिव्यतिरेकं बोधयतीति ॥ १२ ॥ १३ ॥ असाध्यलक्षणान्याह—पक्वेत्यादि। पक्वजाम्बवसंकाशं पक्वजम्बूफलसदृशवर्णं, स्निग्धकृष्णमित्यर्थः। यकृत्पिण्डनिभं कृष्णलोहितम्। तनु स्वच्छम्। घृतादीनां मांसधावनतोयान्तानामिवाभा प्रतिभासो यस्य तत्तथा। वेशवारो "निरस्थिपिशितं पिष्टम्" इत्यादिपरिभाषितमांसप्रकारः। कृष्णमञ्जनप्रख्यम्। एतच्च कृष्णत्वादिकं

आतङ्कदर्पणव्याख्या।

बोद्धव्याः। तेन सर्वातिसाराणां सान्निपातिकत्वप्रसंगः। न्यस्तमप्सु जले क्षिप्तमवसीदति मज्जति आमस्य गौरवात्। भृशशब्दः पिच्छिलेन संबध्यते। दुर्गंधि विस्रं, पिच्छिलम् आमसंबंधात्। पक्वलक्षणमाह--एतानि जलनिमज्जनादीनि यस्य पुरीषस्य विपरीतानि—जले प्लवनं, गंधरहितत्वम्, अपिच्छिलत्वमित्यर्थः। मनुष्यस्येति केचिद् व्याख्यानयंति। लाघवं कोष्ठस्य शरीरस्य च चकारात्। कफदुष्टं पुरीषं समुच्चीयते। यदुक्तं—"मज्जत्यामगुरुत्वाद्विट् पक्वत्वात्प्लवते जले। विनातिद्रवसंघाताच्छ्लेष्मशैत्यप्रदूषणात्"इति। ननु कफसंसृष्टं पक्वमपि मलं निमज्जति तत्कथं पक्वकफातीसारज्ञानम्। उच्यते, तदितरलक्षणैरेव ॥ १२ ॥ १३ ॥ असाध्यलक्षणमाह--भिषक् पक्वजाम्बवसंकाशादिपुरीषं तथा तृष्णादियुक्तमतिसारिणं पुरुषं च वर्जयेदिति संबंधः। पक्वजाम्बवसंकाशं—पक्वजम्बूफलसदृशवर्णं स्निग्धकृष्णवर्णमित्यर्थः। यकृत् पिंडनिभं कालखंडसदृशं—कृष्णलोहितमित्यर्थः। तनु स्वच्छं घृतादीनां मांसधावनतोयांतानामिवाभा प्रतिभासो यस्य स तथा। वेसवारो—"निरस्थि पिशितं पिष्टम्" इत्यादिपरिभाषितमांसप्रकारस्तेन मिश्रमंबु तत्सदृशं कृष्णमंजनप्रख्यम्। एतच्च कृष्णादिकं पित्तातिसारवर्ज्यं बोध्यम्। तत्र रूपत्वेन पठितत्वात्। नीलारुणप्रभं—चाषपक्षप्रतिभासं, मेचकं—

कुणपं मस्तुलुङ्गाभं सुगन्धि कुथितं बहु ॥
तृष्णादाहतमःश्वासहिक्कापार्श्वास्थिशूलिनम् ॥ १६ ॥
संमूर्च्छारतिसंमोहयुक्तं पक्कवलीगुदम् ॥
प्रलापयुक्तं च भिषग्वर्जयेदतिसारिणम् ॥ १७ ॥
असंवृतगुदं क्षीणं दूराध्मातमुपद्रुतम् ॥
गुदे पक्के गतोष्माणमतिसारकिणं त्यजेत् ॥ १८ ॥

---

मधुकोशव्याख्या ।

पित्तातिसारवर्जं बोध्यं, तत्र रूपत्वेन पठितत्वात् । नीलारुणं चासपक्षिपक्षप्रतिमम् । मेचकं मर्दनाञ्जनपिण्डवदीषत् कृष्णरूक्षम् । कर्बूरं नानावर्णः तत्र स्निग्धं स्नेहद्रवधातुयोगात् । चन्द्रकोपगतं मयूरपिच्छचन्द्रकैरिव धातुस्नेहैरुपगतम् । उक्तं हि करवीराचार्येण "चन्द्रकैः शिखिपिच्छाभैर्नीलपीतादिराजिभिः । आवृतं वेशवाराम्बुमज्जक्षीरोपमं त्यजेत्" इति । तदेव घनं धात्ववयवव्यामिश्रत्वात् । कुणपं शवदुर्गन्धि । मस्तुलुङ्गाभं मस्तुलुङ्गं मस्तकाभ्यन्तरस्नेहः घृतिकेति ख्यातं तत्सदृशम् । कुथितं पूति ॥ तृष्णेत्यादि । तृष्णादीनां पार्श्वास्थिशूलान्तानां द्वन्द्वं कृत्वा मत्वर्थीय इनिः । तृष्णादियुक्तमित्यर्थः । अत्र संमूर्च्छा मनोमोहः, संमोह इन्द्रियमोह इत्यपौनरुक्त्यम् । चकारात् चरकोक्तः सहसोपरतातीसारश्चासाध्यो बोध्यः । पक्कवलीगुदं पक्का वलयो गुदे यस्य तं पक्कवलीगुदम् । असंवृतगुदं गुदसंवरणाक्षमं तमेव क्षीणं बलोपचयरहितम् । दूराध्मातं भृशमाध्मानयुक्तम् । तस्य विरेकसाध्यत्वेनातिसारविरुद्धोपक्रमत्वम् । दुरात्मानमिति पाठान्तरे दुष्टान्तःकरणम्, अजितेन्द्रियमिति जेज्जटः । उपद्रुतम् अतिसारोपद्रवैः शोथादिभिर्युक्तम् । यदुक्तम्— "शोथं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम् । छर्दिं मूर्च्छां च हिक्कां च दृष्ट्वातीसारिणं त्यजेत्" इति । गुदे पक्के गतोष्माणमिति गुदपाकारम्भकपित्ते वर्तमानेऽपि

आतङ्कदर्पणव्याख्या ।

खञ्जनवर्णवत् ईषत्कृष्णरूक्षं, कर्बुरं--नानाविधवर्णं, स्निग्धं--चिक्कणं, धातुस्नेहयोगात्, चंद्रकोपगतं मयूरपिच्छचन्द्रकैरिव धातुस्नेहैरुपगतम् । उक्तं च करवीराचार्येण---"चंद्रकैः शिखिपिच्छाभैर्नीलपीतातिराजिभिः । आवृतं वेसवाराम्बुमज्जक्षीरोपमं त्यजेत्" इति । तद्घनं धात्ववयवमिश्रितत्वात् । कुणपं शवगंधतुल्यगंधमित्यर्थः । मस्तुलुंगाभम्--मस्तुलुंगो मस्तकाभ्यन्तरगत. स्नेहः, सुगंधं--गंधयुक्तं, कुथितं-पूति बहुमात्राधिकत्वात्, ईदृशमतिसारिणं त्यजेत् ॥ तादृशमाह--तृष्णादीनां पार्श्वास्थिशूलांतानां द्वंद्वं कृत्वा मत्वर्थीयः । तृष्णादिभिर्युक्तमित्यर्थः । अत्र संमूर्च्छा-इन्द्रियमनोमोहः, पुनः संमोहः-- इन्द्रियमोहः, अतो न पौनरुक्त्यम् । अरतिः प्रसिद्धा, पक्कवलीगुदं--पक्कावल्यो गुदे

---

१ एषा व्याख्या--कर्बुरं मेचकं स्निग्धम्--इति पाठाभिप्रायेण ।

"शोथं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम् ॥
छर्दिं मूर्च्छां च हिक्कां च दृष्ट्वातीसारिणं त्यजेत् ॥"
श्वासशूलपिपासार्तं क्षीणं ज्वरनिपीडितम् ॥
विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥ १९ ॥
पित्तकृन्ति यदात्यर्थं द्रव्याण्यश्नंति पैत्तिके ॥
तदोपजायतेऽभीक्ष्णं रक्तातीसार उल्बणः ॥ २० ॥

मधुकोशव्याख्या।

गतोष्माणं शीतगात्रं नष्टाग्निं वा। अतीसारकिणम् अतीसारयुक्तम्। "वातातीसाराभ्यां कुक् च" इति कुक्, चादिनिः। विशेषेणेति वचनाद्बालस्याप्यसाध्यत्वं बोधयति। यदाह सुश्रुतश्चिकित्सायां—"कृच्छ्रश्चायं बालवृद्धेष्वसाध्यः" इति। एतच्चाबलत्वे सति बोध्यम्॥ १४–१९॥ ननु, रक्तजोऽप्यतिसारोऽस्ति तस्य सप्तमत्वापत्तेरुक्तं षट्कं विरुध्यते इत्याशङ्क्य पैत्तिकस्यैवायमवस्थाविशेष इत्याह—पित्तेत्यादि। पैत्तिकेऽतीसारे विद्यमाने भविष्यति वा पित्तकृन्ति पित्तकारकाणि द्रव्याणि अत्यर्थं प्रभूतमभीक्ष्णं निरन्तरमश्नाति तदा रक्तातिसार उल्बणो महानुपजायत इति संबन्धः। अत्र चारुणकृष्णपाण्डुत्वादिना वातादयो दूषका बोद्धव्याः। यदुक्तं—"दोषलिङ्गेन मतिमान्संसर्गं तत्र लक्षयेत्" इति। एवं स्नेहाजीर्णविषूचिका—

आतङ्कदर्पणव्याख्या।

यस्य स तथा तं प्रलापोऽसम्बद्धभाषणं तादृशं त्यजेदित्यर्थः। पुनः कीदृशं त्यजेदित्याह--असंवृतगुदं—गुदसंवरणाक्षमं, क्षीणं—वलोपचयरहितं, दूराध्मानं—भृशमाध्मानयुक्तं, तस्य विरेकसाध्यत्वे नातिसारविरुद्धोपक्रमत्वात्। दुरात्मानमित्यन्ये। दुष्टांतःकरणादजितेन्द्रियमित्यर्थः। उपद्रुतम्—अतीसारोपद्रवैः शोथादिभिर्युक्तम्। यदाहुः—"तृष्णा दाहोरुचिः शोथः पार्श्वशूलोऽरतिर्वमिः। गुदपाकः प्रलापश्च ह्याध्मानं श्वासकासकौ॥ मूर्छा रोधो मदः शूलं बहुवेगो ज्वरस्तथा। एतैरुपद्रवैर्जुष्टमतिसारिणमुत्सृजेत्"। अन्यच्च—"हस्तपादांगुलेः संधिप्रपाको मूत्रनिग्रहः। पुरीषस्योष्णता चैव मरणायातिसारिणाम्" इति। गुदे पक्वे गतोष्माणमिति—गुदपाकारंभकपित्ते विद्यमानेपि गतोष्माणं शीतगात्रं नष्टाग्निं च अतिसारिणं त्यजेत्। अत्र श्लोकद्वयं केचन पठंति—"श्वासशूलपिपासार्तं क्षीणं ज्वरनिपीडितम्। विशेषेण नरं वृद्धमतीसारो विनाशयेत्॥ बाले वृद्धे त्वसाध्योयं लिंगैरेतैरुपद्रुतः। अपि यूनामसाध्यः स्यादतिदुष्टेषु धातुषु" इति। एतत्तु माधवासंग्रहीतत्वात् मधुकोषकृता न स्वीकृतम्॥१४–१८॥ अतीसारोपद्रवानाह--शोथमिति। सुकरव्याख्यानम्॥१९॥ ननु रक्तजोप्यतीसारोऽस्ति तस्य सप्तमत्वप्रसङ्गादुक्तषट्कत्वं विरुध्यत इत्याशंक्य पैत्तिकस्यायमवस्था-

१ अयं श्लोकः केवल मधुकोशसहितपुस्तके नोपलभ्यते।

**वायुः प्रवृद्धो निचितं बलासं नुदत्यधस्तादहिताशनस्य ॥**
**प्रवाहतोऽल्पं बहुशो मलाक्तं प्रवाहिकां तां प्रवदन्ति तज्ज्ञाः॥२१॥**
**प्रवाहिका वातकृता सशूला पित्तात्सदाहा सकफा कफाच्च ॥**
**सशोणिता शोणितसंभवा च ताः स्नेहरूक्षप्रभवा मतास्तु ॥**
**तासामतीसारवदादिशेच्च लिङ्गं क्रमं चामविपक्वतां च ॥ २२ ॥**

मधुकोशव्याख्या ।

विपार्शःक्रिमिप्रभृतिजन्येष्वतीसारेषु षट्कातिरिक्तत्वं प्रतिक्षिप्तं बोध्यम् । अव्यभिचारितदोषलिङ्गत्वादिति जेज्जटः ॥ २० ॥ अथ द्रवसरणादामपक्वलक्षणयोगात्प्रवाहिकातीसारयोः साधर्म्यम्, अतोऽतीसाराधिकारे प्रवाहिकासंप्राप्तिमाह–वायुरित्यादि । अतीसारे नानाविधद्रवधातुसरणं, प्रवाहिकायां तु कफमात्रसरणमिति भेदः । निचितं बलासमहिताशनस्य संचितं कफं, मलाक्तं पुरीषसहितम्, अधस्तान्नुदति गुदेन पातयति । प्रवाहतः प्रवाहणं कुर्वतः । भोजादौ त्वियं विस्रंसीति नाम्ना पठ्यते, पराशरे त्वन्तर्ग्रन्थिरिति, हारीतस्तु निश्चारकाख्यामेतां पठति । यदाह–"प्रवाहिकेति सा ज्ञेया कैश्चिन्निश्चारकस्तु सः" इति ॥२१॥ अस्या वातादिभेदेन रूपमाह–प्रवाहिकेत्यादि । ननु, वायुः प्रवृद्धो निचितं बलासमित्युक्तं तत्कथं वातकृतेति ? उच्यते, आधिक्येन व्यपदेशात्। ननु, तथापि पित्तरक्तसंभवा कुतः? उच्यते, अहिताशनस्येत्युक्तम् । आहारो हि विरुद्धस्तस्यामवस्थायां पित्तं रक्तं च कोपयति, ते च पश्चाद्वातस्यानुबले स्वलिङ्गं यदा दर्शयतस्तदा ताभ्यां व्यपदेशः ॥ स्नेहरूक्षप्रभवा इति । स्नेहप्रभवा

आतङ्कदर्पणव्याख्या ।

विशेष इत्याह--पैत्तिकेऽतीसारे विद्यमाने भविष्यति वा पित्तकृंति पित्तकारीणि द्रव्याणि अत्यर्थं प्रभूतमभीक्ष्णं निरन्तरमश्नाति तदा रक्तातीसार उल्वणो महानुपजायते इति सम्बन्धः ॥ अत्र चारुणकृष्णपाण्डुत्वादिना वातादयो दूषका बोद्धव्याः । यदुक्तं–"दोषलिङ्गेन मतिमान्संसर्गं तत्र लक्षयेत्" । एवं स्नेहाजीर्णविसूचिकाविपार्शःक्रमिप्रभृतिजन्येष्वतीसारेषु षट्कातिरिक्तत्वं प्रतिक्षिप्तं बोध्यम् । अव्यभिचारितदोषलिङ्गत्वादिति जेज्जटः ॥ २० ॥ अथ द्रवसरणादामपक्वलक्षणयोगात्प्रवाहिकातिसारयोः साधर्म्यमतोऽतीसाराधिकारे प्रवाहिकासंप्राप्तिमाह--अतीसारे नानाद्रवधातुसरणं प्रवाहिकायां तु कफमात्रसरणमिति भेदः । दुष्टो वायुरहिताशनस्य संचितं बलासं श्लेष्माणं मलाक्तं पुरीषसहितम् अधस्तान्नुदति गुदेन पातयति । प्रवाहमाणस्य प्रवाहणं कुर्वतः बलासमुपलक्षणं तेन पित्तं रक्तं वा निचितं ज्ञेयम् । भोजादौ त्वियं विश्रंसीति नाम्ना पठ्यते । पराशरे तु अन्तर्ग्रंथिरिति । श्रीहारीतस्तु निश्चारकाख्यां पठति । निर्वाहिकेत्येके ॥ २१ ॥ तस्य वातादिभेदेन रूपमाह--वातकृता सशूला भवति, पित्तजा दाहयुक्ता, कफजा कफयुक्ता, शोणिता-

यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ॥
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥ २३ ॥
( ज्वरातिसारयोरुक्तं निदानं यत्पृथक्पृथक् ॥
तत्स्याज्ज्वरातिसारस्य तेन नात्रोदितं पुनः ॥ १ ॥ )

इति श्रीमाधवकरविरचिते माधवनिदानेऽतीसारनिदानं समाप्तम् ॥ ३ ॥

---

मधुकोशव्याख्या ।

कफजा, रूक्षप्रभवा वातजा; तुशब्दाच्च तीक्ष्णोष्णप्रभवा पित्तजा रक्तजा च । लिङ्गं वातादिभेदेन लक्षणम् । क्रममामपक्वभेदेन चिकित्साक्रममिति ॥ २२ ॥ वातविष्टम्भादुदावर्ताद्वा मलाप्रवृत्तावतीसारनिवृत्तिरितिशंकानिरासार्थमतीसारनिवृत्तिलक्षणमाह—यस्येत्यादि । उच्चारं विना यस्य मूत्रं प्रवर्तते, सम्यगिति सम्यक्प्रवृत्त्या न हीनयोगेनेत्यर्थः । वायुश्च गच्छति, गुदेनेति शेषः । स्थितो निवृत्तिं गतः । उदरामयोऽतीसारः प्रकरणात् । एतेन संप्राप्तिभङ्ग उक्तः । अतीसारे हि संप्राप्तिरियं यन्मूत्रोचितोऽपि द्रवधातुर्गुदेनैव प्रवर्तते, सर्वस्यैवाब्धातोर्गुदप्रवृत्तत्वात्; यदा तु मूत्रमार्गेण प्रवर्तते, तदापि पुरीषप्रवृत्तिसमकालमिति ॥ २३ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामतीसारनिदानं समाप्तम् ॥ ३ ॥

आतङ्कदर्पणव्याख्या ।

त्सरुधिरा स्यात् । तासां हेतुमाह--स्नेहप्रभवा कफजा, रूक्षप्रभावा वातजा तुशब्दोऽवधारणे । तेन तीक्ष्णोष्णप्रभवा पित्तजा रक्तजाश्चेति । वातादिभेदेन लिंगं लक्षणम्, आमपक्वभेदेन पाचनं, क्रमं--चिकित्साक्रममित्यर्थः ॥ २२ ॥ अतीसारनिवृत्तिलक्षणमाह--यस्येति । यस्यातीसारिण उच्चारं पुरीषं विना मूत्रं प्रवर्तते, वायुश्च गच्छतीति गुदेनेति शेषः । दीप्ताग्नेः--प्रवृद्धजठरानलस्य अतः सम्यक्पाकात् लघुकोष्ठस्य, तस्यातीसारप्रकरणत्वात् । उदरामयोऽतीसारः । स्थितो--निवृत्त इत्यर्थः ॥ २३ ॥

इति श्रीवाचस्पतिवैद्यविरचितायां माधवनिदानटीकायामातङ्कदर्पणाभिधाया-
मतीसारनिदानं समाप्तम् ॥ ३ ॥

# अथ ग्रहणीरोगनिदानम् ४.

अतीसारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः ॥
भूयः संदूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥ १ ॥
एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः ॥
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥ २ ॥

---

मधुकोशव्याख्या ।

द्रवसरणसाधर्म्यात्परस्परानुबन्धित्वाच्चातीसारानन्तरं ग्रहणी, तस्याः संप्राप्तिमाह-अतीसार इत्यादि। अपिशब्दादजातातीसारस्यापि स्वहेतोर्ग्रहणीरोगःस्यादिति बोधयति। अन्ये तु अपिशब्दादनिवृत्तेऽप्यतीसार इति व्याचक्षते । मन्दाग्नेरित्यनेन दीप्ताग्नेरहिताशनमपि न विकारकारीति बोधयति । उक्तं हि-"दीप्ताग्नेर्विरुद्धं वितथं भवेत्" इति । भूय इति पुनरत्यर्थं वा,संदूषितः पूर्वमतीसारेऽपि दूषितत्वात्,अभिदूषयेत् समन्ताद्दूषयेत् एतेन निवृत्तातीसारेणाहिताहारपरिहारः करणीयः, आवह्निबललाभादित्युक्तं भवति । अत एवाह सुश्रुतः-"तस्मात्कार्यः परीहारस्त्वतीसारे विरिक्तवत् । यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा" इति ॥ १ ॥ तस्याः संप्राप्तिपूर्वकं सामान्यलक्षणमाह-एकैकश इत्यादि । मूर्च्छितैरतिवृद्धैः, 'मुर्च्छा' मोहसमुच्छ्राययोः-इति धात्वर्थात् । 'उच्छ्रितैः' इति पाठान्तरे स एवार्थः । सा ग्रहणी दोषैर्दुष्टा सती भुक्तमाहारमाममपक्वमेव पक्वं वा विमुञ्चति । वाशब्दश्चार्थे, एवकारः समुच्चीयमानावधारणे, यथा-"नरं च नारायणमेव चोभौ स्वतः सुतौ संजनयांबभूवतुः" इति । अथ वा एवकार एव विकल्पार्थः, निपातानामनेकार्थत्वादिति । सरुजं सशूलं पूति दुर्गन्धि ।

आतङ्कदर्पणव्याख्या ।

द्रवसाधर्म्यात्परस्परानुबंधित्वाच्चातीसारादनंतरं ग्रहणी, तस्याः सम्प्राप्तिमाह--अतीसार इति । केयं ग्रहणी नाम, उक्तं च सुश्रुते--"षष्ठी पित्तधरा नाम या कला परिकीर्तिता। पक्वामाशयमध्यस्था ग्रहणी सा प्रकल्पिता"।अपिशब्दादजातातीसारस्यापि स्वहेतोर्ग्रहणीरोगः स्यादिति बोधयति । अन्ये त्वपिशब्दादनिवृत्तेऽप्यतीसारे इति व्याचक्षते. । मंदाग्नेरित्यनेन दीप्ताग्नेरहितमपि न विकारीति बोधयंति । उक्तं हि-"दीप्ताग्नेः पुरुषस्यैव विरुद्धं वितथं भवेत्" इति । भूय इति पुनरत्यर्थं वा दूषितः । पूर्वमतीसारेपि दूषितत्वात् । एतेन निवृत्तातीसारिणाप्यहिताहारपरिहारः करणीयः । आवह्निबललाभादित्युक्तं भवति । अत एवाह--सुश्रुतः--"तस्मात्कार्यः परीहारस्त्वतीसारे विरिक्तवत् । यावन्न प्रकृतिस्थः स्याद्दोषतः प्राणतस्तथा" इति ॥१॥ ग्रहणीमिति । अग्न्यधिष्ठानं तस्याः संप्राप्तिपूर्वकं सामान्यलक्षणमाह--एकैकश इति । भिषजस्तं ग्रहणीरोगमाहुः । अत्यर्थ-

पक्कं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ॥
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥ ३ ॥
पूर्वरूपं तु तस्येदं तृष्णालस्यं बलक्षयः ॥
विदाहोऽन्नस्य पाकश्च चिरात्कायस्य गौरवम् ॥ ४ ॥
कटुतिक्तकषायातिरूक्षसंदुष्टभोजनैः ॥
प्रमितानशनात्यध्ववेगनिग्रहमैथुनैः ॥ ५ ॥

---

मधुकोशव्याख्या ।

वातेन मुहुर्बद्धं, पित्तेन मुहुर्द्रवम् । ग्रहणीरोगमिति ग्रहण्या रोगः ग्रहणीरोगः । ग्रहणी चाग्न्यधिष्ठानं नाडी । यदाह चरकः—"अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता । नाभेरुपरि सा ह्यग्निबलोपस्तम्भबृंहिता ॥ अपक्कं धारयत्यन्नं पक्कं सृजति चाप्यधः" इति । सुश्रुतेऽप्येतदुक्तं—"षष्ठी पित्तधरा नाम या कला परिकीर्तिता । पक्कामाशयमध्यस्था ग्रहणी सा प्रकल्पिता" इति । कला धात्वन्तरमर्यादा पक्कामाशयमध्यस्था पच्यमानाशयरूपेत्यर्थः ॥ २ ॥ ३ ॥ पूर्वरूपमाह—पूर्वरूपमित्यादि । तृष्णा पिपासा । विदाहोऽन्नस्य अग्निमान्द्येनाहारस्य विदग्धत्वं, चिरात् पाकश्चान्नस्यैव । कायस्य गौरवं सामत्वादिति ॥ ४ ॥ वातिकग्रहण्या निदानं संप्राप्तिपूर्वकं रूपमाह—कटुतिक्तेत्यादि । संदुष्टभोजनं संयोगादिविरुद्धम् । संदुष्टभोजनैरित्यत्र शीतादिभोजनैरिति पाठान्तरम् । प्रमितमल्पभोजनं; प्रमृतेति पाठान्तरे अतीतकालभोजनं बोध्यम् । अनशनमुपवासः एतैः कारणैः कुपितो मारुतः वह्निं संछाद्य संदूष्य, गदान् करोति । कान् गदान् करोतीत्याह—तस्यान्नं

आतङ्कदर्पणव्याख्या ।

मूर्छितैः अतिवृद्धैः 'मूर्च्छा-मोहसमुच्छ्राययोः' इति धात्वर्थात् । उच्छ्रितैरिति पाठांतरे स एवार्थः । सा ग्रहणी दुष्टा सती दोषैर्भुक्तमाममेवापक्वमेव पक्वं वा बहुशः बहून्वारान्विमुञ्चति पित्तेनापि दूष्यते तप्तजलेनेव वह्निः । अतो दोषैरिति बहुवचनमुक्तं सरुजं सशूलं पूति दुर्गंधि वातेन मुहुर्बद्धं पित्तेन मुहुर्द्रवं कफन ग्रहणीरोगमिति । ग्रहण्या रोगो ग्रहणीरोगः । ग्रहणी—चाग्न्यधिष्ठानं यदाह चरकः—"अग्न्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता । नाभेरुपरि सा ह्यग्निबलोपस्तम्भबृंहिता । अपक्वं धारयत्यन्नं पक्वं सृजति चाप्यधः" इति । सुश्रुतेनाप्युक्तम्—'षष्ठी पित्तधरा नाम या कला' इति । कला—धात्वंतराशयमर्यादा ॥ २ ॥ ३ ॥ ग्रहणीरोगपूर्वरूपमाह—पूर्वरूपमिति । तृष्णा—पिपासा, आलस्यं—शक्तावप्यनुत्साहः, विदाहः—अन्नस्य अग्निमांद्येन विदग्धत्वम्, अत एव चिरात्पाकश्चान्नस्यैव कायस्य गौरवं सामत्वादिति ॥ ४ ॥ वातिकग्रहणीनिदानमाह—अतिशब्दः कटुतिक्तकषायैः सह संबध्यते ।

मारुतः कुपितो वह्निं संछाद्य कुरुते गदान् ॥
तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता ॥ ६ ॥
कण्ठास्यशोषोऽक्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ॥
पार्श्वोरुवङ्क्षणग्रीवारुगभीक्ष्णं विसूचिका ॥ ७ ॥
हृत्पीडाकार्श्यदौर्बल्यं वैरस्यं परिकर्तिका ॥
गृद्धिः सर्वरसानां च मनसः सदनं तथा ॥ ८ ॥
जीर्णे जीर्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च ॥
स वातगुल्महृद्रोगप्लीहाशङ्की च मानवः ॥ ९ ॥

---

मधुकोशव्याख्या ।

पच्यते दुःखमित्यादि । शुक्तपाकम् अम्लपाकम्, एतच्चाग्निमान्द्यजनितान्नविदाहाद्भवति । खराङ्गता कर्कशाङ्गता, वातेन त्वग्गतस्नेहशोषात् । तिमिरं मन्दद्दष्टिता । रुक् पीडा, सा च पार्श्वादिभिः संबध्यते । विसूचिका ऊर्ध्वमधश्चामप्रवृत्तिः । वैरस्यं विरसास्यता । परिकर्तिका गुदे कर्तनवत् पीडा । गृद्धिः कांक्षा, सर्वरसानां मधुरादीनां कर्मणि षष्ठी । एतच्च वातदूषितान्तःकरणत्वेन, व्याधिमहिम्ना वा । सदनमवसादः । आध्मानं जीर्णे जीर्यति च 'अन्ने' इति शेषः । स वातगुल्महृद्रोगप्लीहाशंकीति वातगुल्मादिपीडायुक्तत्वात्तच्छंकी ।

आतङ्कदर्पणव्याख्या ।

संदुष्टभोजनं संयोगादिविरुद्धम् । अन्ये शीतादिभोजनैरिति पठंति । प्रमितमल्पभोजनम् अनशनमुपवासः, अत्यध्वा--अतिमार्गगमनं, वेगनिग्रहः--मूत्रपुरीषादीनाम्, एतैः कारणैः ॥ ५ ॥ कुपितो वायुः ग्रहणीस्थं वह्निं संछाद्य संदूष्य गदान् रोगान् कुरुत इत्यर्थः । वातग्रहणीपूर्वरूपत्वे यान् रोगान् कुरुते तानाह--तस्येति । सूक्तपाकम् अम्लपाकम् । एतच्चाग्निमांद्यजनितान्नविदाहाद्भवति । खराङ्गता--कर्कशाङ्गत्वम् ॥ ६ ॥ वातेन त्वग्गतस्नेहशोषणात्कंठास्ययोः शोषः । अक्षुत्--क्षुधाया अभावः, तिमिरं--मंदद्दष्टिता, वंक्षणः--सक्थ्यूर्वोः संधिः, रुक् पीडा सा च पार्श्वादिभिः संबध्यते । विसूचिका--ऊर्ध्वमधश्चान्नस्य प्रवृत्तिः ॥ ७ ॥ वैरस्यं--विरसास्यता, परिकर्तिका--गुदे परीकर्तनमिव पीडा, गृद्धिः--कांक्षा, रसानां--मधुरादीनां व्याधिस्वभावात् । वातदूषितांतःकरणेन वा । मनसः सदनं--मनोग्लानिः ॥ ८ ॥ आध्मानं जीर्णे जीर्यति च सति अन्न इति शेषः । भुक्ते भोजने कृते स्वास्थ्यं समश्नुते--स्वस्थतां प्राप्नोति । स वातगुल्महृद्रोगप्लीहा-

चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत् ॥
पुनःपुनः सृजेद्वर्चः कासश्वासार्दितोऽनिलात् ॥ १० ॥
कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् ॥
आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम् ॥ ११ ॥
सोऽजीर्णं नीलपीताभं पीताभः सार्यते द्रवम् ॥
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ॥ १२ ॥
गुर्वतिस्निग्धशीतादिभोजनादतिभोजनात् ॥
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः ॥ १३ ॥

---

मधुकोशव्याख्या ।

द्रवं शुष्कं, कदाचित् द्रवं कदाचित् शुष्कम् । तनु अल्पमिति ॥ ९–१० ॥ पैत्तिकग्रहण्या निदानसंप्राप्तिपूर्वकं रूपमाह—कट्वित्यादि । विदाहि: विदाहजनकं वंशकरीरादि । क्षारोऽपामार्गादिकृतः । तथा सक्षारं च द्रव्यम्; क्षारोदकसाधितं व्यञ्जनमश्नन्ति कामरूपादौ । आद्यग्रहणाल्लवणतीक्ष्णोष्णानां ग्रहणं, तैः वृद्धं पित्तमनलम् । आप्लावयत् अभिभवत् तं हन्ति । ननु, पित्तमाग्नेयमग्निरेवः वा, ततश्च वृद्धिमेवाप्नोतु कथं हन्त्यत आह—जलं तप्तमिवानलमिति । यथा उष्णगुणयुक्तमपि जलमनलं हन्ति, तथा द्रवांशपरिवृद्धं पित्तमुष्णरूपमग्निं हन्त्येवेति । स पीताभः पुरुषः सार्यते, वर्च इत्यनुवर्तते ॥ ११ ॥ १२ ॥ श्लैष्मिकग्रहण्या निदानादिपूर्वकं रूपमाह—गुर्वित्यादि । आदिशब्दात् पिच्छिलमधुरादीनां च ग्रहणम् ।

आतङ्कदर्पणव्याख्या ।

शंकीति वातगुल्मादिपीडायुक्तस्तच्छंकी ॥ ९ ॥ चिरात्कदाचिद् द्रवं कदाचिच्छुष्कं, तनु--अल्पं शब्दफेनसहितम् । वातात् ईदृशं वर्चः--पुरीषं पुनःपुनः वारंवारं श्वासकासोपद्रवपीडितः सृजेत्--मुंचेत्, पुरीषमिति शेषः ॥ १० ॥ इदानीं निदानपूर्वकं पित्तग्रहणीलक्षणमाह--विदाहि--दाहजनकं वंशकरीरादि, क्षारोऽपामार्गादिकृतः क्षारोदकसाधितं वा व्यंजनमश्नंति कामरूपादौ । तथा क्षारो यवक्षारादिः, तथा सक्षारं च द्रव्यम् आदिशब्दाल्लवणतीक्ष्णोष्णानां ग्रहणम् । एतैः कारणैरुल्बणं--वृद्धं पित्तम् अनलं आप्लावयन्--अभिभवन् तं वह्निं हंति । ननु पित्तमाग्नेय मग्निरेव वा ततश्च वृद्धिमेव प्राप्नोति तत्कथं हंतीत्याह--जलं तप्तमिवानलमिति यथा तप्तम् उष्णगुणयुक्तमपि जलं वह्निं हन्ति तथा द्रवांशपरिवृद्धं पित्तमूष्मरूपमग्निं हंति ॥ ११ ॥ सपीताभः--पीतवर्णः पुरुषः अपक्वं नीलं पीताभं सार्यते वर्च इत्यनुवर्तनीयम् । सधूमोद्गारः--ध्वाइधीति लोके; हृत्कंठदाह इति--हृद्दाहः कंठदाहश्च ॥ १२ ॥ इदानीं सनिदानं श्लेष्मग्रहणीलक्षणमाह--शीतादिरिति । आदिशब्दात्पिच्छिलमधुरादीनां ग्रहणं तेषां भोजनात्, अतिमात्रभोजनात् । ननु

तस्यान्नं पच्यते दुःखं हृल्लासच्छर्द्यरोचकाः ॥
आस्योपदेहमाधुर्यं कासष्ठीवनपीनसाः ॥ १४ ॥
हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरुः ॥
दुष्टो मधुर उद्गारः सदनं स्त्रीष्वहर्षणम् ॥ १५ ॥
भिन्नामश्लेष्मसंसृष्टगुरुवर्चःप्रवर्तनम् ॥
अकृशस्यापि दौर्बल्यमालस्यं च कफात्मके ॥ १६ ॥
पृथग्वातादिनिर्दिष्टहेतुलिङ्गसमागमे ॥
त्रिदोषं निर्दिशेदेवं तेषां वक्ष्यामि भेषजम् ॥ १७ ॥

---

मधुकोशव्याख्या ।

अतिभोजनादतिमात्राभोजनात् । ननु, भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निमिति विरुद्धं ? स्वप्नोऽत्र दिवास्वप्नो ग्राह्यः, रात्रिस्वापस्य स्वास्थ्यहेतुत्वात् । दिवास्वापश्च स्रोतःसंमीलनेन जठरानलं सन्धुक्षयति, अत एवाह-"अतीसारिणामजीर्णिनां च दिवास्वापो विहितः" इति । उच्यते, भुक्तवतां दिवास्वापोऽत्यन्तकफवृद्ध्याग्निं हन्ति, अभुक्तवतां तु संधुक्षयति । यदुक्तं-"नरान्निरशनान्कामं दिवा स्वापयेत्" इति । आस्योपदेहमाधुर्यमिति मुखस्य लिप्तत्वं मधुरत्वं च श्लेष्मणा । स्त्यानं घनद्रवापूरितमिव । स्तिमितं विबद्धं निश्चलमित्यर्थः । दुष्टो विकृतः । स्त्रीष्वहर्षणं स्त्रीरिरंसाया अभावः । भिन्नं च तत् आमश्लेष्मभ्यां संसृष्टं चेति समासार्थः । दौर्बल्यमसामर्थ्यमिति ॥ १३-१६ ॥ शिष्यहितैषितया प्रकृतिसमसमवेतत्वेन सुगमाया अपि त्रिदोषजग्रहण्या अतिदेशेन लक्षणमाह-पृथगित्यादि । संपूर्णश्लोका-

आतङ्कदर्पणव्याख्या ।

भुक्तमात्रस्य च स्वप्नाद्धंत्यग्निं कुपितः कफ इति विरुद्धं स्वप्नोत्र दिवास्वप्नो ग्राह्यः रात्रिस्वप्नस्य स्वास्थ्यहेतुत्वात्, दिवास्वप्नस्तु स्रोतःसंमीलनेन जठरानलं संधुक्षयति । अत एवातिसारिणामजीर्णिनां च दिवास्वप्नो विहित इति उच्यते--भुक्ते च दिवास्वप्नोऽत्यंतकफवृद्ध्याऽग्निं हंति । अभुक्तवतां तु संधुक्षयति । यदुक्तम्---"नरान्निरशनात्कामं दिवा स्वापयेद्" इति ॥ १३ ॥ तस्य पुरुषस्यान्नं कष्टेन पाकं गच्छति तस्य हृल्लासादीनि लिंगानि स्युः । आस्योपदेहमाधुर्यमिति मुखस्य लिप्तत्वं, मधुरत्वं च श्लेष्मणा तथा हृदयं स्त्यानं घृतद्रवापूरितमिव मन्यते । उदरं--जठरं, स्तिमितं--विबद्धं निश्चलं वा गुरु गौरवयुक्तं मन्यते । दुष्टो--विकृतः मधुरश्चोद्गारः, सदनमंगानां, स्त्रीष्वहर्षणं--स्त्रीरिरंसाभावः, भिन्नं च तत् आमश्लेष्मा च ताभ्यां संसृष्टमिति समासः । भिन्नं विदीर्णं गुरु--ईषद्द्रववर्चस्तस्य प्रवर्तनम्, अकृशस्यापि दौर्बल्यमसामर्थ्यमित्यर्थः । कफात्मके कफग्रहणीगदे ॥ १४-१६ ॥ सन्निपातग्रहणीलक्षणमाह--पृथग्वातादिनिर्दिष्टहेतुलिंगानां समागमे

(अन्त्रकूजनमालस्यं दौर्बल्यं सदनं तथा ॥
द्रवं शीतं घनं स्निग्धं सकटीवेदनं शकृत् ॥ १ ॥
आमं बहु सपैच्छिल्यं सशब्दं मन्दवेदनम् ॥
पक्षान्मासाद्दशाहाद्वा नित्यं वाप्यथ मुञ्चति ॥ २ ॥
दिवा प्रकोपो भवति रात्रौ शान्तिं व्रजेच्च सा ॥
दुर्विज्ञेया दुश्चिकित्स्या चिरकालानुबन्धिनी ॥ ३ ॥
सा भवेदामवातेन संग्रहग्रहणी मता ॥
स्वपतः पार्श्वयोः शूलं गलज्जलघटीध्वनिः ॥
तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम् ॥ ४ ॥)
दोषं सामं निरामं च विद्यादत्रातिसारवत् ॥ १८ ॥
लिङ्गैरसाध्यो ग्रहणीविकारो यैस्तैरतीसारगदो न सिध्येत् ॥
वृद्धस्य नूनं ग्रहणीविकारोहत्वा तनूं नैव निवर्तते च ॥ १९ ॥
(बालके ग्रहणी साध्या यूनि कृच्छ्रा समीरिता ॥
वृद्धे त्वसाध्या विज्ञेया मतं धन्वन्तरेरिदम् ॥ ५ ॥)

इति श्रीमाधवकरविरचिते माधवनिदाने ग्रहणीरोग निदानं समाप्तम् ॥ ४ ॥

---

मधुकोशव्याख्या।

नुरोधात् 'तेषां वक्ष्यामि भेषजम्'-इति लिखितम्। ग्रहणीदुष्ट्यां ग्रहण्याश्रितवह्नेरपि दुष्टेरग्निमान्द्यादयोऽपि ग्रहणीरोगा उच्यन्ते। यदुक्तं चरके-"यश्चाग्निः पूर्वमुद्दिष्टो रोगानीके चतुर्विधः। तं चापि ग्रहणीरोगं समवर्जं प्रचक्षते" इति ॥ १७ ॥ यथातीसारे जलनिमज्जनादिना आमं, तद्विपरीतेन निरामं ज्ञायते, तथात्रापि ज्ञेयम्। यैर्लिङ्गैरतीसारगदो न सिध्येत् तैर्लिङ्गैर्ग्रहणीविकारोऽसाध्यः, अतीसारस्य यान्यसाध्यालिङ्गानि ग्रहण्या अपि तानि ॥ १८ ॥ १९ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां ग्रहणीरोगनिदानं समाप्तम् ॥ ४ ॥

आतङ्कदर्पणव्याख्या।

संयोगे सति त्रिदोषग्रहणीगदं लक्षयेद्भिषगिति शेषः। संपूर्णश्लोकानुरोधात्-'तेषां वक्ष्यामि भेषजम्' इति लिखितम् ॥ १७ ॥ १८ ॥ १९ ॥

इति श्रीवैद्यवाचस्पतिविरचितायां माधवनिदानटीकायामातंकदर्पणाभिधायां ग्रहणीरोगनिदानं समाप्तम् ॥ ४ ॥

# अथार्शोनिदानम् ५.

**पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च ॥**
**अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये ॥ १ ॥**

---

मधुकोशव्याख्या ।

अतीसारग्रहण्यर्शसां परस्परसंबन्धादतीसारग्रहण्यनन्तरमर्श उच्यते । अरिवत् प्राणान् शृणाति हिनस्तीत्यर्श इति पृषोदरादिपाठात् निरुक्तिमाहुः । सहजानीति सह शरीरेण जातानि, गुदवल्यारम्भकबीजभागस्य दोषदूषितत्वात् । अत्र द्वन्द्वजानि प्रकृतिसमसमवायारब्धत्वान्न गणितानि । उक्तं हि सुश्रुते— "अर्शःसु दृश्यते रूपं यदा वै दोषयोर्द्वयोः । संसर्गं तं विजानीयात्संसर्गः षड्विधश्च सः" इति । षाड्विधत्वं चात्र संसर्गस्य वातादिभिर्युग्मैस्त्रयः संसर्गाः, तैरेव रक्तयोगादपरे त्रय इति । सन्निपातजं तु एकैकदोषजेषु अदृष्टस्यासाध्यत्वस्य योगात् विकृतिविषमसमवायारब्धमिति संख्यायां पृथग्गणितम् । गुदवलीत्रय इति । अर्धपञ्चांगुलमानं गुदं, तस्यावयवभूतास्तिस्रो वलय उपर्युपरि व्यवस्थिताः शंखावर्तनिभाः प्रवाहणीविसर्जनीसंवरणीनामिकास्तत्र गुदौष्ठमर्धांगुलं तदूर्ध्वमंगुलमाना प्रथमावली सुश्रुतेन निर्दिष्टा, भोजेऽप्युक्तं—"रोमान्तेभ्यो यवाध्यर्धं गुदौष्ठं परिचक्षते । गुदौष्ठादंगुलं चैकं प्रथमां तां वलीं विदुः" इति । सार्धांगुल-

आतङ्कदर्पणव्याख्या ।

अतीसारग्रहण्यर्शसां परस्परानुबंधित्वादतीसारग्रहण्योरनंतरमर्श उच्यते । अरिवत् प्राणान् हिंसंति इत्यर्शांसि तानि च षट्प्रकाराणि भवंति । पृथग्दोषैर्वातादिभिः त्रीणि समस्तैर्दोषैः एकं शोणितेन चैकं सहजानीति । एवं षडर्शांसि । तत्र सहजानि सह शरीरेण जातानि गुदवल्यारंभकबीजभागस्य दोषपोषितत्वात्--कुलजानीत्यर्थः । अत्र द्वन्द्वजानि प्रकृतिसमवायारब्धत्वात् पृथग्गणितानि । उक्तं हि सुश्रुते--"अर्शस्सु दृश्यते रूपं यदा वै दोषयोर्द्वयोः । संसर्गजं विजानीयात्संसर्गः षड्विधश्च सः" इति । षड्विधत्वं चात्र संसर्गस्य वातादियुग्मैस्त्रयः संसर्गास्तैरेव रक्तयोगादपरे त्रय इति । त्रिदोषजे तु विकृतिसमवायारब्धत्वेनासाध्यत्वात्संख्यया पृथग्गणितम् । गुदवलित्रय इति । अर्द्धपंचांगुलमानं गुदं तस्यावयवभूतास्तिस्रो वलयः उपर्युपरि व्यवस्थिताः शंखावर्तनिभाः प्रवहणीविसर्जनीसंवरणीनामिकास्तत्र गुदौष्ठमर्द्धांगुलं तदूर्ध्वमंगुलद्वयप्रमाणा प्रथमावली द्वितीया, सार्द्धैकांगुला, तृतीयापि सार्द्धैकांगुला एवं सार्द्धपंचांगुलगुदं सुश्रुतेन निर्दिष्टम् । भोजेनाप्युक्तं "रोमांतेभ्यो यवाध्यर्द्धं गुदौष्ठं परिचक्षते । गुदौष्ठादंगुलं चैकं प्रथमां तां

**दोषास्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतीन्॥**
**मांसांकुरानपानादौ कुर्वन्त्यर्शांसि ताञ्जगुः॥ २॥**
**कषायकटुतिक्तानि रूक्षशीतलघूनि च॥**
**प्रमिताल्पाशनं तीक्ष्णं मद्यं मैथुनसेवनम्॥ ३॥**
**लङ्घनं देशकालौ च शीतौ व्यायामकर्म च॥**
**शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः॥ ४॥**

---

मधुकोशव्याख्या।

माना द्वितीया तृतीया चेति॥ १॥ संप्राप्तिपूर्वकमर्शःस्वरूपमाह—दोषा इत्यादि। त्वङ्मांसग्रहणेन त्वङ्मांसाश्रितं रक्तमपि गृह्यते, चिकित्सायां रक्तस्रावणोपदेशात्। अपानं गुदम्, आदिशब्देन नासिकादीनां ग्रहणम्। कायचिकित्सकास्तु गुदजस्यैवार्शस्त्वमिच्छन्ति नासादिजानां त्वधिमांसत्वं, तेषु पञ्चात्मा मारुत इत्यादिसंप्राप्तेरभावात्, विष्टम्भ इत्यादिपूर्वरूपस्य चासंभवात्। यदाह चरकः—"शिश्न" इत्यारभ्य यावत् "अधिमांसव्यपदेश एव" इति। सुश्रुतेन तु मांसांकुरत्वसाधर्म्यात् शस्त्रक्षाराग्निसाध्यत्वाच्च तेष्वर्शःशब्दप्रयोगः कृतः, सार्षपादिस्नेहे तैलव्यपदेशवत्। सुश्रुतार्थवादिनो वाग्भटस्याप्ययमेवाभिप्राय इति॥ २॥ वातार्शसो निदानमाह—कषायेत्यादि। प्रमितमल्पतमम्, अल्पं मात्राहीनमशनम्। जेज्जटस्त्वाह—प्रमितमतीतकालभोजनम्। प्रमृतेति पाठे तु नष्टशक्तिकं धान्यादिकमाहुः। प्रमिताशनमेकरसाभ्यास इत्येके। तन्नातियुक्तम्, एकरसाभ्यासः किं वातप्रकोपकस्य

आतङ्कदर्पणव्याख्या।

चर्शो विदुः" इति सार्द्धगुल्माना द्वितीया तृतीया चेति॥ १॥ संप्राप्तिपूर्वकमर्शःस्वरूपमाह—दोषा वातादयस्त्वङ्मांसमेदांसि सन्दूष्य अपानादौ यन्मांसांकुरान् कुर्वंति भिषजस्तान्मांसांकुरानर्शांसि जगुः—कथयंति। त्वङ्मांसग्रहणेन त्वङ्मांसाश्रितं रक्तमपि गृह्यते कस्मात् चिकित्सायां रक्तस्रावकरणोपदेशः। अपानं—गुदम्। आदिशब्देन नासिकाचक्षुर्मेढ्रनाभिप्रभृतयो गृह्यंते, एषां लक्षणानि सुश्रुते पठितानि। कायचिकित्सकास्तु गुदस्यैवार्शस्त्वमिच्छन्ति नासिकादिजातानां त्वधिमांसत्वं, तेषु पंचात्मा मारुतः पित्तमित्यादिसंप्राप्तेरभावात्, तथा विष्टंभेत्यादि सर्वपूर्वरूपस्य चासंभवात्। यदाह चरकः—"शिश्नेत्यारभ्य—यावदधिमांसव्यपदेश एव" इति। सुश्रुतेन तु मांसांकुरत्वसाधर्म्याच्छस्त्रक्षाराग्निसाध्यत्वाच्च तेष्वर्शःशब्दप्रयोगः कृतः, सर्षपादिस्नेहे तैलव्यपदेशवत्। सुश्रुतानुवादिनो वाग्भटस्यायमेवाभिप्रायः प्रतिभाति॥ २॥ अथ वातार्शोनिदानमाह—कषायेत्याद्येतत्सर्वं वातार्शसां हेतुः—कारणम्। प्रमितमल्पतमम् अल्पं मात्राहीनम्

कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः ॥
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ ५ ॥
विदाहि तीक्ष्णमुष्णं च सर्वं पानान्नभेषजम् ॥
पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ ६ ॥
मधुरस्निग्धशीतानि लवणाम्लगुरूणि च ॥
अव्यायामो दिवास्वप्नः शय्यासनसुखे रतिः ॥ ७ ॥
प्राग्वातसेवा शीतौ च देशकालावचिन्तनम् ॥
श्लैष्मिकाणां समुद्दिष्टमेतत्कारणमर्शसाम् ॥ ८ ॥

---

मधुकोशव्याख्या ।

कटादेः, कफप्रकोपकस्य मधुरादेर्वा । नाद्यः; कटादेरत्रैवोपात्तत्वात्, मधुरादीनां चाभ्यासः वातशमक एव, एकरसाभ्यासाच्च दौर्बल्यमुक्तं नतु वातवृद्धिरिति चिन्त्य-मेतत् । तीक्ष्णमिति मद्यविशेषणं, पैष्टिकादिमृदुमद्यस्य वातशमनत्वपाठात् । शीतो देशोऽनूपः, कालो हेमन्तादिः । आतपस्योष्णगुणस्यापि उद्भूतरौक्ष्याद्वातप्रकोपकत्व-मिति ॥ ३ ॥ ४ ॥ पित्तार्शोनिदानमाह—कटम्लेत्यादि । देशकालावशिशिराविति उष्णो देशो मरुः, उष्णः कालः शरद् ग्रीष्मश्च । असूयनं परसंपत्तौ द्वेषः, स क्रोध-विशेष एव । पित्तोल्बणानामित्यनेन सर्वेषामर्शसां त्रिदोषजत्वम्, अधिकेन तु व्यपदेश इति दर्शितं चरकेण । यदाह स एव--"अर्शांसि नाम जायन्ते नाऽसन्निप-तितैस्त्रिभिः । दोषैर्दोषविशेषात्तु विशेषः कथ्यतेऽर्शसाम्" इति ॥ ५ ॥ ६ ॥ श्लेष्मार्शोनिदानमाह—मधुर इत्यादि । शय्यासनसुखे रतिरिति सुखशय्यासने

आतङ्कदर्पणव्याख्या ।

अन्ये प्रमितस्थाने अतीतमिति तत्रातीतकालभोजनम् । अन्ये प्रमृताल्पाशनमिति पठंति । तत्र प्रमृतं नष्टस्नेहिकं धान्यादिकमाहुः।तीक्ष्णमिति मद्यविशेषणं पैष्ट्यादिमृदुमद्यस्य वातप्रशमकत्वात् । शीतो देशः कोऽनूपः कालो हेमन्तादिः ॥३—४॥ अथ पित्तार्शसो निदानमाह—कटम्लेत्यादिको हेतुर्ज्ञेयः।देशकालावशिशिराविति देशो मरुदेशः,उष्णश्च कालो ग्रीष्मः शरच्च,असूयनम्--परसंपत्तौ द्वेषः स च क्रोधविशेष एव ।पित्तोल्बणानामित्यनेन सर्वेषामर्शसां त्रिदोषजत्वम्, अधिकेन तु व्यप-देश इति दर्शितं चरकेण, यदाह स एव "अर्शांसि नाम जायंते नाऽऽसन्निपतितैस्त्रिभिः । दोषै-र्दोषविशेषात्तु विशेषः कथ्यतेऽर्शसाम्" इति । शेषं सुगमम् ॥ ५ ॥ ६ ॥ अथ श्लेष्मार्शसां निदानमाह—श्लेष्मोत्कटानामर्शसां समुत्पत्तावेतन्मधुरस्निग्धेत्यादिकारणमुक्तम् । शय्यासनसुखेरतिस्त-त्रासक्तिः ॥ ७ ॥ प्राग्वातसेवा—पुरोवातसेवनम् । अचिंतनं—निश्चिंतता । अन्यत्सुबो-

**हेतुलक्षणसंसर्गाद्विद्याद्द्वन्द्वोल्बणानि च ॥**
**सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणं समम् ॥ ९ ॥**

मधुकोशव्याख्या ।

रतिरासक्तिः । प्राग्वातसेवा पुरोवातसेवनम् । अचिन्तनं निश्चिन्तता ॥ ७ ॥ ८ ॥ द्वन्द्वजार्शोनिदानादिकमाह—हेत्वित्यादि । हेतुलक्षणसंसर्गादिति दोषद्वयस्य निदानमेलके लक्षणमेलके च द्वन्द्वोल्बणानि द्वन्द्वजानि विद्यात् । त्रिदोषजार्शोनिदानमाह—सर्व इत्यादि । सर्वो हेतुरिति । एकैकशो वाताद्यर्शसां यो हेतुरुक्तः स त्रिदोषजानां भवति, त्रयो दोषा जनकत्वेनैषां सन्तीति त्रिदोषजानि । सहजैर्लक्षणं सममिति तेषां लक्षणं सहजैरर्शोभिः सह समं सदृशं सहजानां यल्लक्षणं तत्त्रिदोषजानामित्यर्थः । सहजैर्लक्षणैः सममिति पाठान्तरे सहजैः सहजार्शोभवैर्लक्षणैः समं सर्वो हेतुस्त्रिदोषाणामिति योज्यम् । सहजार्शोलक्षणं चात्र संग्रहे नोक्तं तन्त्रेऽनुस्मर्तव्यं; यदाह सुश्रुतः—"दुर्दर्शनानि परुषारुणपाण्डूनि दारुणान्तर्मुखानि तैरुपद्रुतः कृशोऽल्पभुक् शिरासंततगात्रोऽल्पप्रजः क्षीणरेताः क्षामस्वरः क्रोधनोऽल्पाग्निर्घ्राणशिरोऽक्षिश्रवणरोगवान् सततमन्त्रकूजनाटोपहृदयोपलेपारोचकप्रभृतिभिः पीड्यते" इति । चरके च—"कानिचित्" इत्यादिना प्रभूततरं लक्षणमुक्तम् । ननु, त्रिदोषजानीति विशेषाभिधानमनुपपन्नं सर्वेषामेव रोगाणां त्रिदोषजत्वात् । यदुक्तं—"द्रव्यमेकरसं नास्ति न रोगोऽप्येकदोषजः । योऽधिकस्तेन निर्देशः क्रियते रसदोषयोः" इति । नैवं, सर्वदेहचरास्तु वातपित्तश्लेष्माण इति वचनादेकस्मिन् धात्वादौ दोषेण दूषिते तद्गतेतरदोषेऽप्यवश्यम्भाविनी काचिद्दुष्टिः दुष्टदोषसंबन्धात् । किंच, स्वकारणात् वृद्धो वायुः शैत्यात् शीतस्य श्लेष्मणो बलमादधाति, लाघवात्तेजोरूपस्य पित्तस्य; पित्तं च कटुत्वाद्वातस्य, द्रवत्वात् श्लेष्मणः, कफश्च शैत्यात् वायोर्द्रवत्वात् पित्तस्येति । अत एवोक्तम्—"न रोगोऽप्येकदोषजः" इति । अनेनैवाभिप्रायेणोक्तम्—"एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्" इति । यत्र तु स्वकारणात् त्रयोऽपि

आतङ्कदर्पणव्याख्या ।

धम् ॥ ८ ॥ दोषाणां हेतुलक्षणैरेव द्वंद्वोल्बणमाह—दोषद्वयस्य निदानमेलके लक्षणमेलके च द्वंद्वोल्बणानि द्वंद्वजानि विद्यात्—जानीयात् । त्रिदोषजमाह—एकैकशो वाताद्यर्शसां यो हेतुरुक्तः स त्रिदोषजानां भवति । त्रयो दोषा जनकत्वेनैषां संतीति त्रिदोषजानि तेषां लक्षणं सहजैरर्शोभिः सह समं सदृशं सहजानां यल्लक्षणं भवति तत्त्रिदोषजानां भवतीत्यर्थः । सहजार्शोलक्षणं चात्र संग्रहे नोक्तं तंत्रांतरादनुसर्तव्यम् । यदाह सुश्रुतः—"दुर्दर्शनानि परुषारुणपाण्डुराणि दारुणान्तर्मुखानि तैरुपद्रुतः कृशोल्पभुक् शिरासंततगात्रोऽल्पप्रजः क्षीणरेताश्च भवति, क्षामस्वरः

गुदांकुरा बह्वनिलाः शुष्काश्चिमचिमान्विताः ॥
म्लानाः श्यावारुणाः स्तब्धा विशदाः परुषाः खराः ॥१०॥
मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः ॥
बिम्बीखर्जूरकर्कन्धूकार्पासीफलसन्निभाः ॥११॥
केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः ॥
शिरःपार्श्वांसकट्यूरुवङ्क्षणाद्यधिकव्यथाः ॥ १२ ॥

---

मधुकोशव्याख्या ।

कुपितास्तत्र त्रिदोषव्यपदेश इति सिद्धान्तः, एवं सर्वत्र ॥ ९ ॥ पूर्वं निदानमुक्तं संप्रति वातादिभेदेनार्शसां लक्षणान्युच्यन्ते, तत्र प्रथमं वातार्शोलक्षणमाह—गुदे-त्यादि । गुदांकुरा गुदे अंकुराकाराः मांसप्ररोहा अर्शांसि । बह्वनिला वातोल्बणाः । शुष्काः स्रावरहिताः । चिमचिमा वेदनाविशेषः । म्लाना अनुपचिताः । स्तब्धाः काठिन्यात् । विशदा अपिच्छिलाः, धूलिस्पर्शवत् । परुषाः कर्कशाः, गोजिह्वस्पर्श-वत् । खराः कर्कोटफलवत् । सूक्ष्मा अनेककण्टकाचिताः । एषु विकल्पेषु वक्ष्यमाणं केचिदिति पदं संबन्धनीयम् । मिथो विसदृशाः परस्परभिन्नरूपाः । तीक्ष्णाः सूक्ष्माग्राः । फलसन्निभा इति बिम्ब्यादिभिः संबध्यते, बिम्ब्यादिसन्निभत्वं चाकृत्या ज्ञेयम् । बिम्बी ओष्ठोपमफला, 'तेलाकुचा' इति लोके ख्याता । कार्पासी वनका-र्पासी । कदम्बपुष्पाभाः स्थूला अनेकसूक्ष्मशिखराः । सिद्धार्थकोपमाः सूक्ष्मपि-डिकारूपाः । हृदयं गृहीतमिवेति वेदना हृद्ग्रहः । ग्रन्थितं ग्रन्थिलं पाषाणवत् । रुक्

आतङ्कदर्पणव्याख्या ।

क्रोधनोल्पाग्निर्घ्राणशिरोक्षिश्रवणरोगी संतत मंत्रकूजाटोपहृदयालेपासेकप्रभृतिभिः पीड्यते" इति सहजानां लक्षणम् ।अर्शसां पूर्वरूपमाह—अर्शसामभिवृद्धये उत्पत्त्यर्थमेतानि पूर्वरूपाणि निर्दिष्टानि॥९॥ पूर्वंनिदानमुक्तं संप्रति वातादिभेदेन अर्शसां लक्षणमाह—बह्वनिलाः वातोल्बणाः गुदांकुराः गुदेङ्कुराः मांसप्ररोहाः अर्शांसि शुष्काः स्रावरहिताः चिमिचिमा वेदनाविशेषस्तेनान्विताः सर्षपकल्कलिप्ता इवेति यावत् । म्लाना अनुपचिताः श्यावारुणा वर्णतः स्तब्धाः कठिनाः कीलवत् विशदा अपिच्छिलाः धूलीस्पर्शवत् । विषमा इति पाठे विषमाः निम्नोन्नताः परुषाः कर्कशाः गोजिह्वा-स्पर्शवत् खराः कर्कोटकफलवत् सूक्ष्मानेककंठकचिताः एषु विकल्पेषु वक्ष्यमाणेषु केचिदिति पदं संबंधनीयम् ॥ १० ॥ मिथो विसदृशाः परस्परं विभिन्नरूपाः । वक्रा धनुर्वत् । तीक्ष्णा दर्भांकुरवत् सूक्ष्माग्राः । विस्फुटिताननाः केसरादिवदाननं येषां तेषां ते विदीर्णमुखा इत्यर्थः । बिंबादिफलवत्, सदृशत्वम् आकृत्या, बिम्बी ओष्ठोपमफलम् ॥ ११ ॥ शिरःप्रभृती-

क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः ॥
कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ॥ १३ ॥
तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ॥
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥ १४ ॥
कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते ॥
गुल्मप्लीहोदराष्ठीलासंभवस्तत एव च ॥ १५ ॥
पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ॥
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः ॥ १६ ॥
शुकजिह्वायकृत्खण्डजलौकोवक्त्रसन्निभाः ॥
दाहपाकज्वरस्वेदतृण्मूर्च्छारुचिमोहदाः ॥ १७ ॥

---

मधुकोशव्याख्या।

शूलम्। पिच्छा पिच्छिलो द्रवभागः उपवेश्यते वर्चस्त्याज्यते। कृष्णशब्दस्त्वगादिभिः वक्त्रान्तैः प्रत्येकं संबध्यते। अस्योपद्रवमाह—गुल्मेत्यादि। अष्ठीला वातरोगविशेषः ॥ १०–१५ ॥ पित्तार्शोलक्षणमाह—पित्तोत्तरेत्यादि। नीलमुखा नीलाग्राः। तन्वस्रं तनु अघनम् अस्रं रक्तं स्रवन्तीति तन्वस्रस्राविणः। विस्राः आमगन्धिनः। तनवः अल्पाः। मृदवः कोमलाः। श्लथाः लम्बनशीलाः। यवमध्याः यवावयववत् मध्य स्थूलाः। हरित् हरित्पत्रवर्णं, पीतं हरितालाभम्, हारिद्रं हारिद्रावर्णम्; आदि-

आतङ्कदर्पणव्याख्या।

नामभ्यधिकव्यथा—अतिवेदना ॥ १२ ॥ क्षवथुः छिक्का विष्टम्भो मलस्य तृड्ग्रहः—हृदयं गृहीतमिवेति वेदना—हृद्ग्रहः ॥ १३ ॥ तैर्गुदांकुरैः पीडितः पुरुष ईदृग्वर्चः उपवेश्यते—त्याज्यते, गुदेनेति शेषः। ग्रथिलं—ग्रथितं पाषाणवत्। स्तोकमल्पं सप्रवाहिकं—वातप्रवाहिकालक्षणोपेतं, रुक् शूलं पिच्छा पिच्छिलोद्रवभागस्तेनानुगतम् ॥ १४ ॥ कृष्णशब्दस्त्वगादिभिर्वक्त्रांतैः प्रत्येकं संबध्यते। अस्योपद्रवमाह—गुल्मेत्यादि। ततो वातार्शोभ्य उपद्रवरूपाणामेषां संभव उत्पत्तिः। अष्ठीला नाभेरधोभागे पाषाणपिंडिकावद् वातरोगविशेषः ॥ १५ ॥ पैत्तिकान्याह—पित्तोत्तराः पित्तोल्बणा गुदांकुरा ईदृशा ज्ञेयाः, नीलमुखाः—नीलाग्राः। तनु—अघनम् अस्रं रक्तं स्रवंतीति तन्वस्रस्राविणः, विस्राः—विस्रगंधिनः, तनवः—स्वल्पाः, मृदवः—कोमलाः, अन्ये मृदुलम्बिन इति पठंति। तत्र लम्बिनो लम्बनशीलाः ॥ १६ ॥ आकृत्या च शुकजिह्वायकृत्खंडजलौकोमुखसन्निभाः सदृशाः। उपद्रवानाह—दाहादिमोहांतोपद्रवदायिनः ॥ १७ ॥

सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ॥
यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः ॥ १८ ॥
श्लेष्मोल्बणा महामूला घना मन्दरुजः सिताः ॥
उत्सन्नोपचितस्निग्धस्तब्धवृत्तगुरुस्थिराः ॥ १९ ॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः ॥
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥ २० ॥

---

मधुकोशव्याख्या ।

शब्दात् विण्मूत्रनेत्रवक्त्राणां ग्रहणम् ॥ १६–१८ ॥ श्लेष्मार्शोलक्षणमाह—श्लेष्मोल्बणेत्यादि । श्लेष्मोल्बणा इत्यादौ गुदांकुरा इत्यनुवर्तते । महामूला दूरधात्ववगाहिनः । घना निबिडावयवाः । उत्सन्ना दैर्घ्येणोद्गताः, उपचिताः परिणाहेन स्थूलाः, स्तब्धा अनम्राः, वृत्ताः परिणाहेन वर्तुलाः, गुरवः गुरुद्रव्याक्रान्तामिव गुदं कुर्वते, स्थिरा अचञ्चलाः । श्लक्ष्णा मणिवन्मसृणाः । कण्ड्वाढ्याः कण्डूबहुलाः, कण्डूव्यपगमार्थं स्पृश्यमानाः प्रीणयन्ति अर्शांसीति स्पर्शनप्रियाः । करीरो मरुजद्रुमः, पनसः कण्टकिफलं, तयोरस्थ्याभाः । अथ वा करीरो वंशांकुरस्तेन करीराभाः, पनसास्थ्याभा इत्यर्थः । वंक्षणौ आनद्धुमाबद्धुमिव शीलं येषां ते तथा, गुदप्रत्यासत्त्या वंक्षणयोः प्रेरणाद्यसामर्थ्यकारिण इत्यर्थः। पायुवस्तिनाभिविकर्षिण इति पाय्वादिष्वाकर्षवत् पीडाकारिणः । प्रसेको मुखस्य गुदस्य वा । कृच्छ्रं मूत्रकृच्छ्रम् । शिरोजाड्यं शिरःस्तिमितता । शिशिरज्वरकारिणः शीतज्वरकारिणः । क्लैब्यं स्त्रीष्वनुत्साहः । आमप्रायविकारदाः आमबहुला

आतङ्कदर्पणव्याख्या ।

सोष्माणः उष्णस्पर्शाः, द्रवं नीलम् उष्णं पीतरक्तम्, आममपक्वं वर्चः उपवेशयंति ॥ यवमध्येति । यववत् मध्ये स्थूलाः प्रांते सूक्ष्माः, हरितं हरितपत्रवर्णं पीतं, हरितालाभं, हारिद्रवर्णं तद्वत् त्वगादि येषां ते एवमादिशब्दाच्च चक्षुर्नेत्रादयो गृह्यंते ॥ १८ ॥ श्लैष्मिकान्याह—श्लेष्मोल्वणा इत्यादौ गुदांकुरा इत्यनुवर्तते । महामूला—दूरधात्ववगाहनाः । घना निविडावयवाः । मंदरुजः स्वल्पपीडाः, सिताः शुक्लवर्णाः । उत्सन्ना दैर्घ्येणोद्गताः । उच्छूना इतिपाठे श्वयथुमंतः, परिणाहेन स्थूलाः, स्तब्धाः—अनम्राः, वृत्ताः परिणाहेन वर्त्तुलाः, गुरवः—गुरुद्रव्याक्रांतमिव गुदं कुर्वते । स्थिरा निश्चलाः, पिच्छिलाः अविशदाः, स्तिमिता मन्दाः, श्लक्ष्णाः मणिवन्मसृणाः, कंड्वाढ्याः कंडूबहुलाः कंडूव्यपगमार्थमुपस्पृश्यमानाः, प्रीणयंत्यर्शांसमिति । स्पर्शनप्रियाः ।

**वंक्षणानाहिनः पायुबस्तिनाभिविकर्षिणः ॥**
**सश्वासकासहृल्लासप्रसेकारुचिपीनसाः ॥ २१ ॥**
**मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः ॥**
**क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः ॥ २२ ॥**
**वसाभसकफप्राज्यपुरीषाः सप्रवाहिकाः ॥**
**न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः ॥ २३ ॥**
**सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च ॥**
**रक्तोल्बणा गुदेकीलाः पित्ताकृतिसमन्विताः ॥ २४ ॥**

मधुकोशव्याख्या ।

ये रोगाः अतीसारग्रहण्यादयस्तत्प्रदाः । प्रायःस्थाने 'प्राज्य' इति पाठान्तरे स एवार्थः, प्रायःप्राज्यशब्दयोः प्रचुरार्थत्वात् । वसाभं च सकफं च प्राज्यं च पुरीषं येषां ते तथा । न स्रवन्ति क्लेदरक्तादिकमिति शेषः । न भिद्यन्ते गाढविट्प्रपीडिता अपि न विदीर्यन्त इति ॥ १९-२३ ॥ सन्निपातार्शसः सहजार्शसश्च लक्षणमाह—सर्वैरित्यादि । सर्वैर्वातजाद्यर्शोभवैर्लक्षणैः सर्वात्मकानि त्रिदोषजानि तथा तैरेव लक्षणैः सहजान्यप्याहुः, तेषामपि त्रिदोषजत्वात् । रक्तार्शोलक्षणमाह—रक्तोल्बणा इत्यादि । गुदेकीलाः कीलवत् कीलाः अर्शांसि, "हलदन्तात् सप्तम्याः संज्ञायाम्"

आतङ्कदर्पणव्याख्या ।

आकृत्या तु करीरो मरुदेशोद्भवो द्रुमः, पनसः कंटकिफलं. तयोरस्थिवदाभाः । अथवा करीरो वंशाकुरः तेन करीराभाः, पनसास्थ्याभाश्चेत्यर्थः । तथा गोस्तनसन्निभास्तत्सदृशाः ॥ २० ॥ वंक्षणावानाहितुमावद्धुमिव शीलं येषां ते तथा गुदप्रत्यासत्त्या वंक्षणयोः प्रेरणावसामर्थ्यकारिणः । पायुवस्तिनाभ्यवकर्षिणः पाय्वादिषु आकर्षणवत् पीडाकारिणः । बस्तिः—मूत्रकोशः । उपद्रवानाह—कासेत्यादि । हृल्लासः—उपस्थितवमनमिव, प्रसेको मुखस्य गुदस्य वा ॥ २१ ॥ कृच्छ्रं—मूत्रकृच्छ्रं, शिरोजाड्यं—शिरस्तिमितता, शिशिरज्वरकारिणः—शीतज्वरकारिणः, क्लैब्यं स्त्रीष्वनुत्साहः, आमप्रायविकारदाः—आमबहुला ये रोगा अतीसारग्रहण्यादयस्तत्प्रदाः । प्रायःस्थाने प्राज्या इति पाठे स एवार्थः, प्रायःप्राज्यशब्दयोः प्रचुरार्थत्वात् ॥ २२ ॥ वसाभं च, सकफं, प्राज्यं—प्रभूतं पुरीषं येषां ते तथा सप्रवाहिकाः—श्लैष्मिकप्रवाहयुक्ताः न स्रवंति क्लेदरक्तादिकमिति शेषः । न भिद्यंते गाढविड्निपीडिता अपि न विदीर्यन्त इति । पांडुस्निग्धास्त्वगादयः—त्वङ्नखनयनवदनानि यत्र पुरुषाणां भवन्ति ॥ २३ ॥ सन्निपातार्शसः सहजार्शसश्च लक्षणमाह—सर्वैरिति । सर्वैर्वातजाद्यर्शोभवैर्लक्षणै

वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः ॥
तेऽत्यर्थं दुष्टमुष्णं च गाढविट्कप्रपीडिताः ॥ २५ ॥
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥
भेकाभः पीड्यते दुःखैः शोणितक्षयसंभवैः ॥ २६ ॥
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ॥
विट् श्यावं कठिनं रूक्षमधोवायुर्न वर्तते ॥ २७ ॥
तनु चारुणवर्णं च फेनिलं चासृगर्शसाम् ॥
कट्यूरुगुदशूलं च दौर्बल्यं यदि चाधिकम् ॥ २८ ॥

---

मधुकोशव्याख्या ।

इत्यलुक्समासः । पित्ताकृतिसमन्विताः पैत्तिकार्शोलक्षणयुक्ताः । विद्रुमसन्निभाः प्रवालमणिवल्लोहिता इत्यर्थः । ते गाढविट्कप्रपीडिताः कठिनपुरीषयन्त्रिताः । दुष्टं रक्तमुष्णं च स्रवन्ति । तस्येति रक्तस्य, अतिप्रवृत्तितः अतिक्षयात्, भेकाभः प्रावृषेण्यवर्षाभ्वाभः पीतच्छविः, पुरुष इति शेषः । दुःखैः रोगैः । शोणितक्षयसंभवैरिति त्वक्पारुष्याम्लशीतप्रार्थनाशिराशैथिल्यैः सुश्रुतोक्तैः । बलं स्थौल्यम्, उत्साहो हर्षः । हतौजा हतशक्तिः । कलुषेन्द्रिय आविलचक्षुः, व्याकुलसर्वेन्द्रियो वा । विट् श्यावमिति विट्शब्दो नपुंसकोऽप्यस्ति एतन्निर्देशादेव, काश्मीरास्तु चरके-"विट् श्यावा कठिना रूक्षा" इत्येव पठन्ति । अधोवायुर्न वर्तते गुदेन प्रतिलोमगत्वात् ॥२४-२७॥ इदानीं तस्यैव रक्तार्शसो निदानस्य रक्तस्य च वातादिभेदेन लक्षणमाह-तन्वित्यादि। वातादिदुष्टस्यैव रक्तस्यारम्भकत्वात् न तु केवलस्य, दोषत्वाभावात् । शिथिलमित्या-

आतङ्कदर्पणव्याख्या ।

सर्वात्मकानि त्रिदोषजानि तथा तैरेव लक्षणैः सहजान्याहुस्तेषामपि त्रिदोषजत्वात् । रक्तजान्याह-रक्तोल्बणा इत्यादि । गुदेकीलाः कीलवत्-कीला अर्शांसि, पित्ताकृतिसमन्विताः-पैत्तिकार्शोलक्षणयुक्ताः ॥ २४ ॥ आकृत्या च गुंजा-रक्तगुंजा, विद्रुमः-प्रवालमणिस्तत्सदृशलोहिता इत्यर्थः । ते गाढविट्कप्रपीडिताः कठिनपुरीषयंत्रिताः ॥ २५ ॥ अतिशयेन दुष्टं रक्तमुष्णं च स्रवंति सहसा अकस्मात् । तस्येति रक्तस्यातिप्रवर्तनाद्भेकाभः-प्रावृषेण्यवर्षाभ्वाभः पीतच्छविः पुरुषः । दुखैः-रोगैः शोणितक्षयसंभवैरिति । शोणितक्षये त्वचि पारुष्याम्लशीतप्रार्थना, शिरःशैथिल्यैः सुश्रुतोक्तैः । बलं स्थौल्यम् ॥ २६ ॥ उत्साहो-हर्षः । हतौजा हतशक्तिः, कलुषेंद्रियो व्याकुलसर्वेन्द्रियः । अधोवायुर्न प्रवर्त्तते गुदेन प्रतिलोमत्वात् ॥२७॥ इदा-

तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् ॥
शिथिलं श्वेतपीतं च विट् स्निग्धं गुरु शीतलम् ॥ २९॥
यद्यर्शसां घनं चासृक् तन्तुमत्पाण्डु पिच्छिलम् ॥
गुदं सपिच्छं स्तिमितं गुरुस्निग्धं च कारणम् ॥
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥ ३० ॥
विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च ॥
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥ ३१ ॥

मधुकोशव्याख्या ।

दिना कफानुबन्धस्य । ननु, पित्तानुबन्धः कुतो नोक्त इति चेत् ? उच्यते, रक्तपित्तयोः प्रायः समानलिङ्गत्वात् । उक्तं च पूर्वं 'रक्तोल्बणा गुदेकीलाः पित्ताकृतिसमन्विताः' इति ॥ २८॥२९॥३० ॥ पूर्वरूपमाह–विष्टम्भ इत्यादि । विष्टम्भोऽन्नस्येति विष्टम्भोऽन्नस्याजीर्णतागमनम्, आहारो वा विष्टब्धः आमाशयः एवावतिष्ठते, वातवैगुण्यात् । दौर्बल्यं हीनशक्तिता । विष्टम्भोऽङ्गस्येति पाठान्तरे विष्टम्भो मलस्य, अङ्गस्य दौर्बल्यम् । यद्यपि निदानानन्तरं पूर्वरूपं वक्तव्यं भवति तथापि निदानलक्षणानन्तरमत्र पूर्वरूपं, निदानलिङ्गयोश्चिकित्साङ्गतमत्वप्रतिपादनार्थं तयोः पूर्वमभिधानम् । अथ वाऽवश्यवक्तव्यानां कामचारादभिधानमिति । एवमन्यत्रापि व्यक्तिक्रमे द्रष्टव्यम् । कुक्षेराटोपः गुडगुडाशब्द इति चक्रः, तलतलमिति गुणाकरः, रुजापूर्वकक्षोभ इति गदाधरः । पुरीषवृद्धिलक्षणे च आटोपमाध्मानमिति विवृतवान् ।

आतंकदर्पणव्याख्या ।

नीमस्यैव रक्तार्शोनिदानस्य वातादिभेदेन लक्षणमाह–रक्तोल्बणानामर्शसाम् असृग्यदीदृशं भवति । तनु अल्पं कट्यादिषु शूलं अधिकञ्च दौर्बल्यम्, तत्र रक्तार्शसि वातस्यानुबंधो ज्ञेयः ॥ २८ ॥ यदि च रूक्षणं रूक्षद्रव्यादिहेतुः कारणम् । श्लेष्मानुबंधिलक्षणमाह–रक्तोल्बणानामर्शसां यदि शिथिलं श्वेतपीतं च विट् प्रवर्तते । यदि च स्निग्धं गुरु शीतलम् ॥ २९ ॥ तन्तुमत्पाण्डु, पिच्छिलम् असृक्प्रवर्तते । तन्तुमत्सूत्राकारं गुदमपि पिच्छिलार्द्रस्तिमितं निश्चलं भवति । तस्मिन् रक्तार्शसि श्लेष्मानुबंधो विज्ञेयः गुरु स्निग्धं च तत्र कारणं हेतुः । ननु पित्तानुबंधः कुतो नोक्त इति तदुच्यते रक्तपित्तयोः प्रायः समानलिंगत्वात् । पूर्वमुक्तं च 'रक्तोल्बणा गुदे कीलाः पित्ताकृतिसमन्विताः' इति ॥३०॥ विष्टंभोन्नस्येति । विष्टम्भोन्नस्य–अजीर्णतागमनम् आहारो वा विष्टब्ध आमाशय एवावतिष्ठते, वातवैगुण्यात् । दौर्बल्यं–हीनशक्तिता, विष्टंभोंगस्येति पाठांतरे विष्टंभो मलस्य अंगस्य दौर्बल्यम् । कुक्षेराटोपः गुडगुडाशब्द इति चक्रः । तलतल इति गुणा-

**ग्रहणीदोषपाण्ड्वर्तेराशङ्का चोदरस्य च ॥**
**पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥ ३२ ॥**
**पञ्चात्मा मारुतः पित्तं कफो गुदवलीत्रयम् ॥**
**सर्व एव प्रकुप्यन्ति गुदजानां समुद्भवे ॥ ३३ ॥**

मधुकोशव्याख्या ।

एतच्च न सर्वत्र, गुल्मपूर्वरूपे आटोपाध्मानयोरुभयोरपि पाठात् । उद्गारबाहुल्यम्, अधोनिरुद्धस्य वायोरूर्ध्वगत्वात् । सक्थिसादो जङ्घावसादः । ग्रहणीदोषपाण्ड्वर्तेः ग्रहणीदोषयुक्तपाण्डुरोगस्य उदरस्य चाशङ्का, तेषां लक्षणदर्शनात् । ग्रहणीदोषपाण्ड्वर्तेरिति पाठान्तरे ग्रहणीदोषस्य पाण्डोः पाण्डुरोगस्य चार्तिः पीडा स्यात्। अभिवृद्धये उत्पत्त्यर्थमिति ॥ ३१ ॥ ३२ ॥ ननु, गुददेशदुष्ट्या गुदजस्योत्पादात्कथं सर्वदेहे कृशत्वकृष्णत्वादिरूपा दुष्टिरिति ? अत आह—पञ्चात्मेत्यादि । पञ्चात्मा पञ्चस्वरूपः प्राणापानसमानोदानव्यानभेदात्, एवं लिङ्गविपरिणामात् पञ्चात्मकं च पित्तेऽपि योज्यं, पित्तं हि आलोचकरञ्जकसाधकपाचकभ्राजकभेदाद्भिन्नम्; एवं कफोऽपि पञ्चात्मा, हृदयामाशयजिह्वाशिरःसन्धिषु क्रमेणावलम्बकक्लेदकबोधकतर्पकश्लेष्मकभेदात् । यदाह गौतमः—"श्लेष्मा च पञ्चधोरःस्थः श्लेष्मकादिस्वकर्मणा । कफधाम्नां च सर्वेषां यत्करोत्यवलम्बनम् ॥ अतोवलम्बकः श्लेष्मा यस्त्वामाशयसंश्रितः ।

आतंकदर्पणव्याख्या ।

करः, रुजापूर्वकः क्षोभ इति गदाधरः,पुरीषवृद्धिलक्षणोत्राटोपः—आध्मानमिति माधवः । उद्गार बाहुल्यम् अधोनिरुद्धस्य वायोरूर्ध्वगतत्वात् । सक्थिसादो—जंघावसादः,अल्पविट्कता अल्पपुरीषत्वम्॥३१॥ ग्रहणीरोगपांड्वर्तेराशंकेति ग्रहणीरोगयुक्तस्य पांडुरोगोदरस्य चाशंका एतेषां लक्षणदर्शनात् ग्रहणीरोगपांड्वर्तिरिति पाठांतरे ग्रहणीरोगस्य पांडोः पांडुरोगस्य चार्त्तिः पीडा स्यादिति ॥ ३२ ॥ ननु गुददेशदुष्ट्या गुदजस्योत्पादात् कथं सर्वदेहे कृशत्वादिरूपा दुष्टिरित्याह—पंचात्मेति । गुदजानां समुद्भवे संभवे एते सर्व एवोक्तस्वरूपा वातादयः प्रकुप्यंति । पंचात्मा—पंचस्वरूपः, प्राणापानसमानोदानव्यानभेदात् । तेषां स्थानानि—"हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कंठदेशे च व्यानः सर्वशरीरगः" ॥ एवं पंचात्मा वायुः कथ्यते "योऽनिलो वक्त्रसंचारी स प्राणो नाम देहधृक् । सोन्नं प्रवेशयत्यंतः प्राणांश्चैवावलंबते । कुपितः कुरुते चापि हिकाश्वासादिकान्गदान् ॥ उदानो नाम यस्तूर्ध्वमुपैति पवनोत्तमः । तेन भाषितगीतादिविशेषश्चाभिवर्त्तते । उर्द्ध्वजत्रुगतान् रोगान् करोति कुपितश्च सः ॥ आमपक्वाशयचरः समानोऽग्निसहायवान् । अन्नं पचति तज्जांश्च विकारान्प्रव्यनक्ति सः । गुल्माग्निसङ्गातीसारान्प्रभृतींश्च करोति सः ॥ पक्वाशयाश्रयोऽपानः काले कर्षति चाप्यधः । वातमूत्रपुरीषाणि

**तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च ॥**
**सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥ ३४ ॥**

मधुकोशव्याख्या ।

क्लेदकः सोन्नसंघातक्लेदनाद्रसबोधनात् ॥ बोधको रसनास्थस्तु शिरःसंस्थोऽक्षितर्पणात् । तर्पकः श्लेष्मकः सम्यक्श्लेषणात्सन्धिषु स्थितः'' इति । गुदवलीत्रयस्य च प्रकोपो विकृतत्वं, प्रवाहणादिषु स्वकार्याकर्तृत्वं च । गुदवलीत्रये इति पाठान्तरं न युक्तं, तत्र प्राणोदानयोः सन्निधानस्याभावात्, वलीदुष्टेरप्राप्तेश्च । सर्व एवेति

आतङ्कदर्पणव्याख्या ।

शुक्रगर्भार्त्तवानि च । क्रुद्धश्च कुरुते रोगान्घोरान् वस्तिगुदाश्रयान् ॥ सर्वदेहसरो व्यानो रससंवाहनोद्यतः । स्वेदासृक्स्रावणश्चापि पंचधा चेष्टयत्यपि ॥ क्रुद्धश्च कुरुते रोगान्प्रायशः सर्वदेहगान् । शुक्रदोषाः प्रमेहाश्च व्यानापानप्रकोपजाः । युगपत् कुपिताश्चामी देहं भिन्धुरसंशयम् ॥'' इति । पंचात्मा—वायुः रजोगुणमयः सूक्ष्मः शीतो रूक्षो लघुश्चलः । एवं पंचात्मकत्वं पित्ते । योज्यम्—आलोचकरंजकसाधकपाचकभ्राजकभेदात् ''पाचकं भ्राजकं चैव रंजकालोचके तथा । साधकं चेति पंचैव पित्तनामान्यनुक्रमात् ॥ स्वाशये पाचकं पित्तमग्निरूपं तिलोन्मितम् । भ्राजकं कांतिदं यत्तु लेपाभ्यंगादिपाचकम् ॥ रंजकं तु यकृत्प्लीह्नोस्तद्वशं शोणितं व्रजेत् । आलोचकमुभौ नेत्रे रूपदर्शनकारि तत् ॥ साधकं हृदये तिष्ठेन्मेधाप्रज्ञाकरञ्च तत् । पित्तमुष्णं द्रवं पीतं नीलं सत्त्वगुणोत्तरम् ॥ कटुतिक्तरसं ज्ञेयं विदग्धं चाम्लतां व्रजेत् ॥'' तेषां स्थानानि—आलोचकं नेत्रयोः, रंजकं यकृत्प्लीह्नोः, साधकं हृदि, पाचकं पक्वामाशययोर्मध्ये, भ्राजकं त्वचि । एवं कफोपि पंचात्मा—आलंबकक्लेदकबोधकतर्पकश्लेष्मकभेदात् । तेषां स्थानानि यदाह गौतमः—''श्लेष्मा पंचविधोरस्थस्त्रिकसंस्थः स्ववीर्यतः । हृदयस्थान्नवीर्याच्च तत एवाम्लकर्मणा ॥ कफधाम्नामशेषाणां यत्करोत्यवलंबनम् । अतोवलंबकः श्लेष्मा यस्त्वामाशयसंस्थितः ॥ क्लेदकः सोन्नसंघातक्लेदनाद्रसबोधनात् । बोधको रसनास्थस्तु शिरःसंस्थोक्षितर्पणात् ॥ तर्पकः श्लेष्मकः संधेः श्लेषणात्संधिसंस्थितः । उरःकंठःशिरःसंधिपर्वाण्यामाशयो रसः ॥ मेदो घ्राणं च जिह्वा च कफस्थानमुरो भृशम्'' इति । एवं दोषत्रयाणां पंचात्मकत्वं सिद्धं पंचात्मनो दोषास्त्रयः । गुदवलित्रये च गुदजानां समुद्भवे सिद्ध एव प्रकुप्यंति गुदवलित्रयस्य प्रकोपो विकृतत्वं प्रवहणादिस्वकार्याकर्तृत्वं च अन्येतु गुदवलीत्रय इति पठंति व्याख्यानयंति च सर्वे दोषा गुदवलीत्रये कुप्यंति । तत्रातियुक्तं प्राणोदानयोस्तत्रासन्निधानात्—अन्ये व्याख्यानयंति । गुदवलीत्रये गुदजानसमुद्भवे सति उत्पत्तौ सर्व एव दोषाः प्रकुप्यंतीति ॥ ३३ ॥ तस्मादर्शांसि दुःखप्रदानि बहुव्याधिकरत्वाज्जठराग्निमांद्याद्युपकरणानि, अतः सर्वशरीरतापीनि प्रायः कृच्छ्रतमानीति प्रायोग्रहणादसाध्यानि । सुश्रुतस्तु—''सर्वाः स्युर्वलयो येषां दुर्नामभिरुपद्रुताः । ताभिस्तु प्रहितो वायुरपानः

बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च ॥
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥ ३५ ॥
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ॥
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥ ३६ ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरां वलिम् ॥
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत् ॥ ३७
शेषत्वादायुषस्तानि चतुष्पादसमन्विते ॥
याप्यन्ते दीप्तकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा ॥ ३८ ॥

मधुकोशव्याख्या ।

उक्तमारुतादय एवेति । बहुव्याधिकराणीति जठराग्निमान्द्याद्युपद्रवकराणि । प्रायः कृच्छ्रतमानीति प्रायोग्रहणादसाध्यानि सुखसाध्यान्यपि ॥ ३३॥३४ ॥ उक्तवाताद्यर्शसां साध्यत्वादिकमाह—बाह्यायां त्वित्यादि । न चिरोत्पतितानीति अनतिक्रान्तसंवत्सराणि । परिसंवत्सराणीति परिगतोऽतिक्रान्तः संवत्सरो यैस्तानि तथा । यानि तु बाह्यवलिजातानि ; द्विदोषोल्बणानि तानि कृच्छ्राणि, त्रिदोषजानि याप्यानीत्युक्तम्; एवं द्वितीयायामेकदोषोल्बणानि कृच्छ्राणि, द्विदोषोल्बणानि याप्यानि, त्रिदोषोल्बणानि असाध्यानि, एवं तृतीयायामेकदोषोल्बणानि याप्यानि, शेषाणि असाध्यानि । यद्याप्यं प्रत्याख्येयं वा तद्दोषवलिभेदेऽप्यसाध्यमेव, यदुक्तं चरकेण—"नासाध्यः साध्यतां याति साध्यो याति त्वसाध्यताम्" इति ॥ ३५–३७ ॥ असाध्यो द्विधा याप्यप्रत्याख्येयभेदात्, तत्र यद्यायुःशेषोऽस्ति चतुष्पादसंपत्तिश्च तदा याप्यत्वमन्यथा प्रत्याख्येयत्वमित्याह—

आतङ्कदर्पणव्याख्या ।

सन्निवर्तते ॥ व्यानेन नापि संगम्य ज्योतिर्गृह्णाति देहिनाम्" इति ॥ ३४ ॥ सुखसाध्यान्याह—बाह्यायामिति । सुखसाध्यान्यपि न चिरोत्पतितानीति अनतिक्रांतसंवत्सराणि ॥ ३५ ॥ कृच्छ्रसाध्यान्याह—परिगतोऽतिक्रांतः संवत्सरो यैस्तानि कृच्छ्रसाध्यानि—याप्यानि इत्यर्थः ॥ ३६ ॥ असाध्यान्याह—सहजानीति । यानि सहजानि तान्यसाध्यानि, तदा—त्रिदोषजान्युत्तरकालजान्यपि यान्यभ्यंतरा वलिं संश्रित्य जातानि एकदोषजातानि तान्यप्यसाध्यानि तथा यानि तु बाह्यवलिजातानि द्विदोषोल्बणानि तानि कृच्छ्राणि त्रिदोषाणि याप्यानीत्युक्तम् । एवं द्वितीयायामेकदोषोल्बणानि कृच्छ्राणि त्रिदोषोल्बणानि असाध्यानि । एवं तृतीयायाम् । एकदोषोल्बणानि याप्यानि शेषाण्यसाध्यानि ॥ ३७ ॥ असाध्यस्य याप्यप्रत्याख्येयभेदेन द्वैविध्यमाह—शेषत्वादिति । यदायुषः शेषोऽस्ति

हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा ॥
शोथो हृत्पार्श्वशूलं च यस्यासाध्योऽर्शसो हि सः ॥ ३९ ॥
हृत्पार्श्वशूलं संमोहश्छर्दिरङ्गस्य रुग्ज्वरः ॥
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥ ४० ॥
तृष्णा रोचकशूलार्तमतिप्रसृतशोणितम् ॥
शोथातिसारसंयुक्तमर्शांसि क्षपयन्ति हि ॥ ४१ ॥
मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि च ॥
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥ ४२ ॥

---

मधुकोशव्याख्या ।

शेषत्वादित्यादि । चतुष्पादसमन्वितेऽर्शोरोगिणीति शेषः । समन्वित इति भावे क्तः । तेन चतुष्पादसमन्वये सतीति चक्रः ॥ ३८ ॥ उपद्रवादसाध्यत्वमाह—हस्ते इत्यादि । हस्तपादादिशोथो मिलितोऽसाध्यलक्षणम् । अत्र हृत्पार्श्वशूलसंमोहादि व्यस्तं समस्तं च ॥ ३९–४१ ॥ अथ मेढ्रजादीनां स्वरूपमाह—मेढ्रादिष्वपीत्यादि । मेढ्रा-

आतङ्कदर्पणव्याख्या ।

तदा चतुष्पादसमन्विते तान्यर्शांसि याप्यंते रोगिणीति शेषः । कीदृशे रोगिणि दीप्तकायाग्नौ, पुनः कीदृशे चतुष्पादसमन्विते, अतोन्यथा विपरीतानि प्रत्याख्येयानि असाध्यानि । पाद-चतुष्टयं यथा—रोगी भिषक् परिचारक औषधं च । यदा रोगी भिषग्वाक्यकृदाढ्यो जितें-द्रियः, वैद्यः शास्त्रे कर्मणि कुशलो निर्लोभः सत्यधर्मश्च, परिचारक आप्तः कुलीनोऽनलसः आतुरच्छंदानुवर्ती च, औषधं नवं रसवीर्यादिसंपन्नं च। तदुक्तम्—"वैद्यो व्याध्युपसृष्टश्च भेषजं परिचारकः । एते पादाश्चिकित्सायाः कर्मसाधनहेतवः" । "तत्त्वाधिगतशास्त्रार्थो दृष्टकर्मा स्वयंकृती । लघुहस्तः शुचिः शूरः सज्जोपस्कृतभेषजः ॥ प्रत्युत्पन्नमतिर्धीमान् व्यवसायी विशारदः । सत्यधर्मपरो यश्च स भिषक्पाद उच्यते ॥ आयुष्मान्सत्त्ववान्साध्यो द्रव्यवानात्मवा-नपि । उच्यते व्याधितः पादौ वैद्यवाक्यकृदास्तिकः ॥ प्रशस्तदेशसम्भूतं प्रशस्तेऽहनि चोद्धृ-तम् । अल्पमात्रं महावीर्यगन्धवर्णरसान्वितम् ॥ दोषघ्नमग्लानिकरमविकारि विपर्य्यये । समीक्ष्य काले दत्तञ्च भेषजम्पाद उच्यते ॥ स्निग्धो जुगुप्सुर्बलवान्युक्तो व्याधितरक्षणे । वैद्यवाक्यकृदश्रान्तः पादः परिचरः स्मृत" इति । एषा चतुष्पादसंपत्तिः । सा चायुषः शेषत्वाद् घटते ॥ ३८ ॥ अथोपद्रवादसाध्यत्वमाह—हस्त इति । यस्य हस्तपादादिषु श्वयथुः स्याद्धृत्पार्श्वशूलं च स अर्शसोऽर्शोरोगी असाध्यः । असाध्यस्य लक्षणमाह—हृदिति । हृत्पार्श्वशूलं च संमोहश्च तथा हृत्पा-र्श्वादिसमस्तं व्यस्तं च । अंगस्य रुक् पीडा गुदमुष्कयोः पाकश्च गुदजानि अर्शांसि नरं घ्नन्ती-त्यर्थः ॥ ३९ ॥ ४० ॥ रक्तार्शोऽसाध्यत्वमाह—अतिप्रस्तुतशोणितं तृष्णारोचकाद्युपद्रवयुक्तं पुरुषम्

**व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ।**
**कीलोपमं स्थिरखरं चर्मकीलं तु तद्विदुः ॥ ४३ ॥**
**वातेन तोदपारुष्यं पित्तादसितवक्त्रता ॥**
**श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥ ४४ ॥**

**इति श्रीमाधवकरविरचिते माधवनिदानेऽर्शोनिदानं समाप्तम् ॥ ५ ॥**

---

मधुकोशव्याख्या ।

दिष्वापि वक्ष्यन्ते यथास्वमित्यन्तेन छेदः । तेन नासार्श इत्यादिव्यपदेशः गण्डूपदास्यरूपाणि किञ्चुलुकमुखसदृशानि ॥ ४२ ॥ चर्मकीलसंप्राप्तिमाह—व्यान इत्यादि । व्यानो वायुः, एतच्च गुदौष्ठदेश एव नान्यत्रेति कार्तिककुण्डादयः ॥ ४३ ॥ तस्यैव वातादिभेदेन लक्षणमाह—वातेनेत्यादि । सवर्णता गात्रसवर्णता ॥ ४४ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामर्शोनिदानं समाप्तम् ॥ ५ ॥

आतङ्कदर्पणव्याख्या ।

अर्शांसि निहंति । हि पादपूरणे ॥ ४१ ॥ स्थानांतराण्यर्शसामाह—मेढ्रादिष्विति—मांसांकुरत्वादेषामर्शसां व्यपदेशः, सर्षपादिषु स्नेहेषु तैलव्यपदेशवत् । मेढ्रः शेफः, आदिशब्दाच्चक्षुर्नासादीनि यथास्वं यथास्थानम् । नाभिजानि तु गंडूपदास्यरूपाणि किंचुलमुखसदृशानि आकृत्येत्यर्थः । तानि पिच्छिलानि मृदूनि च भवन्ति ॥ ४२ ॥ चर्मकीलसंप्राप्तिमाह—व्यान इति । व्यानो वायुः कफं गृहीत्वा संगृह्य त्वचो बहिः कीलसदृशमर्शः कुर्यात् । स्थिरं निश्चलं तं चर्मकीलं प्राहुः त्वचो बहिरिति गुदौष्ठं परित्यज्येत्यर्थः । तत्र तु अर्शसामेव संभवत्वात्, एतच्च गुदोष्ठदेश एव नान्यत्रेति कार्त्तिककुंडादयः ॥ ४३ ॥ तस्यैव वातादिलक्षणमाह—वातेन तोदः पीडाविशेषः, पारुष्यं परूषता, पित्तात् असितं किंचित्कृष्णं रक्तत्वं च, श्लेष्मणा स्निग्धता, ग्रंथिसादृश्यं, सवर्णता—गात्रसमानवर्णता, दोषाः प्रकुपिता मेढ्रमांसशोणिते प्रदूष्य कंडूः कुर्वंति ततः कंडूयतां क्षतम् "तस्मिन् क्षते प्ररोहाः स्युर्मांसजा रुधिरस्रवाः । विनाशयंति शेफं ते घ्नंति पुंस्त्वं च सत्वरम् ॥" शेफो मेढ्रं पुंस्त्वं शुक्रं तथा योनौ च ते दुष्टान् गंडूपदमुखाकृतीन्दुर्गंधान्सुकुमारांश्च पिच्छिलाञ्जनयंति हि मांसांकुरानिति शेषः । चकाराद् योनेरार्तवञ्च घ्नन्ति- "तैरेवोर्ध्वगतैर्दोषैः कर्णजार्शस्तु जायते । बाधिर्यं शूलमत्युग्रं सततं कर्णपूतिता ॥ नेत्रजेषु जलस्रावी वेदना चाप्यदर्शनम् । अश्रूणां जायते वर्त्मोऽवरोधोर्शस्सु संततम् ॥ घ्राणजेषु प्रतिश्यायः कृच्छ्रोच्छ्वासः शिरोव्यथा । क्षवथुः पूतिवक्त्रं च वाक्यं स्यादनुनासिकम् ॥ मुखार्शस्सु च कंठौष्ठतालुमध्यैकजन्मसु । स्याद्गद्गदवाक्यत्वं रसाज्ञानं मुखामयाः" ॥ ४४ ॥ इत्यातंकदर्पणे निदानव्याख्यायामर्शोनिदानम् ॥ ५ ॥

# अथाग्निमान्द्याजीर्णविसूचिकालसक-विलम्बिकानिदानम् ६.

मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ॥
कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः ॥ १ ॥
विषमो वातजान्रोगाँस्तीक्ष्णः पित्तनिमित्तजान् ॥
करोत्यग्निस्तथा मन्दो विकारान्कफसंभवान् ॥ २ ॥
समा समाग्नेरशिता मात्रा सम्यग्विपच्यते ॥
स्वल्पापि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः ॥ ३ ॥

---

मधुकोशव्याख्या ।

अर्शःकार्यत्वादग्निमान्द्यादेस्तान्याह—मन्द इत्यादि । मन्दस्य दुर्जयत्वात्प्रागभिधानम् । कफपित्तानिलाधिक्यादिति यथाक्रमं मन्दादिषु योज्यम् । तत्साम्यादिति तेषां कफादीनां साम्यात् । समः अविकृतः धातुसाम्यहेतुरित्यर्थः । एतस्याविकारस्यापि विकारप्रस्तावेऽभिधानं प्रकृतिज्ञानानन्तरीयं विकृतिज्ञानमिति बोधनार्थम् । जाठर इति धात्वग्निभूताग्निव्यवच्छेदार्थम् ॥ १ ॥ प्रतिलोमतन्त्रयुक्त्या तेषां रूपमाह—विषम इत्यादि । वातजान् रोगानिति वातनानात्मजानामशीतेरन्यतमान्सामान्यजांश्च ज्वरातीसारादीन् । एवं पित्तनानात्मजानामोषचोषादीनां चत्वारिंशतोऽन्यतमान् । एवं कफनानात्मजानां विंशतेरालस्यादीनामन्यतमान् । एते च विकाराश्चरके महारोगाध्याय एव द्रष्टव्याः ॥ समेत्यादि । समा उचिता, मात्रा आहारस्य, सम्यग् यस्य

आतङ्कदर्पणव्याख्या ।

अर्शोभ्योऽग्निमांद्यस्य संभवस्ततोऽर्शोनंतरमग्निमांद्यादिजान्रोगानाह—मंद इति । अनलो वह्निश्चतुर्विधो भवति । मंदः, तीक्ष्णो, विषमः, समश्चेति । मंदस्य दुर्जरत्वात्प्राक् पठनम् । कफपित्तानिलाधिक्यादिति यथाक्रमं मंदादिषु योज्यं तत्साम्यादिति । तेषां कफादीनां साम्यात्समः अविकृतः धातुसांम्यहेतुरित्यर्थः ॥ जाठर इति । धात्वग्निव्यवच्छेदार्थम् ॥ १ ॥ तेषां स्वरूपमाह—विषम इति । वातजान् रोगानिति । वातजानामसीतेरन्यतमान्सामान्यजांश्च ज्वरातीसारादीन् तीक्ष्णोग्निरेवं पित्तजानिति । पित्तजानाम् उपचोषादीनां चत्वारिंशतोऽन्यतमान् । एवं मंदोग्निः कफजानां विंशतेरालस्यादीनामन्यतमान्, एते च रोगाश्चरकमहारोगाध्याये द्रष्टव्याः ॥ २ ॥ तेषां लक्षणमाह—समेति । समा उचिता मात्रा अशिता उपयुक्ता सती सम्यग्यस्य विपच्यते स समाग्निः । मंदाग्नेः मंदवह्नेः पुरुषस्य स्वल्पापि मात्रा असिता सम्यङ्नैव विपच्यते । विषमाग्नेस्तु पुरुषस्य कदाचित्सम्यक् पाकं गच्छति कदाचिन्न गच्छति, वायो-

कदाचित्पच्यते सम्यक्कदाचिच्च न पच्यते ॥
मात्रातिमात्राप्यशिता सुखं यस्य विपच्यते ॥
तीक्ष्णाग्निरिति तं विद्यात्समाग्निः श्रेष्ठ उच्यते ॥ ४ ॥
आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः ॥
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ ५ ॥

मधुकोशव्याख्या ।

विपच्यते स समाग्निः । तीक्ष्णाग्निरिति तं विद्यादिति छेदः । मात्रातिमात्रेत्युपलक्षणं, तेनाजीर्णे गुरुभोजनादिकमपि लक्षणीयम्, यदुक्तमन्यत्र—"अतिमात्रमजीर्णेऽपि गुरु चान्नमथाश्नतः । दिवापि स्वपतो यस्य पच्यते सोऽग्निरुत्तमः" इति । तीक्ष्णग्रहणेन भस्मकस्यावरोधः, अत्यन्ततीक्ष्णाग्निरेव हि भस्मक इत्युच्यते । यदुक्तं चरके—"नरे क्षीणकफे पित्तं कुपितं मारुतानुगम् । स्वोष्मणा पाचकस्थाने बलमग्नेः प्रयच्छति ॥ तदा लब्धवलो देहं विरुजेत्सानिलोऽनलः । अभिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः ॥ पक्त्वा चान्नं ततो धातूञ्छोणितादीन्पचत्यापि । ततो दौर्बल्यमातङ्कान्मृत्युं चोपनयेन्नरम् ॥ भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति । तृट्कासदाहमूर्च्छाः स्युर्व्याधयोऽत्यग्निसंभवाः" इति ॥ २—४ ॥ अग्निमान्द्याजीर्णयोः परस्परकारणत्वादजीर्णान्याह—आममित्यादि । त्रिभिरिति कफादिभिरेकैकशो यथासंख्येन । रसशेषत इति रसाय शेषो रसशेषः, प्रकृतिविकृतिभावे चतुर्थी, यथा—यूपाय दारु, अथ वा रसशब्देन रसवानाहारोऽभिप्रेतो लक्षणया, तेन रसशब्देन रसवानाहारोऽभिधीयते, तस्य शेषोऽपरिणतिलक्षणो रसशेष इति जेज्जटः । ननु, यद्येवं तदा आमविदग्धविष्टब्धानामन्यतमरूपस्यावश्यम्भावित्वात् न तेभ्यो भेदः । किंच तल्लिङ्गैरम्लो-

आतङ्कदर्पणव्याख्या ।

विषमगतित्वात् ॥ क्षीणाग्निरिति तं विद्यादिति । तीक्ष्णसमाग्न्योरिति भेदः । मात्रातिमात्रेत्युपलक्षणं तेनातिमात्रमजीर्णभोजनादिकमपि सुखं यस्य विपाकं गच्छति तं तीक्ष्णाग्निरिति जानीयात् । तदुक्तं तंत्रांतरे—"अतिमात्रमजीर्णेपि गुरु चान्नं यथाश्नतः । दिवापि स्वपतो यस्य पच्यते सोऽग्निरुत्तमः" ॥ तीक्ष्णग्रहणेन भस्मकस्यावरोधः । अत्यंततीक्ष्णाग्निरेव हि भस्मक उच्यते । यदुक्तं चरके—"नरे क्षीणकफे पित्तं कुपितं मारुतानुगम् । सोष्मणः पाचकस्थाने बलमग्नेः प्रयच्छति ॥ तदा लब्धबलो देहं विरूक्षस्सानिलोऽनलः । अभिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः ॥ पक्वान्नं च ततो धातूञ्छोणितादीन्पचत्यपि । ततो दौर्बल्यमातंकान्मृत्युं चोपनयेन्नरम् ॥ भुक्तेऽन्ने लभते शांतिं जीर्णमात्रे प्रताम्यति । तृड्दाहकासमूर्छाः स्युर्व्याधयोऽत्यग्निसंभवाः" इति । तेषु मध्ये समाग्निरुत्तमः ॥ ३ ॥ ४ ॥ अग्निमांद्याजीर्णयोः परस्परकारणत्वादजीर्णान्याह—आममिति । आहारस्यैव अपक्व उद्गरितो रसो रसशेषस्ततः ।

**अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च॥**
**वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम्॥ ६॥**

मधुकोशव्याख्या।

द्गारादिभिर्भवितव्यं, तथा च सति उद्गारशुद्धेः रसशेषाजीर्णलक्षणस्यानुदयप्रसङ्गः। उक्तं हि सुश्रुते—"उद्गारशुद्धावपि भक्तकांक्षा न जायते हृद्गुरुता च यस्य। रसावशेषेण तु सप्रसेकं चतुर्थमेतत्प्रवदन्त्यजीर्णम्" इति। आरोग्यमञ्जर्यां नागार्जुनोऽप्याह—"उद्गारेऽपि विशुद्धतामुपगते कांक्षा न भक्तादिषु स्निग्धत्वं वदनस्य सन्धिषु रुजा कृत्वा शिरोगौरवम्। मन्दाजीर्णरसे तु लक्षणमिदं तत्रातिवृद्धे पुनर्हृल्लासज्वरमूर्च्छनादि च भवेत्सर्वामयक्षोभणम्" इति। नैवम्, अवश्यंभाविविदग्धादिरूपस्याप्याहारशेषस्यात्यल्पत्वेन न तदनुरञ्जितोद्गारोदयप्रसङ्गः, अकालबुभुक्षायामिव। यदाह सुश्रुतः—"स्वल्पं यदा दोषविबद्धमामं लीनं न तेजःपथमावृणोति। भवत्यजीर्णेऽपि तदा बुभुक्षा सा मन्दबुद्धिं विषवन्निहन्ति" इति। तन्त्रान्तरेऽप्याहारापाकजं रसशेषलक्षणमुक्तम्—"आमं विदग्धं विष्टब्धं रसशेषमथापि च। चतुर्विधमजीर्णं च आहारापरिपाकतः" इति। गदाधरस्त्वाह—रसे शेषो रसशेषः, आहारजनिते रसे शेष आहारावयवोऽनुप्रविष्टोऽलक्ष्यमाणः क्षीरे नीरमिव रसशेषः। ननु, आमाजीर्णादिभ्यो रसशेषस्य को भेदः? उच्यते, आमादित्रयमन्नजं, रसशेषस्त्वाहाररसजः, वातिकादिव्यपदेशश्चात्र न कृतः, अल्पत्वाद्वातादिलिङ्गानां; हेतुलक्षणचिकित्साभेदाच्चास्य भेद इति। अजीर्णमिति तद्विरोधे नञ्, जीर्णं पक्वं तद्विरुद्धमजीर्णम्; यथा—दर्शितं सर्वमजीर्णं त्रिदोषजम्, एकदोषव्यपदेशस्तु उत्कटैकदोषलिङ्गत्वेनोक्त इति व्याख्यानयन्ति; यतस्त्रैदोषिकमेवाजीर्णकारणमुक्तम्—"अत्यम्बुपानात्" इत्यादि। अजीर्णादपि दोषत्रयकोपो भवति। यदुक्तं सुश्रुते—"अजीर्णात्पवनादीनां विभ्रमो बलवान्भवेत्" इति। अजीर्णं पञ्चमं केचिदित्यादि। निर्दोषमाध्मानादिदुष्टेरकारकम्। दिनपाकि चेति अहोरात्रेणाहारः पच्यते इत्युत्सर्गः, यत्र तु मात्राकालसात्म्यादिदोषादपरदिने पच्यते तद्दिनपाकि। कालव्यतिक्रमेण पच्यमानमपि आध्मानादिकं न करोतीति पूर्वेभ्यो भेदः। एतदभिधानस्य तु प्रयोजनं पाककालप्रतीक्षणं, नैशाजीर्णे भोजननिषेधात्। प्राकृतं प्रतिवासरमिति प्राकृतमवैकारिकं, प्रतिवासरं प्रति-

आतङ्कदर्पणव्याख्या।

नन्वामाजीर्णादिभ्यो रसशेषस्य को भेदः। उच्यते—आमादित्रयमन्नजं, रसशेषस्त्वाहाररसजः, वातिकादिव्यपदेशश्चात्र न कृतः॥ ५॥ अल्पत्वाद्वातादिलिंगानां, मतांतरमाह—अजीर्णं पंचममिति। निर्दोषमाध्मानादिदुष्टेरकारकं दिनपाकि चेति अहोरात्रेणाहारः पच्यते इति सामान्यम्।

**अत्यम्बुपानाद्विषमाशनाच्च सन्धारणात्स्वप्नविपर्ययाच्च ॥**
**कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य ७**
**ईर्ष्याभयक्रोधपरिप्लुतेन लुब्धेन रुग्दैन्यनिपीडितेन ॥**
**प्रद्वेषयुक्तेन च सेव्यमानमन्नं न सम्यक्परिपाकमेति[1] ॥ ८ ॥**

मधुकोशव्याख्या ।

दिने क्रियमाणम् । अयमभिसन्धिः—अद्यैव भुक्तमन्नं किं जीर्णमजीर्णं वा ? न तावत् जीर्णं, क्षुत्पिपासामलोत्सर्गादेर्जीर्णलक्षणस्यानुदयात्; तस्मादजीर्णं तच्चाध्मानादिकं न करोतीति पूर्वेभ्यो भिन्नम् । तस्य चाभिधानप्रयोजनं पाकार्थं वामपार्श्वशयनाद्याचारसेवा । उक्तं हि सुश्रुते—"भुक्त्वा पादशतं गत्वा वामपार्श्वेन संविशेत् । शब्दरूपरसस्पर्शगन्धांश्च मनसः प्रियान् । भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति" इति । न चात्राहारस्य निषेधः तस्य शास्त्रेण विहितत्वात् । चरके तु—"तस्य लिङ्गमजीर्णस्य" इत्यादिना "घोरमन्नं विषं च" इत्यन्तेन अन्नविषाख्यमजीर्णं पठितम्; तच्च पित्तादिसंसृष्टरसशेषाजीर्णमेवेति व्याचक्षते । तेन रसशेष एव तस्यान्तर्भाव इति न पृथक् पठितः ॥ ५।।६॥ अजीर्णकारणमाह—अत्यम्बुपानादित्यादि । सन्धारणादिति वेगानाम् । स्वप्नविपर्ययात् दिवास्वप्नादेः । लघु चापीत्यपिशब्देन स्निग्धो-

आतंकदर्पणव्याख्या ।

यत्र तु मात्राकालसात्म्यादिदोषात् अपरस्मिन् दिने पच्यते तद्दिनपाकि कालव्यतिक्रमेणाहारः पच्यमानोऽपि आध्मानादिकं न करोतीति पूर्वेभ्यो भेदः । एतदभिधानस्य तु प्रयोजनं पाककालप्रतीक्षणं निशाजीर्णे भोजननिषेधात् । अन्ये . षष्टमाहुः—प्राकृतमवैकारिकं प्रतिवासरं प्रतिदिनं क्रियमाणम् । अयमभिसंधिः—अद्यैव भुक्तमन्नं किं जीर्णं वा न तावज्जीर्णं क्षुत्पिपासामलोत्सर्गादेर्जीर्णलक्षणस्यानुत्पादनात् । तस्मादजीर्णम् । तच्चाध्मानादिकं करोति । परं प्रकृतत्वादविकारित्वमस्य इति पूर्वेभ्यो भिन्नम् । तस्य चाभिधानप्रयोजनं पाकार्थं वामपार्श्वशयनाद्याचारसेवा । उक्तं हि सुश्रुते—"भुक्त्वा पादशतं गत्वा वामपार्श्वेन संविशेत् । शब्दरूपरसस्पर्शगन्धादीन् मनसः प्रियान् । भुक्तवानुपसेवेत तेनान्नं साधु तिष्ठति" इति । न चात्राहारस्य निषेधः । तस्य शास्त्रे विहितत्वात् ॥ ६ ॥ अजीर्णस्य कारणमाह—विषमाशनं . "बहु स्तोकमकाले वा तज्ज्ञेयं विषमाशनम्" इति । क्षुत्तृड्वातपुरीषादिवेगानां संधारणम् । रात्रिजागरणं, दिवास्वापः, स्वप्नविपर्ययः ॥ ७ ॥ कायिकं कारणमभिधाय मानसं रजस्तमोदोषकारणमाह—ईर्ष्येति । ईर्ष्या परसंपत्तेरसहिष्णुता, भयं परस्मात्त्रासः, क्रोधः पराभिद्रोहलक्षणः, तैः परिप्लुतेन ईर्ष्यादिभिः परिभूतेन,

१ परिणाममेतीति पाठान्तरम् ।

मात्रयाप्यभ्यवहृतं पथ्यं चान्नं न जीर्यति ॥
चिन्ताशोकभयक्रोधदुःखशय्याप्रजागरैः ॥ ९ ॥
तत्रामे गुरुतोत्क्लेदः शोथो गण्डाक्षिकूटगः ॥
उद्गारश्च यथाभुक्तमविदग्धः प्रवर्तते ॥ १० ॥
विदग्धे भ्रमतृण्मूर्च्छाः पित्ताच्च विविधा रुजः ॥
उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते ॥ ११ ॥
विष्टब्धे[1] शूलमाध्मानं विविधा वातवेदनाः ॥
मलवाताप्रवृत्तिश्च स्तम्भो मोहाङ्गपीडनम् ॥ १२ ॥

---

मधुकोशव्याख्या ।

ष्णादिगुणयुक्तमपि बोध्यम्। केचित् "ईर्ष्याभयक्रोधपरिप्लुतेन" इत्यादिश्लोकं पठन्ति; स च मानसदोषाजीर्णविषयो बोद्धव्य इति ॥ ७॥८॥९ ॥ उद्दिष्टानामामाजीर्णादीनां लक्षणमाह—तत्रेत्यादि। तत्रेति तेषु मध्ये। गण्डः कपोलः, अक्षिकूटः चक्षुर्गोलकः, तद्गतः शोथो भवति प्रभावात्। उद्गारश्च यथाभुक्तमिति मधुरादिरूपः। अविदग्धोऽनम्लः, द्वितीयपाके हि आहारस्याम्लता दर्शिता। विविधा वातवेदना तोदभेदादिरूपा। अङ्गपीडनं सामवातवेदनादि। पित्ताच्च विविधा रुज इति ओष-

आतङ्कदर्पणव्याख्या ।

लुब्धेन लोभसहितेन, रुग्दैन्यनिपीडितेन शोकदैन्यव्याप्तेन, दैन्यं निर्गतित्वं, प्रद्वेषो मात्सर्यमिति ॥ ८ ॥ ९ ॥ उद्दिष्टानामजीर्णानां लक्षणमाह—तत्र तेषु मध्ये आमे अजीर्णे गुरुतादिचिह्नं भवति। गुरुता—उदरांगयोर्गौरवम्। उत्क्लेद उपस्थितवमनत्वमिव। गंडः—कपोलः, अक्षिकूटश्च-क्षुर्गोलकः, तद्गतः शोथो भवति। तत्प्रभावाद् उद्गारश्च यथाभुक्तमिति मधुरादिरूपः। अविदग्धोऽनम्लः। एतस्य लक्षणं सुश्रुते उक्तम्—"माधुर्यमन्नं गतमामसंज्ञम्" इति। तमेव कफदूषितत्वादन्नस्वभावकथनमात्रम्। कफकार्याणि गौरवकंडूप्रभृतीनि द्रष्टव्यानि। विदग्धलक्षणमाह—विदग्धं—किंचिद्विपक्वम्, अम्लभावगतम्। उक्तं च सुश्रुते—"विदग्धसंज्ञं गतमम्लभावम्" इति। धूमोद्गारोम्लोद्गारश्च। विष्टब्धलक्षणमाह—विष्टब्धमानद्धवातं विष्टब्धं कथ्यते। उक्तं च सुश्रुते "किञ्चिद्विपक्वं भृशतोदशूलं विष्टब्धमानद्धविरुद्धवातम्" इति। तत्र तेषु मध्ये विष्टब्धे जीर्णे विविध वातवेदनास्तोदभेदादिरूपाः। विदग्धे विलंबिका न प्राप्यते तां कफवाताभ्यां पठिष्यति विदग्धं पित्तात्तस्मात्त्रिविधो जीर्णो यथासंभवं विसूच्यादीनामुत्पादक इति। उक्तं चरके "अजीर्णात्पवना-

---

[1] केवलातङ्कदर्पणोपेतपुस्तके विष्टब्धे शूलमित्येतदनन्तरमस्य पाठो विलोक्यते।

रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे ॥
मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः ॥ १३ ॥
उपद्रवा भवन्त्येते मरणं वाप्यजीर्णतः ॥
अनात्मवन्तः पशुवद्भुञ्जते येऽप्रमाणतः ॥
रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि ॥ १४ ॥
अजीर्णमामं विष्टब्धं विदग्धं च यदीरितम् ॥
विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥ १५ ॥

---

मधुकोशव्याख्या ।

चोषादयः । सधूमाम्ल इति धूमोद्गारोऽम्लोद्गारश्च ॥ १०–१२ ॥ उपद्रवनाह–मूर्च्छे-त्यादि । अतिप्रवृद्धाजीर्णे तु मरणमपि ॥ १३ ॥ उक्ताजीर्णकारणेभ्योऽतिमात्रभो-जनस्य विशेषकारणत्वमाह–अनात्मवन्त इत्यादि । अनात्मवन्तो दुष्टमनोयुक्ताः, लोभित्वेन तदात्वसुखाकांक्षिण इति । अत एवोक्तं पशुवदिति । रोगानीकस्य रोग-समूहस्य विसूच्यादेर्मूलं कारणम् ॥ १४ ॥ अजीर्णसंभवत्वाद्विसूच्यादीनामजीर्णा-न्तरं विसूच्यादीन्याह–अजीर्णमित्यादि । "आमाविष्टब्धाविदग्धेषु विसूच्यलसक-विलम्बिका यथासंख्यं भवन्ति" इति कार्तिककुण्डः । तन्न--इति वकुलकरः । यथासंख्ये हि सति विदग्धं विलम्बिकां प्राप्नोति. तां च कफवाताभ्यां पठिष्यति, तस्मात् त्रिविधाजीर्णाद्यथासंभवं विसूच्यादीनामुत्पाद इति युक्तम् । उक्तं हि–"अजी-र्णात्पवनादीनां विभ्रमो बलवान् भवेत् " इति ॥ १५ ॥ विसूच्या निरुक्तिमाह–

आतंकदर्पणव्याख्या ।

दीनां विभ्रमो बलवान्भवेत्" इति ॥ १० ॥ ११ ॥ १२ ॥ रसशेषेन्नविद्वषो हृदयाशुद्धि-गौरवम् । ग्लानिर्गौरवविष्टंभो भ्रममारुतमूढता । विबंधश्चाप्रवृत्तिश्च सामान्याजीर्णलक्षणम् ॥ अजीर्णस्य उपद्रवानाह–मूर्छेति । मूर्छा चेतनाच्युतिः, प्रलापोऽसंबद्धभाषणम्, वमथुः छर्दिः, सदनमंगग्लानिः । अन्ये तु स्फुटनमिवांगानामिति वदंति ॥ १३ ॥ उक्ताजीर्णकारणेभ्योऽति-मात्रभोजनस्य विशेषकारणत्वमाह–अनात्मवंत इति । ये नराः अप्रमाणतः पशुवद्भुञ्जते । किंभूताः अनात्मवंतो दुष्टमनोयुक्ताः लोलुपत्वेन तदात्वसुखकांक्षिण इत्यर्थः । अत एवोक्तं पशु-वदिति । रोगानीकस्य रोगसमूहस्य विसूच्यादेर्मूलं कारणमजीर्णं प्राप्नुवंति ॥ १४ ॥ अजीर्ण-संभवाद्विसूच्यादय इत्यजीर्णानंतरं विसूच्यादीनाह–अजीर्णमिति । यत् आमादिभेदेनाजीर्णमुक्तं तस्मात्त्रिविधाजीर्णाद्विसूच्यलसकौ स्यातां तथा विलंबिकापि भवेत् ॥ १५ ॥ यदत्र चतुर्थ-

**सूचीभिरिव गात्राणि तुदन्सन्तिष्ठतेऽनिलः ॥**
**यत्राजीर्णेन सा वैद्यैर्विषूचीति निगद्यते ॥ १६ ॥**
**न तां परिमिताहारा लभन्ते विदितागमाः ॥**
**मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥ १७ ॥**
**मूर्च्छातिसारो वमथुः पिपासा शूलो भ्रमोद्वेष्टनजृम्भदाहाः ॥**
**वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्यां शिरसश्च भेदः ॥१८॥**

---

मधुकोशव्याख्या ।

सूचीभिरित्यादि । बाहुल्याद्वायुः सूचीभिरिव तुदन्—इति विसूचीनिरुक्तिः । पाण्डुरोगवत्सूचीभिरिव तोदनं विहाय अन्येऽपि वेदनाभेदा विविधा भवन्त्येव । यदुक्तं तन्त्रान्तरे—"विविधैर्वेदनाभेदैर्वाय्वादेर्भृशकोपतः । सूचीभिरिव गात्राणि भिनत्तीति विसूचिका" इति । विदितागमा विदितायुर्वेदाः । मूढाः तज्ज्ञानानभिज्ञाः । अजितात्मानोऽजितेन्द्रियाः । अशनलोलुपाः पशुवदप्रमाणभोजिनः ॥ १६ ॥ १७ ॥ विसूचीलक्षणमाह—मूर्च्छेत्यादि । वमथुर्वान्तिः । शिरसश्च भेदः शिरःशूलम् । अत्र च वमनातीसारौ मिलितौ लक्षणमिति सौश्रुताः, सुश्रुते तु अधोगाया आमा-

आतङ्कदर्पणव्याख्या ।

स्याजीर्णस्य रसशेषस्योपादानं न कृतं तदपरिणाममात्रत्वेन तस्य विसूच्याद्यारंभकत्वस्वभावादे-कोपमतत्वेनोक्तत्वाच्च । आमविष्टब्धविदग्धेषु विसूच्यालसकविलंबिकाख्या यथासंख्यं भवन्तीति कार्त्तिककुंडः । तन्न, यथासंख्ये विदग्धाजीर्णस्य विलंबिकाजनकत्वासम्भवात् तस्याः कफवात-समुद्भूतत्वेन पठ्यमानत्वात् विदग्धावस्य पित्तजन्यत्वात्, तस्मात् "त्रिविधमप्यजीर्णं यथासम्भवं विसूच्यादीनामुत्पादकम्" इति वकुलः । विसूच्या निरुक्तिमाह—यस्यां विसूचिकायामनिलः सूचीभिरिव गात्राणि तुदन् सन् तिष्ठते वैद्यैरादिवैद्यैरजीर्णात्सा विसूचीति कथ्यते ॥ १६ ॥ इति प्रतिपादनार्थमाह—नेति । एवंविधाः पुरुषास्तां विसूचिकां न प्राप्नुवंति । विदितागमा विदितायुर्वेदाः । मूढाः तज्ज्ञानानभिज्ञाः पुरुषास्तां भजन्ते । मुह्यन्तीति मूढाः भक्ष्याभक्ष्यानभिज्ञाः, अजितात्मानोऽजितेंद्रियाः, अशनलोलुपाः, पशुवदप्रमाणभोजिनः, '[illegible]षाशयाः' इत्यन्ये पठंति । कलुषो दुष्ट आमाशयो येषां ते कलुषाशयाः । आमाशयदुष्टिश्च [illegible] संपर्का[illegible], [illegible]दिकोपाच्च ॥ १७ ॥ विसूचीलक्षणमाह—मूर्च्छेति । वमथुर्वान्तिः, उद्वेष्टनं मोट[illegible]दीनां [illegible]नीति लोके तस्यां विसूच्यां

---

१ 'लभन्ते' इत्यत्र 'भजन्ते' इति पाठमयमुरीकरोति ।

कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत्परिकूजति ॥
निरुद्धो मारुतश्चैव कुक्षावुपरि धावति ॥ १९ ॥
वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि ॥
तस्यालसकमाचष्टे तृष्णोद्गारौ च यस्य तु ॥ २० ॥
दुष्टं तु भुक्तं कफमारुताभ्यां प्रवर्तते नोर्ध्वमधश्च यस्य ॥
विलम्बिकां तां भृशदुश्चिकित्स्यामाचक्षते शास्त्रविदः पुराणाः२१

---

मधुकोशव्याख्या ।

तीसारेण ग्रहणम्, ऊर्ध्वगायाश्छर्द्या च । चरके तु पठ्यते-"ऊर्ध्वं चाधश्च प्रवृत्तामदोषां यथोक्तरूपां विसूचीं विद्यात्" इति । अत्रोर्ध्वगा विसूची भवति, तथाऽधोगाऽपि । चरके आमातीसारस्य अपाठितत्वात्, चकाराडुभयगाऽपि चेति व्याचक्षते । ऊर्ध्वगायाश्च अपक्वाहारवमनेन त्रिदोषजच्छर्दिभ्यो भेद इति मन्तव्यम् ॥ १८ ॥ अलसकमाह-कुक्षिरित्यादि । आनह्यते आध्मायते मलविष्टम्भस्य वक्ष्यमाणत्वात् । प्रताम्येत् मुह्यति पुरुषः परिकूजति आर्तनादं करोति । निरुद्ध इति अजीर्णेनाधःप्रतिरुद्धगतिः कुक्षौ तेनोपरि धावति ऊर्ध्वं हृदयकण्ठादिकं गच्छति । अलसक इति दोषास्थिरत्वनिमित्ता संज्ञा । यदुक्तं तन्त्रान्तरे-"प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते । आमाशयेऽलसीभूतस्तेन चालसकः स्मृतः" इति ॥ ॥ १९ ॥ २० ॥ विलम्बिकामाह-दुष्टमित्यादि । भुक्तमन्नं कफमारुताभ्यां दुष्ट-

आतङ्कदर्पणव्याख्या ।

शिरसश्च भेदः शिरःशूलम् । अत्र वमनातीसारौ मिलितौ लक्षणमिति सुश्रुतः । सा च द्विधा अधोगोर्द्धगा च । आमातिसारेणाधोगा छर्द्योर्द्धगा इति सौश्रुताः । चरकेतु "ऊर्ध्वं चाधश्च प्रवृत्तामदोषां यथोक्तरूपां विद्यात्" इत्युभयगा । उर्ध्वगायाश्चापक्वाहारवमनेन दोषजच्छर्दिभ्यो भेद इति मंतव्यम् ॥ १८॥ अलसकलिंगमाह-यस्य कुक्षिरुदरम् आनह्यते आध्मायते मलविष्टम्भस्य वक्ष्यमाणवातवर्चोनिरोधकत्वात् । प्रताम्येत् प्रमुह्यति पुरुषः परिकूजति आर्त्तनादं करोति, मारुतो निरुद्ध इति अजीर्णेनाधःप्रतिबद्धगतिः कुक्षौ तेनोपरि धावति ऊर्ध्वं हृदयकंठादिकं गच्छति तस्य पुरुषस्यालसकनामानं रोगमाचष्टे कथयति ॥ १९ ॥ अलसक इति दोषस्थिरत्वनिमित्तसंज्ञा । यदुक्तं तंत्रांतरे "प्रयाति नोर्द्धं नाधस्तान्न चाहारो विपच्यते । आमाशयेऽलसीभूतस्तेन सोलकसः स्मृतः" इति ॥ २० ॥ विलंबिकालक्षणमाह-यस्य पुरुषस्य भुक्तमन्नं कफमारुताभ्यां दुष्टं सत् ऊर्ध्वमधश्च न प्रवर्त्तते, पुराणाः शास्त्रविदस्तां विलंबिकामाहुः भृशं दुश्चिकि-

**यत्रस्थमामं विरुजेत्तमेव देशं विशेषेण विकारजातैः ॥**
**दोषेण येनावततं शरीरं तल्लक्षणैरामसमुद्भवैश्च ॥ २२ ॥**

मधुकोशव्याख्या।

मिति संवन्धः। भृशं दुश्चिकित्स्यामत्यर्थं दुश्चिकित्स्यां, प्रत्याख्येयामनाचरणीयामित्यर्थः। ननु, अलसकविलम्बिकयोरुभयोरपि वातकफप्रबलयोरूर्ध्वाधोऽप्रवर्तनशीलयोस्तुल्यत्वात् को भेदः ? उच्यते, अलसके तीव्राः शूलादयो भवन्ति, यदुक्तं– "पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमन्तरा। अलसं क्षोभितं दोषैः शल्यत्वेनैव संस्थितम्॥ शूलादीन्कुरुते तीव्रांश्छर्द्यतीसारवर्जितान्" इति ॥ २१ ॥ अजीर्णजन्यान्विसूच्यादीनभिधायाजीर्णजन्यस्यामस्य कार्यान्तरमाह–यत्रस्थमित्यादि। आमं कर्तृ, यत्रस्थं तमेव देशं विशेषेण रुजेत्; एतेनान्यदेशेऽपि कांचिद्रुजां करोतीति बोधयति। यत्रेति सर्वनामशब्देन कुपितवातादीनामिवानियतमेव स्थानमामस्येति दर्शितम्। कै रुजेदित्याह–विकारजातैर्विकारसमूहैः। किंभूतैरित्याह–दोषेण येन स्वकारणोपचितेन वातादिनावततं व्याप्तं शरीरं, तल्लक्षणैः तल्लिङ्गैस्तोददाहगौरवादिभिः–

आतङ्कदर्पणव्याख्या।

स्यामत्यर्थं दुश्चिकित्स्यां प्रत्याख्यायोपचरणीयामित्यर्थः। दुष्टमित्यत्र लीनमिति; केचित्पठंति। अयमेव विलंबिका तंत्रांतरे दंडकालसक इति नाम्ना पठ्यते। तथा च "क्षुद्रश्चलसके दोषाच्छर्द्यतीसारवर्जिताः। कारकास्तीव्रशूलादेः श्रोतसां संनिरोधकाः॥ निजयोगात्तनुस्रावं दंडवत्स्तम्भयंति च। स दंडालसकः शीघ्रं नरदेहविनाशकृत्॥" नन्वलसकविलंबिकयोरुभयोरपि वातकफप्रबलयोरूर्द्ध्वाधोप्रवर्तनशीलयोस्तुल्यत्वात्को भेदः। उच्यते–अलसके तीव्राः शूलादयो भवंति। यदुक्तम् "पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमंतरा। अलसं क्षोभितं दोषैः शल्यत्वेनेव संस्थितम्। शूलादीन्कुरुते तीव्रांश्छर्द्यतीसारवर्जितान्" इति॥ २१॥ अजीर्णजन्यानि विसूच्यादीन्यभिधाय अजीर्णजन्यस्यामस्य कार्य्यांतरमाह–यत्रेति। आममसम्यक्परिणतं, तथा च–"अविपक्वमसंयुक्तं दुर्गंधं बहु पिच्छिलम्। सादनं सर्वगात्राणामाममित्यभिधीयते॥" यत् आमं कर्तृ यत्रस्थं वायुप्रेरणाकर्षणस्यावैगुण्याद्यत्र व्यवस्थितं तमेव देशं विशेषेण रुजेत् पीडयेत् एतेनान्यदेशेपि किंचिद्रुजं करोतीति बोधयति। एतावता धातुभूताग्नीनां मांद्यत्वेनामसंभवत्वात्। शोषव्रणविद्रध्यादिरोगाणां तज्जन्यत्वमुक्तं भवति। यदुक्तम् "धातूनां सप्त सप्तानां भूतानां पंच पावकाः। त्रयोदश भवंत्येवं सह जाठरवह्निना॥" इति। यत्र धातुप्रदेशे वह्निर्मंदो भवति तत्रैवामसंभवात्पिडिकाद्युत्पत्तिः स्यात्। यत्रेति ग्रहणेन कुपित–

यः श्यावदन्तौष्ठनखोऽल्पसंज्ञो वम्यर्दितोऽभ्यन्तरयातनेत्रः ॥
क्षामस्वरः सर्वविमुक्तसन्धिर्यायान्नरः सोऽपुनरागमाय ॥ २३ ॥
उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः ॥
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥ २४ ॥
निद्रानाशोऽरतिः कम्पो मूत्राघातो विसंज्ञता ॥
अमी उपद्रवा घोरा विसूच्यां पंच दारुणाः ॥ २५ ॥

मधुकोशव्याख्या ।

न केवलं तैः आमसमुद्भवैः विकारजातैरपाकालसकादिभिरपि । अनेनैव श्लोकेन तन्त्रान्तरोक्तमामवाताख्यं रोगं गृहीतवान्,सुश्रुतलक्षणस्य समानत्वादित्याहुः ॥२२॥ विसूच्यलसकयोरसाध्यलक्षणमाह---यः श्यावेत्यादि । विलम्बिकायाः स्वरूपेणैवा-साध्यत्वमिति जेज्जटः । अल्पसंज्ञो मोहयुक्तः । अभ्यन्तरयातनेत्रः कोटराक्षः । सर्व-विमुक्तसन्धिः शिथिलीभूतसर्वपर्वास्थिसन्धिः । अपुनरागमाय मरणाय ॥ २३ ॥ अजीर्णप्रतियोगितया जीर्णाहारलक्षणमाह–उद्गारेत्यादि । उद्गारशुद्धिर्धूमाम्लादिरहि-तत्वम् । उत्साहः शरीरमनसोर्बलम् । उत्सर्गो मलमूत्रप्रवृत्तिः, वेगसहित उत्सर्गो वेगोत्सर्गः । यथोचितः उपयुक्ताहारानुरूपः । लघुता देहस्य, विशेषेण कोष्ठस्येति ॥

आतङ्कदर्पणव्याख्या ।

वातादीनामिव नियतमेव स्थानमामस्येत्युक्तं भवति । किंभूतैर्विरुजेदित्याह–दोषेण येन स्वकारणात् कुपितेन वातादिना अवततं व्याप्तं शरीरं तल्लक्षणैरेवास्य लिंगैस्तोददाहगौरवादिभिः न केवलं तैः आमसमुद्भवैर्विकारजातैरामवातादिभिः अनेन श्लोकेन तंत्रांतरोक्तमामवातरोगं संगृहीतवान् सुश्रुतोक्तलक्षणस्य समानत्वादित्याहुः ॥ २२ ॥ विसूच्यलसकयोरसाध्यलक्षणमाह–य इति । विलंबिकायास्तु स्वरूपेणैवासाध्यत्वमिति जेज्जटः। यः पुरुषः श्यावादिलक्षणयुक्तः स्यात्, श्यावशब्दो दंतादिभिः प्रत्येकं संबध्यते । अल्पसंज्ञो मोहयुक्तः, अभ्यंतरयातनेत्रः–कोट-राक्षः–अंतःप्रविष्टनेत्रः, क्षामस्वरः क्षीणध्वनिः, सर्वविमुक्तसंधिः स नरः अपुनरागमाय–अपुन-रावृत्तये–मरणाय यायाद्गच्छेत् । अत्रान्ये–निद्रानाशादिभिर्लक्षणान्तरं पठन्ति । परन्तु "निद्रा-नाशोरतिः कंपो मूत्राघातो विसंज्ञिता । अमी उपद्रवा घोरा विसूच्याः पंच दारुणाः ॥" इति माधवेन संगृहीतत्वात्पृथङ् न लिखितम् ॥ २३ ॥ अजीर्णप्रतियोगितया जीर्णाहारलक्षणमाह–जीर्णाहारस्य पुंस एतैर्लक्षणम्–उद्गारशुद्धिरूर्द्धमम्लादिरहितत्वम्, उत्साहः–शरीरमनसोर्बलम्,

1 इमौ श्लोकौ मधुकोशयिपुस्तके नोपलभ्येते ।

प्रायेणाहारवैषम्यादजीर्णं जायते नृणाम्॥
तन्मूलो रोगसंघातस्तद्विनाशाद्विनश्यति॥ २६॥
( ग्लानिर्गौरवविष्टम्भभ्रममारुतमूढता।
विबन्धो वा प्रवृत्तिर्वा सामान्याजीर्णलक्षणम्॥ )

इति श्रीमाधवकरविरचिते माधवनिदानेऽग्निमान्द्याजीर्णविसूचिकालसकविलम्बिकानिदानं समाप्तम्॥ ६॥

---

## अथ क्रिमिनिदानम् ७.

क्रिमयश्च द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः॥
बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः॥ १॥

---

मधुकोशव्याख्या।

॥ २४–२६॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामग्निमान्द्याजीर्णविसूचिकालसकविलम्बिकानिदानं समाप्तम्॥ ६॥

अजीर्णात् क्रिमिसंभव इत्यतोऽजीर्णानन्तरं क्रिमिनिदानमाह—क्रिमय इत्यादि। तत्र बाह्यास्त्वगुपलेपकबाह्यमलसंभवाः, आभ्यन्तरा आमाशयादिसंभवाः, ते देशभेदात् द्वैविध्येनोक्ताः कारणभेदाच्चतुर्धा भवन्तीत्याह—बहिर्मलेत्यादि। बहिर्मलो गात्रोप-

आतङ्कदर्पणव्याख्या।

उत्सर्गो मलमूत्रप्रवृत्तिः वेगसहित उत्सर्गः वेगोत्सर्गः। यथोचितः उपयुक्ताहारानुरूपः। लघुता–देहस्य विशेषेण कोष्ठस्येति॥ २४–२६॥ इत्यातंकदर्पणेऽग्निमान्द्याजीर्णविसूचिकालसकविलंबिकानिदानम्॥ ६॥

अजीर्णात्क्रिमिसंभव इत्यतोऽजीर्णानंतरं क्रमिनिदानमाह--क्रमय इति। एके—बाह्याः केशे वस्त्रादिजा यूकालिक्षादयः, अन्ये—चाभ्यंतराः। तत्र बाह्यास्त्वगुपलेपकबाह्यमलसंभवाः, आभ्यंतराश्च आमादिसम्भवाः त एव देशभेदाद् द्वैविध्येनोक्ताः कारणभेदाच्चतुर्द्धा भवंति। बहिर्मलो गात्रोपलेपी स्वेदादिरुक्तः एवं बहिर्मलादिषु चतुर्षु जन्म बहिर्मलादिजन्म तस्य भेदात्। केचिद्बहिर्मलजन्मानः, तथा केचित्कफजन्मानः, केचिद्रक्तजन्मानः, केचित्पुरीषजन्मानश्चेति चतुर्द्धा।

---

१ अयमपि श्लोकः क्वचिदुपलभ्यते।

**नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः ॥**
**तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥ २ ॥**
**बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ॥**
**द्विधा ते कोठपिडकाकण्डूगण्डान्प्रकुर्वते ॥ ३ ॥**
**अजीर्णभोजी मधुराम्लनित्यो द्रवप्रियः पिष्टगुडोपभोक्ता ॥**
**व्यायामवर्जी च दिवाशयानो विरुद्धभुक्संलभते क्रिमींस्तु ४**

---

मधुकोशव्याख्या ।

लेपी स्वेदादिरुक्त एव, बहिर्मलादिषु चतुर्षु जन्म बहिर्मलादिजन्म तद्भेदात् । त एव चतुर्विधा नामभेदेन विंशतिविधा भवन्ति, विंशत्यतिरिक्ताश्चातिसूक्ष्माः सहजाश्चरकेणोक्ताः, ते चावैकारिकत्वेन रोगाधिकारे नोच्यन्ते; विंशतिविधास्तु क्रिमयो दोषप्रकोपणद्वारेण ज्वरशूलादिरोगान् जनयन्तीति रोगा उच्यन्ते ॥ १ ॥ उक्तान् बाह्यान् विवृणोति—बाह्यास्तत्र मलोद्भवा इति । तिलानामिव प्रमाणं परिमाणं संस्थानमाकृतिर्वर्णश्च श्वेतः कृष्णो वा येषां यूकादिरूपाणां ते तथा । केशाम्बराश्रया इति अम्बरं वस्त्रम् । बहुपादा इति यूकाः, सूक्ष्मा इति लिक्षाः ॥ २–३ ॥ तेषां निदानमाह—अजीर्णेत्यादि । अजीर्णे भोजनशीलोऽजीर्ण-

आतङ्कदर्पणव्याख्या ।

त एव चतुर्विधा नामतो नामभेदेन विंशतिविधा वक्ष्यमाणाभिः संज्ञाभिर्भवन्ति ॥ १ ॥ संज्ञाभिर्भवंति तानाह—नामतो विंशतिविधा विंशतिसंख्याका नामत इत्यर्थः । एते च नामविशेषाः केचित्सान्वयाः केचिन्निरन्वयाः व्यवहारार्थं पूर्वाचार्यैः प्रणीताः । तेषां नामानि यूका लिक्षा बहिर्मलोत्थे द्वे एनयोराश्रयः केशवस्त्राणि, कफजाः अंत्रादा उदरावेष्टा हृदयादाः महागुदाः चुरवः दर्भकुसुमाः सुगंधाः एवं, सप्त एषामाश्रयः आमाशयः । रक्तजाः, केशादाः, लोमविध्वंसाः, रोमद्वीपाः, उदुंबराः, सहाः, सौरसमातरः,एवं षट् । एषां स्थानं रक्तवाहिशिराः । पुरीषोत्थाः पंच ककेरुकमकेरुकसौसुरादाः सशूलाः लेलिहः,एषामाश्रयः, पक्वाशयः एवं विंशतिः । उक्तबाह्यानाह—बाह्य इति । तत्र तेषु चतुर्षु बाह्यास्तत्र बाह्यमलोद्भवाः तिलानामिव प्रमाणं संस्थानम् । आकृतिर्वर्णश्च श्वेतः कृष्णो वा येषां यूकारूपाणां तथा केशांबराश्रया इति—केशाः कचाः अंबरं वस्त्रं च आश्रयो येषाम् ॥ २ ॥ ते के कृमयो भवंतीति तानाह—बहुपादा इति । यूकाः केशविदाः लिक्षाः, बहुपादाः बहुचरणाः, सूक्ष्मा अणवः ॥ ३ ॥ तेषां निदानमाह—अजीर्णेति । नरः पुरुषः कृमीन् लभते कथंभूतः अजीर्णे भोजनशीलोऽजीर्णभोजी मधुराम्लनित्यः सततमधुरा-

माषपिष्टाम्ललवणगुडशाकैः पुरीषजाः ॥
मांसमत्स्यगुडक्षीरदधिशुक्तैः कफोद्भवाः ॥ ५ ॥
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ॥
ज्वरो विवर्णता शूलं हृद्रोगः सदनं भ्रमः ॥ ६ ॥
भक्तद्वेषोऽतिसारश्च संजातक्रिमिलक्षणम् ॥
कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ॥ ७ ॥
पृथुब्रध्ननिभाः केचित्केचिद्गण्डूपदोपमाः ॥
रूढधान्यांकुराकारास्तनुदीर्घास्तथाणवः ॥ ८ ॥
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ॥
अन्त्रादा उदरावेष्टा हृदयादा महागुदाः ॥ ९ ॥

---

मधुकोशव्याख्या।

भोजी मधुराम्लनित्यः सततमधुराम्लभोजी। विरुद्धं क्षीरमत्स्यादि ॥ ४ ॥ क्रिमिविशेषे निदानविशेषमाह—माषेत्यादि ॥ ५ ॥ अभ्यन्तरक्रिमिलक्षणमाह—ज्वर इत्यादि ॥ ६ ॥ कफजानाह—कफादित्यादि। कफनिमित्ताः क्रिमयः आमाशये जायन्ते, ते च वृद्धाः सन्तः सर्वतः ऊर्ध्वमधश्च सर्पन्ति; एवं पुरीषजादिषु द्रष्टव्यम्। ब्रध्नश्चर्मलता, ब्रध्नीति लोके, रूढं प्ररूढम्। तनवः परिणाहेन, दीर्घा आयामेन, अणवः उभाभ्यामपि स्वल्पाः। त इति कफजाः। सप्त नामानि विवृणोति—अन्त्रादा

आतङ्कदर्पणव्याख्या।

म्लभोजी विरुद्धं क्षीरमत्स्यादि तथा द्रवप्रियः पिष्टं गोधूमचूर्णकृतं पूपादि ॥ ४ ॥ पुरीषजानां निदानमाह—माषेति। एतैः कारणैः पुरीषजा जायंते पक्वाशय इति शेषः। कफोद्भवनिदानमाह—शुक्त इक्षुरसः कालांतरेणाम्लीभूतः एते आमाशये ॥ ५ ॥ शोणितजानां कारणमाह—विरुद्धेति। शाकम् अपक्वहरितचणकादिशाकभक्षणम्। आभ्यंतरक्रिमिलक्षणमाह—ज्वर इति। विवर्णता शरीरे श्यामपीतता, शूलमामाशये पक्वाशये च, हृद्रोगो हृदयविकारो हृल्लासादिः, भ्रमश्चक्रारूढस्येव ॥ ६ ॥ भक्तद्वेषो भोजनविद्वेषः। कफजानां स्वरूपमाह—कफादिति। कफनिमित्ताः क्रिमयः आमाशये नाभेरूर्ध्वं जायंते। ते च वृद्धाः संतः सर्वतः ऊर्ध्वमधश्च प्रसरंति ॥ ७ ॥ आकारेण पृथुब्रध्ननिभाः विस्तीर्णचर्मैकदेशाकाराः ब्रध्नश्चर्मलता ब्राध्नीति लोके। केचित्क्रमयो गंडूपदोपमाः भूमिलताकाराः केचिद्रूढधान्यांकुरास्तदाकृतयो भवंति रूढं प्ररूढमंकुरितमिति यावत्। तनवः परिणाहेन दीर्घा आयामेन तथा केचित् अणवः ॥ ८ ॥ उभाभ्यामपि स्वल्पाः, श्वेताः शुक्लाः, ताम्रावभासाः ताम्रवर्णाः, केचिदिति सर्वत्र संबंधनीयम्। नामतस्तु ते

चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ॥
हृल्लासमास्यस्रवणमविपाकमरोचकम् ॥ १० ॥
मूर्च्छाछर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥
रक्तवाहिशिरास्थाना रक्तजा जन्तवोऽणवः ॥ ११ ॥
अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः ॥
केशादा रोमविध्वंसा रोमद्वीपा उदुम्बराः ॥
षट् ते कुष्ठैककर्माणः सहसौरसमातरः ॥ १२ ॥
पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ॥
वृद्धास्ते स्युर्भवेयुश्च ते यदाऽऽमाशयोन्मुखाः ॥ १३ ॥

---

मधुकोशव्याख्या ।

इत्यादि । एते च नामविशेषाः केचित्सान्वयाः, केचिन्निरन्वयाः व्यवहारार्थं पूर्वाचार्यैः प्रणीताः, एवं वक्ष्यमाणेषु बोध्यमिति ॥ ७-१० ॥ रक्तजानाह—रक्तेत्यादि । रक्तवाहिशिरास्थानाश्च ते रक्तजाश्चेति रक्तवाहिशिरास्थानरक्तजाः । अथ वा रक्तवाहिशिरास्थानं यद्रक्तं तज्जाः । नामभेदात्ते षट्, तत्र केशादादयश्चत्वारः सहसौरसनाममातृनामभ्यां क्रिमिभ्यां वर्तन्ते इति सहसौरसमातरः, एवं षड् भवन्ति । कुष्ठैककर्माण इति कुष्ठमेकं कार्यं येषां ते तथा, कुष्ठजनका इति यावत् । उक्तं हि सुश्रुते-"सर्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि चोपदिश्यन्ते" इति ॥ ११ ॥ १२ ॥ पुरीषजानाह—पक्वाशयेत्यादि । अधोविसर्पिण इति गुदनिः-

आतङ्कदर्पणव्याख्या ।

सप्तधा इति कफजाः, अंत्रादा इत्यादि ॥ ९ ॥ ते कुपिता यान् रोगान् कुर्वते तानाह—हृल्लासेत्यादि । हृल्लास उपस्थितवमनत्वमिव आस्यस्रवणं लालास्रावः, आनाह उदरे निश्चलाटोपः ॥ १० ॥ रक्तजानां स्वरूपमाह—रक्तेति । रक्तजा जंतवः क्रिमयः, रक्तवहासु शिरासु स्थानं येषां ते तथा वृद्धाः संतः सर्वतः प्रसरंतीत्यत्रापि योज्यम् । अपादाः पादरहिताः, वृत्ताः वर्त्तुलाः, वर्णतस्ताम्राः ते सौक्ष्म्यात् अणुरूपत्वात् केचिददृश्याः । नामतः षट्—केशादा लोमविध्वंसाः रोमद्वीपाः उदुंबराः सहसौरसमातरः एवं षड् भवंति । ते कुष्ठैककर्माण इति कुष्ठमेवैकं कर्म कार्यं येषां ते तथा कुष्ठजनकाः कुष्ठैकफलदा इत्यर्थः । उक्तं च सुश्रुते—"सर्वाणि कुष्ठानि सवातानि सपित्तानि सश्लेष्माणि सक्रिमीणि सरक्तानि चोपदिश्यंते" इति । अथ वा कुष्ठेन सहैकं कर्म हर्षकंडूतोदादिकं केशश्मश्रुलोमविध्वंसादिकं त्वक्शिरास्नायुमांसतरुणास्थिभक्षणं च येषां त एव ॥ ११ ॥ १२ ॥ पुरीषजानाह—पक्वाशय इति । पुरीषोत्थाः क्रिमय

तदास्योद्गारनिःश्वासविड्गन्धानुविधायिनः ॥
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥ १४ ॥
ते पञ्च नाम्ना क्रिमयः ककेरुकमकेरुकाः ॥
सौसुरादाः सशूलाख्या लेलिहा जनयन्ति हि ॥ १५ ॥
विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ॥
रोमहर्षाग्निसदनं गुदकण्डूर्विमार्गगाः ॥ १६ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने क्रिमिनिदानं समाप्तम् ॥ ७ ॥

---

मधुकोशव्याख्या।

सरणशीलाः, ते यदाभिवृद्धाः सन्तः आमाशयोन्मुखा भवेयुस्तदास्य रोगिणः उद्गारनिःश्वासविड्गंधानुविधायिनः स्युः; पुरीषगन्धयुक्ता भवन्तीति योज्यम्। शेषं सुबोधम् ॥ १३–१६ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां क्रिमिनिदानं समाप्तम् ॥ ७ ॥

आतङ्कदर्पणव्याख्या।

पक्वाशय एव जायंते पुरीषस्य पक्वाशयस्थितत्वात्। ते चाधोविसर्पिणः स्युर्नोर्द्ध्वगा अधोविसर्पिण इति गुदनिःसरणशीलाः ते यदा वृद्धाः सन्तः अमाशयोन्मुखा भवेयुः ॥ १३ ॥ तदास्य रोगिण उद्गारे निःश्वासे विड्गंधानुविधायिनः पुरीषगंधकारिणो भवंतीति योज्यम्। पृथवो दीर्घाः, वृत्ता वर्तुलाः, तनवः अल्पाः, स्थूला उत्सन्नाः आकारेणेति शेषः। वर्णतः श्यावाः ईषत्पीतश्वेताः। असिताः कृष्णाः ॥ १४ ॥ नामतः पंचधा कसेरुकादिभेदेन ॥ १५ ॥ एवं ते पंच यान् रोगान् जनयंति तानाह—विड्भेदेति। विड्भेदः सांद्रमलप्रवृत्तिः शूलं पक्वाशये विष्टंभो मलस्य पारुष्यं कर्कशांगत्वम् अग्निसदनं वह्निग्लानिः विमार्गगा विमार्गप्रवृत्तयः ॥ १६ ॥ इत्यातंकदर्पणे कृमिनिदानम् ॥ ७ ॥

---

# अथ पांडुरोगकामलाकुम्भकामलाहलीमकनिदानम् ८.

**पांडुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ॥**
**चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः ॥ १ ॥**
**व्यायाममम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णम् ॥**
**निषेवमाणस्य प्रदूष्य रक्तं दोषास्त्वचं पांडुरतां नयन्ति ॥ २ ॥**

मधुकोशव्याख्या ।

पुरीषजाः क्रिमयः पाण्डुतां जनयन्ति, अतः क्रिमेरनन्तरं पाण्डुरोगमाह—पाण्डुरोगा इत्यादि । पाण्डुत्वेनोपलक्षितो रोगः पाण्डुरोगः । चरके अष्टोदरीयाध्याये "पञ्च पाण्डुरोगाः" इत्यभिधायापि "पाण्डुरोगाः स्मृताः पञ्च" इति यदेतत्पुनश्चरकवचनं तेन पञ्चानामपि साध्यत्वं बोधयति, न तु पञ्चोन्मादेष्विव सान्निपातिकस्यासाध्यत्वम्—इति जेज्जटः; न्यूनसंख्याव्यवच्छेदार्थम्—इति चक्रः । ननु, सुश्रुते हि मृत्तिकाजो न पठितः, मृत्तिकाऽपि दोषप्रकोपद्वारेणैव पाण्डुरोगं जनयतीति । यदुक्तं—"कषाया मारुतं पित्तमूषरा मधुरा कफम्" इति; निदानभेदाच्च रोगभेदे रोगानन्त्यप्रसङ्गः, वातजस्यापि रूक्षशीताद्यनेकवातनिदानकुपितवातजन्यत्वात् । उच्यते, दोषत्वाविशेषेऽपि विशिष्टरूपचिकित्साप्रतिपादनार्थं पृथगभिधानं, मूत्रांतर्वृद्धिवत्; सुश्रुतेन तु पराधिकारेषु न विस्तरोक्तिरित्यभिप्रायेण न पृथक्कृतः । चिकित्सा तु दोषचिकित्सयाऽपि भवतीति ॥ १ ॥ संप्राप्तिमाह—व्यायामेत्यादि । रक्तमित्युपल-

आतङ्कदर्पणव्याख्या ।

पुरीषजाः क्रमयो रूक्षाः पांडुतां जनयंति । अतः क्रमेरनंतरं पांडुरोगमाह—पांडुरोगा इति । पांडुत्वेनोपलक्ष्यते रोगः पांडुरोगः स च पंचविधः—वातपित्तकफैस्त्रयः सन्निपातेनैकः मृद्भक्षणादेकः एवं पंच । ननु सुश्रुतेन मृत्तिकाजनितो न पठितः यतो मृत्तिकापि त्रिदोषकोपकारणेन पांडुरोगं जनयति । उक्तं च "कषाया मारुतं पित्तमूषरा मधुरा कफम्" इति । यदि निदानभेदाद्रोगभेदस्तदा रोगाणामानंत्यप्रसंगः । उच्यते—दोषजनकत्वाविशेषेपि विशिष्टरूपचिकित्साप्रतिपादनार्थं पृथगभिधानम् ॥ १ ॥ पांडुरोगनिदानमाह—व्यवायमिति । व्यवायादीनि निषेवमाणस्य दुष्टा दोषा रक्तं विदूष्य त्वचि पांडुभावं कुर्वंतीति पिंडार्थः । व्यवायः स्त्रीसेवा, अन्ये—व्यायाममिति पठंति । लवणानीति बहुवचनेन क्षाराण्यपि बोद्ध-

१ व्यवायमम्लमिति पाठाभिप्रायेण ।

२—समेत्य रक्तं कुर्वंति दोषस्त्वाचे पाण्डुभावमिति पा० ।

त्वक्स्फोटनष्ठीवनगात्रसादमृद्भक्षणप्रेक्षणकूटशोथाः ॥
विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥३॥
त्वङ्मूत्रनयनादीनां रूक्षकृष्णारुणाभताः ॥
वातपाण्ड्वामये तोदकम्पानाहभ्रमादयः ॥ ४ ॥
पीतमूत्रशकृन्नेत्रो दाहतृष्णाज्वरान्वितः ॥
भिन्नविट्कोऽतिपीताभः पित्तपाण्ड्वामयी नरः ॥ ५ ॥
कफप्रसेकश्वयथुतन्द्रालस्यातिगौरवैः ॥
पाण्डुरोगी कफाच्छुक्लैस्त्वङ्मूत्रनयनाननैः ॥ ६ ॥

---

मधुकोशव्याख्या ।

क्षणं, तेन त्वङ्मांसमपि दूष्यत्वेन दृढबलेन पठितं, हारीतेन रसोऽपीति ॥ २ ॥ पूर्वरूपमाह—त्वगित्यादि। त्वक्स्फोटनं त्वचः किंचिद्विदारणम्। मृद्भक्षणं मृद्भक्षणेच्छा। प्रेक्षणकूटशोथः अक्षिगोलके शोथः। अविपाकः आहारस्य। पुरःसराणि पूर्वरूपाणि ॥ ३ ॥ वातिकलक्षणमाह—त्वगित्यादि। अत्र कृष्णारुणाभता न पाण्डुतामतिक्रामति, अन्यथा पाण्डुरोगत्वाभावः। उक्तं च सुश्रुते—"सर्वं चैतेष्विह पाण्डुभावो यतोऽधिकोऽतः खलु पाण्डुरोगः" इति। भ्रमादय इति आदिशब्देन भेदशूलादीनां ग्रहणम् ॥ ४ ॥ पैत्तिकलक्षणमाह—पीतेत्यादि। ननु पित्तपांड्वामयीति न युक्तं, पाण्डुरोगस्य पित्तकार्यत्वादेव। उच्यते, इतरदोषासंश्लिष्टप्रबलपित्तजन्यत्वेन पैत्तिकाभिधानं, यथा—पैत्तिकरक्तपित्तमिति ॥ ५ ॥ श्लैष्मिकलक्षणमाह—कफप्रसेके-

आतङ्कदर्पणव्याख्या ।

भ्यानि मृदं मृत्तिकां तीक्ष्णं राजिकादि ॥ २ ॥ पूर्वरूपमाह—त्वगिति। त्वक्स्फोटनं त्वचः किंचिद्विदारणम्। अन्ये—त्वक्पाटनिष्ठीवनगात्रसादाः—इति पठंति, तत्रापि स एवार्थः। निष्ठीवनं मुखेन थुगथुगीति लोके, मृद्भक्षणम् मृद्भक्षणेच्छा, प्रेक्षणकूटशोथः अक्षिगोलकशोफः, अविपाक आहारस्य, पुरस्सराणि पूर्वरूपाणि ॥ ३ ॥ वातिकपांडुरोगमाह—त्वगिति। कृष्णारुणप्रभा पांडुत्वमतिक्रम्य न भवति। अन्यथा पांडुरोगत्वाभावात्। उक्तं हि सुश्रुते—"सर्वेषु चैतेष्विह पांडुभावो यतोऽधिकोऽतः खलु पांडुरोगः" इति। तोदः पीडाभेदः, आनाहः उदराटोपः, भ्रमश्चक्रारूढस्येव आदिग्रहणाद्भेदशूलादीनां ग्रहणम् ॥ ४ ॥ पैत्तिकमाह—पीतेति। भिन्नविट्कः सद्रवमलः, अतिपीताभः अतिशयेन पीतः, ननु पित्तपांड्वामयीति वक्तुं न युक्तं पांडुरोगस्य पित्तकार्यत्वात्। उच्यते, इतरदोषासंसृष्टप्रबलपित्तजन्यत्वेन पैत्तिकाभिधानम् पैत्तिकरक्तपित्तवत् ॥ ५ ॥ श्लैष्मिकमाह—कफेति। कफात्तु यः पांडुरोगी स शुक्लैः त्वङ्मूत्रनयनाननैरुपलक्ष्यत इति योज्यम्। कफप्रसेकः कफस्रावः, सान्निपाति-

ज्वरारोचकहृल्लासच्छर्दितृष्णाक्लमान्वितः ॥
पाण्डुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः ॥ ७ ॥
मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ॥
कषाया मारुतं पित्तमूषरा मधुरा कफम् ॥ ८ ॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तं च रूक्षयेत् ॥
पूरयत्यविपक्वैव स्रोतांसि निरुणद्ध्यपि ॥ ९ ॥
इन्द्रियाणां बलं हत्वा तेजो वीर्यौजसी तथा ॥
पांडुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥ १० ॥

---

मधुकोशव्याख्या ।

त्यादि । कफाद्यः पाण्डुरोगी स शुक्लैस्त्वङ्मूत्रनयनाननैरुपलक्षित इति योज्यम् ॥६॥ सान्निपातिकस्तु प्रकृतिसमसमवेतत्वेन उक्तवातजादिलक्षणैरेव बोद्धव्यः । उक्तं हि चरके-"सर्वान्नसेविनः सर्वे दुष्टा दोषास्त्रिदोषजम् । त्रिलिङ्गं संप्रकुर्वन्ति पाण्डुरोगं सुदुःसहम्" इति । तस्यैव सोपद्रवस्यासाध्यत्वमाह-ज्वरारोचक इत्यादि । हतेन्द्रियः स्वविषयाग्राहकेन्द्रियः ॥ ७ ॥ मृज्जसंप्राप्तिमाह-मृत्तिकेत्यादि । अन्यतमो मलो वातादिः । ऊषरा सक्षारा । रसादीन् रूक्षयेत्, भुक्तं चेति योज्यम् । रौक्ष्यात् प्राकृतिकोद्भूतरौक्ष्यगुणात् । अविपक्वैव कोष्ठधात्वग्निभिः पाकं न गत्वैव, स्रोतांसि रसवहादीनि, पूरयति रुणद्धि च । इन्द्रियाणां बलं स्वविषयग्रहणशक्तिम् । तेजो दीप्तिरिति जेज्जटः, ऊष्मेति चक्रः । वीर्यं शक्तिः ओजः सर्वधातुसारः; पराभिभवे-

आतङ्कदर्पणव्याख्या ।

कस्तु समसमवेतैर्वातादिलक्षणैरेव बोध्यः । उक्तं हि चरके "सर्वान्नसेविनः सर्वे दुष्टा दोषास्त्रिदोषजम् । त्रिदोषलिंगं कुर्वंति पांडुरोगं सुदुःसहम्"इति ॥ ६ ॥ तस्यैव सोपद्रवस्यासाध्यत्वमाह-ज्वरेति । त्रिदोषजः पांडुरोगम् । एतैरुपद्रवैर्युक्तस्त्याज्यः असाध्य इत्यर्थः । हतेन्द्रियः स्वविषयाग्राहकेन्द्रियः ॥ ७ ॥ मृत्तिकाजनितपांडुरोगमाह-मृत्तिकाभक्षणशीलस्य पुरुषस्य अन्यतमो मलो दोषो वातादिः कोपं गच्छति । मृत्तिकायास्त्रिदोषप्रकोपने हेतुं दर्शयति-कषाया मृत्तिका मारुतं प्रकोपयेत्, ऊषरा सक्षारा पित्तम्, मधुरा कफं, रौक्ष्याच रसादीन्धातून् रूक्षयेत् भुक्तं च रूक्षयेत् तस्या स्वभावोद्भूतरूक्षगुणत्वात् ॥८॥ अपक्वैवेति । न कोष्ठधात्वग्निभिः पाकं गच्छति किंतु अपक्वैव रसवाहीनि श्रोतांसि पूरयति निरुणद्धि च ॥ ९ ॥ इन्द्रियाणां बलं स्वविषयग्रहण शक्तिं हत्वा पांडुरोगं करोति । तेजो दीप्तिरिति जेज्जटः । ऊष्मेति चक्रः । वीर्यं शक्तिः, ओजः

शूनाक्षिकूटगण्डभ्रूः शूनपान्नाभिमेहनः ॥
क्रिमिकोष्ठोऽतिसार्येत मलं सासृक्कफान्वितम् ॥ ११ ॥
पांडुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति ॥
कालप्रकर्षाच्छूनानां यो वा पीतानि पश्यति ॥
बद्धाल्पविट् सहरितं सकफं योऽतिसार्यते ॥ १२ ॥

मधुकोशव्याख्या।

च्छेति जेज्जटः ॥ ८-१० ॥ मृज्जस्य लक्षणमाह—शूनाक्षीत्यादि। सर्वपाण्डुरोगेषु क्रिमिकोष्ठता यदा स्यात्तदा एतल्लक्षणमिति जेज्जटः। मृत्तिकाजानन्तरपठितत्वेन तस्यैव लक्षणमित्यन्ये। विदेहे तु पठ्यते—"मृद्भक्षणाद्भवेत्पाण्डुस्तन्द्रालस्यनिपीडितः। सश्वासकासशोषार्शःसदारुचिसमन्वितः॥ शूनपादाननकरः कृशाङ्गः कृशपावकः" इति ॥ ११ ॥ असाध्यलक्षणमाह—पाण्डुरोग इत्यादि। पाण्डुरोगश्चिरोत्पन्नः कालप्रकर्षात् खरीभूतो जठरतां गतो न सिध्यति, अचिरोत्पन्नोऽपि शूनानां मध्ये यो वा पीतानि पश्यति स पाण्डुरोगो न सिध्यतीत्यपरमसाध्यलक्षणम्—इति जेज्जटस्य योजना। चक्रस्त्वाह—"चिरोत्पन्नः खरीभूतोऽत्यर्थरूक्षितसर्वधातुर्न सिध्यति, तथा कालप्रकर्षादित्यादिनाऽपरमसाध्यलक्षणम्" इति। अत्र शूनानां शोथवतां मध्ये यो वा पीतानि पश्यति स न सिध्यतीति। शूनो ना इति पाठान्तरं सुगमं, ना पुरुषः। शूनाङ्गो यो वा पीतानि पश्यतीति पाठान्तरं सुगमतरम्। अप्र-

आतङ्कदर्पणव्याख्या।

सर्वधातुसारभूतं हृदयस्थं, पराभिभवेच्छेति जेज्जटः। बलवर्णाग्निनाशनमित्यत्र बलं शरीरे सामर्थ्यम् ॥ १० ॥ मृज्जनितस्योपद्रवमाह—शूनेति। अक्षिकूटोऽक्षिगोलकः, गंडः कपोलः एतेषु श्वयथुः तथा शूनपान्नाभिमेहनः शूनचरणो नाभिर्मेहनं यस्य स तथा, तथा च क्रमिकोष्ठः पुरुषः सरुधिरं कफं पुरीषम् अतिसार्येति सर्वपांडुरोगेषु क्रमिकोष्ठता यदा स्यात्तदा एतल्लक्षणमिति जेज्जटः। मृत्तिकानंतरं पठितत्वात्तस्यैव लक्षणमित्यन्ये उक्तं च विदेहेन "मृद्भक्षणे भवेत्पांडुस्तंद्रालस्यनिपीडितः। सश्वासकासशोथार्शाः सदारुचिसमन्वितः। शूनपादाननकरः कृष्णांगः कृशपावकः" इति ॥ ११ ॥ असाध्यलक्षणमाह पांड्विति। पांडुरोगश्चिरोत्पन्नः कालप्रकर्षात् चिरकालात्खरीभूतो जठरतां गतो न सिध्यति अचिरोत्पन्नोपि पांडुरोगः शूनांगो यो वा पुरुषः पीतानि पश्यति स पांडुरोगी न सिध्यति इत्यपरमसाध्यलक्षणमिति जेज्जटः। चक्रस्त्वन्यथा व्याचष्टे, चिरोत्पन्नः खरीभूतोत्यर्थाविरूक्षितसर्वधातुर्न सिध्यति। तथा कालप्रकर्षादित्या-

१ बह्वल्पमिति पाठान्तरमातङ्कदर्पणोपेतपुस्तके।

दीनः श्वेतातिदिग्धाङ्गश्छर्दिमूर्च्छातृडर्दितः॥
स नास्त्यसृक्क्षयाद्यश्च पाण्डुः श्वेतत्वमाप्नुयात् ॥ १३ ॥
पाण्डुदन्तनखो यस्तु पांडुनेत्रश्च यो भवेत् ॥
पाण्डुसंघातदर्शी च पाण्डुरोगी विनश्यति ॥ १४ ॥
अन्तेषु शूनं परिहीणमध्यं म्लानं तथाऽन्तेषु च मध्यशूनम्॥
गुदे च शेफस्यथ मुष्कयोश्च शूनं प्रताम्यन्तमसंज्ञकल्पम् ॥
विवर्जयेत्पाण्डुकिनं यशोऽर्थी तथातिसारज्वरपीडितं च॥ १५ ॥

---

मधुकोशव्याख्या ।

रमसाध्यलक्षणमाह—बद्धेत्यादि । अत्र सकफत्वेऽपि बद्धत्वाल्पत्वहरितत्वानि व्याधिप्रभावात्, बद्धाल्पस्थाने बहुलमिति पाठान्तरं सुगमम् । विट्शब्दो नपुंसकोऽप्यस्ति एतन्निर्देशादुन्नेयमित्याहुः । अपरमसाध्यलक्षणमाह—दीनेत्यादि । दीनः ग्लानः। श्वेतातिदिग्धाङ्ग इति श्वेतवर्णलिप्ताङ्ग इवेत्यर्थः । स नास्ति नष्ट इव असाध्य इत्यर्थः । अपरमाह—असृगित्यादि । अपरमसाध्यलक्षणमाह—पाण्डुदन्तेत्यादि । पाण्डुसंघातदर्शीति नयनरश्मिसहचरितं बहिर्निर्गतं पित्तं संपिण्डितं पश्यति । अपरमसाध्यलक्षणमाह—अन्तेष्वित्यादि । अन्तेषु बाहुजंघाशिरःसुः परिहीणमध्यं दुर्बलमध्यदेहम् । एतद्वैपरीत्येनापरमसाध्यलक्षणमाह—म्लानमित्यादि । म्लानं दुर्बलम् । असंज्ञकल्पं मृतप्रायम् । एवंविधं पाण्डुकिनं पाण्डुरोगिणं यशोऽर्थी वैद्यो वर्जयेदिति । अत्र सौश्रुतश्लोके पाण्डुकिनमित्यत्र पालकिनमिति पाठान्तरं, युक्तं चैतत्; एवं हि

आतङ्कदर्पणव्याख्या ।

दिना अपरमसाध्यलक्षणमिति । अत्र शूनानां यो वा पीतानि पश्यतीति पाठांतरे शूनानां शोथवतां मध्ये यः पीतानि पश्यति स न सिध्यति, अन्ये शूनो ना इति पठंति तत्र ना पुरुषः । अपरमसाध्यलक्षमाह—बद्धेति । अत्र सकफत्वेपि च बद्धत्वमल्पत्वं हरितत्वं व्याधिस्वभावात् हरितं हरितशाकवर्णम्, अन्ये बद्धल्पस्थाने बहुलमिति पाठं पठंति । बहुलं विट् सार्यते इति विट् शब्दो नपुंसकोप्यस्तीति निर्देशादुन्नेयमित्याहुः ॥ १२ ॥ अपरमसाध्यलक्षणमाह—दीन इति । दीनो ग्लानः । श्वेतातिदिग्धांग इति श्वेतवर्णातिलिप्तांग इत्यर्थः । स पुरुषो नास्ति नष्टः असाध्य इत्यर्थः । अत्रैवापरमप्यसाध्यलक्षणमाह—असृक्क्षयात् यः पांडुरोगी श्वेतत्वमाप्नुयात्सोप्यसाध्यः ॥ १३ ॥ अपरमप्यसाध्यलक्षणमाह—पांड्विति । नयनरश्मिसहचरितं बहिर्निर्गतं पित्तं तद्योगादखिलमपि वस्तु पीतवर्णपिण्डितं पश्यति ॥ १४ ॥ अपरमसाध्यलक्षणमाह—अन्तेष्विति । बाहु-

पांडुरोगी तु योऽत्यर्थं पित्तलानि निषेवते ॥
तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते ॥ १६ ॥
हारिद्रनेत्रः स भृशं हारिद्रत्वङ्नखाननः ॥
रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥ १७ ॥
दाहाविपाकदौर्बल्यसदनारुचिकर्षितः ॥
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ॥
कालान्तरात्खरीभूता कृच्छ्रा स्यात्कुम्भकामला ॥ १८ ॥

मधुकोशव्याख्या ।

पच्यमानपाण्डुरोगावस्थाविशेषस्य पालकिनो लक्षणमपि कृतं स्यात् । उक्तं हि सुश्रुते-"सकामलापालकिपाण्डुरोगः कुम्भाह्वयो लाघवकोऽलसाख्यः" इति । अनेनैवाभिप्रायेण कश्चिदभियुक्तो लिखितवान्, "अन्ते शूनः कृशो मध्येऽन्यथा च गुदशेफसि । शूनो ज्वरातिसाराद्यैर्मृतकल्पस्तु पालकी" इति ॥ १२-१५ ॥ पाण्डुरोगावस्थायां कामलामाह-पाण्डुरोगीत्यादि । दग्ध्वा संदूष्य । रोगाय कामलारूपाय । भेकवर्णः प्रावृषेण्यभेकवर्णः । कोष्ठशाखाश्रयेति एका कोष्ठाश्रया, अपरा शाखाश्रया; शाखा रक्तादयो धातवः । स्वतन्त्राऽपि कामला भवति, यथा राजयक्ष्मा स्वतन्त्रः उपेक्षितेष्वपि कासेषु भवतीत्याहुः ॥ १६ ॥ १७ ॥ तस्या

आतङ्कदर्पणव्याख्या ।

जंघाशिरस्सु शूनं शोथयुक्तं, परिहीणमध्यं दुर्बलमध्यदेहम्, ग्लानमित्यादिना परमसाध्यलक्षणमाह । ग्लानं दुर्बलं मध्यदेहं शूनं श्वयथुयुक्तं यस्य स तादृशस्तम् । अपरमसाध्यलक्षणमाह-गुदे शेफसि मुष्कयोश्च शूनं शोथयुक्तं प्रताम्यंतमुपगच्छंतं मूर्च्छन्तमित्यर्थः । असंज्ञकल्पं-मृतप्रायम् एवंविधं पांडुरोगिणं यशोर्थी भिषक् विवर्जयेत् । सुश्रुते अस्मिन् श्लोके पांडुकिनमित्यत्र पालकिनमिति पठंति युक्तं चैतत् । एवं हि पठ्यमाने पांडुरोगावस्थाविशेषस्य पालकिनो लक्षणमप्युक्तं स्यात् । यदुक्तं सुश्रुते "सकामलापालकिपांडुरोगः कुम्भाह्वयो लाघविकोलसाख्यः" इति । अनेनैवाभिप्रायेण कश्चिदभियुक्तो लिखितवान् "अन्ते शूनः कृशो मध्ये त्वथ वा गुदशेफसि । शूनो जरातिसाराद्यैर्मृतकल्पस्तु पालकी" इति ॥ १५ ॥ पांडुरोगावस्थायां कामलामाह-यः पांडुरोगी पित्तजनकानि अत्यर्थं सेवते तस्य रोगिणः पित्तं दोषः असृङ्मांसं दग्ध्वा संदूष्य रोगाय कामलारूपाय जायते ॥ १६ ॥ तस्य च रक्तं पीतं शकृन्मूत्रं, रक्तपीतशकृन्नेत्रे इति वा पाठः भेकवर्णः प्रावृषेण्यमण्डूकवर्णः, हतेंद्रियः हतेन्द्रियशक्तिः ॥ १७ ॥ एतैश्चोपद्रवैर्दाहादिभिः

१ ग्लानम्-इति पाठाभिप्रायेणेदम् ।

कृष्णपीतशकृन्मूत्रो भृशं शूनश्च मानवः ॥
सरक्ताक्षिमुखच्छर्दिविण्मूत्रो यश्च ताम्यति ॥ १९ ॥
दाहारुचितृडानाहतन्द्रामोहसमन्वितः ॥
नष्टाग्निसंज्ञः क्षिप्रं हि कामलावान्विपद्यते ॥ २० ॥
छर्द्यरोचकहृल्लासज्वरक्लमनिपीडितः ॥
नश्यति श्वासकासार्तो विड्भेदी कुम्भकामली ॥ २१ ॥
यदा तु पाण्डोर्वर्णः स्याद्धरितः श्यावपीतकः ॥
बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्वं मृदुज्वरः ॥ २२ ॥

---

मधुकोशव्याख्या ।

अवस्थान्तरं कुम्भकामलामाह—कालान्तरादित्यादि । खरीभूतेति पूर्ववद्व्याख्येयम् । कृच्छ्रा च कृच्छ्रसाध्या । कुम्भः कोष्ठः, अन्तः शुषिरसाधर्म्यात् तद्गता कामला कुम्भकामला, कोष्ठाश्रयेत्यर्थः ॥ १८ ॥ कामलाया असाध्यलक्षणमाह—कृष्णेत्यादि । कृष्णेत्यादिना ताम्यतीत्यन्तेन एकमसाध्यलक्षणम् । ताम्यति मुह्यति । दाहेत्यादिना विपद्यते इत्यन्तेनापरमसाध्यलक्षणमिति जेज्जटः ॥ १९ ॥ २० ॥ कुम्भकामलासाध्यलक्षणमाह—छर्दीत्यादि ॥ २१ ॥ पाण्डुरोगावस्थायां हलीमकमाह—यदेत्यादि । लाघवकालसकादीनां पाण्डुरोगावस्थाविशेषाणां लक्षणं

आतङ्कदर्पणव्याख्या ।

कर्पितः पीडितः, अविपाक आहारस्य, सदनमंगग्लानिः बहुपित्ता एषा कामला कोष्ठशाखाश्रयेति । एका कोष्ठाश्रयाऽपरा शाखाश्रया, शाखारक्तादयो धातवः । उपेक्षितः पांडुरोगः कामलायै भवति तस्यावस्थांतरं कुम्भकामलामाह—कालेति । कालांतरात् खरीभूता कठिनतां गता कृच्छ्रसाध्या कुम्भं कोष्ठं तत्साधर्म्यात्तद्गता कामला कोष्ठाश्रयेत्यर्थः ॥ १८ ॥ कामलाया असाध्यलक्षणमाह—कृष्णेति । छर्दिरिति छर्दिरपि रक्ता ताम्यति मुह्यति इत्येकमसाध्यलक्षणं दाहादिना विपद्यते इत्यन्तेनापरमपि असाध्यलक्षणमिति जेज्जटः । नष्टोऽग्निः संज्ञा चेतना यस्य स तथा ॥१९॥२०॥ कुंभकामलिनोसाध्यलक्षणमाह—छर्दीति । आयासेन विनैव श्रमः क्लमः विड्भेदी सद्रवमलप्रवृत्तिः एतैरुपद्रवैः कुंभकामली त्याज्यः ॥ २१ ॥ पांडुरोगाऽवस्थायां हलीमकमाह—यदेति । यदा पांडुरोगिणो हरितादिवर्णयुक्तस्य एते उपद्रवा भवंति तदा तस्य वातपित्तप्रकोपतो हलीमकं जानीयात् । हरितः शाकवर्णः, श्यावो नीलवर्णः । बलोत्साहक्षय इति बलोत्साहयोर्नाशः, मृदुज्वरः । स्त्रीष्वहर्ष इति रिरंसाया अभावः, अंगमर्दः अंगमोटनम्, लाघ-

स्त्रीष्वहर्षोऽङ्गमर्दश्च दाहस्तृष्णाऽरुचिर्भ्रमः ॥
हलीमकं तदा तस्य विद्यादनिलपित्ततः ॥ २३ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने पाण्डुरोगकामलाकुम्भकामलाहलीमकनिदानं समाप्तम् ॥ ८ ॥

## अथ रक्तपित्तनिदानम् ९.

घर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः ॥
तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च ॥ १ ॥
पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम् ॥
ततः प्रवर्तते रक्तमूर्ध्वं चाधो द्विधाऽपि वा ॥ २ ॥

मधुकोशव्याख्या।

सुश्रुतादिष्वनुस्मर्तव्यमिति ॥ २२ ॥ २३ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां पाण्डुरोगकामलाकुम्भकामलाहलीमकनिदानं समाप्तम् ॥ ८ ॥

पाण्डुरोगवद्रक्तपित्तस्यापि पित्तजन्यत्वात्तदनन्तरं रक्तपित्तमाह—घर्मेत्यादि। घर्म आतपः। तीक्ष्णं तीक्ष्णवीर्यं मरिचादि, उष्णोऽग्नितापः, क्षारो यवक्षारादिः घण्टापाटल्यादिकृतश्च; विदग्धं कुपितम्। स्वगुणैरिति पित्तं तीक्ष्णद्रवपूतीत्यादिभिः विदहति कोपयति स्वगुणैरेव, विदाहश्चास्य रक्तस्य पित्तवदित्युक्तेः। ततः प्रवर्तते निःसरति पित्तं रक्तं च धातुरूपं न तु केवलं रक्तं, रक्तपित्तमिति व्यपदेशानुपपत्तेः। अथ पित्तेन दुष्टं रक्तं रक्तपित्तमित्युच्यते, तदा पित्तरक्तमिति व्यपदेशः स्यात्, एतेन रक्तं च पित्तं चेति द्वन्द्वसमासान्निरुक्तिरुक्ता सुश्रुतेन। ननु, चरके रागपरिप्रासं

आतङ्कदर्पणव्याख्या।

विकाल्सादीनां पांडुरोगावस्थाविशेषाणाम् लक्षणं सुश्रुतादवगन्तव्यम् ॥ २२ ॥ २३ ॥
इत्यातंकदर्पणे निदानव्याख्यायां पांडुरोगनिदानम् ॥ ८ ॥

अथ पांडुरोगवद्रक्तपित्तस्यापि पित्तजन्यत्वात्तदनंतरं रक्तपित्तनिदानमाह-घर्मेति। एतैः स्वकारणगुणैर्विदग्धदुष्टपित्तं शोणितं विदहति कोपयति। घर्म आतपः, अध्वा पन्थाः, व्यवायो मैथुनं, तीक्ष्णं तीक्ष्णवीर्यं मरिचादि, उष्णोऽग्नितापः अथोष्णगुणद्रव्यं, क्षारो यवक्षारादिः अपामार्गादिकृतश्च। ततो रक्तं प्रवर्तते ऊर्ध्वमधो वा द्विधा वा एककालमूर्ध्वाधो वा तस्य रक्तपित्तमुच्यते। रक्तं च पित्तं च द्वंद्वसमासान्निरुक्तिः सुश्रुतेनोक्ता। चरके तु, रागपरिप्रासं पित्तं रक्तपित्तमुच्यते। तत्र रक्तं च तत्पित्तं चेति कर्मधारय-

१ भ्रमो तृष्णेति पाठान्तरंकेवलातंक दर्पणोपेतपुस्तके।

ऊर्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ॥
कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्तते ॥ ३ ॥
"आमाशयाद्व्रजेदूर्ध्वमधः पक्वाशयाद्व्रजेत् ॥
विदग्धयोर्द्वयोश्चापि द्विधा मार्गं प्रवर्तते ॥"
सदनं शीतकामित्वं कण्ठधूमायनं वमिः ॥
लोहगन्धिश्च निःश्वासो भवत्यस्मिन्भविष्यति ॥ ४ ॥
सान्द्रं सपाण्डु सस्नेहं पिच्छिलं च कफान्वितम् ॥
श्यावारुणं सफेनं च तनु रूक्षं च वातिकम् ॥ ५ ॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम् ॥
मेचकागारधूमाभमञ्जनाभं च पैत्तिकम् ॥
संसृष्टलिङ्गं संसर्गात्रिलिङ्गं सान्निपातिकम् ॥ ६ ॥

---

मधुकोशव्याख्या ।

पित्तं रक्तपित्तमित्युक्तं, तेन रक्तं च तत् पित्तं चेति कर्मधारयसमासेन निरुक्तिरुक्ता। अत्र च कारणत्रयमुक्तं यदाह—"संयोगाद्दूषणात्तत्तु सामान्याद्गन्धवर्णयोः । रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः" इति । तत्कथं न विरोधः ? नैवम्, अत्रापि रक्तप्रवृत्तेर्दुष्टं हि रक्तं पित्ते रागमादधत्तत्संसर्गि रक्तं स्वयमपि प्रवर्तते इति पूर्वक एवार्थः। तेन रक्तं च पित्तं चेति रक्तपित्तं, रक्तं च तत् पित्तं चेत्युभयथा निरुक्तावदोषः ॥ १–३ ॥ पूर्वरूपमाह—सदनमित्यादि । कण्ठधूमायनं कण्ठाद्धूमनिर्गम इव प्रतीतिः ॥ ४ ॥ श्लैष्मिकमाह—सान्द्रेत्यादि । सान्द्रं घनं, सपाण्डु सस्नेहमिति ईषत् पाण्डुस्नेहम् । वातिकमाह--श्यावेत्यादि । तनु अघनम् ॥ ५ ॥ पैत्तिकमाह—रक्ते-

आतङ्कदर्पणव्याख्या ।

समासश्च । यदुक्तं चरकेण कारणत्रयं "संयोगाद्दूषणात्तं तु सामान्याद्गंधवर्णयोः । रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः॥" इत्युभयत्रापि न कश्चिद्दोषः । केषु मार्गेषु प्रवर्त्तते तानाह—ऊर्ध्वमिति । कुपितं तत्पित्तं नासादिभिरूर्ध्वं मेढ्रादिभिरधः अतिकुपितं मार्गद्वयैः ऊर्ध्वाधोभिः समस्तरोमच्छिद्रैश्च ॥ १–३ ॥ पूर्वरूपमाह—सदनमिति । सदनमंगानां, शीतकामित्वं शीतेऽभिलाषः, कंठाद्धूमनिर्गम इव वेदनेत्यर्थः । लोहगंधिः ध्मायमानलोहस्येव श्वासे गंधः ॥ ४ ॥ श्लैष्मिकमाह—सांद्रं घनं सपांडु सस्नेहमिति । ईषत्पांडु ईषत्स्नेहम् ॥ वातिकमाह—श्यावेति । तनु अघनम् ॥ ५ ॥ पैत्तिकमाह—रक्तेति । कषायाभं खदिरादिकाथवर्णं, मेचकाभं कृष्णराजिरंजितमणिमसृणीकृत-

**ऊर्ध्वगं कफसंसृष्टमधोगं पवनानुगम् ॥**
**द्विमार्गं कफवाताभ्यामुभाभ्यामनुवर्तते ॥ ७ ॥**

मधुकोशव्याख्या।

त्यादि। कषायाभं वटपटोलादिक्काथवर्णम्। मेचकागारधूमाभमिति मेचकागारधूमानामिवाभा यस्य तत् तथा; मेचकाभम्, आगारधूमाभं च। मसृणीकृत कृष्णमणिवर्णस्येव वर्णो मेचक इति जेज्जटादयः प्राहुः, चिक्कणकृष्ण इत्यर्थः। अञ्जनाभं सौवीराञ्जनवर्णम्। ननु, सर्वमेव रक्तपित्तं दुष्टेन पित्तेन आरभ्यते तत्कथं पैत्तिकं रक्तपित्तमित्युच्यते? सत्यं, किंतु यदा स्वस्थानस्थं पित्तं रक्तपित्तारम्भकं स्थानान्तरावस्थितेन पित्तेन संगृह्यते, किंवा दोषान्तरासंश्लिष्टं केवलं पित्तमारम्भकं, तदा पैत्तिकमिति व्यपदेश इति। ननु, केवलं पैत्तिकं न संभवत्येव, यद्वक्ष्यति—"ऊर्ध्वगं कफसंसृष्टमधोगं पवनानुगम्" इति; न च तस्य निर्दिष्टो मार्गः। उच्यते, यदा स्वकारणोद्भूतेन कफेन वातेन वा स्वलक्षणकारिणा संसृष्टं भवति, तदा श्लैष्मिकादिव्यपदेशः; न तु मार्गसंबन्धानुगतेन कफवातसंबन्धेन। ऊर्ध्वगं हि मार्गसंबन्धमहिम्नाऽवश्यं कफेन, अधोगं चावश्यं वातेन, अनुबध्यते। न च तत्र कफवातौ स्वलक्षणं कुरुतः, यथा शरदि ज्वरकरं पित्तं कालमहिम्नाऽनुगतेन कफेनानुबध्यते तथाऽपि पैत्तिक एवासौ प्राकृतो ज्वरः। यदुक्तं—"कुर्यात्पित्तं च शरदि तस्य चानुबलः कफः" इति। तेन यदा एकदोषलिङ्गयुक्तं भवति तदा एकदोषानुगम्, एवं द्विदोषलिङ्गं त्रिदोषलिङ्गं च बोध्यम्। तेनोर्ध्वगमधोगं चैकद्वित्रिलिङ्गं भवति। एतेन पैत्तिकस्य मार्गो न दर्शित इति यदुक्तं तन्निरस्तमिति ॥ ६ ॥ संसर्गविशेषेण मार्ग-

आतङ्कदर्पणव्याख्या।

कृष्णवस्त्रवर्ण इव वर्णो मेचक इति जेज्जटादयः। चिक्कणकृष्ण इत्यर्थः। अंजनाभं च सौवीरांजनवर्णाभम्। ननु सर्वमेव रक्तपित्तं दुष्टेन पित्तेनारभ्यते तत् कथं पैत्तिकं रक्तपित्तमित्युच्यते? सत्यं, यदा स्वस्थानस्थं पित्तं रक्तपित्तारंभकं स्थानांतरावस्थितेनापि पित्तेन संस्पृशति किंवा दोषांतरासंश्लिष्टं केवलमेव पित्तमित्युच्यते तदा पैत्तिकमिति व्यपदेश इति। ननु, केवलं पैत्तिकं न संभवत्येव यद्वक्ष्यति "ऊर्ध्वगं कफसंसृष्टमधोगं मारुतानुगम्"इति। न च तस्य निर्दिष्टो मार्गः। उच्यते, यदा हि स्वकारणोद्भूतेन कफेन वातेन वा स्वलक्षणकारिणा संसृष्टं भवति, तदा श्लैष्मिकादिव्यपदेशः, न तु मार्गसंबंधत्वागतेन कफवातौ स्वलक्षणं कुरुतः, यथा शरदि ज्वरजनकं पित्तं कालमहिमागतेन कफेनानुबध्यते तथापि पैत्तिकदोषोसौ प्राकृतो ज्वरः। यदुक्तम्-"कुर्यात्पित्तं च शरदि तस्य चानुबलः कफः" इति। तेन यदा एकदोषलिंगयुक्तं भवति तदा एकदोषानुगतम्, एवं द्विदोषलिंगं बोद्धव्यं, तेनोर्ध्वगमधोगञ्च एकद्वित्रिलिंगं भवति। ऐतेन पैत्तिकस्य मार्गो न दर्शित इति यदुक्तं तन्निरस्तमिति ॥ संसर्गसंनिपातजानि रक्तपित्तान्याह—संसृष्टेति। यदा द्विदोषलिंगैरुपलक्षितो भवति तदा द्विदोषजं, यदा च त्रिदोषलिंगैः संसृष्टं मिलितं भवति तदा सान्निपातिकम् ॥ ६ ॥ दोषमिलितत्वेन मार्गमाह—ऊर्ध्वगमिति। यदा कफानुगतं रक्तं पित्तं

ऊर्ध्वं साध्यमधो याप्यमसाध्यं युगपद्गतम् ॥
एकमार्गं बलवतो नातिवेगं नवोत्थितम् ॥ ८ ॥
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ॥
एकदोषानुगं साध्यं द्विदोषं याप्यमुच्यते ॥ ९ ॥
यत्त्रिदोषमसाध्यं स्यान्मन्दाग्नेरतिवेगवत् ॥
व्याधिभिः क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥ १० ॥

---

मधुकोशव्याख्या ।

भेदमाह–ऊर्ध्वगमित्यादि ॥ ७ ॥ मार्गभेदेन साध्यत्वादिकमाह–ऊर्ध्वेत्यादि । ऊर्ध्वं साध्यमिति ऊर्ध्वगस्य कफपित्तसंश्लिष्टत्वेन कषायतिक्तौ रसौ कफपित्तहरौ योग्यौ पित्तहरणे प्रधानं विरेचनं च योग्यम् । अधोगे तु एक एव मधुरो वातपित्तप्रशमनः वमनं च प्रतिमार्गत्वेन वेगमात्रविरोधि, न तु पित्तहरणम् । उभयमार्गं च विरुद्धोपक्रमत्वादेवासाध्यम् । यदुक्तं चरके–"साध्यं लोहितपित्तं तद्यदूर्ध्वं प्रतिपद्यते । विरेचनस्य योग्यत्वाद्बहुत्वाद्भेषजस्य च । विरेचनं हि पित्तस्य जयाय परमौषधम्" इत्यादि । साध्यत्वहेतुमाह–एकमार्गमित्यादि । एकमार्गमत्रोर्ध्वगमभिप्रेतम्, अधोगस्य याप्यत्वात् । नवोत्थितमचिरजम् । सुखे काले हेमन्तशिशिरयोः । निरुपद्रवं वक्ष्यमाणदौर्बल्याद्युपद्रवरहितम् ॥ ८ ॥ दोषभेदेन साध्यत्वादिकमाह–एकदोषानुगं साध्यमित्यादि । मार्गभेददोषभेदाभ्यां साध्यत्वासाध्यत्वविरोधे अर्शस्यभिहितदोषभेदबलिभेदाभ्यां साध्यत्वासाध्यत्ववद्व्याख्येयम् । मन्दाग्नेस्तथा व्याधिभिः

आतङ्कदर्पणव्याख्या ।

भवेत्तदा ऊर्ध्वमार्गेषु प्रवर्तते, यदि च वातानुगं तदाधोमार्गेषु, यदि तु उभाभ्यां कफवाताभ्यां संसृष्टं भवति तदा मार्गद्वयेषु प्रवर्तते । एतेन पैत्तिकस्य मार्गो न दर्शितः । रोगस्य रक्तपित्तप्राधान्यतैव ॥ ७ ॥ मार्गप्रवृत्त्या तस्य साध्यासाध्यत्वमाह–ऊर्ध्वमिति । युगपद्गतम् एककालं मार्गद्वये प्रवृत्तम् । असाध्यत्वे हेतुमाह–एकेति ॥ ऊर्ध्वमार्गमिति । ऊर्ध्वमार्गप्रवृत्तं बलयुक्तस्य पुंसः नातिवेगं मंदवेगं नवोत्थितम् अचिरकालजातम् ॥ ८ ॥ सुखे काले हेमंतशिशिरयोः । निरुपद्रवमिति वक्ष्यमाणदौर्बल्याद्युपद्रवरहितम् ॥ पुनरपि दोषानुसंसृष्टत्वेन साध्यासाध्यत्वमाह–एकदोषानुगमिति । याप्यमप्रतिक्रियं, त्रयो दोषाः प्रकोपहेतवो यस्य तत् त्रिदोषं रक्तपित्तमिति मंदाग्नेस्त क्षीणदेहस्य च

दौर्बल्यश्वासकासज्वरवमथुमदापाण्डुतादाहमूर्च्छा
भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा॥
तृष्णा कोष्ठस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनत्वं
भक्तद्वेषाविपाकौ विकृतिरपि भवेद्रक्तपित्तोपसर्गाः ॥ ११ ॥
मांसप्रक्षालनाभं क्वथितमिव च यत्कर्दमाम्भोनिभं वा
मेदःपूयास्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभम् ॥
यत्कृष्णं यच्च नीलं भृशमतिकुणपं यत्र चोक्ता विकारा-
स्तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥ १२ ॥

मधुकोशव्याख्या ।

क्षीणदेहस्य यदतिवेगवत् तदसाध्यम् । अनश्नतः अरुच्यादिना, अन्नाभावाद्वा॥९॥१०॥ उपद्रवानाह—दौर्बल्येत्यादि । दौर्बल्यं शक्त्युपचययोरभाव इति गयादासः । भुक्ते घोरो विदाह इति षष्ठ्यर्थे सप्तमीति कार्तिकः । हृद्यतुल्येति हृदि अतुल्या असदृशी पीडा कोष्ठस्य भेदः कोष्ठमलस्य भेदः । तपनं तापः । प्रविततशिरस इति पाठान्तरे प्रविततं विस्तीर्यमाणमिव; प्रवितता वेदना शिरसि यस्य स तथेति कार्तिकः । प्रविततशिरतेति पाठान्तरे शिराव्याप्तगात्रता । अविपाक आहारस्य । विकृतिरपि भवेद्रक्तपित्तोपसर्गा इति एते रक्तपित्तस्य उपसर्गा उपद्रवाः, तथा विकृतिरपि भवेदिति योज्यम् । सा च वक्ष्यमाणा मांसप्रक्षालनतोयादिरूपा । रक्तपित्तोपसर्गादिति पाठान्तरं सुगमम् ॥ ११ ॥ असाध्यलक्षणमाह—मांसेत्यादि । क्वथितमिव पूतितां गतमिव । कर्दमाविलमिवाम्भः कर्दमाम्भः, तथा मेदःपूयास्रकल्पमिति कल्पशब्दो मेदः-

आतंकदर्पणव्याख्या ।

यदतिवेगवत्तदसाध्यम् । अनश्नतः अरुच्यादिना, अन्नाभावाद्वा शेषं सुगमम् ॥ ९ ॥ १० ॥ उपद्रवानाह—दौर्बल्यमिति । शक्त्युपचययोरभाव इति गयादासः । वमथुः छर्दिः, मदः धत्तूरादिफलभक्षणवत् । आ समंततः पांडुता, दाहः सर्वांगगतः, मूर्छा चेतनाच्युतिः । भुक्ते घोरो विदाह इति भुक्तस्याहारस्य दारुणो विदाहः, षष्ठ्यर्थे सप्तमीति कार्तिकः ॥ हृद्यतुल्येति । हृदि अतुल्येति छेदः । हृदयेऽतुल्या असदृशी पीडा । कोष्ठस्य भेद इति कोष्ठमलभेदः । शिरसि तपनं तापः । पूतिनिष्ठीवनत्वं पित्तमयोद्गिरणम्, अविपाकः आहारस्य, एते रक्तपित्तस्य उपसर्गा उपद्रवाः । विकृतिरपि भवेदिति । तस्य रक्तपित्तस्य विकृतिरपि भवेदिति योज्यम् ॥ ११ ॥ सा च मांसप्रक्षालनादिरूपा । तस्य विकृतिरूपत्वेनासाध्यत्वमाह—मांसेति । क्वथितमिव पूतितां गतमिति । यकृदिवेति योज्यम् । कर्दमाविलमंभः । अथ वा कर्दमनिभमंभोनिभं वा । अत्र कल्पशब्दो मेदःप्रभृतिभिः

येन चोपहतो रक्तं रक्तपित्तेन मानवः ॥
पश्येद्दृश्यं वियच्चापि तच्चासाध्यमसंशयम् ॥ १३ ॥
लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः ॥
लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः ॥ १४ ॥

इति श्रीमाधवकरविरचिते माधवनिधाने रक्तपित्तनिदानं समाप्तम् ॥ ९ ॥

---

मधुकोशव्याख्या ।

प्रभृतिभिस्त्रिभिः संबध्यते इति गयादासः । यकृदिव यकृत्खण्डमिव । पक्वजम्बूफलाभं स्निग्धकृष्णम् । कृष्णमञ्जनाभम् । नीलं चाषपक्षप्रतिमम् । ननु, पैत्तिके कृष्णत्वं पठितं न च तदसाध्यं ? नैवम्, अतिशब्देनात्र विशेषितत्वात् । तेन तत्र मनाक् कृष्णत्वं बोध्यमिति जेज्जटः, अथ वा जम्बूफलाभं यत् कृष्णं तदिति योज्यम् । उक्ता विकाराः श्वासकासादयः । सुरपतिधनुषा तुल्यं नानावर्णम् । येनेत्यादि । येन रक्तपित्तेनेति योज्यम् । पश्येद्दृश्यं, वियच्चापि अदृश्यमपि वियद्दृश्यमिति पश्यतीति योज्यं, रक्तपित्तोपहतनेत्रत्वादिति । अथ वा दृश्यं घटपटादि, वियच्च रक्तं पश्यतीति । बहुशश्छर्दयेदिति संबन्धः । लोहितोद्गारदर्शीति लोहितोद्गारो लोहितदर्शी च, उद्गारोऽपि लोहितः प्रवर्तते इत्यर्थः, अथ वा लोहितमुद्गारं पश्यतीति लोहितोद्गारदर्शीति ॥ १२-१४ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां रक्तपित्तनिदानं समाप्तम् ॥ ९ ॥

आतङ्कदर्पणव्याख्या ।

त्रिभिः प्रत्येकं संबध्यते । यकृदिव यकृत्पिण्डमिव पक्वजम्बूफलाभं स्निग्धं कृष्णमञ्जनाभं नीलं चापपक्षनिभम् । ननु पैत्तिके कृष्णं पठितं तच्च साध्यं, नैवम्,—अपिशब्देनात्र विशेषितत्वात् । तेन तत्र मनाक्कृष्णत्वं बोद्धव्यमिति जेज्जटः । अथ वा जम्बूफलाभं यत्कृष्णमिति योज्यम् ॥ भृशमिति । अत्यर्थम् । अति सर्वत्र । कुणपं शवगन्धि । यत्र च उक्ता विकाराः श्वासकासादय उपद्रवा भवन्तीति शेषः ॥ सुरपतिधनुषेति । सुरपतिधनुर्वन्नानावर्णमित्यर्थः । एभिः पूर्वोक्तैरुपद्रवैर्युक्तं विकृतैर्वर्णैश्च रक्तपित्तं त्याज्यम् ॥ १२ ॥ असाध्यलक्षणांतरमाह—येनेति । येन रक्तपित्तेन उपहतो मनुष्यः दृश्यं घटपटादिकं वियच्च अरुणं पश्यति स नश्यति । अन्ये 'पश्येद्दूरं वियच्चापि' इति पठंति । अदृश्यमपि वियत् रक्तं पश्यति रक्तपित्तोपहतनेत्रत्वात् ॥ १३ ॥ लक्षणांतरमाह—लोहितमिति । यो बहुशः छर्दयेत् रक्तनयनश्च लोहितोद्गारो लोहितः प्रवर्त्तत इत्यर्थः । अथ वा लोहितमुद्गारं पश्यतीति लोहितोद्गारदर्शी स म्रियते ॥ १४ ॥ इत्यातंकदर्पणे रक्तपित्तनिदानम् ॥ ९ ॥

# अथ राजयक्ष्मक्षतक्षीणनिदानम् १०.

**वेगरोधात्क्षयाच्चैव साहसाद्विषमाशनात् ॥**
**त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥ १ ॥**

मधुकोशव्याख्या ।

राजयक्ष्मरूपेषु पित्ताद्रक्तस्य चागम इति वचनाद्रक्तपित्तानन्तरं यक्ष्मनिदानम् । चिकित्सोपयोगिविप्रकृष्टं कारणं चतुर्विधमाह—वेगरोधादित्यादि । वेगोऽत्र वातमूत्रपुरीषाणां, न तु वेगविधारणीयोक्तानां जृम्भादीनां सर्वेषाम् । यदुक्तं चरके—"ह्रीमत्त्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम् । वातमूत्रपुरीषाणां निगृह्णाति यदा नरः" इत्यादि । क्षयादिति क्षीयते अनेनेति क्षयः, तेनातिव्यवायानशनेर्ष्यादयो धातुक्षयहेतवो गृह्यन्ते । साहसादिति साहसो बलवद्विग्रहादिरुरःक्षतहेतुत्वेन कारणम् । विषमाशनादिति सुश्रुतोक्तद्वादशाशनप्रविचारव्यतिरेकेणोपयोगः, तस्य शीघ्रं स्रोतोरोधकत्वात् । उक्तं हि चरके—"विविधान्यन्नपानानि वैषम्येण समश्नताम् । जनयन्त्यामयान्घोरान्विषमा मारुतादयः ॥ रुद्ध्वा स्रोतांसि धातूनां वैषम्याद्विषमं गताः । दोषा रोगाय कल्पन्ते पुष्यन्ति न च धातवः" इति।त्रिदोष इति मिलितत्रिदोषज एक एव, न तु कारणभेदादनेकः । यदाह सुश्रुतः—"एक एव मतः शोषः सन्निपातात्मको ह्यतः । उद्रेकात्तत्र लिङ्गानि दोषाणां निपतन्ति हि" इति । ननु, वेगरोधादयो वातं प्रकोपयन्ति तज्जनितो यक्ष्मा कथं त्रिदोषज इति चेत् ? उच्यते, वातप्रकोपादेवाग्निदुष्ट्या कफपित्तयोरपि प्रकोप इत्याहुः । हेतुचतुष्टयादित्यनेनासंख्येया अपि हेतव उक्तचतुष्टयेऽन्तर्भवन्तीति दर्शयति । शोषादिनानाशब्दवाच्यत्वेन चास्य सुश्रुतोऽन्वयमकार्षीत् । यथा—"संशोषणाद्रसादीनां शोष इत्यभिधीयते । क्रियाक्षयकरत्वाच्च क्षय

आतङ्कदर्पणव्याख्या ।

राजयक्ष्मरूपेषु पित्ताद्रक्तस्य चागम इति वचनाद्रक्तपित्तनिदानानन्तरं राजयक्ष्मनिदानारम्भः । चिकित्सोपयोगिविप्रकृष्टं कारणचतुष्टयमाह—वेगेति । वेगोत्र वातमूत्रपुरीषाणां न तु श्रमादीनां सर्वेषां, यदुक्तं चरके "ह्रीमत्त्वाद्वा घृणित्वाद्वा भयाद्वा वेगमागतम् । वातमूत्रपुरीषाणां निगृह्णाति यदा नरः॥"इत्यादि । क्षयो धातुक्षयः स च व्यवायानशनासृक्स्रावोपवासादिभिरनेककारणैर्जायते । साहसादिति । साहसो बलवद्विग्रहादिः । विषमाशनादिति "बहुस्तोकमकाले वा ज्ञेयं तद्विषमाशनम्"इति।तस्य शीघ्रं स्रोतोरोधकत्वात् । उक्तं च चरके—"विविधान्यन्नपानानि वैषम्येण समश्नतः । जनयंत्यामयान्घोरान्विषमान्मारुतादयः ॥ रुद्ध्वा स्रोतांसि धातूनां वैषम्याद्विषमं गताः ।दोषा रोगाय जायंते पुष्यंति च न धातवः ॥" त्रिदोष इति । मिलितत्रिदोषजनित एक

कफप्रधानदोषैस्तु रुद्धेषु रसवर्त्मसु ।
अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तराः ।
क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ॥ २ ॥

मधुकोशव्याख्या ।

इत्युच्यते बुधैः ॥ राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः । तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः" इति । वाग्भटे तु-"यक्ष्मणां राजा राजयक्ष्मा" इत्युक्तम् । "राजदन्तादिषु परम्" इति उपसर्जनस्य यक्ष्मशब्दस्य परनिपातः ॥ १ ॥

न केवलं धातुक्षयमात्रादेव यक्ष्मा भवति, अपि तु रसादिवहस्रोतोनिवहनिरोधादिभिरपीति दर्शयितुं विशिष्टां संप्राप्तिमाह-कफेत्यादि । यदा त्वेवं न स्यात्, तदा धातुक्षय एव रोगो; न तु यक्ष्मा । कफः प्रधानं येषामनिलादीनां दोषाणां ते तथा । ननु, दोषैरित्यनेन दोषत्रयमुच्यते कफस्य विशेषणत्वेनोपात्तत्वात् कथं तस्यैवान्यपदार्थवाच्यता ? उच्यते, स्वावयवेन विग्रहः समुदायः समासार्थः, यथा-बहुवृक्षं वनमिति समाधानं, विस्तरस्तु सुश्रुते जेज्जटे द्रष्टव्यः । कफप्रधानता च वेगरोधादिकुपितवातविप्लुताग्निमान्द्यादिना बोद्धव्या । रसवर्त्मसु रसवहधमनीषु, अत्रादिशब्दो द्रष्टव्यः । तेन रक्तादिवहस्रोतोरोधोऽपि बोध्यः । अथ वा रसकारणतया रक्तादीनां रसदुष्टचैव रक्तादिदुष्टिरिति कार्तिकः । इदमत्र सूचितं-यन्मार्गरोधात् हृदयस्थो रसः तत्रैवावस्थितो विकृतो मुखेन निःसरति । यदाह चरकः-"रसः स्रोतःसु

आतंकदर्पणव्याख्या ।

एव,न च कारणभेदादनेकः । उक्तं हि सुश्रुते-"एक एव मतः शोषः सन्निपातात्मको यतः । उद्रेकात्तत्र लिङ्गानि दोषाणां निपतंति हि" इति । असंख्येया अपि हेतव उक्तचतुष्टये एवांतर्भाव्या इति दर्शयति । यस्य शोषादिनानाशब्दवाच्यत्वेनान्वयमेवाकार्षीत् सुश्रुतः । यथा-"संशोषणाद्रसादीनां शोष इत्यभिधीयते । क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते पुनः ॥ राज्ञश्चन्द्रमसो यस्मादभूदेष किलामयः । तस्मात्तं राजयक्ष्मेति केचिदाहुर्मनीषिणः" इति । तंत्रांतरेपि कारणचतुष्टयमुक्तम्"अयथाबलमारंभो वेगसंधारणं क्षयः । यक्ष्मणः कारणं विद्याच्चतुर्थं विषमाशनम्" इति॥१॥

तस्य विशिष्टां संप्राप्तिमाह-कफेति । कफः प्रधानं येषामनिलादिदोषाणां ते तथा । ननु दोषैरिति बहुत्वेन दोषत्रयमुच्यते।तत्कथं कफस्य प्रधानता,उच्यते तस्य प्रधानता च वेगरोधादिक्षुभितवातविप्लुताग्निमांद्यादिना बोद्धव्या।रसवर्त्मसु रसवहधमनीषु अत्रादिशब्दो लुप्तनिर्दिष्टो दृष्टव्यः तेनरक्तादिवहस्रोतोपि बोद्धव्यम्।अथ वा रसकारणतया रक्तादीनां रसदुष्टचैव रक्तादिदुष्टिरिति कार्तिकः।इदमत्र सूचितम्,-यन्मार्गावरोधाद्धृदयस्थो रसो विदह्यते तत्रैवावस्थितो विकृतिबहुलपिच्छिलविस्रहरितपीतश्वेतकासवेगेन मुखमार्गेण निःसरति।यदुक्तं चरके,-"रसः स्रोतस्सु रुद्धेषु स्वस्थानस्थो विद-

**श्वासांगसादकफसंस्रवतालुशोष-**
**वम्यग्निसादमदपीनसकासनिद्राः ॥**
**शोषे भविष्यति भवन्ति स चापि जन्तुः**
**शुक्लेक्षणो भवति मांसपरो रिरंसुः ॥ ३ ॥**

मधुकोशव्याख्या ।

रुद्धेषु स्वस्थानस्थो विदह्यते । स ऊर्ध्वं कासवेगेन बहुरूपः प्रवर्तते" इति । एतेनानुलोमक्षयो दर्शितः, कारणभूतरसधातुक्षये सति रक्तादीनां रसकार्याणां पोषकाभावेन क्षीयमाणत्वात् । प्रतिलोमक्षयं दर्शयितुमाह--अतिव्यवायिनो वेत्यादि । क्षीणे रेतसि सति अनन्तराः समीपगा धातवः क्षीयन्ते; तद्यथा--शुक्रे क्षीणे मज्जा क्षीयते, मज्जनि क्षीणेऽस्थि, एवं पूर्वं पूर्वम् । ननु, कार्यभूतस्य शुक्रस्य क्षयात् कथं कारणभूतानां धातूनां क्षय इति चेत् ? उच्यते, शुक्रक्षयाद्वायुः प्रकुप्यति, यदुक्तं--"वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च" इति । स वायुः सान्निध्यात् मज्जानं शोषयति, एवं पूर्वपूर्वधातून् । दृष्टं च प्रत्यासत्त्याऽपि कार्यजननं, यथा--अग्निसन्तप्तायोगोलकसान्निधानादार्द्रभूभागस्यापि शोषः । तथाच रससंचारपक्षे सुश्रुतवचनं--"पूर्वपूर्वोऽतिवृद्धत्वाद्धर्धयेद्धि परंपरम् । तस्मादतिप्रवृद्धानां धातूनां ह्रासनं हितम्" इति ॥ २ ॥ पूर्वरूपमाह--श्वासेत्यादि । संस्रवः ष्ठीवनम्, पीनसः प्रतिश्यायः । मांसपरो मांसभो-

आतङ्कदर्पणव्याख्या ।

ह्यते । स उर्ध्वं कासवेगेन बहुरूपः प्रवर्तते" इति । एतेनानुलोमक्षयो दर्शितः । कारणभूतरसधातुक्षये सति रक्तादीनां रसकार्याणां पोषकाभावेन क्षीयमाणत्वात् । प्रतिलोमक्षयं दर्शयन्नाह--अतीति । अतिव्यवायिनः अत्यर्थं ग्राम्यधर्मसेविनः । यदि स्त्रीभ्यो न निवर्तते तदा क्षीणे रेतसि क्षीयमाणे शुक्रे अनंतराः समीपस्था धातवः क्षीयंते, तद्यथा शुक्रे क्षीणे मज्जा क्षीयते मज्जनि क्षीयमाणेऽस्थि, एवं पूर्वं पूर्वम् । ननु, रसवर्त्मरोधात् रसो न रक्तस्य बृंहणायालं रक्तापचयान्मांसस्यापचय इत्यादिपूर्वपूर्वधातुक्षीणतया शुक्रक्षयो युक्तः । कार्यभूतशुक्रक्षये पूर्वधातूनां कथं क्षयः? उच्यते, शुक्रक्षयाद्वायुः कुप्यति । यदुक्तं, "वायोर्धातुक्षयात्कोपो मार्गस्यावरणेन च" इति । स वायुः सान्निध्यात् मज्जानं शोषयति । एवं पूर्वपूर्वधातून् । दृष्टं च प्रत्यासन्नतया कार्यजनकत्वम् । यथाग्निसंतप्तायोगोलकसन्निधानादार्द्रभागस्य शोषः । यथा च महाजलाधारपरिक्षये तत्र प्रविशतां जलाशयानां परिक्षयः ॥ २ ॥ पूर्वरूपमाह--श्वासेति । भविष्यति उत्पद्यमाने शोषे श्वासादयो भवंतीति संबंधः । अङ्गसादोंऽगग्लानिः कफसंस्रवः कफष्ठीवनं, मदो धत्तूरफलभक्षणादिव मनोमोहः ।

१ श्वासाङ्गमर्देति पाठान्तरम् ।

स्वप्नेषु काकशुकशल्लकिनीलकण्ठा
गृध्रास्तथैव कपयः कृकलासकाश्च ॥
तं वाहयन्ति स नदीर्विजलाश्च पश्ये-
च्छुष्कांस्तरून्पवनधूमदवार्दितांश्च ॥ ४ ॥
अंसपार्श्वाभितापश्च सन्तापः करपादयोः ॥
ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः ॥ ५ ॥

मधुकोशव्याख्या ।

जनेच्छुः । रिरंसुः स्त्रियं रन्तुमिच्छुः; एतच्च व्याधिमहिम्ना मनोदोषात् । तथा स्वप्नेषु काकादिवाहनं च पूर्वरूपमेव । शल्लकी 'शजारु' इति ख्याता, नीलकण्ठो मयूरः । विजला निर्जलाः । दवो वनाग्निः, अर्दितान् अभिभूतान् । चकारात् तृणकेशनिपातादयो द्रष्टव्याः । यदुक्तं चरके—"पूर्वरूपं प्रतिश्यायो दौःशल्यं दोषदर्शनम् । अदोषेष्वपि भावेषु काये बीभत्सदर्शनम् ॥ घृणित्वमश्नतश्चापि बलमांसपरिक्षयः । स्त्रीमद्यमांसप्रियता प्रियता चावगुण्ठने ॥ यक्ष्मिणां घुणकेशानां तृणानां पतनानि च । प्रायोऽन्नपाने केशानां नखानां चातिवर्धनम् ॥ पतत्रिभिः पतङ्गैश्च श्वापदैश्चाभिधर्षणम्" इति । अत्र श्वापदाः व्याघ्रादयः ॥ ३ । ४ ॥ त्रिरूपसंपन्नमाह—अंसेत्यादि । अंसपार्श्वयोरभितापः पीडा, अंसो भुजस्योपरिभागः, अभितापत्वेन एकं रूपं एवं सन्तापेऽपि वाच्यम् । करपादयोरित्यत्र प्राण्यङ्गत्वादेकवद्भावं मन्यमानाः

आतंकदर्पणव्याख्या ।

पीनसः प्रतिश्यायः । कासहिक्केतिस्थानेऽन्ये पांडुनिद्रेति पठंति पांडुदेहच्छविः । स च पुरुषः शुक्लनयनो भवति । मांसपरो मांसभक्षणकामः । रिरंसुः स्त्रियं रन्तुमिच्छुः एतच्च व्याधिमहिम्ना मनोदोषाद्बोद्धव्यम् । तथा स्वप्ने काकादिवाहनं च पूर्वरूपमेव, शल्लकी गोधानुकारी वज्रशकली सेल्लक इति विख्यातः । नीलकण्ठो मयूरः, कृकलासः सरटः 'गिरगिट' इति पूर्वदेशीया भाषंते । एते तं वाहनीभूय वहंति । विजला निर्जलाः । पवनो वायुः । दवो दावाग्निः । अर्दितान् अभिभूतान् । चकारात् केशतृणादिनिपातादयो भोजने ग्राह्याः । यदुक्तं चरके "पूर्वरूपं प्रतिश्यायो दौर्बल्यं दोषदर्शनम् । अदोषेष्वपि भावेषु काये बीभत्सदर्शनम् ॥ घृणित्वमश्नतश्चापि बलमांसपरिक्षयः । स्त्रीमद्यमांसप्रियता प्रियता चावगुंठने ॥ मक्षिकाघुणकेशादितृणानां पतनानि च । प्रायोन्नपाने केशानां नखानां चाभिवर्द्धनम् ॥ पतत्रिभिः पतंगैश्च श्वापदैश्चापि धर्षणम् । स्वप्ने केशास्थिराशीनां भस्मनश्चाधिरोहणम् ॥ जलाशयानां शैलानां वनानां ज्योतिषामपि । शुष्कतां क्षीयमाणानां पततां चापि दर्शनम् । प्राग्रूपं बहुरूपस्य तज्ज्ञेयं राजयक्ष्मणः" इति । अत्र श्वापदा व्याघ्रादयः ॥ ३ ॥ ४ ॥ त्रिरूपसंपत्तिं दर्शयन्नाह । अंसपार्श्वयोरभितापः पीडा, अंसो भुजस्योपरिभागः, करपादयोरि-

"भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम्।
स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि॥"
स्वरभेदोऽनिलाच्छूलं संकोचश्चांसपार्श्वयोः॥
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः॥ ६॥
शिरसः परिपूर्णत्वमभक्तच्छन्द एव च॥
कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः॥ ७॥
एकादशभिरेभिर्वा षड्भिर्वापि समन्वितम्॥
कासातीसारपार्श्वार्तिस्वरभेदारुचिज्वरैः॥ ८॥

मधुकोशव्याख्या।

काश्मीराः—'तापः पादकरस्य च' इति पठन्ति, 'करपादिकः' इति च पाठान्तरम्। एतत्त्रयं प्रायोभावित्वेन चरकेणोक्तं, तेनैकादशरूपेषु मध्ये अन्यदपि त्रयं बोध्यम्। तथा च भोजः—"कासो ज्वरो रक्तपित्तं त्रिरूपं राजयक्ष्मणि" इति। अन्ये त्वाहुः,—राजयक्ष्मणि यो ज्वरः तस्यैतल्लक्षणमिति। जेज्जटस्तु त्रिरूपसंपत्तिमेव व्याख्यातवान्॥ ५॥ यक्ष्मणस्त्रैदोषिकस्यैकादशरूपाणि विभज्य व्याधिप्रभावाज्जायन्ते, न तु सन्निपातज्वरलिङ्गवत्सर्वदोषैः सर्वाणीत्याह—स्वरभेदोऽनिलादित्यादि। शूलम् अंसपार्श्वयोरेव संकोच एक एव गणनीयः। अभक्तच्छन्दो भक्तारुचिः। उद्ध्वंसः कण्ठभेदः; उत्कासिकेति कार्तिकः॥६॥७॥ असाध्यलक्षणमाह—एकादशभिरित्यादि। एकादशभिरेभिरिति स्वरभेदादिभिः कण्ठोद्ध्वंसान्तैः। षड्भिरिति सुश्रुतेन षड्रूपाणि पठितानि—"भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम्। स्वरभेदश्च जायेत षड्रूपं राजयक्ष्मणि" इति। "कासातिसारपार्श्वार्तिस्वरभेदारुचिज्वरैः" इति तु कस्यचित्तन्त्रस्य षड्रूपाणि माधवेन लिखितानीति[1]। एतानि

आतङ्कदर्पणव्याख्या।

त्यत्र प्राण्यंगत्वेनैकवद्भावं मन्यमानाः काश्मीराः तापः पादकरस्य चेति पठन्ति। संतापः करपादिक इत्यपरे, एतत्त्रयं प्रायोभावित्वेन चरकेणोक्तम्॥ ५॥ इदानीं तस्यैव षड् रूपाणि दर्शयितुमाह—भक्तेति। दोषभेदेनैकादशरूपाणि दर्शयन्नाह—स्वरेति। शूलम् अंसपार्श्वयोः संकोच एक एव। अपरे संलोच इति पठंति। तत्र संलोचो लुंचितमिव अंसयोः पार्श्वयोश्च तेनैवं त्रीणि ज्वरादीनि चत्वारि पित्तेन शिरसः परिपूर्णत्वं कफेनेति शेषः। अभक्तच्छंदो भोजने अश्रद्धा, कंठस्य चोद्ध्वंसः कंठभंगः उद्ध्वंस उत्कासिकेति कार्तिकः॥६॥७॥ एवं चत्वारि कफेन एवमेकादशरूपाणि

१ श्लोकोयं सुश्रुतेन निर्मितो विषयभेदप्रदर्शनाय माधवेन लिखितः।

त्रिभिर्वा पीडितं लिङ्गैः कासश्वासासृगामयैः ॥
जह्याच्छोषार्दितं जन्तुमिच्छन्सुविमलं यशः ॥ ९ ॥
सर्वैरर्धैस्त्रिभिर्वापि लिंगैर्मांसबलक्षये ॥
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्यतोऽन्यथा ॥ १० ॥

---

मधुकोशव्याख्या ।

चैकादश रूपाणि प्रायोभावित्वादुक्तानि अन्यतमरूपपरिहाराद्रूपान्तरयोगेऽपि एकादशत्वं षट्त्वं च स्यादेव, तथाहि चरको निदाने एकादशरूपाणि पठित्वा चिकित्सितेऽपि वेगरोधादिकारणचतुष्टयजे प्रतिकारणं चतुर्धा एकादशरूपाणि पठितानि। यथा— "कासोंसतापो वैस्वर्यं ज्वरः पार्श्वशिरोरुजा । छर्दनं रक्तकफयोः श्वासो वर्चोग्रहोऽरुचिः ॥ रूपाण्येकादशैतानि यक्ष्मणि षडिमानि च । कासो ज्वरः पार्श्वशूलं-स्वरवर्चोग्रहोरुचिः" इति । एकादशवचनेनैवं बोधयाति संपूर्णे यक्ष्मणि एकादशैव रूपाणि भवन्तीति । जह्यादिति बलमांसक्षये सतीति शेषः । तथा च चरकः-"वातव्याधिरपस्मारी कुष्ठी ब्रध्नी चिरज्वरी । गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः ॥ अचिकित्स्या भवन्त्येते बलमांसपरिक्षयात् । स्वल्पेष्वपि विकारेषु भिषगेतान्विवर्जयेत्—" इति । सर्वैरर्धैरित्यादि । ननु, सर्वरूपा-

आतङ्कदर्पणव्याख्या ।

एवं षड्रूपाण्यपि वातादिभेदेन ज्ञेयानि। बहुरूपो राजयक्ष्मा साध्यस्तमाह—एकादशभिरिति। ऐतैरिति[1] स्वरभेदोऽनिलाच्छूलमित्यादिकैरेकादशभिः षड्भिः वापीति भक्तद्वेषो ज्वर इत्यादिभि.षड्भिःअपिशब्दात् त्रिभिर्वा अंसपार्श्वाभितापश्चेत्यादिकैः समन्वितं जह्यात् त्यजेत् शोषान्वितं[2] पुरुषं यक्ष्मिणमिति शेषः । वह्निमांसबलक्षये सतीति बोध्यम् ॥ ८ ॥ ९ ॥ असाध्यलक्षणमाह—सर्वैरिति । सर्वैः एकादशभिः । ननु, सर्वाणि रूपाण्येकादश, एकादशानामर्द्धं सार्द्धपञ्च भवंति तत्र कतमरूपस्यार्धत्वं किंभूतं वा भवति ? उच्यते—एकस्य रूपस्यार्द्धासंभवे षट्पञ्चरूपयोरर्धयोरुत्कृष्टत्वात् षड्रूपमत्रार्द्धो ग्राह्यः । एतैर्लिंगैर्मांसबलक्षयैर्युक्तो[3] वर्ज्य इति संबंधः । मांसबलयोः क्षयैः । क्षयलिङ्गानि सुश्रुतेनोक्तानि । तद्यथा—"मांसक्षयेस्थिगंडोपस्थोरुवक्षःकक्षापिंडिकोदरग्रीवाशुष्कतारौक्षता सादो गात्राणां धमनीशैथिल्यं चेति । बलम् ओजः। "मूर्च्छा मांसक्षयो मोहः प्रलापोज्ञानमेव च । पूर्वोक्तानि च लिङ्गानि मरणं च बलक्षये" इति । अपरे मांसबलक्षये इति पठंति

---

१ एभिर्वेत्यत्र—एतैर्वेति पाठाशयेन । २ शोषान्वितमिति पाठाभिप्रायेण । ३ एतच्च मांसबलक्षयैरिति पाठाभिप्रायेण ।

महाशनं क्षीयमाणमतीसारनिपीडितम् ॥
शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत् ॥ ११ ॥
शुक्लाक्षमन्नद्वेष्टारमूर्ध्वश्वासनिपीडितम् ॥
कृच्छ्रेण बहुमेहन्तं यक्ष्मा हन्तीह मानवम् ॥ १२ ॥
ज्वरानुबन्धरहितं बलवन्तं क्रियासहम् ॥
उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् ॥ १३ ॥

मधुकोशव्याख्या ।

ण्येकादश, एकादशानामर्धं सार्धपञ्च भवन्ति तत्र कतमरूपस्यार्धत्वं किंभूतं वा भवति ? उच्यते, एकस्य रूपस्यार्धत्वासंभवे षट्पञ्चरूपयोरर्धयोरुत्कृष्टत्वात् षड्रूप एवार्धो ग्राह्यः । लिङ्गैर्युक्त इति संबन्धः । अतोऽन्यथेति बलमांसक्षयाभावे सति । महाशनं क्षीयमाणमित्येकमसाध्यलक्षणम्, अरिष्टरूपत्वात् । अतीसारनिपीडितमिति द्वितीयं, यक्ष्मिणो मलायत्तजीवितस्योक्तत्वात् । शूनमुष्कोदरमिति तृतीयं, मुष्कशोथस्य विरेकसाध्यत्वेन विरुद्धोपक्रमत्वात् । शुक्लेत्यादि—शुक्लाक्षत्वादयः एकैकशोऽसाध्यलक्षणानि ॥ ८–१२ ॥ चिकित्स्यत्वमाह—ज्वरेत्यादि । उपक्रमेत् चिकित्सेत् । अकृशमित्यनेन वयःस्थोऽपि प्रत्याख्यायोपक्रम्यत इति

आतंकदर्पणव्याख्या ।

तत्र मांसबलक्षये सतीति योज्यम् । अतोन्यथेति मांसबलक्षयेऽसतीति । एतेन बलमांसाभियुक्तः प्रत्याख्येयचिकित्स्यः सर्वरूपोऽपि ॥ १० ॥ अपरमसाध्यलक्षणमाह—महाशिनमिति[1] । महाशिनं बह्वाशिनमपि क्षीयमाणं मांसबलाभ्यां क्षीणमरिष्टत्वात् । अतीसारनिपीडितम् अतीसारयुक्तम् । उक्तं च "मलायत्तं बलं पुंसां शुक्रायत्तं तु जीवितम् । तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥" शूनमुष्कोदरं शोफयुक्तं मुष्क उदरं च मुष्कशोथस्य विरेकसाध्यत्वेन विरुद्धोपक्रमत्वात् । महाशिनं क्षीयमाणमित्येकमसाध्यलक्षणम् । अतीसारनिपीडितमिति द्वितीयं शूनमुष्कोदरमिति तृतीयम् ॥ ११ ॥ अथ चिकित्स्यमाह उपक्रमेदिति[2] । उपक्रमेत् चिकित्सेत् अकृशमित्यनेन वयस्थोपि प्रत्याख्यायोपक्रम्य इति सूच्यते । यदुक्तमन्यत्र "परं दिनसहस्रं तु यदि जीवति मानवः । सुभिषग्भिरुपक्रांतस्तरुणः शोषपीडित" इति । वर्ज्यमाह

१ एतच्च महाशिनमिति पाठाभिप्रायेण ॥

२ "उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् । शुक्लाक्षमन्नद्वेष्टारमूर्ध्वश्वासनिपीडितम् ॥ कृच्छ्रेण बहुमेहन्तं यक्ष्मा हन्तीह मानवम् ॥" एतत्पाठाभिप्रायेणेयं व्याख्या ॥

व्यवायशोकवार्धक्यव्यायामाध्वप्रशोषितान् ॥
व्रणोरःक्षतसंज्ञौ च शोषिणौ लक्षणैः शृणु ॥ १४ ॥
व्यवायशोषी शुक्रस्य क्षयलिंगैरुपद्रुतः ॥
पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः ॥ १५ ॥
प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः ॥
जराशोषी कृशो मन्दवीर्यबुद्धिबलेन्द्रियः ॥ १६ ॥

मधुकोशव्याख्या ।

सूच्यते । यदुक्तमन्यत्र—"परं दिनसहस्रं तु यदि जीवति मानवः । सुभिषग्भिरुपक्रान्तस्तरुणः शोषपीडितः" इति ॥ १३ ॥ व्यवायादिजनितधातुशोषमात्रेण राजयक्ष्मत्वं निरसन्नाह—व्यवायेत्यादि । यदुक्तं सुश्रुते—"केषांचिदेव शोषो हि लक्षणैर्भेदमागतः । न तु त्रिदोषलिङ्गानां समस्तानां निपातनम् । क्षया एव हि ते ज्ञेयाः केवलं धातुसंज्ञिताः" इति । वृद्धस्य भावो वार्धक्यमिति स्वार्थे ष्यञिति कार्तिकः ॥ १४ ॥ व्यवायशोषिणो लक्षणमाह—व्ययायेत्यादि । शुक्रस्य क्षयलिङ्गैरिति सुश्रुतोक्तैः । तद्यथा—"शुक्रक्षये मेढ्रवृषणवेदना, अशक्तिर्मैथुने चिराद्वा प्रसेकः प्रसेके चाल्पदर्शनं रक्तस्य शुक्रस्य वा" इति ॥ १५ ॥ शोकशोषिणो लक्षणमाह—प्रध्यानेत्यादिना । शोकशोष्यपि तादृश इति शुक्रस्य

आतङ्कदर्पणव्याख्या ।

शुक्राक्षमिति । कृच्छ्रेण बहुमेहन्तमिति कष्टेन बहुतरं मुखेन मलमिति शेषः । एतेनाहारस्य मलभावः कथितः । यस्य चातिशयो मलो निष्पद्यते तस्य मांसरक्तक्षयो भवति स पुनरसाध्यः स्यात् । इत्थंभूतं नरं शुक्राक्षत्वाद्युपद्रवसहितं यक्ष्मा हंतीति संबंधः । इहेत्यस्मिन् शास्त्रे शुक्राक्षत्वादय एकैकशोप्यसाध्यलक्षणानि बोद्धव्यानि ॥ १२ ॥ १३ ॥ व्यवायादिजनितशोषमात्रेण राजयक्ष्मत्वं निरस्यन्नाह—व्यवायः स्त्रीसेवा, शोकः पुत्रादिवियोगेन चित्तोद्वेगः, वार्द्धक्यं वृद्धत्वं, व्यायामः, शरीरायासजननं दीर्घमार्गाटनम् व्रणं क्षतम् उरःक्षतमुरोंतरभिघातजनितव्रणम् । यक्ष्मणो लक्षणैरिति तल्लिंगैः न तु यक्ष्मैव यदुक्तं सुश्रुते-"केषांचिदेवं शोषो हि कारणैर्भेदमागतः । न तु त्रिदोषलिंगानां समस्तानां निपातनम् । क्षया एव हि ते ज्ञेयाः प्रत्येकं धातुसंक्षयात् ॥"इति ॥ १४ ॥ व्यवायशोषिणो लक्षणमाह—व्यवायेति । शुक्रक्षयलिंगैरिति सुश्रुतोक्तैः शुक्रक्षये मेढ्रवृषणवेदनाशक्तिर्मैथुने चिराद्वा प्रसेकः प्रसेके, चाल्पशुक्रदर्शनं रक्तस्य चेति । यथापूर्वं धातवः क्षीयंते तत्र शुक्रस्य पूर्वो मज्जा मज्ज्ञोस्थि अस्थ्नो मेदः मेदसो मांसं मांसस्य रक्तमित्येवं परं यदि स्त्रीभ्यो न निवर्त्तते ॥ १५ ॥ शोकशोषमाह—प्रध्यानशीलः चिंतापरः स्रस्तांगः अवसन्नगात्रः तादृश इति पांडुदेहः । शुक्रक्षयलक्षणव्यतिरिक्तस्य शुक्रक्षय

१ एतच्च यक्ष्मणो लक्षणैः शृणु—एतत्पाठाभिप्रायेण ।

**कम्पनोऽरुचिमान्भिन्नकांस्यपात्रहतस्वरः ॥**
**ष्ठीवति श्लेष्मणा हीनं गौरवारतिपीडितः ॥ १७ ॥**
**संप्रस्रुतास्यनासाक्षः शुष्करूक्षमलच्छविः ॥**
**अध्वशोषी च स्रस्तांगः संभृष्टपरुषच्छविः ॥ १८ ॥**
**प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः ॥**
**व्यायामशोषी भूयिष्ठमेभिरेव समन्वितः ॥**
**लिंगरुरःक्षतकृतैः संयुक्तश्च क्षतं विना ॥ १९ ॥**

---

मधुकोशव्याख्या ।

क्षयलक्षणव्यतिरिक्तेन शुक्रशोषलिङ्गेन युक्तः, यथोक्तं सुश्रुतेन—"विनाशुक्रक्षयकृतैर्विकारैरुपलक्षितः" इति ॥ वार्धक्यशोषिणो लक्षणमाह—ज्वरेत्यादि । कम्पनः कंपयुक्तः । भिन्नस्य भग्नस्य कांस्यपात्रस्य हतस्य दण्डादिनेव स्वरो यस्य स तथा । ष्ठीवति श्लेष्मणा हीनमिति श्लेष्महरणाय यत्ने कृतेऽपि न श्लेष्मनिःसरणम् । शुष्करूक्षमलच्छविरिति शुष्करूक्षे यथाक्रमं मलच्छवी यस्य स तथा ॥ १६॥१७॥ अध्वशोषिणो लक्षणमाह—अध्वेत्यादि । संभ्रष्टस्येव भर्जितस्येव परुषा छविर्वर्णो यस्य स तथा । प्रसुप्तः स्पर्शानभिज्ञः । क्लोमः पिपासास्थानं, क्लोमस्थाने ताल्विति पाठान्तरम् ॥ १८ ॥ व्यायामशोषिणो लक्षणमाह—व्यायामेत्यादि । एभिरिति स्रस्ताङ्गत्वादिभिरध्वशोषलक्षणैः, अध्वनो व्यायाममात्रसामान्यात्, भूयिष्ठमत्यर्थम्,

आतङ्कदर्पणव्याख्या ।

लेक्षणैः जराशोषिणमाह—जरेति । मंदशब्दो वीर्यादिभिः प्रत्येकं संबध्यते । वीर्यं शक्तिः बलमोजो हृदि स्थितं सप्तधातूनां धाम कंपनः कंपयुक्तः भिन्नस्य स्फुटितस्य कांस्यपात्रस्य दंडादिना हतस्येव स्वरो यस्य स तथा ष्ठीवति श्लेष्मणा हीनमिति श्लेष्महरणाय बले कृतेपि न श्लेष्मनिःसरणम्, अरुचिपीडित इति पुनररोचकग्रहणमत्यन्तमरोचकताख्यापनार्थम्। संप्रस्रुतशब्द आस्यादिभिः संबध्यते । आस्यं मुखकुहरमक्षि लोचनं शुष्करूक्षमलच्छविरिति शुष्करूक्षे यथाक्रमं मलच्छवी यस्य स तथा—अध्वशोषिणमाह—स्रस्तांगः शिथिलगात्रः संभृष्टस्येव भर्जितस्येव छविर्वर्णो यस्य स तथा ॥ १६—१८ ॥ प्रसुप्तगात्रावयव इति । प्रसुप्तः स्पर्शानभिज्ञः अकर्मण्यः शरीरप्रदेशो यस्य तथोक्तः शुष्कशब्दः क्लोमादिभिः प्रत्येकं संबध्यते, क्लोम पिपासास्थानं हृदये क्लोमस्थाने ताल्विति पाठांतरम् । यद्यपि यथोद्देशं जराशोष्यनंतरं व्यायामशोषी वाच्यो नाध्वशोषी

---

१ एतच्च विनाशुक्रक्षयकृतैर्विकारैरुपलक्षित इत्यधिकपाठाभिप्रायेण ।
२ एतच्च गौरवारुचिपीडित इति पाठाभिप्रायेण ।

**रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात् ॥**
**व्रणितस्य भवेच्छोषः स चासाध्यतमो मतः ॥ २० ॥**

मधुकोशव्याख्या ।

अध्वशोषेऽल्पानि लक्षणानि व्यायामजे तु महान्तीत्यर्थः । तथा स एवोरःक्षतैर्लिङ्गैः सह युक्तः क्षतं विनेति सुगमः पाठः । गदाधरस्तु-लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना" इति पठति, व्याचष्टे च-उरःक्षतेन व्यायामभाराध्ययनद्रुतयानादिहेतुना यः कृतः शोषः सोऽप्येभिरेवाध्वशोषलिङ्गैर्भूयिष्ठं संयुक्तः, क्षतं क्षतकार्यं विना-क्षतकार्यं तु सुश्रुते यथा-"तस्योरसि क्षते रक्तं पूयः श्लेष्मा च गच्छति" इत्यारभ्य "भिन्नवर्णस्वरो नरः" इत्यन्तमेतान्येव लक्षणानि क्षतेऽधिकानि उरःक्षतकारणव्यायामभारादिकृतशोषस्य लक्षणमेव भूयिष्ठं यत्तदेवोरःक्षतकारणमात्रत्वा, दध्वनोऽपीत्यर्थः । अथ वा क्षतं विना व्रणं विना उरःक्षतनिमित्तभाराध्ययनादिनाऽतिमात्रेण यः कृतः शोषः सोऽपि एभिरेवात्यर्थाध्वशोषलिङ्गैः समन्वित इति प्रकृतेन संबन्धः । सव्रणस्य तु वक्ष्यमाणमेव लक्षणमिति ॥ १९ ॥ कारणत्रयेण व्रणशोषलक्षणमाह-रक्तक्षयादित्यादि । वेदना व्रणवेदना; आभिरपि भयशोकवन्मनःक्षोभाद्वातप्रकोपादेव शोषः । स चासाध्यतम इति स्वार्थिकस्तमप्,

आतङ्कदर्पणव्याख्या ।

तथाप्यध्वशोषिणो लक्षणानां व्यायामशोषिण्यतिदेशात् पूर्वमत्राध्वशोषी निर्दिष्टः । यद्येवं तर्हि व्यायामशोषिलक्षणान्येव कुतोऽध्वशोषिणि नातिदिश्यन्ते । सत्यम्, उरःक्षतलिंगानामधिकानां व्यायामशोषिणि सद्भावात् । अथोद्देश एवाध्वशोषी कस्मान्नादावुक्त इति चेत्-छन्दोनुरोधात् । केचिदत्र तृडंगवल्पारुष्यारतितोदनैरिति पठंति तत्रापि स एवार्थः । व्यायामशोषिणो लक्षणमाह-एभिरिति । स्रस्तांगत्वादिभिरनंतरोक्तैरेवाध्वप्रशोषिलक्षणः भूयिष्ठमत्यर्थम् अध्वशोषे अल्पानि लिंगानि, व्यायामजे तु महांतीत्यर्थः । स एवोरःक्षतकृतैः संप्रयुक्त इति सुगमः पाठः । गदाधरस्तु-लिंगैरुरःक्षतकृतैः संयुक्तश्च क्षतं विनेति पठति । व्याचष्टे च उरःक्षतेन व्यायामभाराध्ययनद्रुतपृष्ठ्यानादिहेतुना यः श्लेष्मशोषः सोप्येभिरेवाध्वशोषलिंगैर्भूयिष्ठः संयुक्तः क्षतं विना क्षतकार्यं विना, क्षतकार्यं तु सुश्रुते यथा "तस्योरसि क्षते रक्तं भूयः श्लेष्मा च गच्छति ।कासमानश्छर्दयेच्च पीतरक्तासितारुणम् ॥ संतप्तवक्षसोत्यर्थं दयनात्परिताम्यति । दुर्गंधोच्छ्वासवदनो भिन्नवर्णस्वरो नरः" ॥ १९ ॥ व्रणशोषिणमाह-रक्तेति । रक्तातिस्रुतेः वेदनाः व्रणवेदनाः ताभिरपि भयशोकवन्मनःक्षोभाद्वातप्रकोपादेव शोषः स चासाध्यतमः । अथ वा याप्यापेक्षया असाध्यतमः असाध्यतम-शब्देन प्रत्याख्येय उच्यते । याप्यस्यासाध्यरूपत्वात् । एवं सति "कृशानां व्रणशोषिणाम्" बृंहणीयो विधिः कार्यः । इति सुश्रुतेनैवोक्तम् । तथा च

धनुषाऽऽयस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ॥
युध्यमानस्य बलिभिः पततो विषमोच्चतः ॥ २१ ॥
वृषं हयं वा धावन्तं दम्यं वाऽन्यं निगृह्णतः ॥
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान् ॥ २२॥
अधीयानस्य वाऽत्युच्चैर्दूरं वा व्रजतो द्रुतम् ॥
महानदीर्वा तरतो हयैर्वा सह धावतः ॥ २३ ॥
सहसोत्पततो दूरं तूर्णं वाऽपि प्रनृत्यतः ॥
तथाऽन्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य वा ॥ २४ ॥
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्यते ॥
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिनः ॥ २५ ॥
उरो विरुज्यतेऽत्यर्थं भिद्यतेऽथ विभज्यते ॥
प्रपीड्येते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते ॥ २६ ॥

---

मधुकोशव्याख्या ।

यथा—'युधिष्ठिरः श्रेष्ठतमः कुरूणाम्' इति । अत्रेष्ठनैवातिशायिकप्रत्ययेन प्रशस्ततमत्वस्य प्रतिपादितत्वात् । अथवा याप्यापेक्षयाऽसाध्यतमत्वेन प्रत्याख्येयत्वमुच्यते, याप्यस्याप्यसाध्यत्वात् । ननु, एवं सति "कृशानां व्रणशोषिणाम्। बृंहणीयो विधिः कार्यः" इति सुश्रुतेनैवोक्तं चिकित्सितं विरुध्यते? उच्यते, प्रबलशोषे प्रत्याख्येयत्वं, नातिप्रबले चिकित्साविधानमिति समर्थनीयम् । चान्द्रिकाकारस्तु 'स चासाध्यतमः स्मृतः' इत्यस्य स्थाने 'याप्यासाध्यतमस्तु सः' इति पठति, चिकित्सायां बृंहणविधेरभिधानात् ॥ २० ॥ शोषनिदानेनैव साहसादिना उरःक्षतस्य संभवात्, उरः-

आतङ्कदर्पणव्याख्या ।

प्रबलशोषे प्रत्याख्येयत्वं, नातिप्रबले चिकित्साविधानमिति ॥ २० ॥ सनिदानमुरःक्षतमाह—धनुषेति । आयासं कुर्वतो नरस्येति शेषः । आयम्यत इति पाठांतरं विस्तार्य्यमाणहृदयस्य दम्यं दमनार्हं वृषादिकमेव बलवत्तरमित्यर्थः । अथ वा गजोष्ट्रादिकं निगृह्णतो विधारयतः शिला दीर्घपाषाणः । अश्म तदितरप्रस्तरखंडः, निर्घातोऽस्त्रविशेषः किं वा शिलादिना प्रेरणविशेषोऽतिबलसंपादितः तान् क्षिपतः परान् शत्रून् अधीयानस्य उच्चैः पठतः दूरं वा व्रजतो द्रुतमिति शीघ्रं दूरं गच्छतः महानदीं तरतः बाहुभ्यामिति शेषः । तूर्णं शीघ्रमतिनृत्यतः अन्यैः कर्मभिः क्रूरैरिति मल्लयुद्धादिभिरभ्याहतस्य क्रूरैरिति शत्रुभिरित्यन्ये । विक्षते विदारिते वक्षसि हृदि व्याधिरिति उरःक्षतलक्षणः । अथवा व्याधिर्वायुर्दोषा अपि व्याधिशब्दं लभंते इत्याग-

**क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते ॥**
**ज्वरो व्यथा मनोदैन्यं विड्भेदाग्निवधावपि ॥ २७ ॥**
**दुष्टः श्यावः सुदुर्गन्धः पीतो विग्रथितो बहुः ॥**
**कासमानस्य चाभीक्ष्णं कफः सासृक् प्रवर्तते ॥ २८ ॥**

---

मधुकोशव्याख्या ।

क्षतेनापि शोषसंभवात्, शोषाधिकारे मनिदानमुरःक्षतमाह—धनुषेत्यादि । आयस्यत इति आयासं कुर्वतो नरस्य, आयम्यत इति पाठान्तरे विस्तीर्यमाणहृदयस्य । दम्यं दमनार्हं वृषादिकमेव बलवन्तमित्यर्थः । अन्यं वा गजोष्ट्रादिकं निगृह्णतः विधारयतः । शिला दीर्घशिला, अश्मा तदितरप्रस्तरखण्डः, निर्घातोऽस्त्रविशेषः, किंवा निर्घातः शिलादीनां प्रेरणविशेषोऽतिबलसंपादितः । निघ्नतः परान् शत्रून् ताडयतः । अधीयानस्य पठतः । महानदीस्तरत इति बाहुभ्यामिति शेषः । तूर्णं शीघ्रम् । तथाऽन्यैः कर्मभिः क्रूरैर्मल्लयुद्धादिभिरभ्याहतस्य, क्रूरैरिति शत्रुभिरित्यन्ये । एषां कारणानां मध्ये किंचिन्निखिलदेहस्याऽऽयासकरं, किंचिदुरस एवेति बोद्धव्यम् । व्याधिरिति उरःक्षतलक्षणः, अथवा व्याधिर्वायुः, दोषा अपि व्याधिशब्दं लभन्त इत्यागमादिति जेज्जटः । उरो विरुज्यते भज्यत इव, भिद्यते विदीर्यत इव, विभज्यते द्विधा क्रियत इव; विदह्यत इति पाठान्तरमसङ्गतं, कारणाभावात् टीकाकारैरव्याख्यातत्वाच्च । वीर्यं शक्तिः । बलं मांसोपचयः । विड्भेदोऽग्निवधादपीति पाठान्तरे अग्निवधाद्धेतोर्विड्भेदो भवतीत्यर्थः । अपिशब्दात् व्याधिमहिम्ना विनाऽपि अग्निवधाद्विड्भेदो भवतीत्याहुः । दुष्टो व्यापन्नः, तदेव विवृणोति—श्याव इत्यादि । विग्रथितो विशेषाद् ग्रथितः, विबद्ध इति जेज्जटः । स पुरुषः, क्षती उरःक्षतवान्, क्षीयते धातु-

आतङ्कदर्पणव्याख्या ।

र्मांदिति जेज्जटः । बलवान् समुदीर्यते उत्कट उत्पाद्यते ॥ उरःक्षतक्षीणत्वे परमपि कारणमाह—स्त्रीष्विति । रूक्षश्चणकादिः अल्पं स्तोकं प्रमितमकालभोजनम् उरो विरुज्यते रुज्यत इव भिद्यत इव शूलेन विभज्यते द्विधा क्रियत इव विदह्यत इति पाठांतरम् ॥ २१—२६ ॥ वीर्यं शक्तिर्बलं-मांसोपचयलक्षणं, वर्णो गौरादिः, व्यथा अंगानां मनोदैन्यं मनोग्लानिः, अग्निवधोऽन्नक्षमावः विड्भेदोऽग्निवधादपीति पठंति व्याख्यानयंति च अग्निवधाद्धेतोर्विड्भेदो भवतीत्यर्थः । अपिशब्दाद्व्याधिमहिम्ना विनाप्यग्निवधात् विड्भेदो भवतीत्याहुः । दुष्टो व्यापन्नः विग्रथितो विशेषात् ग्रंथिलः

स क्षती क्षीयतेऽत्यर्थं तथा शुक्रौजसोः क्षयात् ॥
अव्यक्तलक्षणं तस्य पूर्वरूपमिति स्मृतम् ॥ २९ ॥
उरोरुक् शोणितच्छर्दिः कासो वैशेषिकः क्षते ॥
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटीग्रहः ॥ ३० ॥
अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः ॥
परिसंवत्सरो याप्यः सर्वलिङ्गं तु वर्जयेत् ॥ ३१ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने राजयक्ष्मक्षतक्षीण-निदानं समाप्तम् ॥ १० ॥

---

मधुकोशव्याख्या ।

शोषमाप्नोति । न केवलं क्षतादेव क्षीयते किं तर्हि स्त्रीसेवादिना शुक्रौजसोः क्षयादपी-त्याह—तथेत्यादि ॥ २१–२८ ॥ पूर्वरूपमाह—अव्यक्तेत्यादि ॥ २९ ॥ क्षतक्षीणयो-रसाधारणलक्षणमाह—उरोरुगित्यादि । वैशेषिको विशिष्टः कासः, स च विशेष उक्तः दुष्टश्यावादिकफसंयुक्तत्वम्; किंवा वैशेषिक उद्भूतः । क्षत इति छेदः । क्षीण इति क्षय इत्यर्थः ॥ ३० ॥ तयोः साध्यलक्षणमाह—अल्पेत्यादि ॥ ३१ ॥ इति श्रीविजय-रक्षितकृतायां मधुकोशव्याख्यायां राजयक्ष्मक्षतक्षीणनिदानं समाप्तम् ॥ १० ॥

आतङ्कदर्पणव्याख्या ।

विनिबद्ध इति जेज्जटः । कफः सास्रैः प्रवर्त्तेत इति रुधिरयुक्तं कफं ष्ठीवते सास्र इत्यत्र सांद्र इति पाठांतरम् तत्र सांद्रो घनः, एभिः कारणैः सक्षतः क्षतवान् सतत इतिपाठे स पुरुषः तत उरः-क्षतादत्यर्थं क्षीयते धातुशोषमाप्नोतीत्यर्थः । न केवलं क्षतादेव क्षीयते किंतर्हि स्त्रीसेवादिना शुक्रौ-जसोः क्षयादपि पूर्वरूपमाह क्षतक्षीणयोरसाधारणं लक्षणमिदं तस्य क्षतस्य लक्षणमव्यक्तमप्रकटं क्षते उरःक्षते । कासो वैशेषिक इति विशिष्टः कासः क्षीणकासापेक्षया अधिक इत्यर्थः । क्षीणस्य—रूपमाह क्षीण इति । शुक्रौजसोः क्षये तु सरक्तमूत्रादिरुपद्रवः वैशेषिकः विशिष्टः कास इति अस्मिन् लक्षणे संबध्यते ॥ २७–३० ॥ उरःक्षते साध्ययाप्यासाध्यत्वमाह अल्पलिंगस्य अल्पलक्षणस्य ॥ ३१ ॥ इत्यातंकदर्पणे निदानव्याख्यायां राजयक्ष्मनिदानम् ॥ १० ॥

---

१ एतच्च सास्रमितिपाठाभिप्रायेण ।

# अथ कासनिदानम् ११.

धूमोपघाताद्रसतस्तथैव व्यायामरूक्षान्ननिषेवणाच्च ॥
विमार्गगत्वाच्च हि भोजनस्य वेगावरोधात् क्षवथोस्तथैव॥१॥
प्राणो ह्युदानानुगतः प्रदुष्टः स भिन्नकांस्यस्वनतुल्यघोषः ॥
निरेति वक्त्रात्सहसा सदोषो मनीषिभिः कास इति प्रदिष्टः ॥२॥

मधुकोशव्याख्या ।

क्षयरूपे कासपाठात् कासापेक्षया च क्षयोत्पत्तिः, अतस्तदनन्तरं कासनिदानमाह— धूमोपघातादित्यादि । धूमेन मुखनासाप्रविष्टेनोपघातो धूमोपघातः । रसत इति वातेनोर्ध्वं नीतादामरसात्, रजस इति पाठान्तरे मुखनासाप्रविष्टधूलेरित्यर्थः । विमार्गगत्वाच्च हि भोजनस्यातिद्रुताभ्यवहारादिना, चशब्दः समुच्चये, हि पादपूरणे । वेगावरोधादिति पुरीषादेः, तेन हि वायुरूर्ध्वगः स्यात् । क्षवथोस्तथैवेति वेगावरोधादिति संबन्धः । प्राणो वायुरुदानेन दुष्टेनानुगतो वक्त्रान्निरेति । स वायुः भिन्नकांस्यपात्रवत् हतस्वनः कास इति प्रदिष्टः । सदोषः सकफपित्तः, वातिकपैत्तिकादिभेदाद्विकृति वा । एतेनैव समानस्थाननिदानाभ्यां हिक्काश्वासाभ्यामस्य भेदः, न हि तत्र वातिकपैत्तिकादिभेदेन व्यपदेश इति गदाधरः । कसति शिरःकण्ठादूर्ध्वं गच्छति वायुरिति कासः, 'कस' गतौ इत्यस्मात् 'कसनात् कासः' इति चरके पाठात् ।

आतङ्कदर्पणव्याख्या ।

क्षयरूपे कासपाठात् तदनंतरं कासनिदानमाह—धूमेति । धूमेन मुखनासाप्रविष्टेन उपघातो धूमोपघातः, रजसेति । रजसा मुखनासाप्रविष्टेन तथैव रसत इति पाठांतरं तत्र रसो जलं व्यायाम आयासः रूक्षान्नं चणकादि विमार्गगत्वादिति भोजनस्य अतिद्रुताभ्यवहारादिना वेगावरोधादिति संबंधः ॥१॥ तस्य संप्राप्तिमाह-प्राण इति । प्राणो वायुर्दुष्टः उदानेन दुष्टेनानुयातः वक्त्रान्निरेति गच्छति स दोषो रोगः कास इति प्रदिष्टः।कार्ये कारणोपचारात् दोषो रोग इति संज्ञा । किंविशिष्टः स दोषः भिन्नकांस्यपात्रस्वनः भग्नकांस्यपात्रस्वनः स वातपित्तकफभेदैर्भिन्न इति तस्य निरुक्तिः । कास इति कासृ दीप्ताविल्यस्माद्धातोः । कासतिः अनेकार्थत्वात्प्राप्त्यर्थः अप्रत्ययांतः शिरः कंठस्योर्ध्वगतिं वायु नयति । अथवा कासनं कास इति घञः "कसनात्" कास इति चरकपाठात् कसगताविति धातुः ।

१ एतच्च, धूमोपघाताद्रजसेति पाठाभिप्रायेण ।

२ दीप्त्यर्थकदन्त्यसकारघटितकासृधातोरनुपलब्धेः, अन्तर्भावितणिजर्थस्यावश्यकत्वात्, प्रमाणभूतसुश्रुतवाक्यव्यवहितत्वात्तत्रक्वचित्कशब्दार्थककासृधातोरभ्युपगमात् गत्यर्थसाधकं "कस" धातोर्वर्त्तमानत्वाच्च चिन्त्य इव प्रतिभात्ययं ग्रन्थः ।

पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ॥
क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम्॥ ३ ॥
पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता ॥
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ॥ ४ ॥
हृच्छङ्खमूर्ध्वोदरपार्श्वशूली क्षामाननः क्षीणबलस्वरौजाः ॥
प्रसक्तवेगस्तु समीरणेन भिन्नस्वरः कासति शुष्कमेव ॥ ५ ॥
उरोविदाहज्वरवक्त्रशोषैरभ्यर्दितस्तिक्तमुखस्तृषार्तः ॥
पित्तेन पीतानि वमेत्कटूनि कासेत्सपाण्डुः परिदह्यमानः ॥६॥
प्रलिप्यमानेन मुखेन सीदन् शिरोरुजार्तः कफपूर्णदेहः ॥
अभक्तरुग्गौरवकण्डुयुक्तः कासेद्भृशं सान्द्रकफः कफेन ॥ ७ ॥

---

मधुकोशव्याख्या ।

कासनं कास इति वा, "भिन्नस्वरः कासति शुष्कमेव" इति सुश्रुतदर्शनात् ॥१॥२॥ संख्यामाह—पञ्चेत्यादि । पञ्चकासा इति संख्येयनिर्देशादेव संख्यायां लब्धायां पञ्चग्रहणं जराकासस्य दोषजेष्वन्तर्भूतस्याधिकत्वनिरासार्थम्, पञ्चानामपि वा क्षयकारणत्वप्रतिपादनार्थमिति । क्षयाय धातुक्षयाय ॥ ३ ॥ पूर्वरूपमाह—पूर्वेत्यादि । भोज्यानामवरोध इत्यरुचिरभ्यवहारासामर्थ्यं वा ॥ ४ ॥ वातिककासस्वरूपमाह—हृदित्यादि । शंखो ललाटैकदेशः । क्षामाननः शुष्कमुखः, वातेन शोषणात् । प्रसक्तवेगः सततकासवेगः । शुष्कमिति श्लेष्मादिष्ठीवनरहितम् ॥ ५ ॥ पैत्तिककासमाह उर इत्यादि । अभ्यर्दितः पीडितः ॥ ६ ॥ कफजकासमाह—प्रलिप्यमानेनेत्यादि ।

आतङ्कदर्पणव्याख्या ।

"भिन्नस्वरः कासति शुष्कमेव"इति सुश्रुतवचनात् ॥२॥ तस्य संख्यामाह-पंचेति । संख्येयनिर्देशादेव संख्यायां लब्धायां पंचग्रहणं जराकासस्य दोषजेष्वंतर्भूतस्याधिकत्वनिरासार्थम् । उपेक्षिताश्चेत् अप्रतिक्रियमाणाः क्षयाय धातुक्षयाय भवंति उत्तरोत्तरमिति वाताप्पैत्तिकः पैत्तिकात् श्लैष्मिकः तस्मात्क्षतजो बली तस्मात् क्षयजः ॥ ३ ॥ तस्य पूर्वरूपमाह—शूको धान्याग्रसूक्ष्मकंटकाकारः भोज्यानामवरोध इति । अभ्यवहरणासामर्थ्यम् ॥ ४ ॥ वातिककासरूपमाह—हृदिति । शंखो ललाटैकदेशः क्षामाननः शुष्कमुखः वातशोषणात् क्षीणं बलं स्वर ओजो यस्य स तथा प्रसक्तवेगः सततकासवेगः भिन्नस्वरः द्विधाकृत इव शुष्कमिति श्लेष्मनिष्ठीवनरहितम् ॥ ५ ॥ पैत्तिकमाह—एतैरुपद्रवैः अभ्यर्दितः पीडितः पीतानि वमेत् पित्तं कफसंसृष्टं निष्ठीवति उक्तं च तंत्रांतरे "श्लेष्माणं पित्तसंसृष्टं निष्ठीवति च पैत्तिकः" इति । पांडुना सह वर्त्तत इति सपांडुः एतेन नयनादीनामपि पांडुत्वमुक्तं परिदह्यमानः दाहपरिप्लुतः ॥ ६ ॥ कफजमाह—प्रलिप्यमानेन कफे-

अतिव्यवायभाराध्वयुद्धाश्वगजविग्रहैः ॥
रूक्षस्योरःक्षतं वायुर्गृहीत्वा कासमाचरेत् ॥ ८ ॥
स पूर्वं कासते शुष्कं ततः ष्ठीवेत्सशोणितम् ॥
कण्ठेन रुजताऽत्यर्थं विरुग्णेनेव चोरसा ॥ ९ ॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ॥
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥ १० ॥
पर्वभेदज्वरश्वासतृष्णावैस्वर्यपीडितः ॥
पारावत इवाकूजन् कासवेगान् क्षतोद्भवात् ॥ ११ ॥

मधुकोशव्याख्या ।

प्रलिप्यमानेन श्लेष्मलिप्तेन मुखेनोपलक्षितः, सीदन् अवसादयुक्तः । अभक्तरुग-रुचिः ॥ ७ ॥ क्षतकासमाह—अतिव्यवायेत्यादि । विग्रहो विधारणं, युद्धस्योपात्त-त्वात्; निग्रह इति पाठे स एवार्थः । ततः ष्ठीवेत् सशोणितमिति कासाभिघातेन हृद-यविदारणात् । कण्ठेनेति उपलक्षणे तृतीया, एवमुरसेति । विरुग्णेनेव भग्नेनेव, सूची-भिरिव तुद्यमानेन, शूलिना दुःखस्पर्शेन चोरसेति संबन्धः । दुःखस्पर्शत्वं स्पर्शास-हत्वं, शूलेनोपलक्षितः, तच्च पार्श्वादौ बोध्यम् । वाग्भटेनापि पठ्यते—"पार्श्वशूली"

आतङ्कदर्पणव्याख्या ।

नोपलक्षितः सीदन् सादयुक्तः अभक्तरुक् अरुचिः कफपूर्णदेहत्वाद्गौरवं कंडूः कंठस्यैव । सांद्र-कफः घनश्लेष्मः ॥ ७ ॥ क्षतकासमाह—अतीति । विग्रहो विदारणं युद्धस्योक्तत्वात् एतैः कारणै रूक्षस्य पुरुषस्य उरःक्षतं गृहीत्वा वायुः कासमावहेत्[१] करोति । युद्धं मल्लयुद्धादिकम् ॥ ८ ॥ ततः ष्ठीवेत् शोणितमिति कासाभिघातेन हृदयस्य विदारणात् अत्यर्थं रुजता पीडायुक्तेन कंठेनेत्युप-लक्षणे तृतीया । एवमुरसेति विरुग्णेनेव द्विधेव विदीर्णेन तीक्ष्णाभिः सूचीभिरिव तुद्यमानेन शूलिना रुजायुक्तेन च दुःखस्पर्शेन चोरसेति सम्बन्धः । दुःखस्पर्शत्वं स्पर्शासहत्वम् शूलेन चोप-लक्षितः तच्च पार्श्वादौ बोद्धव्यं "पार्श्वशूली" इति वाग्भटेन पठ्यमानत्वात् । 'भेदपीडाभितापिना' इति

१ एतच्च कासमावहेदिति पाठाभिप्रायेण ।

विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात् ॥
घृणिनां शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः ॥
कुपिताः क्षयजं कासं कुर्युर्देहक्षयप्रदम् ॥ १२ ॥
स गात्रशूलज्वरदाहमोहान् प्राणक्षयं चोपलभेत कासी ॥
शुष्कं विनिष्ठीवति दुर्बलस्तु प्रक्षीणमांसो रुधिरं सपूयम् ॥
तं सर्वलिङ्गं भृशदुश्चिकित्स्यं चिकित्सितज्ञाः क्षयजं वदन्ति १३

मधुकोशव्याख्या ।

इति । 'भेदपीडाभितापिना' इति शूलविशेषणम् । पारावत इवा कूजन्, भवतीति शेषः ॥ ॥ ८–११ ॥ क्षयजकासमाह–विषमेत्यादि । घृणिनां शोचतां चाहाराभावात्कुपितेन वायुनाऽग्नेरुपप्लवाद्दोषत्रयप्रकोप इति । क्षयजमिति शुक्रादिधातुक्षयजं, न तु राजयक्ष्मजम् । त्रिदोषजेऽपि राजयक्ष्मणि कासः कफेनैव क्रियते । यदुक्तं–"कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः" इति । क्षयजकासस्तु त्रिदोषज इति । ननु, कासादेव क्षयो जायते तत्कथं क्षयजकास इति ? उक्तं हि–"कासात्संजायते क्षयः" इति । उच्यते, दृष्टो हि परस्परं व्यक्तिभेदेन कार्यकारणभावो बहुशः, यथातीसारार्शोऽग्निमान्द्यादय इति । सगात्रशूलेत्यादिश्लोकार्धस्य क्षयजकासमध्ये पाठोऽयुक्तः प्रतिभाति सुश्रुते क्षतजकासे पठितत्वात्, क्षयकासश्चात्र सुश्रुतवाक्ये मेलयित्वा माधवेन लिखितः, उच्यते, सगात्रशूलेत्याद्यनन्तरं क्षयकासः सुश्रुतेन पठितः, तेन सगात्रशूलेत्यादिश्लोकार्धस्य परेण संबन्धात् क्षयकासत्वमिति माधवस्याभिप्रायः, एतच्चान्ये नानुमन्यन्ते यतः क्षतजकासस्यावस्थायामसाध्यत्वख्यापनपरमेतद्व्याख्यातं जेज्जटेन, गयदासेनापि क्षतजकासरूपत्वेनेति ॥ १२ ॥ १३ ॥

आतङ्कदर्पणव्याख्या ।

शूलविशेषणम् । पारावत इवाकूजन्भवतीति शेषः ॥ ९ ॥ १० ॥ ११ ॥ क्षयजमाह–विषमेति । घृणिनां घृणां कुर्वतां शोचतां शोकं कुर्वतां पुंसामग्नौ व्यापन्ने सति त्रयो मलाः कुपिताः संतो देहक्षयप्रदं क्षयजं कासं कुर्युः । क्षयजमिति रक्तादिक्षयजम् ॥ १२ ॥ अस्योपद्रवानाह–सेति । स कासी गात्रशूलादीन् प्राणक्षयं चोपलभेत । शुष्कमिति । प्रतिदिनं शुष्यमाम् दुर्बलः उपचयरहितः प्रक्षीणमांसस्त्वगस्थिभूतः सर्वलिंगमिति त्रिदोषलिंगत्वादसाध्यम् ॥ १३ ॥

१ शुष्यन्निति पाठान्तरम् ।

इत्येष क्षयजः कासः क्षीणानां देहनाशनः ॥
साध्यो बलवतां वा स्याद्याप्यस्त्वेवं क्षतोत्थितः ॥ १४ ॥
नवौ कदाचित्सिध्येतामपि पादगुणान्वितौ ॥
स्थविराणां जराकासः सर्वो याप्यः प्रकीर्तितः ॥
त्रीन्पूर्वान्साधयेत्साध्यान् पथ्यैर्याप्यांस्तु यापयेत् ॥ १५ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने कासनिदानं समाप्तम् ॥ ११ ॥

---

मधुकोशव्याख्या ।

असाध्यत्वादिलक्षणमाह—इतीत्यादि । पादगुणान्विताविति वैद्यादिचतुष्पादसंपन्नौ । स्थविराणां वृद्धानां; स्थविराणामित्युक्तेऽपि जराशब्दोपादानं जरानिमित्तधातुक्षयज एव कासो याप्यः; अपचारजनितदोषजस्तु साध्य इति बोधनार्थम् ॥१४–१५ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां कासनिदानं समाप्तम् ॥ ११ ॥

आतङ्कदर्पणव्याख्या ।

असाध्यसाध्ययाप्यत्वमाह—इतीति। बलवतां कदाचित्साध्यो वा स्याद्याप्यश्च क्षतज एवं कदाचित्साध्यो याप्यः ॥ १४ ॥ पुनः साध्यत्वमाह—नवाविति । अचिरोत्थौ क्षतक्षयजौ द्वौ पादगुणान्वितौ वैद्यादिचतुष्पादसंपत्तियुक्तौ कदाचित् सिध्येतां साध्यौ भवत इत्यर्थः । याप्यत्वमाह—स्थविराणामिति । वृद्धानामेतस्य दोषजेष्वंतर्भूतत्वान्न पृथक्त्वम् । पंचानामपि चिकित्साद्वारेण साध्ययाप्यत्वमाह—त्रीनिति । वातपित्तश्लेष्मजान् पथ्यैः साधयेत् एतेन त्रयः कासाः साध्या उक्ताः अपरान् पथ्यैर्यापयेत् याप्यतां नयेत् । बहुत्वमिति जराकास उपेक्षितः असाध्यो भवतीति । पूयाभमरुणं श्यावं हरितं पीतनीलकम् । निष्ठीवेच्छ्वासकासार्तो न जीवति हतस्वरः ॥ कासश्वासक्षयच्छर्दिस्वरभेदादयो गदाः । भवन्त्युपेक्षयाऽसाध्यास्तस्मात्तान् त्वरया जयेत् ॥ १५ ॥

इत्यातंकदर्पणे निदानव्याख्यायां कासनिदानम् ॥ ११ ॥

---

१ एतच्च—जराकासाः सर्वे याप्याः प्रकीर्तिता एतत्पाठाभिप्रायेण ।

# अथ हिक्काश्वासनिदानम् १२.

विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः ॥
शीतपानाशनस्थानरजोधूमातपानिलैः ॥ १ ॥
व्यायामकर्मभाराध्ववेगाघातापतर्पणैः ॥
हिक्का श्वासश्च कासश्च नृणां समुपजायते ॥ २ ॥

---

मधुकोशव्याख्या।

समाननिदानत्वात्कासानन्तरं हिक्काश्वासौ। ननु, एतेषां प्रायस्तुल्यनिदानचिकित्सितत्वेन एकाधिकारे कथमनभिधानम्? उच्यते; यद्यपि कासश्वासहिक्कानां निदानं समानं तथाऽपि कासस्य दोषभेदाद्भेदः, यथा—वातिकः पैत्तिकः श्लैष्मिक इत्यादि। हिक्काश्वासौ तु कफवातात्मकावेव, यदाह दृढबलः—"कफवातात्मकावेतौ पित्तस्थानसमुद्भवौ" इति। सुश्रुतोऽप्याह—"वायुः कफेनानुगतः पञ्च हिक्काः करोति हि" इति। भेदस्त्वनयोः संप्राप्तिभेदाद्वेगक्रियादिना च, न तु कासवद्दोषभेदेन। श्वासकासाभ्यां हिक्कायाः स्वरतोऽपि भेदः। पित्तस्थानसमुद्भवाविति विशेषणं सुश्रुतमते क्षुद्रां न प्राप्नोति, सा हि जत्रुमूलात्प्रधावितेति पठ्यते; चरकमते तु व्यपेतां न प्राप्नोति, सापि जत्रुमूलादसन्ततेति पठ्यते; तस्मात् पित्तस्थानसमुद्भवाविति विशेषणं छत्रिणो गच्छन्तीति न्यायेन बोध्यम्। शीतशब्दः पानादिभिस्त्रिभिः संबध्यते। रजो धूलिः सा च धूमवन्नासादिप्रवेशात् कारणम्। व्यायामकर्म धनुराकर्षणादिव्यापारः, वेगाघातो मलादिवेगविधारणम्, अपतर्पणमनशनादि। कासश्चोक्तोऽप्येकनिदानत्वमति

आतङ्कदर्पणव्याख्या।

समाननिदानत्वात्कासनिदानानन्तरं हिक्काश्वासावाह—विदाहीति। विदाहीनि—यांत्रिकेक्षुरसमद्यमरिचादीनि विदहनशीलानि, गुरूणि गुणतः पाकतश्च, विष्टंभीनि चणकादीनि, अभिष्यन्दीनि आभिमुख्येन स्यंदितुं शीलं येषां तान्यभिष्यंदनशीलानि फाणितमाषमत्स्यक्षीरादीनि। शीतशब्दः—पानादिभिस्त्रिभिः संबध्यते रजो धूलिः सा च धूमवत् नासादिप्रवेशात् कारणं। व्यायामकर्म—धनुराकर्षणादिव्यापारः, वेगाघातो मलादिवेगधारणम्। अपतर्पणमनशनादि त्रयाणामेककारणत्वेन कथं भेदः? उच्यते—दोषजन्यभेदाद्भेदः। कासो—वातिकः, पैत्तिकः, श्लेष्मिकश्च। हिक्काश्वासौ तु कफवातात्मकावेव। यदुक्तं दृढबलेन—"कफवातात्मकावेतौ पित्तस्थानसमुद्भवाविति"। सुश्रु-

मुहुर्मुहुर्वायुरुदेति सस्वनो
यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन् ॥
स घोषवानाशु हिनस्त्यसून् यत-
स्ततस्तु हिक्केत्यभिधीयते बुधैः ॥ ३ ॥
अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा ॥
वायुः कफेनानुगतः पञ्च हिक्काः करोति हि ॥ ४ ॥
कण्ठोरसोर्गुरुत्वं च वदनस्य कषायता ॥
हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च ॥ ५ ॥

---

मधुकोशव्याख्या ।

पादनार्थं पुनरभिहित इति ॥ १-२ ॥ हिक्कानां स्वरूपं निरुक्तिं चाह—मुहुर्मुहुरि-त्यादि । वायुरत्र सोदानः प्राण इत्याहुः । उदेति ऊर्ध्वं गच्छति । सस्वन इति हिगिति शब्दवान् । ऊर्ध्वगमनमेव विशिनष्टि—यकृदित्यादि । अत्र प्लिहो ह्रस्वे-कारवान् छन्दोऽनुरोधात् । मुखादीति ल्यब्लोपे कर्मणि पञ्चमी, तेन यकृत्प्लीहा-न्त्राणि मुखमानीय आक्षिपन् निःसारयन्निवेत्यर्थः । स इति वायुः, हिनस्त्यसून् इति हिक्केति निरुक्तिः, पृषोदरादिना रूपसिद्धिः । हिगिति कृत्वा कायति शब्दायते इति हिक्केति शाब्दिकाः ॥३॥ तासां भेदं संप्राप्तिं चाह—अन्नजामित्यादि । यमलैव चरके व्यपेतेति नाम्ना पठिता, अन्नपाने व्यपेते परिणते जायेते इत्यतो हेतोः, अस्यां चानु-क्तमपि यमलवेगत्वं सुश्रुतदर्शनाद्विज्ञेयम् । अन्नजायाः साध्यत्वेन प्राशस्त्यात्पूर्वमभिधा-नम्॥४॥पूर्वरूपमाह—कण्ठेत्यादि । वदनस्य कषायता वातात्, नतु कफान्माधुर्यं,व्याधि-

आतङ्कदर्पणव्याख्या ।

तेपि—वायुः कफेनानुगतः पंच हिक्काः करोति हि ॥ १ ॥ २ ॥ संप्राप्तिमाह—मुहुर्मुहुरिति । वायुरिति । सोदानः प्राणो वायुः सस्वनः शब्दवान् मुहुर्वारंवारमुदेति, ऊर्ध्वं गच्छति, ऊर्ध्वग-मनत्वात् । यकृत्प्लीहान्त्राणि मुखादिवेत्यत्र मुखशब्देन, प्राणोदकान्नवाहीनि स्रोतांसि भण्यंते, उक्तं च तंत्रांतरे—"प्राणोदकान्नवाहीनि स्रोतांसि विकृतोऽनिलः । हिक्काः करोति संरुध्य तासां लिंगं पृथक्छृणु" इति । हिक्काशब्दोऽत्र द्विरावर्त्तयितव्यः तेन हिक्केति, हिक्कास्वरूपकथनं स्यात् स घोषवानित्यादिना हिक्कानिरुक्तिकथनमिति । सस्वन इत्यनेन गतत्वात् स घोषवानित्यभिधानं निरुक्तिप्रदर्शनार्थम् स इति वायुः हिनस्त्यसूनिति हिक्केति पृषोदरादित्वात्साधुः । हिगिति कृत्वा कायति शब्दायते इति हिक्केति शाब्दिकाः ॥ ३ ॥ तासां भेदं संप्राप्तिमाह—अन्नजामिति । अन्न-जेत्यादीनि तासां नामानि ॥ ४ ॥ पूर्वरूपमाह—कंठ इति । वदनस्य कषायता वातात्, न तु

पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः ॥
हिक्कयत्यूर्ध्वगो भूत्वा तां विद्यादन्नजां भिषक् ॥ ६ ॥
चिरेण यमलैर्वेगैर्या हिक्का संप्रवर्तते ॥
कम्पयन्ती शिरोग्रीवां यमलां तां विनिर्दिशेत् ॥ ७ ॥
विकृष्टकालैर्या वेगैर्मन्दैः समभिवर्तते ॥
क्षुद्रिका नाम सा हिक्का जत्रुमूलात्प्रधाविता ॥ ८ ॥
नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी ॥
अनेकोपद्रववती गम्भीरा नाम सा स्मृता ॥ ९ ॥
मर्माण्युत्पीडयन्तीव सततं या प्रवर्तते ॥
महाहिक्केति सा ज्ञेया सर्वगात्रविकम्पिनी ॥ १० ॥

---

मधुकोशव्याख्या ।

प्रभावात् ॥५॥ अन्नजायां लक्षणमाह—पानान्नैरित्यादि । हिक्कयति हिक्कां करोति॥६॥ यमलामाह—चिरेणेत्यादि । कम्पयन्ती शिरोग्रीवामित्युपलक्षणं, तेन चरकोक्तप्रलापमूर्च्छावमितृष्णावैचित्त्यजृम्भाविप्लुताक्षत्वमुखशोषा बोध्या इति गयदासः ॥ ७ ॥ क्षुद्रामाह—विकृष्टेत्यादि । विकृष्टकालैश्चिरेण । जत्रु कण्ठोरसोः सन्धिरिति जेज्जटः, जत्रु ग्रीवामूलं, तद्ग्रहणेनैव हृदयक्लोमकण्ठग्रहणमिति गयदासः ॥ ८ ॥ गम्भीरामाह—नाभीत्यादि । नाभिप्रवृत्तेति नाभितःप्रभृति संजाता, अत एवास्या गम्भीरत्वम् । अनेकोपद्रववती तृष्णाज्वरादियुक्ता ॥९॥ महतीमाह—मर्माणीत्यादि ।

आतङ्कदर्पणव्याख्या ।

कफात्, माधुर्यं व्याधिप्रभावात् । कुक्षेरुदरस्याटोपः, पूर्णत्वमिव ॥ ५ ॥ अन्नजालक्षणमाह—पानान्नैरिति । शीतैरिति शेषः । उपर्युपरि अत्युपयुक्तैः, सहसा पीडितोऽनिलो हृदिस्थः प्राणो वायुरूर्ध्वगतत्वाद्धिक्कयति हिक्कां करोति सा हिक्कान्नजेति कथ्यते ॥ ६ ॥ यमलामाह—चिरेणेति । या हिक्का यमलैर्वेगैर्युग्मैरुपक्रमैः शिरोग्रीवां कंपयति चिरकालेन प्रवर्तते तां नामतो यमलामाहुः ॥ ७ ॥ क्षुद्रामाह—विकृष्टकालैरिति । विकृष्टकालैरचिरकालैः मंदवेगैः जत्रुः कक्षोरसोः संधिरिति जेज्जटः।जत्रुमूलग्रहणेन हृदयक्लोमकंठस्य ग्रहणमिति गयदासः । इयं नामतः क्षुद्रिका ॥ ८ ॥ गंभीरामाह—नाभीति । या हिक्का नाभिप्रवृत्तेति, नाभितः प्रवृत्ता संजाता अत एवास्या गंभीरत्वम् । अनेकोपद्रववती तृष्णाज्वरादियुक्ता सेयं नामतो गंभीरा ॥ ९ ॥ महतीमाह—मर्माणीति

आयम्यते. हिक्कतो यस्य देहो दृष्टिश्चोर्ध्वं नाम्यते यस्य नित्यम्॥
क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्रं तौ द्वौ चान्त्यौ वर्जयेद्धिक्कमानौ ११
अतिसंचितदोषस्य भक्तच्छेदकृशस्य च ॥
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः ॥ १२ ॥
आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम् ॥
यमिका च प्रलापार्तिमोहतृष्णासमन्विता ॥ १३ ॥
अक्षीणश्चाप्यदीनश्च स्थिरधात्विन्द्रियश्च यः ॥
तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा ॥ १४ ॥

---

मधुकोशव्याख्या ।

मर्माणीति प्रधानानि बस्तिहृदयशिरांसि ॥ १० ॥ अवस्थायामसाध्यत्वमाह-आयम्यत इति । आयम्यते विस्तार्यत इव । दृष्टिश्चोर्ध्वं भवतीति शेषः । नाम्यते आकुञ्च्यते देह इति संबन्ध इति जेज्जटगयदासौ । ताम्यतीति पाठान्तरे मुह्यति हिक्की । क्षौति हिक्कति । तौ द्वाविति आयम्यत इत्यादिना नित्यमित्यन्तेनैकावस्थो हिक्की, क्षीणेत्यादिनाऽतिमात्रान्तेनापरः;साध्यानामपि मध्ये एवंविधौ वर्जयेदित्यर्थः । गम्भीरामहत्योः स्वभावादेवासाध्यत्वमिति तद्युक्तौ हिक्कमानावन्त्यौ शेषपठितावसाध्यौ; पाठान्तराणि व्याख्याविशेषाश्च विस्तरभयान्न लिखिताः आसां या सेति आसां साध्यहिक्कानां मध्ये या अतिसंचितदोषादेर्भवति सा हन्तीति योज्यम्, अथवा आसामिति पञ्चविधानामेव । तेन महतीप्रभृतीनां स्वरूपेण यदसाध्यत्वमुक्तं तत्प्रायिकम् । यदाह जतूकर्णः-"आद्याश्चतस्रो दुःसाध्याः, यमिका मोहतृष्णावतः सद्यः प्राणहृत्" इति । यमिकत्यादि । यमिका चेत्यनेन चकारात् क्षुद्रा अन्नजा वा या साध्यत्वेनोक्ता सा यमलैर्वेगैर्जायमाना हन्तीति योज्यम् । सैवाक्षीणादेः साध्या भवतीत्याह-

आतङ्कदर्पणव्याख्या ।

प्रधानानि, बस्तिहृदयशिरांसि, इयं नामतो महाहिक्का ॥ १० ॥ अवस्थायामसाध्यलक्षणमाह-आयम्यत इति । आयम्यते विस्तार्यत इव देहः दृष्टिश्चोर्द्ध्वं भवतीति शेषः । नाम्यते आकुञ्च्यते देह इति संबंधः । इति जेज्जटगयदासौ । ताम्यत इति पाठांतरे तत्र मुह्यतीत्यर्थः । यश्च क्षीणोऽन्नद्वेषी अतिक्षौति छिक्कति तां हिक्कां वर्जयेत् द्वौ चांत्यौ वर्जयेत् । अंत्याविति, गंभीरा महती चेति ॥ ११ ॥ साध्यानामप्यवस्थाविशेषेणासाध्यत्वमाह, अतिसंचितदोषस्येति । आसामसाध्यानां या हिक्का अतिसंचितदोषादिभिर्भवति सा नरं हंतीति बोद्धव्यम् । महतीप्रभृतीनां तु स्वरूपेणैवासाध्यत्वमुक्तं तत्प्रायिकमिति । पुनरवस्थाविशेषेणासाध्यत्वमाह यमिकेति । अन्नजा क्षुद्रा च साध्यैव

महोर्ध्वच्छिन्नतमकक्षुद्रभेदैस्तु पञ्चधा ॥
भिद्यते स महाव्याधिः श्वास एको विशेषतः ॥ १५
( वाताधिको भवेत् क्षुद्रस्तमकस्तु कफोद्भवः ॥
कफवाताधिकश्चैव संसृष्टश्छिन्नसंज्ञकः ॥
श्वासो मारुतसंसृष्टो महानूर्ध्वस्ततो मतः ॥ १ ॥ )
प्राग्रूपं तस्य हृत्पीडा शूलमाध्मानमेव च ॥
आनाहो वक्त्रवैरस्यं शंखनिस्तोद एव च ॥ १६ ॥
यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः ॥
विष्वग् व्रजति संरुद्धस्तदा श्वासान् करोति सः ॥ १७ ॥

मधुकोशव्याख्या ।

अक्षीण इत्यादि । अक्षीणो बलवान् । अदीनः प्रसन्नमनाः, अन्ये तु अन्नजां यमलामित्यादिसुश्रुतग्रन्थपठितां यमलां यमिकाशब्देन व्याचक्षते । तन्न, यमिका च प्रलापार्तीत्यादिश्लोकश्चरके पठितः, तत्र यमला यमिकानाम्ना न पठितैव । हिक्केति यमिकाशब्देनैवार्थगत्या व्यपेतोच्यत इति चेत्, न, तर्हि व्यपेता च प्रलापार्तीत्येवमभिदध्यात् ॥ ११-१४ ॥ श्वासानाह—महोर्ध्वेत्यादि । एको विशेषत इति श्वासत्वेन एक एव सन् विशेषहेतुलिङ्गभेदं प्राप्य पञ्चधा भिद्यते, पञ्चसु श्वासत्वं वेगवदूर्ध्ववातत्वम् । यदुक्तमन्यैः—"श्वासस्तु भस्त्रिकाध्मानसमवातोर्ध्वगामिता" इति । संख्येयनिर्देशादेव पञ्चप्रकारत्वे सिद्धे पञ्चवचनं तमकभेदस्य प्रतमकस्य पृथक्कृत्वसंख्यानिरासार्थम् ॥१५॥१६॥ संप्राप्तिमाह—यदेत्यादि । स्रोतांसीति हिक्कानिर्दिष्टप्राणोदान-

आतङ्कदर्पणव्याख्या ।

यमलवेगवतोऽयमित्युच्यते न तु यमला चरकोक्तत्वात् । अक्षीणो बलवान् अदीनः प्रसन्नमनाः स्थिराणि धातिन्द्रियाणि यस्य स तथा अन्यथा एतद्विपरीत इति ॥ १४ ॥ ( इत्यातंकदर्पणे निदानव्याख्यायां हिक्कानिदानं समाप्तम् ॥ ) हिक्काश्वासयोरेकहेतुत्वात्, हिक्कानंतरं श्वासमाह-महेति । स महाव्याधिः श्वासत्वेन एक एव सन् विशेषहेतुलिंगभेदं प्राप्य महोर्ध्वादिभेदैः पंचधा भिद्यते । पंचस्वपि श्वासत्वं वेगवदूर्ध्ववातत्वम् । उक्तं च तंत्रांतरे—"श्वासस्तु भस्त्रिकाध्मान समवातोर्ध्वगामिता" इति संख्येयनिर्देशादेव पंचप्रकारके सिद्धे पंचवचनं तमकभेदस्य प्रतमकस्याधिकसंख्यानिषेधार्थम् । तंत्रांतरे—पंचानामपि दोषोत्कटत्वमुक्तम् । "वातेन क्षुद्रकः श्लेष्मभूयिष्ठः तमकः स्मृतः । छिन्नः पित्तप्रधानः स्यादन्यौ मारुतकोपजौ" इति ॥ १५ ॥ तस्य पूर्वरूपमाह—शूलमुदरे, आध्मानमाटोपः, आनाहः, आमं शकृद्वा विगुणानिलेन निबद्धम् । अयथावत्प्रवृत्तिः । शंखनिस्तोदः शंखयोर्व्यथा ॥ १५ ॥ १६ ॥ तस्य संप्राप्तिमाह—यदेति ।

उद्धूयमानवातो यः शब्दवद्दुःखितो नरः ॥
उच्चैः श्वसिति संरुद्धो मत्तर्षभ इवानिशम् ॥ १८ ॥
प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तलोचनः ॥
विवृताक्ष्याननो बद्धमूत्रवर्चा विशीर्णवाक् ॥ १९ ॥
दीनः प्रश्वसितं चास्य दूराद्विज्ञायते भृशम् ॥
महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते ॥ २० ॥
ऊर्ध्वं श्वसिति यो दीर्घं नच प्रत्याहरत्यधः ॥
श्लेष्मावृतमुखस्रोताः क्रुद्धगन्धवहार्दितः ॥ २१ ॥

---

मधुकोशव्याख्या ।

वहानि । कफः पूर्वं प्रधानं यस्य स तथा, तेनैव कफेन रुद्धः विमार्गगतिर्विमार्गगत्वेन विष्वग् व्रजति विष्वगञ्चतीति, विष्वक् सर्वत इत्यर्थः ॥ १७ ॥ महाश्वासलक्षणमाह—उद्धूयमानेत्यादि । उद्धूयमानवात इति उत् ऊर्ध्वं धूयमानो नीयमानो वातो यस्य स तथा । शब्दवत् सशब्दं यथा भवति, उच्चैर्दीर्घम् । संरुद्धो मत्तर्षभ इवेति स्वरविशेषज्ञानार्थमयं दृष्टान्तः । ज्ञानं शास्त्रं, विज्ञानं तदर्थनिश्चयः । विभ्रान्तलोचनः चञ्चलनेत्रः । विवृते स्तब्धे अक्ष्याननं यस्य स तथा, नेत्रस्य विभ्रान्तस्तब्धत्वे कालभेदादिति जेज्जटः । विशीर्णवाक् वक्तुमक्षमः, मन्दवचनो वा । दीनः क्लान्तमनाः, हीनमिति पाठान्तरमयुक्तम्; दूराद्विज्ञायते भृशमित्यनुपपत्तेरित्याहुः ॥ १८—२० ॥ उर्ध्वश्वासलक्षणमाह—ऊर्ध्वमित्यादिना । ऊर्ध्वमिति । विशे-

आतङ्कदर्पणव्याख्या ।

यदा कफपूर्वकः कफप्रधानो वायुः तेनैव कफेन संरुद्धगतिः विमार्गगः, प्राणोदकान्नवाहीनि, स्रोतांसि संरुध्य, विष्वग्व्रजति सर्वत्र प्रसरति तदा श्वासान्करोति ॥ १७ ॥ महाश्वासलक्षणमाह—उत् ऊर्ध्वंधूयमानो वातो वास्य स तथा । शब्दवत् सशब्दो यथा भवति तथा । एवमुच्चैः श्वसिति, दुःखितो दुःखयुक्तः, अनिशमनवरतम् क इव संरुद्धो मत्तर्षभ इव मत्तमहोक्ष इव स्वरविशेषज्ञापनार्थमयं दृष्टांतः । ज्ञानं शास्त्रं विज्ञानं तदर्थनिश्चयः । विभ्रांतलोचनश्च, चलाक्षः विवृते स्तब्धे अक्षिणी नयने आननञ्च यस्य स तथा । नेत्रस्य विभ्रांतस्तब्धत्वे कालभेदादिति जेज्जटः । विशीर्णवाक् वक्तुमक्षमो मंदवचनो वा दीनः क्लांतमनाः । अस्य च श्वासवतः श्वसितमत्यर्थं दूरादेव श्रूयते अनेन महाश्वासेनोपसृष्टो युक्तः शीघ्रमेव विनश्यति ॥१८—२०॥ ऊर्ध्वश्वासमाह—ऊर्ध्वमिति । ऊर्ध्वश्वासे यः पुमान् दीर्घकालमूर्ध्वं श्वसिति न च प्रत्याहरत्यध इति न श्वासमधः करोति दीर्घ-

ऊर्ध्वदृष्टिर्विपश्यंस्तु विभ्रान्ताक्ष इतस्ततः ॥
प्रमुह्यन्वेदनार्तश्च शुष्कास्योऽरतिपीडितः ॥ २२ ॥
ऊर्ध्वश्वासे प्रकुपिते ह्यधःश्वासो निरुध्यते ॥
मुह्यतस्ताम्यतश्चोर्ध्वं श्वासस्तस्यैव हन्त्यसून् ॥ २३ ॥
यस्तु श्वसिति विच्छिन्नं सर्वप्राणेन पीडितः ॥
न वा श्वसिति दुःखार्तो मर्मच्छेदरुगर्दितः ॥ २४ ॥

मधुकोशव्याख्या ।

षपरं, सर्वश्वासानां तथाविधत्वात् । दीर्घमिति दीर्घकालम् । नच प्रत्याहरत्यध इति न श्वासमधः करोति दीर्घकालमित्यर्थः । श्लेष्मावृतमुखस्रोता इति श्लेष्मणा आवृतानि मुखं स्रोतांसि च यस्य स तथा । क्रुद्धगन्धवहार्दितः कुपितवातपीडितः, समस्त पाठे तु श्लेष्मावृतमुखस्रोतस्त्वेन क्रुद्धो यो गन्धवहस्तेनार्दितः । विपश्यंस्त्वितस्तत इति इतस्ततो विकृतिं पश्यन् । 'ऊर्ध्वं श्वसिति यो दीर्घं न च प्रत्याहरत्यधः' इति यदुक्तं तत्र हेतुमाह—ऊर्ध्वश्वास इत्यादि । निरुध्यत इति हृदय एवातिस्तम्भितः, अथवा श्वासो वातः सोऽधो न वर्तते, ऊर्ध्वं श्वास ऊर्ध्वश्वासः । ताम्यतो ग्लायतो मुह्यतश्चासून् प्राणान् हन्ति, नान्यथेति ॥२१–२३॥ छिन्नश्वासलक्षणमाह—यस्त्वित्यादि । विच्छिन्नं सविच्छेदम् । सर्वप्राणेन न वा श्वसिति श्वासं न लभते । मर्मच्छेदरुगर्दित

आतङ्कदर्पणव्याख्या ।

कालमित्यर्थः । सर्वश्वासानामूर्ध्वगत्वात् । अत्रोर्ध्वमिति विशेषपरम् । श्लेष्मणा आवृतं मुखं स्रोतांसि च यस्य स तथा । अथवा—श्लेष्मावृतानि मुखसंबंधीनि स्रोतांसि यस्य स तथा । क्रुद्धगंधवहार्दितः कुपितवातपीडितः श्लेष्मावृतमुखस्रोतस्त्वेन क्रुद्धो यो गंधवहस्तेनार्दितः ॥ २१ ॥ ऊर्ध्वं दृष्टिर्दर्शनं यस्य स ऊर्ध्वदृष्टिः । विपश्यन्नितस्ततो विकृतं पश्यन्, विभ्रांताक्षः परिक्षिप्तनेत्रः, प्रमुह्यन् मोहमुपगच्छन् शुष्कास्यः शुष्कमुखः, अरतिः कस्मिन्नपिविषये न चिरावस्थितिः ॥ २२ ॥ ऊर्ध्वं श्वसिति न चाधः प्रत्याहरतीति यदुक्तं तत्रहेतुमाह—ऊर्ध्वेति । निरुध्यत इति । हृदय एव स्तंभितः स्यात्, अथवा श्वासो वातः सोऽधो न प्रवर्त्तते ऊर्ध्वश्वासः, ताम्यतो ग्लायतो मुह्यतस्तमसि मज्जत इव । अथवा निश्चेष्टावतस्तस्यैव पुरुषस्य असून् प्राणान् हंति नान्यथेति ॥ २३ ॥ अथ छिन्नं लक्षयति । य इति । विच्छिन्नमिव विच्छिन्नम् अंतरांतरा विच्छिद्यमानमुच्छ्वसिति

१ केवलातंकदर्पणसहितमुद्रितपुस्तके एतदादिव एकादश-श्लोका प्रकरणान्ते दृश्यन्ते ।

आनाहस्वेदमूर्च्छार्तो दह्यमानेन बस्तिना ॥
विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः ॥ २५ ॥
विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः ॥
छिन्नश्वासेन विच्छिन्नः स शीघ्रं विजहात्यसून् ॥ २६ ॥
प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते ॥
ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य च ॥ २७ ॥
करोति पीनसं तेन रुद्धो घुर्घुरकं तथा ॥
अतीव तीव्रवेगं च श्वासं प्राणप्रपीडकम् ॥ २८ ॥
प्रताम्यति स वेगेन तृष्यते सन्निरुध्यते ॥
प्रमोहं कासमानश्च स गच्छति मुहुर्मुहुः ॥ २९ ॥
श्लेष्मण्यमुच्यमाने तु भृशं भवति दुःखितः ॥
तस्यैव च विमोक्षान्ते मुहूर्तं लभते सुखम् ॥ ३० ॥

---

मधुकोशव्याख्या ।

इति हृदयच्छेदवेदनया पीडितः । दह्यमानेन बस्तिना उपलक्षितः, एतेन वातस्य पित्तानुबन्धो दर्शितः । विप्लुताक्षः चलच्चक्षुः, अश्रुपूर्णचक्षुर्वा । रक्तैकलोचनत्वं व्याधिप्रभावात्, दोषात्तु द्वयोरपि स्यात् । विचेता उद्विग्नचित्तः । विच्छिन्नो विमोक्षितसन्धिबन्धः, पीडित इत्यन्ये, विहत इति पाठान्तरम् ॥२४—२६॥ तमकश्वासलक्षणमाह—प्रतिलोममित्यादि । श्लेष्माणं समुदीर्य च इत्यनेन सामान्यसंप्राप्तिलब्धस्यापि श्लेष्मणः पुनरभिधानादिह विशेषेण कारणत्वं बोधयति । तेन रुद्धः कफेनावृतः ।

आतङ्कदर्पणव्याख्या ।

सांतरायमित्यर्थः । सर्वप्राणेन समस्तया शक्त्या, दुःखार्तः सन्, न वा श्वसिति मर्मच्छेदरुगर्दित इति, मर्माणि हृदयबस्तिशिरांसि तेषां छेदनेनेव पीडितः दह्यमानेन वस्तिनोपलक्षितः । एतेन- वातस्य पित्तानुबंधो दर्शितः । विप्लुताक्षः चलच्चक्षुः अश्रुपूर्णचक्षुर्वा रक्तैकलोचनत्वमिति व्याधि- दोषात् तदा द्वयोरपि स्यात् ॥ २४ ॥ २५ ॥ २६ ॥ तमकलक्षणमाह—प्रतीति । यदि वायुः प्रतिलोमं वैपरीत्येन स्रोतांसि प्रतिपद्यते प्राप्नोति, तदा स वायुः श्लेष्माणं समुदीर्य्य ऊर्ध्वप्रेर- णया ग्रीवां शिरश्च संगृह्य समंतात् गृहीत्वा पीनसं करोति, पश्चात्तेनैवावृतः कंठे घुरघुरशब्दं करोति प्राणप्रपीडकं प्राणाधिष्ठानहृदयप्रपीडकं श्वासं करोति, तेन श्वासवेगेन प्रताम्यति तमसि

तथाऽस्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम् ॥
न चापि लभते निद्रां शयानः श्वासपीडितः ॥ ३१ ॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः ॥
आसीनो लभते सौख्यमुष्णं चैवाभिनन्दति ॥ ३२ ॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्तिमान् ॥
विशुष्कास्यो मुहुःश्वासो मुहुश्चैवावधम्यते ॥ ३३ ॥
मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्धते ॥
स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः॥३४॥
ज्वरमूर्च्छापरीतस्य विद्यात्प्रतमकं तु तम् ॥
उदावर्तरजोजीर्णक्लिन्नकायनिरोधजः ॥ ३५ ॥

---

मधुकोशव्याख्या ।

घुर्घुरकं कण्ठे घुर्घुरशब्दम् । प्राणप्रपीडकं प्राणाधिष्ठानहृदयप्रपीडकम् । प्रताम्यति तमसि प्रविशतीव । सन्निरुध्यते निश्चेष्टो भवतीति चक्रः, जेज्जटस्तु सन्निरुध्यते श्वास इति । तस्यैवेति श्लेष्मणः । सुखं सुखमिव । उद्ध्वंसते कण्डूयते । पार्श्वे इति कर्मपदम्, अवगृह्णाति पीडयति । उष्णमभिनन्दति वातकफारब्धत्वात् । उच्छ्रिताक्ष उच्छूनाक्षः । ललाटेनेति उपलक्षणे तृतीया । अवधम्यते गजारूढस्येव सर्वगात्रं चाल्यते ॥ २७–३४ ॥ तमकस्यैव पित्तानुबन्धत्वात् ज्वरादियोगेन प्रतमकसंज्ञामाह—ज्वरेत्यादि ज्वरमूर्च्छाभ्यां परीतो ज्वरमूर्च्छापरीतः, ज्वरेण मूर्च्छा ज्वरमूर्च्छेति जेज्जटः ॥ एतस्यैवापरकारणं लक्षणं चाह—उदावर्त इत्यादि । उदा-

आतङ्कदर्पणव्याख्या ।

प्रविशतीवेति । संरुध्यते निश्चेष्टो भवतीति चरकः । जेज्जटस्तु संरुध्यते श्वास इति शेषः । मुच्यमानेन कफेनातीव दुःखितो भवति तस्यैव श्लेष्मणो विमोक्षांते मुहूर्तं सुखं प्राप्नोति इति ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ उद्ध्वंसते कण्डूयते पार्श्वेऽवगृह्णाति. पीड्यति परं शयानस्य, आसीनः सन् सुखं लभते उष्णमभिनंदति वातकफारब्धत्वात् ॥ ३१ ॥ ३२ ॥ उच्छ्रिताक्षः उच्छूनाक्षः, स्विद्यता ललाटेनोपलक्षितः । अवधम्यते गजारुढस्येवाखिलगात्रं चाल्यते ॥ ३३ ॥ ३४ ॥ तमकस्यैव पित्तानुबंधत्वात् ज्वरादियोगेन प्रतमकसंज्ञामाह—ज्वरेति । ज्वरमूर्छाभ्यां परीतो ज्वरमूर्छापरीतः, ज्वरेण वा मूर्छा, इति जेज्जटः । एतस्यैवापरलक्षणं कारणं चाह—उदावर्तो रोगविशेषः, रजो धूलिः, अजीर्णमामादि, क्लिन्नं विदग्धम् कायवेगानां निरोधः, एतैर्हेतुभिः जनितः, अन्ये "क्लिन्नकायो वृद्धनर इत्याहुः" निरोधो वेगनिरोधः । जेज्जटस्तु

तमसा वर्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति ॥
मज्जतस्तमसीवास्य विद्यात्सन्तमकं तु तम् ॥ ३६ ॥
रूक्षायासोद्भवः कोष्ठे क्षुद्रो वात उदीरयन् ॥
क्षुद्रश्वासो न सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः ॥ ३७ ॥
हिनस्ति न स गात्राणि न च दुःखो यथेतरे ॥
न च भोजनपानानां निरुणद्ध्युचितां गतिम् ॥ ३८ ॥
नेन्द्रियाणां व्यथां नापि कांचिदापादयेद्रुजम् ॥
स साध्य उक्तो बलिनः सर्वे चाव्यक्तलक्षणाः ॥ ३९ ॥

---

मधुकोशव्याख्या ।

वर्तो रोगः रजो धूलिः अजीर्णमामादि, क्लिन्नं विदग्धम्, काये वेगानां निरोधः कायनिरोधः, अथवा क्लिन्नकायो वृद्धनर इत्याहुः । निरोधः वेगनिरोधः, अथवा कुयोगिनां कुम्भकादिरूपवातनिरोध इति जेज्जटः । तमसा अन्धकारेण, मानसदोषेण वा । अत्यर्थमिति इतरकारणापेक्षया विशेषेण वातकफारब्धोऽपि पित्तसंबन्धात् शीतैरुपशाम्यतीत्याहुः । संतमकः प्रतमक एवेति । अन्ये तु उदावर्तेत्यादिना प्रतमकस्य उपसर्गमाहुरिति जेज्जटः ॥ ३५—३६ ॥ क्षुद्रश्वासमाह—रूक्षेत्यादि । रूक्षमन्नपानम् । क्षुद्रोऽल्पनिदानालिङ्गः । उदीरयन् ऊर्ध्वं गच्छन् । इतरे ऊर्ध्वश्वासादयः । स साध्य उक्त इति छेदः । सर्वे महाश्वासादयोऽव्यक्तलक्षणाः सन्तः

आतङ्कदर्पणव्याख्या ।

योगिनां कुंभकादिवातनिरोधजः ॥ ३५ ॥ तमसा अंधकारेण मानसतमोगुणादिदोषेणेति । अत्यर्थमिति, ज्वरकारणापेक्षया विशेषेण वातकफारब्धपित्तसंबंधात् । शीतैरुपशाम्यतीति तमस्यंधकारे मज्जत इवास्य पुरुषस्य तं प्रतमकमाहुः ॥ ३६ ॥ क्षुद्रमाह—रूक्षेति । रूक्षमन्नपानमायासो व्यायामः तज्जनितः क्षुद्र इति, क्षुद्रश्वासः अल्पनिदानलिंगत्वात् क्षुद्रः । कोष्ठे वातं प्रकोपयेत्, क्षुद्रश्वासं करोति । दुःखेन स क्षुद्रश्वासः नांगप्रबाधको भवति ॥ ३७ ॥ किन्तु स गात्राणि न हिनस्ति मारणात्मको न भवति । न च दुःखकारी यथा इतरे चत्वारः॥ ३८ ॥ इंद्रियाणां व्यथां नापादयेत् । कांचिदपि रुजं रोगं नापादयेत् । सर्वेषां साध्यत्वमाह—स क्षुद्रश्वासो बलिनः पुरुषस्य साध्यः सर्वे महाश्वासादयः अव्यक्तलक्षणाः संतः

---

१ एतच्च क्षुद्रो वातमुदीरयन्निति पाठाभिप्रायेण ।

क्षुद्रः साध्यो मतस्तेषां तमकः कृच्छ्र उच्यते ॥
त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च ॥ ४० ॥
कामं प्राणहरा रोगा वहवो न तु ते तथा ॥
यथा श्वासश्च हिक्का च हरतः प्राणमाशु च ॥ ४१ ॥
इति श्रीमाधवकरविरचिते माधवनिदाने हिक्काश्वासनिदानंसमाप्तम्॥ १२॥

---

# अथ स्वरभेदनिदानम् १३.

अत्युच्चभाषणविषाध्ययनाभिघातसंदूषणैःप्रकुपिताःपवनादयस्तु।
स्रोतःसुतेस्वरवहेषुगताःप्रतिष्ठांहन्युःस्वरंभवतिचापिहिषड्विधःसः १

---

मधुकोशव्याख्या।

साध्या इति योज्यम्। त्रयः श्वासा न सिध्यन्ति महोर्ध्वच्छिन्नाः संपूर्णलक्षणाः उपेक्षणीयाः ॥ ३७—४० ॥ उपेक्षणासम्यगुपक्रमाभ्यां हिक्काश्वासयोः शीघ्रावश्यमारकत्वमाह—काममित्यादि। काममनुमतौ, प्राणहराः सन्निपातादयः। शेषं सुबोधमिति ॥ ४१ ॥ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां हिक्काश्वासनिदानं समाप्तम् ॥ १२ ॥

प्राणोदानदुष्टिसाधर्म्यात् श्वासेऽपि स्वरभेदो भवतीति श्वासानन्तरं स्वरभेदमाह—अत्युच्चभाषणेत्यादि। अध्ययनमुच्चैर्वेदादिपाठः, अभिघातः कण्ठादिदेशे लगुडादिभिराघातः, एतैः संदूषणैश्चान्यैर्यथास्वं वातादिकोपनैः, विषं तु सर्वदोषप्रकोपणमेव। स्रोतःसु स्वरवहेषु चतुर्षु, यदुक्तं सुश्रुते—"द्वाभ्यां भाषते द्वाभ्यां घोषं

आतङ्कदर्पणव्याख्या।

साध्या इति योज्यम् ॥ ३९ ॥ साध्यासाध्यानाह—तेषां श्वासानां क्षुद्रः साध्यतमः तमको याप्यः। महोर्द्धच्छिन्नास्त्रयः संपूर्णलक्षणा असाध्याः। दुर्बलस्य तमकः असाध्यः ॥ ४० ॥ शीघ्रावश्यमारकत्वमाह—काममित्यनुमतौ, प्राणहराः सन्निपातादयो रोगाः बहवः संति ते तथा प्राणहरा न भवंति। यथा श्वासश्च हिक्का च एतौ रोगावाशु शीघ्रं प्राणान् हरतः ॥ ४१ ॥ इत्यातंकदर्पणे निदानव्याख्यायां श्वासनिदानम् ॥ १२ ॥

हिक्काश्वासौ प्राणोदानदुष्ट्या संभवतस्तद्दुष्टिसाधर्म्यात्। श्वासानंतरं स्वरभेदमाह—अत्युच्चेति। अध्ययनमुच्चैर्वेदपाठः, अभिघातः कंठप्रदेशे लगुडादिभिः, अथवा बलेन [illegible]जनितः, अथवाऽस्थ्यादिकठिनभोज्यजनितः। विषतस्तु त्रिदोषप्रकोपः, स्रोतस्सु स्वरवहेषु चतुर्षु, यदुक्तं सुश्रुते—"द्वाभ्यां भाषते द्वाभ्यां घोषं करोति" भाषणघोषणयोरल्पत्वमह

( वातादिभिः पृथक् सर्वैर्मेदसा च क्षयेण च ॥ )

वातेन कृष्णनयनाननमूत्रवर्चा भिन्नं शनैर्वदति गर्दभवत्खरं च ॥
पित्तेन पीतनयनाननमूत्रवर्चा ब्रूयाद्गलेन स च दाहसमन्वितेन २॥
ब्रूयात्कफेन सततं कफरुद्धकण्ठः
स्वल्पं शनैर्वदति चापि दिवा विशेषात् ॥
सर्वात्मके भवति सर्वविकारसंप-
त्तंचाप्यसाध्यमृषयः स्वरभेदमाहुः ॥ ३ ॥

---

मधुकोशव्याख्या ।

करोति" इति; भाषणक्लेषणयोरल्पत्वमहत्त्वाभ्यां भेदः । प्रतिष्ठां स्थितिं वृद्धिं वा । स इति स्वरभेदः षड्विधो वातपित्तकफसन्निपातक्षयमेदोजभेदात् ॥ १ ॥ वातिकमाह—वातेनेत्यादि । कृष्णत्वं मूत्रादिषु स्वरभेदारम्भकदोषस्य सर्वाङ्गव्यापकत्वात्, अर्शोवत् । भिन्नं भिन्नस्वरं, तदेवाह— गर्दभवत् खरं च खरं निष्ठुरम्, उद्वेजकमिति यावत् ॥ पैत्तिकमाह—पित्तेनेत्यादि । गलेनेति विशेष्योपदर्शनं, दाहसमन्वितेनेति विशेषणस्य विशेष्याधीनप्रतीतत्वात्; गलः सदाहो भवतीत्यर्थः ॥ २ ॥ श्लैष्मिकमाह—ब्रूयादित्यादि । दिवा विशेषादिति दिने सूर्यरश्मिभिः कफस्य मन्दीभावाद्विशेषाद्विशिष्टं वदतीत्यर्थः । दिवाविशेष इति पाठान्तरे स एवार्थः । सान्निपातिकमाह—सर्वात्मक इत्यादि । सर्वविकारसंपदिति उक्तवातादिस्वरभेदलिङ्गयोगः । तं चाप्यसाध्यमिति अपिशब्दो भिन्नक्रमे, असाध्यमपि; तेन "सर्वजे क्षयजे चापि प्रत्याख्यायाचरेत् क्रियाम्" इति सुश्रुतवचनमुपपन्नं भवतीति ॥ ३ ॥

आतङ्कदर्पणव्याख्या ।

त्त्वाभ्यां भेदः । एतैः संदूषणैश्चान्यैश्च यथास्वं वातादिकोपनैः दोषास्तेषु स्रोतस्सु प्रतिष्ठां स्थितिं वृद्धिं वा गताः स्वरं हन्युः । स स्वरभेदः षड्विध इति वातपित्तकफसन्निपातक्षयमेदोजनित इति भेदात् ॥ १ ॥ वातिकमाह—वातेनेति । कृष्णत्वं स्वरभेदनारंभकदोषस्य सर्वांगव्यापकत्वात्, अर्शोवत् । भिन्नं भिन्नस्वरम्, गर्दभस्वरवत् स्वरं खरम् उद्वेजकमिति यावत् । अन्ये गर्दभवत्स्वरमित्यत्र गर्दभवत्खरमिति पठंति, गर्दभस्य वचनाभावात् कंठेनेति शेषः । पैत्तिकमाह—गलस्तस्य सदाहो भवतीत्यर्थः ॥ २ ॥ कफजमाह—ब्रूयात्कफेनेति । ब्रूयादित्यत्र कृच्छ्रादिति केचित्पठंति । सन्निपातजमाह—सर्वविकारसंपदिति । उक्तवातादिस्वरभेदलिंगः ॥ तं

---

१ अयं 'स्वरं च' इत्येव मुख्यं पाठं मन्यते ।

धूम्येत वाक् क्षयकृते क्षयमाप्नुयाच्च
वागेष चापि हतवाक् परिवर्जनीयः ॥
अन्तर्गतस्वरमलक्ष्यपदं चिरेण
मेदोऽन्वयाद्वदति दिग्धगलस्तृषार्तः ॥ ४ ॥

मधुकोशव्याख्या ।

क्षयजमाह—धूम्येतेत्यादि । धूम्येत वागिति सधूमेव निर्गच्छन्ती वेदनयाऽनुभूयते । क्षयकृत इति धातुक्षयकृतस्वरभेदे । क्षयमाप्नुयाच्च वागिति पदच्छेदः । एष च यदा हतवाग्भवति ओजःक्षयाद्वचनाक्षमस्तदा न साध्यते, अन्यथा साध्यः । तेन प्रत्याख्याय क्रियाकरणमुपपन्नं भवति । एषु चापीति पाठे वातादिस्वरभेदेषु मध्ये हतवागसाध्यः, किंत्वयं पाठष्टीकाकारैर्न व्याख्यातः ॥ मेदोजलक्षणमाह—अन्तर्गतस्वरमित्यादिना । अन्तर्गतस्वरमिति क्रियाविशेषणम्, अन्तर्गतं स्वरमिति पाठे कण्ठस्यान्तर्गतं यथा भवति तथा स्वरं वचनं वदतीति योज्यम्, अन्तर्गलमिति पाठान्तरे गलस्यान्तः अन्तर्गलं तद्गतं स्वरं वदतीत्यर्थः । दिग्धगल इति

आतङ्कदर्पणव्याख्या ।

चाप्यसाध्यमिति । अपिशब्दो भिन्नक्रमः । असाध्यमपि तेन "सर्वजे क्षयजे चापि प्रत्याख्यायाचरेत् क्रियाम्" इति सुश्रुतवचनमुपपन्नं भवतीति ॥ ३ ॥ क्षयजमाह—धूम्येत वागिति । सधूमेनेव निर्गच्छतीति वेदनयाभिभूयते, धूमायते इति पाठांतरे स एवार्थः । क्षयकृत इति । धातुक्षयकृते स्वरभेदे क्षयमाप्नुयाच्च, वागिति पदच्छेदः, वचनं क्षयमाप्नुयाद्वात्तादिति शेषः । स एव यदा हतवाक् ओजःक्षयाद्वचनाक्षमः, तदा न साध्यः, अन्यथा तु साध्यः । अन्ये एषु चेति पठंति । ततश्चैषु वातादिस्वरभेदेषु मध्ये हतवाक् असाध्यः किन्त्वयं पाठः टीकाकारैर्न स्वीकृतः । मेदोजमाह—अंतरिति । अंतर्गतस्वरमिति क्रियाविशेषणम् । तेन कण्ठस्यान्तर्गतं यथा भवति तथा स्वरं वचनं वदतीति योज्यम् । अन्ये अंतर्गलमिति पठंति तत्र गलस्य अंतः अंतर्गलं तद्गतं स्वरं वदतीत्यर्थः । मेदोन्वयान्मेदःसंबंधात् । मेदश्चयादिति केचित्पाठांतरं पठंति । मेदश्चयान्मेदोवृद्धेरिति । मेदःक्षयादिति पाठांतरे अत्र स्वरशब्दो लुप्तो मध्येऽतिदिष्टो द्रष्टव्यः । तेन मेदसः स्वरक्षयादिति । दिग्धगल इति । श्लेष्मणा मेदसा वा लिप्तगल इत्यर्थः । तृषार्त इति । मेदो-

१ धूप्येतेति पाठान्तरम् ।

क्षीणस्य वृद्धस्य कृशस्य वाऽपि चिरोत्थितो यश्च सहोपजातः ॥
मेदस्विनः सर्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति ॥ ९ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने स्वरभेदनिदानं
समाप्तम् ॥ १३ ॥

## अथरोचकनिदानम् १४.

वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनरूपगन्धैः ॥
अरोचकाः स्युः परिहृष्टदन्तः कषाययक्त्रश्च मतोऽनिलेन ॥ १ ॥

मधुकोशव्याख्या ।

श्लेष्मणा मेदसा वा लिप्तगल इत्यर्थः । तृषार्तो मेदोरुद्धस्रोतस्त्वात् ॥ ४ ॥ उक्तवातादिजानामेवावस्थायामसाध्यत्वमाह—क्षीणस्येत्यादिना सहोपजात इत्यन्तेन । क्षीणस्य क्षीणमांसस्य । कृशस्य अवलस्य । सहोपजातः जन्मप्रभृतिबद्धः काकस्वर इति लोके । सहोपजातः इत्यत्र मदोपजातः इति पाठान्तरम्, मदो रोगविशेषः । मेदस्विनोऽतिस्थूलस्य मेदसावृतस्रोतस्त्वेन यो जातः, अमेदस्विनस्तु मेदोदुष्ट्या जातः साध्यः स पूर्वमुक्त इति न विरोधः । सर्वसमुद्भवश्च गाढः संपूर्णलिङ्गो वा असाध्यो द्रष्टव्य इति ॥ ९ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां स्वरभेदनिदानं समाप्तम् ॥ १३ ॥

ऊर्ध्वंगविकारसाधर्म्यादरोचकमाह—वातादिभिरित्यादि। एकैकशो वातादिभिस्त्रयः सन्निपातेनैकः शोकादिना गन्धान्तेन आगन्तुरेक एव गणनीयः, यतः पञ्चानामेव लक्षणं वक्ष्यति; सुश्रुते चोक्तं—"भक्तोपघातमिह पञ्चविधं वदन्ति" इति । शोकादि-

आतङ्कदर्पणव्याख्या ।

रुद्धस्रोतस्त्वात् ॥ ४ ॥ असाध्यमाह—क्षीणस्येति । क्षीणस्य अबलस्य कृशस्य क्षीणमांसस्य, सहजोपजातः जन्मप्रतिबद्धः, स च काकस्वर इति लोके । सहजोपजात इत्यस्य स्थाने समदोपजात इति पठन्त्यन्ये । तत्र समदो रोगविशेषः । मेदस्विन इति । अतिस्थूलस्य मेदसावृतस्रोतस्त्वेन यो जातः मेदस्विनस्तु मेदोवृद्ध्या यो जातः सोऽसाध्यः । पूर्वमुक्तमिति न विरोधः सर्वसमुद्भवश्चावगाढः संपूर्णलिंगो वा साध्यो द्रष्टव्यः ॥ ९ ॥ इत्यातंकदर्पणे निदानव्याख्यायां स्वरभेदनिदानम् ॥ १३ ॥

ऊर्ध्वगविकारसाधर्म्यादरोचकमाह—वातादिभिरिति । एकैकशो वातादिभिस्त्रयः सन्निपातेनैकः, शोकभयादिनागंतुरेक एव गणनीयः । यतः पंचानामपि लक्षणं वक्ष्यति, सुश्रुते चोक्तं "भक्तोपघातमिह पंचविधं वदंति" इति । तंत्रांतरेपि—"अरोचको भवेद्दोषैरेको हृदयसंश्रयैः । सन्निपातेन

**कट्वम्लमुष्णं विरसं च पूति पित्तेन विद्याल्लवणं च वक्त्रम् ॥**
**माधुर्यपैच्छिल्यगुरुत्वशैत्यविबद्धसंबद्धयुतं कफेन ॥ २ ॥**
**अरोचके शोकभयातिलोभक्रोधाद्यहृद्याशुचिगन्धजे स्यात् ॥**
**स्वाभाविकं चास्यमथारुचिश्च त्रिदोषजे नैकरसं भवेत्तु ॥ ३ ॥**

मधुकोशव्याख्या ।

जस्तु यद्यपि वातादिजः, तथाऽपि हेतुप्रत्यनीकचिकित्साकरणार्थं पृथगुक्तः । अतिपैलोभोऽत्राहितस्य सततोपयोगहेतुतया दोषप्रकोपक इति दर्शयति । अरोचका स्युरिति छेदः ॥ वातिकलक्षणमाह—परीत्यादि । परिहृष्टदन्त इति अम्लभक्षणेनेव॥१॥ त्तिकलक्षणमाह—कट्वित्यादि । कटुशब्दोऽत्र तिक्तवाची । यदाह विदेहः—"पित्तेनः तिक्तास्यविदाहकृत् स्यात् स्याद्धास्यहृल्लासकरः कफेन" इति ॥ श्लैष्मिकलक्षणमाह—लवणमित्यादि । कफजः, विदग्धस्य श्लेष्मणो लवणरसत्वात् । उक्तं हि सुश्रुते—"श्लेष्मा विदग्धो लवणः स्मृतः, पित्तं विदग्धमम्लम्" इति । विबद्धसंबद्धयुतमिति विबद्धं च तत् संबद्धयुतं चेति विबद्धसंबद्धयुतम् । अत्र विबद्धं बद्धमि ', भक्षणाद्यसामर्थ्यात्; सबद्धयुतं कफस्येति शेषः, भावे क्तः, कफलिप्तमित्यर्थः । विदग्धसंबद्धयुतामिति पाठान्तरं सुगमम् । विबद्धसन्नद्धयुतमिति पाठे विबद्धः सन्नद्धः स च प्रकृतत्वात् कफस्य सन्नद्धो बद्धः, 'णह' बन्धने, इत्यस्माद्धातोः पूर्ववत् क्तादि । विबद्धसंस्तम्भयुतमिति काश्मीराः ॥ २ ॥ आगन्तुजमाह—अरोचक इत्यादि । अहृद्यगन्धो घ्राणोद्वेजको गन्धः । स्वाभाविकं चास्यमिति अविकृतमुखरसत्वं, न तु वातादिजवत्

आतङ्कदर्पणव्याख्या ।

मनसः संतापेन च पंचमः । शोकादिजो यद्यपि वातजस्तथापि हेतुप्रत्यनीकचिकित्सार्थं पृथगुक्तः । ऐतैर्हेतुभिररोचका भवंति । मनोघ्नाशनम् उच्छिष्टकृमिक्लिन्नादिरूपं शरीरश्वयथुगतम्, गंधः पूतिः तैः । वातिकमाह—परिहृष्टदंत इति अम्लभक्षणेनेव, कषायवक्त्र इति लोध्रचर्वितस्येव ॥१॥ पित्तजमाह—कट्वित्यादि । कटुरत्र तिक्तवाचकः । यदाह विदेहः—"पित्तेन तिक्तास्यविदाहकृत्स्यात्स्याद्धास्यहृल्लासकरः कफेन" इति । विरसमिति रोगस्वभावात् । अन्यथा वातेन विरसास्यत्वं पित्तेन पूति दुर्गंधं जानीयात् । लवणं च वक्त्रमिति । कफजलक्षणेन पठनीयः यतो विदग्धः श्लेष्मा लवणभावमुपैति । कफजमाह—माधुर्येति । कफेन लवणं च वक्त्रमिति योज्यं माधुर्यादियुतमिति वक्त्रेणैव । विबद्धसंबद्धयुतमिति । निबद्धं च तत्संबद्धयुतं तथा विबद्धमिव भक्षणाक्षमं, संबद्धयुतं कफस्येति शेषः।लिप्तमित्यर्थः । अन्ये विबद्धसन्नद्धयुतमिति पठंति, विबद्धः सन्नद्धः स च प्रकृतत्वात् । कफस्य सन्नद्धो बद्धः, णह—बंधन इत्यस्य धातोः प्रयोगः ॥२॥ शोकजमाह—अहृद्यः घ्राणोद्वेजको गंधः, अशुचिः उच्छिष्टं, स्वाभाविकं चास्यमिति । अविकृतमुखरसत्वं न तु वातादिवद्वक्त्रकषायत्वादिकम् । अथ अरुचिरिवं शेषत्वं त्रिदोषजमाह—अनेकरसमास्यमित्यर्थः ॥ ३ ॥

हृच्छूलपीडनयुतं पवनेन पित्तात्
तृड्दाहचोषबहुलं सकफप्रसेकम् ॥
श्लेष्मात्मकं बहुरुजं बहुभिश्च विद्या-
द्वैगुण्यमोहजडताभिरथापरं च ॥ ४ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने अरोचकनिदानं समाप्तम् ॥ १४ ॥

मधुकोशव्याख्या ।

कषायत्वादि ॥ त्रिदोषजमाह—अथेत्यादि । त्रिदोषजे नैकरसमिति वातजाद्युक्तकषायाद्यनेकरसत्वम् ॥ ३ ॥ वातजादिभेदेन मुखविकृतिमभिधायान्यदेशविकृतिमाह—हृच्छूलमिति । हृदि शूलेन पीडनम् । चोषश्चूषणवत् पीडा । बहुभिरिति त्रिदोषैः । वैगुण्यमोहजडताभिरथापरमिति उपलक्षणे तृतीया, वैगुण्यं मनसो व्याकुलत्वम् । अपरमिति दोषजादन्यदागन्तुजमित्यर्थः । सत्यामपि बुभुक्षायामभ्यवहारासामर्थ्यमरुचिः; अभिलषितमप्यन्नं दीयमानं नाभ्यवहरतीत्यनन्नाभिनन्दनम्, अन्नस्य श्रवणस्मरणदर्शनगन्धस्पर्शनैर्यत्रोद्विजते स भक्तद्वेषः; एवं त्रिविधोऽपि रोगश्चरकसुश्रुताभ्यामरोचकशब्देन गृहीतः । उक्तं हि वृद्धभोजेन—"प्रक्षिप्तं तु मुखे चान्नं जन्तोर्न स्वदते मुहुः । अरोचकः स विज्ञेयो भक्तद्वेषमतः शृणु ॥ चिन्तयित्वा तु मनसा दृष्ट्वा श्रुत्वाऽपि भोजनम् । द्वेषमायाति यो जन्तुर्भक्तद्वेषः स उच्यते ॥ यस्य नान्ने भवेच्छ्रद्धा सोऽभक्तच्छन्द उच्यते । कुपितस्य भयार्तस्य यश्च भक्तनिराधजः" इति ॥ ४ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामरोचकनिदानं समाप्तम् ॥ १४ ॥

आतंकदर्पणव्याख्या ।

वातादिभेदेन मुखे विकृतिमभिधायान्यथाविकृतिमाह—हृच्छूलेति । हृदि शूलेन पीडनं हृच्छूलपीडनं तेन युक्तं, चोषः चूषणवत्पीडा अरोचकमिति शेषः । श्लेष्मात्मकं सकफप्रसेकं स्यात् बहुभिरिति त्रिदोषैः, बहुरुजमनेकपीडाकरं, वैगुण्यमोहजडताभिरथापरं चेति । उपलक्षणे तृतीया । वैगुण्यं मनसो व्याकुलत्वम् । अपरमिति । दोषादन्यत् आगन्तुजमित्यर्थः । अरोचकलक्षणं—सत्यां बुभुक्षायामभ्यवहारासामर्थ्यमिति । अरुचिः अभिलषितमप्यन्नं दीयमानं नाभ्यवहरतीति । नान्नाभिनंदनम् । अन्नस्य श्रवणस्मरणदर्शनस्पर्शनगंधैर्यत्रोद्विजते स भक्तद्वेषः । एवं त्रिविधोपि रोगश्चरकसुश्रुताभ्यामरोचकशब्देन संगृहीतः । उक्तं हि वृद्धभोजेन—"प्रक्षिप्तंतु मुखे चान्नं जंतोर्न स्वदते मुहुः । अरोचकः स विज्ञेयो भक्तद्वेषमतः श्रृणु ॥ चिंतयित्वा तु मनसा दृष्ट्वा श्रुत्वा च भोजनम् । द्वेषमायाति यो जंतुर्भक्तद्वेषः स उच्यते ॥ कुपितस्य भयार्त्तस्य अभिचाराभिभूतये । यस्यान्ने न भवेच्छ्रद्धा स भक्तद्वेष उच्यते" ॥ ४ ॥ इत्यातंकदर्पणे निदानव्याख्यायामरोचकनिदानम् ॥ १४ ॥

# अथ छर्दिनिदानम् १५.

दुष्टैर्दोषैः पृथक् सर्वैर्बीभत्सालोचनादिभिः ॥
छर्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते ॥ १ ॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति ॥
अकाले चातिमात्रैश्च तथाऽसात्म्यैश्च भोजनैः ॥ २ ॥
श्रमाद्भयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः ॥
नार्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः ॥ ३ ॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ॥
छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः ॥ ४ ॥
अत्यन्तमपरीतस्य च्छर्दे वै सम्भवो ध्रुवम् ॥
निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावितः ॥ ५ ॥

---

मधुकोशव्याख्या ।

छर्द्यामप्यरुचेर्भावात्तथारोचकवत्पञ्चविधत्वादरोचकानन्तरं छर्दिस्तस्या निदानं निरुक्तिं चाह—दुष्टैरित्यादि । बीभत्सालोचनं विकृतिदर्शनम्, आदिग्रहणेनानिष्टगन्धभक्षणादीनां ग्रहणम् । नार्याश्चापन्नसत्त्वाया इति गर्भिण्यास्तस्या गर्भोत्पीडनेन वातवैगुण्याच्छर्दिः । छादयन्नाननमित्यादि । वेगैर्मुखं छादयन् पूरयन्, अर्दयन् पीडयन्, अङ्गभञ्जनैः अङ्गभेदैः । छादयति मुखम्, अर्दयति चाङ्गानीति छर्दिः

आतङ्कदर्पणव्याख्या ।

छर्द्यामरुचेर्भावादरोचकानंतरं छर्दिरुच्यते । तस्या निदानं निरुक्तिं चाह—दुष्टैरिति । एतैः कारणैर्वक्ष्यमाणैर्दुष्टैर्दोषैः छर्दयः पंच भवंति । वातादिभिस्त्रयः, त्रिदोषेणैका, बीभत्सादिभिरेका, एवं पंच । बीभत्सं विकृतदर्शनम्, आदिशब्देनानिष्टगंधभक्षणादीनां ग्रहणम् ॥ १ ॥ निदानपूर्वां संप्राप्तिमाह—अतीति । नार्याश्चापन्नसत्त्वाया इति गुर्विण्या गर्भोत्पीडनेन वातवैगुण्यात् छर्दिः । बीभत्सैर्हेतुभिश्चान्यैरिति । पूयामेध्यादिदर्शनगंधास्वादनैर्घृणाकारिभिः छादयन्नाननमिति । दोषवेगेन मुखं पूरयन् अर्दयन्, अंगभंजनैरंगभेदैः छादयति । मुखमर्दयति च अंगानि स छर्दिरिति निरुच्यते, वेगैर्मुखं प्रति प्रधावितो दोष उदानो वायुः छर्दिं कुर्यादि-

हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः ॥
द्वेषोऽन्नपाने च भृशं वमीनां पूर्वलक्षणम् ॥ ६ ॥
हृत्पार्श्वपीडामुखशोषशीर्षनाभ्यर्तिकासस्वरभेदतोदैः ॥
उद्गारशब्दप्रबलं सफेनं विच्छिन्नकृष्णं तनुकं कषायम् ॥
कृच्छ्रेण चाल्पं महता च वेगेनार्तोऽनिलाच्छर्दयतीह दुःखम् ॥ ७ ॥
मूर्च्छापिपासामुखशोषमूर्धताल्वक्षिसन्तापतमोभ्रमार्तः ॥
पीतं भृशोष्णं हरितं सतिक्तं धूम्रं च पित्तेन वमेत्सदाहम् ॥ ८ ॥
तन्द्रास्यमाधुर्यकफप्रसेकसन्तोषनिद्रारुचिगौरवार्तः ॥
स्निग्धं घनं स्वादु कफाद्विशुद्धं सरोमहर्षोऽल्परुजं वमेत्तु ॥ ९ ॥

---

मधुकोशव्याख्या ।

'छद' अपवारणे, 'अद' हिंसायाम्, अनयाः पृषोदरादित्वेन रूपसिद्धिः ॥ १–५ ॥ पूर्वरूपमाह—हृल्लासेत्यादि । उद्गाररोधः उद्गाराप्रवृत्तिः । प्रसेको मुखप्रसेकः, तस्य लवणत्वं प्रभावादामाशयोत्क्लेशभवत्वेन कफविदाहाद्वा; तनुरघनोऽल्पो वा ॥ ६ ॥ वातजाया लक्षणमाह—हृत्पार्श्वेत्यादि । शीर्षनाभ्यर्तिः मस्तके नाभौ च शूलं, तोदैरित्यनन्तरं युक्त इति शेषः, उपलक्षणे वा तृतीया । आर्तो नरश्छर्दयतीति योज्यम् । किंभूतं छर्दयतीत्याह—उद्गारेत्यादि । उद्गारशब्दाभ्यां प्रबलमुद्गारशब्दप्रबलम् । विच्छिन्नं सान्तरवगम्, अल्पद्रवं वा, वातस्य द्रवत्वाभावात् । तनुकमघनम् । कषायं कषायरसं, कषायस्य वातकृतत्वात् ॥ ७ ॥ पित्तजामाह—मूर्च्छेत्यादि । तमोऽन्धकारदर्शनमिव । धूम्रं कृष्णलोहितवर्णम् ॥ ८ ॥ कफजामाह—तन्द्रेत्यादि ।

आतङ्कदर्पणव्य ।

स्यर्थः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ तस्याः पूर्वरूपमाह—हृदिति । छर्दीनामिदं पूर्वरूपम् । उद्गाररोध उद्गाराप्रवृत्तिः, प्रसेको मुखप्रसेकः उदकस्रावः तस्य लवणत्वं प्रभावात् आमाशयोत्क्लेशाभवत्वेन कफविदाहाद्वा, तनुः अघनः अल्पो वा ॥ ६ ॥ वातजामाह—हृदिति । शीर्षनाभ्यर्तिरिति । मस्तके नाभौ च शूलं तोदैरित्यनंतरं युक्त इति शेषः । उपलक्षणे वा तृतीया । उद्गारेति । वातात् नरः छर्दयतीति योज्यम् । किंभूतं छर्दयतीत्याह—उद्गारशब्दाभ्यां प्रबलमुद्गारशब्दप्रबलं विच्छिन्नं विरलवेगम् अल्पद्रवं वा, तस्य द्रव्यत्वाभावात् । तनुकमघनं, कषायं कषायरसं कषायरसस्य वातकृतत्वात् । कृच्छ्रेण कष्टेन अल्पं स्तोकं महता वेगेन ॥ ७ ॥ पित्तजामाह—मूर्च्छेति । मूर्ध्नि शिरसि ताल्वक्ष्णोश्च संतापवान् तमोंधकारदर्शनमिव, भ्रमश्चक्रारूढस्येव पदार्थस्य अन्यथाज्ञानं वा तैरार्तः । कीदृशो वमेदित्याह—पीतमित्यादि । भृशोष्णमत्युष्णं, हरितं शाकवर्णं, धूम्रं कृष्णलोहितवर्णम्, पित्तेनेति योज्यम् । कफजामाह—तन्द्रेति । एते-

शूलाविपाकारुचिदाहतृष्णाश्वासप्रमोहप्रबला प्रसक्तम् ॥
छर्दिस्त्रिदोषाल्लवणाम्लनीलसान्द्रोष्णरक्तं वमतां नृणां स्यात्१०
विट्स्वेदमूत्राम्बुवहानि वायुः स्रोतांसि संरुध्य यदोर्ध्वमेति ॥
उत्सन्नदोषस्य समाचितं तं दोष समुद्धूय नरस्य कोष्ठात् ॥११॥
विण्मूत्रयोस्तत्समगन्धवर्णं तृट्श्वासहिक्कार्तियुतं प्रसक्तम् ॥
प्रच्छर्दयेद्दुष्टमिहातिवेगात्तयार्दितश्चाशु विनाशमेति ॥ १२ ॥

मधुकोशव्याख्या ।

आस्यमाधुर्यं मुखस्य मधुररसत्वम् । सन्तोष इति । सन्ताष इव सन्ताषः, अन्नानभिलाष इत्यर्थः, तृप्तो हि नान्नमभिलषति । अरुचिरभ्यवहारासामर्थ्य । स्वादु मधुरम् । विशुद्धमतिशुभ्रं, सुश्रुते 'शुक्लं हिम सान्द्रं कफेन' इति पाठात् ॥ ९ ॥ त्रिदोषजामाह—शूलेत्यादि । शूलादिभिः प्रमोहान्तैः प्रबला शूलादिप्रबला । प्रसक्त निरन्तरम् । त्रिदोषादित्यत्र त्रिदोषेति पाठान्तरे त्रिदोषजेत्यर्थः ॥ १० ॥ असाध्यमाह—विडित्यादि । उत्सन्नदोषस्य । उद्गतदोषस्य दोषमिति पित्तं कफं वा, स्वेदादिकान् वा तद्दुष्टान् धातुमलान् । तदिति यस्माद्विडादिवाहिस्रोतोदुष्टिस्ततोहेतोर्विण्मूत्रयोः समगन्धवर्णं छर्दयतीति योज्यम् । इयं तु छर्दिर्विकृतिविषमसमवायारब्धा त्रिदोषजेति केचित्, अन्ये त्वाहुः—सर्वा एव छर्दयः प्रबला एवंविधाः सत्योऽसाध्याः स्युरिति ॥ ११ ॥ १२ ॥

आतङ्कदर्पणव्याख्या ।

रुपद्रवैरार्त्तः स्निग्धादिकं वमेत् आस्यमाधुर्यं मुखस्य मधुररसत्वं, संतोष इव संतोषः अन्नानभिलाष इत्यर्थः । तृप्तो हि नान्नमभिलषति । अरुचिरभ्यवहारासामर्थ्यम् । स्वादु मधुरं विशुद्धमिति विशुद्धं केवलं कफं यदुक्तं सुश्रुते—"शुक्लं हिमं सांद्रकफं कफेन" इति । अल्परुजमिति कफस्य द्रवरूपत्वात् मुखेन निःसरणमित्यर्थः ॥ ९ ॥ त्रिदोषजामाह—शूलेति । त्रिदोषात् या छर्दिः तया वमतां नृणामित्यर्थः । शूलादिभिः प्रमोहान्तैः प्रबला, प्रसक्तं निरंतरं त्रिदोषादित्यत्र त्रिदोषेति पाठस्तत्र त्रिदोषजेत्यर्थः ॥ १० ॥ असाध्यमाह—विडिति । उत्पन्नदोषस्य[1] उद्गतदोषस्य पित्तं कफं वा, स्वेदादिकान् वायुदोषान् धातुमलान् वा समस्थानात् संचाल्य उर्द्ध्वमेत्यागच्छति । तदिति तस्माद्विडादिवाहिस्रोतोदुष्टिस्ततो विण्मूत्रयोः समगंधवर्णं छर्दयतीति योज्यम् । यदा [illegible]दुद्धूय ऊर्ध्वं नीत्वेति । इयं तु च्छर्दिस्त्रिदोषजेत्येके । अन्ये तु सर्वा एव छर्दयः प्रबलाः एवंविधाः

१ एतच्च उत्पन्नदोषस्येति पाठाभिप्रायेण ।

बीभत्सजा दौर्हृदजामजा च असात्म्यजा च क्रिमिजा च या हि॥
सा पञ्चमी तां च विभावयेच्च दोषोच्छ्रयेणैव यथोक्तमादौ ॥१३॥
शूलहृल्लासबहुला क्रिमिजा च विशेषतः ॥
क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥ १४ ॥
क्षीणस्य या छर्दिरतिप्रसक्ता सोपद्रवा शोणितपूययुक्ता ॥
सचन्द्रिकां तां प्रवदेदसाध्यां साध्यां चिकित्सेन्निरुपद्रवां च१५*

मधुकोशव्याख्या ।

आगन्तुजामाह—बीभत्सजेत्यादि । दौर्हृदजा दौर्हृदालाभजा, आमजा अजीर्णजा, असात्म्यजा असात्म्यभोजनजा, क्रिमिजा कोष्ठक्रिमिसंभवा; बीभत्सजेत्यादिना क्रिमिजान्तैनैकत्वेनैव गणनीया, आगन्तुजत्वसामान्यात् । सा पञ्चमीति त्रिदोषजापेक्षया सामान्येनागन्तुजैव, आगन्तुज्वरवत् । यदि तु बीभत्सजापेक्षया क्रिमिजा पञ्चमीति गण्यते, तदा तां च विभावयेत् । दोषोच्छ्रयेणैव इत्यनेन क्रिमिजाया एव दोषसंबन्धः स्यात्, ततश्च बीभत्सजादीनां चिकित्सोपयोगिदोषसंबन्धो न लभ्यते । अन्ये तु तद्दोषपरिहारार्थं सा पञ्चमी, ताश्चेति बहुवचनान्तं पठन्ति, एवं सति अन्तर्गणनमप्रयोजनमिति अन्तर्गणनां नाद्रियन्ते । कथमत्र दोषोच्छ्रयो विभावनीय इत्याह—यथोक्तमादाविति । आदौ वातादिलक्षणे इत्यर्थः ॥ १३ ॥ क्रिमिजाया लक्षणमाह—शूलेत्यादि । क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षितेति क्रिमिहृद्रोगे क्रिमिलक्षणवत् यत् पीडादिकं तदस्यां भवतीत्यर्थः ॥ १४ ॥ असाध्यलक्षणमाह—क्षीणस्येत्यादि । सचन्द्रिकामिति मेदःप्रभृतिधातूनां स्नेहः प्रवर्तमानो मयूरपिच्छच-

आतंकदर्पणव्याख्या ।

सत्यः असाध्या इत्यर्थः ॥ ११ ॥ १२ ॥ आगन्तुजामाह—बीभत्सजेति । बीभत्सजा पूयामेध्यादिदर्शनगंधत्वादजा, आपन्नसत्त्वाया स्त्रिया दौर्हृदालाभजा, आमजा, अजीर्णजा असात्म्यजा असात्म्यभोजनजा, क्रिमिजा कोष्ठक्रिमिसंभवा, बीभत्सजेत्यादिना क्रिमिजान्ता एकैव गणनीया । एवं सर्वातिरेकैवाऽगंतुजत्वसामान्यादागंतुज्वरवत् । पंचमीति त्रिदोषजापेक्षया आगंतुजां दोषोच्छ्रयेणैव जानीयात् । यथोक्तमादाविति । यथा वातादिलक्षणेन आदाविति ॥ १३ ॥ पूर्वोक्तेन क्रिमिजाया विशेषलक्षणमाह—शूलेति ॥ क्रमिजाया अयं विशेषः हृच्छूलहृल्लासाधिका क्रिमिजा हृद्रोगतुल्यलक्षणेन च लक्षितेति यथा—"उत्क्लेदः ष्ठीवनं तोदः शूलं हृल्लासकस्तमः । अरुचिः श्यावनेत्रत्वं शोषश्च क्रिमिजे भवेत्" इति ॥ १४ ॥ असाध्यां साध्यां चाह—अतिप्रसक्ता अतिशयेन निरंतरा सोपद्रवा वक्ष्यमाणोपद्रवयुक्ता । सचंद्रिकामिति । मेदःप्रभृति-

* ताल्वोष्ठकण्ठास्यविशोषदाहसन्तापमोहभ्रमविप्रलापाः । पूर्वाणि रूपाणि भवन्ति तासामुत्पत्तिकाले तु विशेषतो हि ॥ अयमपि क्वचिदुपलभ्यते ।

कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्यमेव च ।
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्देरुपद्रवाः ॥ १६ ॥
इति श्रीमाधवकरविरचिते माधवनिदाने छर्दिनिदानं समाप्तम् ॥ १५ ॥

## अथ तृष्णानिदानम् १६.

भयश्रमाभ्यां बलसंक्षयाद्वा ऊर्ध्वं चितं पित्तविवर्धनैश्च ॥
पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत्पिपासाम् ॥
स्रोतस्स्वपांवाहिषु दूषितेषु दोषैश्च तृट् संभवतीह जन्तोः॥१॥

मधुकोशव्याख्या ।

न्द्रवत् प्रतिभाति । निरुपद्रवामिति कासाद्युपद्रवरहिताम् । तदुक्तं—"कासः श्वासो ज्वरो हिक्का तृष्णा वैचित्त्यमेव च । हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्देरुपद्रवाः" इति१४–१६
इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां छर्दिनिदानं समाप्तम् ॥ १९ ॥

छर्देस्तृष्णोपद्रवत्वाच्छर्द्यनन्तरं तृष्णानिदानं, तस्याः संप्राप्तिमाह—भयेत्यादि । पित्तविवर्धनैरिति कट्वम्लोष्णादिभिः क्रोधोपवासादिभिश्च स्वस्थान एव संचितं कुपितं च पित्तं, वातश्च भयश्रमबलक्षयैः कुपितः ऊर्ध्वं प्रसरत् पिपासां जनयति । ताल्वित्युपलक्षणं क्लोमाद्यपि बोध्यं तस्य पिपासास्थानत्वेनोक्तत्वात् । चरकेऽप्युक्तं—"रसवाहिनीश्च धमनीर्जिह्वामूलगलतालुक्लोम्नः । संशोष्य नृणां देहे कुरुतस्तृषामतिबलां तौ तु" इति । अन्नकफामजानां संप्राप्तिमाह—स्रोतःस्वित्यादि । ननु, अपांवाहिष्विति बहुवचनं विरुद्धं, 'द्वे उदकवहे' इति सुश्रुतेनोक्तत्वात् । नैवं, तयोरेवानेकप्रतानयोगादिति । दोषैरिति अन्नकफामैः, दुष्टिकर्तृत्वात् दुष्टदोषसंबन्धाद्वान्नाम-

आतंकदर्पणव्याख्या ।

धातूनां स्नेहः प्रवर्तमानो । मयूरपिच्छचंद्रिकावत्प्रतिभाति । इत्थं पंचविधामपि छर्दिमसाध्यां प्रवदेत् । वर्जयेदित्यर्थः । निरुपद्रवां कासाद्युपद्रवरहितां साध्यां चिकित्सेद्भिषगिति शेषः ॥ १९ ॥ तस्या उपद्रवमाह—कास इति । वैचित्यं विमतचित्तता ॥ १६ ॥ इत्यातंकदर्पणे निदानव्याख्यायां छर्दिनिदानम् ॥ १९ ॥

छर्देस्तृष्णोपद्रवत्वात् छर्द्यनंतरं तृष्णानिदानं तस्याः संप्राप्तिमाह—भयश्रमबलक्षयैः कुपितो वायुः पित्तविवर्द्धनैः कट्वम्लोष्णादिभिः क्रोधोपवासादिभिश्च स्वस्थाने हृदि संचितं पित्तं, वातश्च भयश्रमबलक्षयैः कुपितः ऊर्ध्वं प्रसरन् पिपासां जनयेत् । तालुप्रपन्नमिति । सवातं पित्तं तालुगतमित्यर्थः । ताल्वित्युपलक्षणम् । तेन क्लोमगतमपि बोद्धव्यं तस्याः पिपासास्थानत्वात् ।

१ श्लोकमिमं मधुकोशकारो मूले नाङ्गीकरोति— ।

**तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथा ह्यामसमुद्भवा च॥**
**भक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्वशस्तु॥२॥**
**क्षामास्यता मारुतसंभवायां तोदस्तथा शङ्खशिरःसु चापि ॥**
**स्रोतोनिरोधो विरसं च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति ॥३॥**
**मूर्च्छान्नविद्वेषविलापदाहा रक्तेक्षणत्वं प्रततश्च शोषः ॥**
**शीताभिनन्दा मुखतिक्तता च पित्तात्मिकायां परिदूयनं च ॥४॥**

मधुकोशव्याख्या ।

योरपि दोषत्वमिति गदाधरः ॥ तिस्र इति वातादिभिः प्रत्येकम् । क्षतजेति क्षतनिमित्तव्रणिनां या भवतीति । चतुर्थीत्यनेन उक्तानां चतसृणां सुखसाध्यत्वं बोधयति, अन्यासां तु कष्टसाध्यत्वम् ॥ १ ॥ २ ॥ वातजामाह—क्षामास्यतेत्यादि । क्षामास्यता शुष्कदीनमुखत्वम् । स्रोतोनिरोधो रसाम्बुवाहिधमनीनिरोधः । शीताभिरद्भिरित्यनेन वायोः शीतस्य शीताम्बुना वृद्धिरित्यनुपशयनिदर्शनम् । चकारात् चरकोक्तनिद्रानाशस्य ग्रहणम् । यदाह चरकः—"निद्रानाशः शिरसो भ्रमस्तथा शुष्कगलताल्वः" इति ॥ ३ ॥ पित्तजामाह—मूर्च्छेत्यादिना । विलापः प्रलापः । प्रततश्च शोषः अतीव महती तृष्णा । शीताभिनन्दा शीतेच्छा, 'गुरोश्च हलः'—इत्यकार-

आतङ्कदर्पणव्याख्या ।

उक्तं च चरके—"रसवाहिनीश्च धमनीर्जिह्वामूलगलतालुकक्लोम्नः संशोष्य नृणां देहे कुरुतस्तृषामतिबलौ तौ तु" इति ॥ १ ॥ अन्नकफजामजानां संप्राप्तिमाह—स्रोतःस्विति । ननु स्रोतःस्विति बहुवचनं विरुद्धं यदुक्तं सुश्रुते—"द्वे उदकवहे" इति । मैवं तयोरेवानेकप्रतानयोगादिति । अन्नकफामदुष्टिकर्तृत्वात् । दुष्टदोषसंबंधादन्नामयोरपि दोषत्वमिति गयदासः । तिस्र इति । वातादिभिः प्रत्येकं क्षतजेति क्षतनिमित्ता व्रणिनां या भवति चतुर्थीत्यनेन चोक्तानां तिसृणां साध्यत्वं बोधयति । अन्यासां तु कष्टसाध्यत्वमिति । क्षयादन्या पंचमी, आमसमुद्भवा षष्ठी, भक्तोद्भवा सप्तमिकेति, क्रमेण तासां लक्षणानि जानीहि ॥ २ ॥ वातजां तृष्णामाह—क्षामेति । क्षामास्यता शुष्कदीनमुखत्वं वक्तुं चर्वितुं वाऽसामर्थ्यमित्येके । शंखशिरःस्विति शंखयोः शिरसि वा तोदो व्यथाविशेषः शंखयोर्द्वित्वेन बहुवचनत्वम् । स्रोतोनिरोधः रसांबुवाहिधमनीनिरोधः । अन्ये शब्दाश्रवणमिति । शीताभिरद्भिरित्यनेन वायोः शीतः स्पर्शः तेन वृद्धिरित्यनुपशयस्य निदर्शनं चकाराच्चरकोक्तनिद्रानाशस्य ग्रहणम् ॥ ३ ॥ पित्तजामाह—मूर्छेति । विलापो विविधप्रकारेण भाषणं रक्तेक्षणत्वं रक्तनेत्रत्वं प्रततश्च शोष इति । अतिमहती तृष्णाशीताभिनन्दा शीतेच्छा, परिदूयनमुपतापः । परिधूपनम्, इति पाठांतरं तत्रांतःक्षोभण

**वाष्पावरोधात्कफसंवृतेऽग्नौ तृष्णा बलासेन भवेत्तथा तु ॥**
**निद्रागुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रम्५**

मधुकोशव्याख्या ।

प्रत्ययः । परिदूयनमनुतापः; परिधूमनमिति पाठे अन्तःक्षोभणं, धूमनिर्गम इव वा । चकारात् पीतविण्मूत्रत्वादयो ग्राह्याः ॥ ४ ॥ श्लेष्मजामाह—वाष्पेत्यादि । स्वकारणकुपितेन कफेन उपरिष्टादाच्छादितेऽन्तरग्नौ कफावरुद्धवाष्पेण पावकोष्मणा अधोगतेनाम्बुवहस्रोतःशोषणात् कफजतृष्णा भवति । ननु, कफजा तृष्णा अनुपपन्ना? कफस्य वृद्धस्य केवलद्रवस्य पिपासाकर्तृत्वायोगात्, वातपित्तयोरेव तृष्णाकर्तृत्वेनोक्तत्वात् । यदुक्तं—"पित्तं सवातं कुपितं नराणाम्" इत्यादि । चरकेऽप्युक्त—'नाग्नेर्विना तर्षः पवनाद्वा, तौ हि शोषणे हेतू" इति । सुश्रुतेऽप्युक्त—"मद्यस्याग्नेयवायव्यगुणावम्बुवहानि तु। स्रोतांसि शोषयेयातां ततस्तृष्णा प्रजायते" इति । अत आह—तथेति । उक्तप्रकारेण कफादग्नेर्वाष्पावरोधादिना, न तु स्वगुणेन; अत एव चरके कफजा तृष्णा न पठितव, सुश्रुतन तु चिकित्साभेदार्थं पठिता, हारीतेनापि सपित्तेन श्लेष्मणा तृष्णा पठिता न तु केवलेन । यदाह—"स्वाद्वम्ललवणाजीर्णैः क्रुद्धः श्लेष्मा सहोष्मणा।प्रपद्याम्बुवहं स्रोतस्तृष्णां संजनयेन्नृणाम् ॥ शिरसो गौरवं तन्द्रा माधुर्यं वदनस्य च । भक्तद्वेषः प्रसेकश्च निद्राधिक्यं तथैव च ॥ एतै-

आतङ्कदर्पणव्याख्या ।

धूमस्योद्गिरणमिव, चकारात्पीतविण्मूत्रनेत्रादयो ग्राह्याः ॥ ४ ॥ श्लेष्मजामाह—वाष्पेति । स्वकारणकुपितेन कफेन संवृते उपरिच्छादितेऽतरग्नौ कफावरुद्धवाष्पेण पावकोष्मणा अधोगतानामंबुवाहस्रोतसां शोषणात् कफजा तृष्णा भवति । ननु कफेन तृष्णाऽनुपपन्ना कफस्य वृद्धस्य केवलद्रवभूतस्य पिपासाकर्तृत्वासंभवात् । वातपित्तयोरेव तृष्णाकर्तृत्वेनोक्तत्वात् । यदुक्तं—"पित्तं सवातं कुपितं नराणाम्"—इत्यादि । चरकेऽप्युक्तम्। "नाग्नेर्विना हि तर्षः पवनाद्वा तौ हि शोषणे हेतू ।" इति । सुश्रुतेप्युक्तं "मद्यस्याग्नेयवायव्यौ गुणावंबुवहानि च । श्रोतांसि शोषयेयातां ततस्तृष्णा प्रवर्त्तते" इति । अतएवाह—तथेत्युक्तप्रकारेण कफात् अग्नेर्वाष्पावरोधादिना न तु स्वगुणेन, अत एव चरकेण कफजा तृष्णा न पठितैव । सुश्रुते तु चिकित्साभेदार्थं पठिता । हारीतेनापि सपित्तेन श्लेष्मणैवतृष्णा पठिता न तु केवला । "स्वाद्वम्ललवणाजीर्णैः क्रुद्धः श्लेष्म सहोष्मणा । प्रपद्याम्बुवहं स्रोतस्तृष्णां संजनयेन्नृणाम् । शिरसो गौरवं तंद्रा माधुर्यं वदनस्य च । भक्तद्वेषः प्रसेकश्च निद्राधिक्यं तथैव च॥ लिंगैरेतैर्विजानीयात्तृष्णां कफसमुद्भवाम्" । तथा तृष्णया

**क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु ॥**
**रसक्षयाद्या क्षयसंभवा सा तयाभिभूतश्च निशादिनेषु ॥ ६ ॥**
**पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः॥**
**रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत्॥७॥**
**त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादकर्त्री ॥**
**स्निग्धं तथाम्लं लवणं च भुक्तं गुर्वन्नमेवाशु तर्षां करोति ॥८ ॥**

मधुकोशव्याख्या ।

लिङ्गैर्विजानीयात्तृष्णां कफसमुद्भवाम्" इति ॥ ५ ॥ क्षतजामाह-क्षतस्येति । शस्त्रादिक्षतयुक्तस्य । क्षयशब्दस्यानेकविषयत्वात् क्षयजां विशेषयन्नाह-रसक्षयादित्यादि। पेपीयते पुनःपुनः पिबति; एतच्च विशेषपरं, सर्वतृष्णासु तथाभूतत्वात् । यदाह सुश्रुतः-"सततं यः पिबेद्वारि न तृप्तिमधिगच्छति । पुनः कांक्षति तोयं च तं तृष्णार्दितमादिशेत्" इति । रसक्षयोक्तानि च लक्षणानि सुश्रुतोक्तानि । तद्यथा-"रसक्षये हृत्पीडा कम्पः शून्यता तृष्णा च" इति । तस्यां क्षयजायां, अशेषेण कात्स्न्र्येन ॥ ६ ॥ ७ ॥ आमजामाह-त्रिदोषेत्यादि । त्रिदोषलिङ्गा त्रिदोषलिङ्गयुक्ता । आमे हि अजीर्णेऽजीर्णात् त्रिदोपकोपः स्यादिति ॥ भक्तोद्भवामाह-स्निग्धमित्यादि । चकारात् कटु च, न च तिक्तकषायमधुराणीत्यर्थः । गुरुशब्देन मात्रागुरु, द्रव्यगुरु च गृह्यते । दृढबलेन तु पञ्च तृष्णाः पठिताः, वातपित्तक्षयामोपसर्गजाः-इति । तत्र कफजा आमजायामेव अवरुद्धा; क्षतजा वातजायां भक्तजा च

आतंकदर्पणव्याख्या ।

पीडितो मनुष्योऽतितरां कृशो भवति । धातूनामनुपचयात् ॥ ५ ॥ क्षतजामाह-शस्त्रादिक्षतयुक्तस्य नरस्य रुक्पीडनात्, शोणितस्रावाच्च तृष्णा जायते । सा क्षतसंभवा चतुर्थी क्षयशब्दस्यानेकविषयत्वात् । क्षयजां विशेषयन्नाह-रसक्षयादिति । रसक्षयोक्तानि च लक्षणानि तस्यामशेषेण भिषग्व्यवस्येत् । रसक्षया तृष्णा भवति, सा क्षयजा ज्ञेया । तया व्याप्तः पुमान् जलं पेपीयते पुनःपुनः पिबति, परं सुखं न लभते, जलेन तृप्तो न भवतीत्यर्थः । एतच्च विशेषपरं, सर्वतृष्णासु तथा भूतत्वात्, तां केचन सन्निपातात्कथयन्ति । यदुक्तं सुश्रुते-"सततं यः पिबेत्तोयं न तृप्तिमधिगच्छति । पुनः कांक्षति तोयञ्च तं तृष्णार्दितमादिशेत् " ॥ रसक्षयोक्तानि तु लक्षणानि सुश्रुतोक्तानि तथा च रसक्षये हृत्पीडा कंपः शोषः शुष्कता तृष्णा चेति एतानि समस्तान्यपि भवंति ॥६॥७॥ आमजामाह-त्रिदोषेति । त्रिदोषलिंगा त्रिदोषलिंगयुक्ता सादोंगानाम्[1] एतानुपद्रवान् करोति । आमे हि अजीर्णात् त्रिदोषकोपः स्यादिति । उक्तं च सुश्रुते-"अजी-

[1] एतच्चातंकदर्पणकारो मूले नांगीकरोति ।

दीनस्वरः प्रताम्यन् दीनः संशुष्कवक्त्रगलतालुः॥
भवति खलु योपसर्गात्तृष्णा सा शोषिणी कष्टा॥ ९॥
ज्वरमोहक्षयकासश्वासाद्युपसृष्टदेहानाम्॥
सर्वास्त्वतिप्रसक्ता रोगकृशानां वमिप्रयुक्तानाम्॥
घोरोपद्रवयुक्तास्तृष्णा मरणाय विज्ञेयाः॥ १०॥

इति श्रीमाधवकरविरचिते माधवनिदाने तृष्णानिदानं समाप्तम्॥ १६॥

मधुकोशव्याख्या।

वातजायां, भक्तावरणे वातप्रकोपात्; पित्तजायां वा, विदाहेन पित्तप्रकोपणात्। सुश्रुते चोपसर्गजा यथास्वं दोषजासु। ननु, मद्यजाऽपि सुश्रुतेन मदात्यये पठिता, तत् कथं सप्तेत्युच्यते? सत्यं, तस्या वातपित्तजायामवरोधः, एवं दृढबलमतेऽपि॥ ८॥ तत्रोपसर्गजामाह—दीनेत्यादि। दीनस्वरः क्षामवचनः, प्रताम्यन् मुह्यन्। दीनः क्लान्तः, उपसर्गादित्युपद्रवात्, उपद्रवशब्दश्च सामान्येन रोगमात्रेऽपि वर्तते, यथा—निरूहोपद्रवचिकित्सितं व्याख्यास्याम इति। कष्टा कष्टसाध्या, व्याधिकर्षितदेहत्वात्॥ ९॥ तानेवोपसर्गानाह—ज्वरेत्यादि। आदिशब्देनातिसारादीनां ग्रहणम्॥ असाध्यानां लक्षणमाह—सर्वास्त्वित्यादि। सर्वा वातजादयः,अतिप्रसक्ताअतिप्रवृद्धाः। घोरोपद्रवयुक्ता मुखशोषादिभिर्बलवद्भिः उपद्रवैः समन्विता इति जेज्जटः॥ १०॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां तृष्णानिदानं समाप्तम्॥ १६॥

आतङ्कदर्पणव्याख्या।

र्णान्पवनादीनां विभ्रमो बलवान्भवेत्'' इति। भक्तोद्भवामाह—स्निग्धमिति। चकारात् कटु च, न तु तिक्तकषायमधुराणीत्यर्थः। गुरुशब्देन मात्रागुरु, द्रव्यगुरु, च गृह्यते। दृढबलेन तु पंच तृष्णा उक्ताः वातपित्तक्षयामोपसर्गजनिता इति। तत्र कफजायामामजांतर्भूता, वातजायां क्षतजा, भक्तजापि वातजायां, भक्तावरणेन वातकोपात्, पित्तजायां वा विदाहेन पित्तकोपात्। सुश्रुते च—उपसर्गात् यथा दोषजासु। ननु, मद्यजापि सुश्रुते मदात्यये पठिता, तत् कथं सप्तेत्युच्यते? तस्या वातजायामंतर्भावात् एवं दृढबलमतेपि॥ ८॥ तत्रोपसर्गजामाह—दीनेति। दीनस्वरः क्षामवचनः, प्रताम्यन् मुह्यन्, दीनः क्लांतः, उपसर्गादिति। उपद्रवात् रोगात्, उपद्रवशब्दस्तु सामान्येन रोगमात्रेपि वर्तते। यथा—"निरूहोपद्रवचिकित्सितं व्याख्यास्यामः" इति। शोषणी धातुशोषणाऽऽत्मिका सा कष्टा कष्टसाध्या व्याधिकर्षितदेहत्वात्॥ ९॥ तानेवोपसर्गानाह—आदिशब्देनातिसारादीनां ग्रहणम्। एतैर्व्याधिभिर्गृहीतदेहानां नृणामत्र पूर्वलक्षणानुरोधः। असाध्यलक्षणमाह—सर्वा इति। अतिप्रसक्ता अतिप्रवृद्धा, वमिप्रसक्तानामिति। शरीरश्लेष्मशोधनाय वमनशीलानां, घोरोपद्रवयुक्ताः श्वासशोषादिभिर्बलवद्भिरुपद्रवैर्युक्ताः इति जेज्जटः। ता मरणकारिका इत्यर्थः॥ १०॥ इति आतंकदर्पणे निदानव्याख्यायां तृष्णानिदानम्॥ १६॥

१ एतच्च वमिप्रसक्तानामितिपाठाभिप्रायेण।

# अथ मूर्च्छाभ्रमनिद्रातन्द्रासंन्यासनिदानम् १७.

क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः ॥
वेगाघातादभिघाताद्धीनसत्त्वस्य वा पुनः ॥ १ ॥
करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च ॥
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः ॥ २ ॥
संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः ॥
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥ ३ ॥

---

मधुकोशव्याख्या ।

तृष्णायां मोहो भवतीति तृष्णानन्तरं मूर्च्छा, उक्तं हि-'तृषितो मोहमायाति-' इति । निदानं संप्राप्तिं चाह-क्षीणस्येत्यादि । बहुदोषस्येति विपुलदोषस्य न त्वनेकदोषस्य, तथा सति एकदोषजायाः संप्राप्तिर्नोक्ता स्यात् । वेगाघातान्मलादिवेगधारणात् अभिघातात् लगुडादिभिः । हीनसत्त्वस्य हीनसत्त्वगुणस्य । करणं मनः,तस्यायतनानि बाह्यानि चक्षुरादीनि, आभ्यन्तराणि मनोवहानि स्रोतांसि, यैरागत्य मनश्चक्षुरादीन्यधितिष्ठति; अथवा बाह्यानि कर्मेन्द्रियाणि, आभ्यन्तराणि धीन्द्रियाणि, तेषु यदा उग्रा दोषा निविशन्ते तदा मूर्च्छन्तीति योज्यम् । पुनः कया संप्राप्त्या इत्यत आह-संज्ञावहास्वित्यादि । संज्ञावहनाडीशब्देन शिराधमनीस्रोतसां ग्रहणमित्याहुः, यतस्तैर्मन इन्द्रियादिदेशं प्राप्नोति । पिहितासु आवृतासु । तमो मनोगुणः अज्ञानहेतुः,

आतङ्कदर्पणव्याख्या ।

तृष्णायां मोहो भवतीत्यतस्तृष्णानंतरं मूर्च्छारंभस्तस्या निदानपूर्वां संप्राप्तिमाह-क्षीणस्येति । पुरुषस्य बहुदोषस्येति । विपुलदोषस्य वेगाघातात् मलादिवेगविधारणात्, अभिघाताल्लगुडादेः, विरुद्धाहारसेविनः, विरुद्ध आहारः क्षीरमत्स्यादिः, हीनसत्त्वस्य क्षीणसत्त्वगुणस्य, करणं मनस्तस्यायतनानि बाह्यानि चक्षुरादीनि, आभ्यंतराणि मनोवाहीनि स्रोतांसि यैरागत्य मनश्चक्षुरादीन्यधितिष्ठति । अथवा बाह्यानि कर्मेंद्रियाणि आभ्यन्तराणि बुद्धींद्रियाणि तेषु यदा उग्रा अतिप्रसृता दोषा निविशन्ते अवतिष्ठंते, तदा मानवा मूर्च्छंति इति योज्यम् ॥ १ ॥ २ ॥ संप्राप्तिमाह-संज्ञावहास्विति । "सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत्" । संज्ञावहनाडीशब्देन शिरोधमनीस्रोतसां ग्रहणं यतस्तैरिन्द्रियदेशं मनः प्राप्नोति । पिहितासु रुद्धासु, तमो मनोगुणः अज्ञानहेतुः तस्यावरणात्मकत्वात् । अभ्युपैति वर्द्धते, सहसा झटिति अन्येषु तमोबहुलेषु रोगेषु मदात्ययादिषु न तथा सत्त्वरजसी लीयेते यथा मूर्च्छास्विति अत आह-सुखदुःखयोर्व्यपोहरि तरस्कारस्तयोरसंवि

सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् ॥
मोहो मूर्च्छेति तामाहुः षड्विधा सा प्रकीर्तिता ॥ ४ ॥
वातादिभिः शोणितेन मद्येन च विषेण च ॥
षट्स्वप्येतासु पित्तं तु प्रभुत्वेनावतिष्ठते ॥ ५ ॥
हृत्पीडा जृम्भणं ग्लानिः संज्ञादौर्बल्यमेव च ॥
सर्वासां पूर्वरूपाणि यथास्वं च विभावयेत् ॥ ६ ॥
नीलं वा यदि वा कृष्णमाकाशमथवारुणम् ॥
पश्यंस्तमः प्रविशति शीघ्रं च प्रतिबुध्यते ॥ ७ ॥

---

मधुकोशव्याख्या ।

अभ्युपैति वर्धते, महसा झटिति। अन्येषु तमोबहुलेषु रोगेषु मदात्ययादिषु सत्त्वरजसी दृश्येते;न तथा लीयेते, यथा मूर्च्छायामित्यत आह-सुखदुःखव्यपोहकृदिति। सुखदुःखयोरसंवित्तिकरम्। एतत्तु प्रायिकत्वेनोक्तम्, त्रिविधं ज्ञानं भवति हेयोपादेयोपेक्षणीयभेदात्, तेनोपेक्षणीयज्ञानाभावोऽपि ज्ञेयः। व्यवहारार्थं तत्पर्यायमाह—मोहो मूर्च्छेति। वातादिभिस्तिस्रः, शोणितमद्यविषैश्च तिस्रः, एवं षट्। प्रभुत्वेनेति व्यापकत्वेन, तेन वातजादिष्वपि ज्वरवद्रोगमहिम्नाऽवश्यं पित्तसंबन्धः, अत एव वक्ष्यति—"मूर्च्छा पित्ततमःप्राया" इति; चिकित्सायां च शीतक्रियाविधानमिति ॥ १-५ ॥ तस्याः पूर्वरूपमाह—हृत्पीडेत्यादि। संज्ञादौर्बल्यमसम्यग्ज्ञानता। सर्वासां पूर्वरूपाणीति छेदः। यथास्वं च विभावयेदिति तां मूर्च्छां वातादिभेदेन जानीयात् व्यक्तरूपावस्थायां, न तु पूर्वरूपावस्थायामिति जेज्जटः ॥ ६ ॥ ता एवाह ( वातजामाह )—नीलमित्यादि। नीलं स्निग्धकृष्णम्, कृष्णं रूक्षकृष्णम्, अरुणमीषल्लोहितम्। तमः

आतङ्कदर्पणव्याख्या।

त्तिरित्यर्थः। अथवा सुखं सत्त्वं दुःखं रजः तयोर्व्यपोहकृत्। तमसा तयोरावृतत्वात् अतः काष्ठवन्निष्पततीत्यर्थः। व्यवहारार्थं तत्पर्यायानाह—मोहो मूर्च्छेति तस्याः पर्यायः। उक्तं चाभिधानान्तरे—"संज्ञोपघाते मूर्च्छायो मूर्च्छा स्यान्मूर्छनं तथा। कश्मलं प्रलयो मोहः संन्यासस्तु मृतोपमः"॥सा च मूर्छा षड्विधा षट्प्रकारा भवति। वातादिभिः शोणितमद्यविषैश्च तिस्रः एवं षड्विधत्वमाह—वातादिभिरिति प्रभुत्वेनेति वातादिष्वपि व्यापकत्वेन पित्तमेवावतिष्ठते ज्वरवद्रोगमहिम्नावश्यं पित्तसंबंधः, इहैव वक्ष्यत्यग्रे "मूर्छा पित्ततमःप्राया" इति चिकित्सायां च शीतक्रियाविधानमिति ॥३॥४॥५॥ तस्याः पूर्वरूपमाह—हृदिति। संज्ञादौर्बल्यमसम्यग्ज्ञानता पूर्वरूपाणीति। पादत्रयेण छेदः यथास्वं च विभावयेदिति। तां मूर्च्छां वातादिभेदेन जानीयादित्यर्थः। व्यक्तरूपावस्थायां न तु पूर्वरूपावस्थायामिति जेज्जटः॥ ६ ॥वातजामाह—नीलमिति। नीलं स्निग्धकृष्णम् अरुणमीषल्लोहितमीदृशं

वेपथुश्चाङ्गमर्दश्च प्रपीडा हृदयस्य च ॥
कार्श्यं श्यावारुणा छाया मूर्च्छाये वातसंभवे ॥ ८ ॥
रक्तं हारितवर्णं वा वियत्पीतमथापि वा ॥
पश्यंस्तमः प्रविशति सस्वेदश्च प्रबुध्यते ॥ ९ ॥
सपिपासः ससन्तापो रक्तपीताकुलेक्षणः ॥
जातमात्रे च पतति शीघ्रं च प्रतिबुध्यते ॥
संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसंभवे ॥ १० ॥
मेघसंकाशमाकाशमावृतं वा तमोघनैः ॥
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥ ११ ॥
गुरुभिः प्रावृतैरङ्गैर्यथैवार्द्रेण चर्मणा ॥
सप्रसेकः सहृल्लासो मूर्च्छाये कफसंभवे ॥ १२ ॥
सर्वाकृतिः सन्निपातादपस्मार इवागतः ॥
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः ॥ १३ ॥

---

मधुकोशव्याख्या ।

प्रविशत्यन्धकारमिव प्रविशति मूर्च्छतीत्यर्थः । शीघ्रं च प्रतिबुध्यत इति वायोः शीघ्रकारित्वात् । कार्श्यं श्यावारुणा छाया, गात्रस्येति शेषः । मूर्च्छायशब्दो मूर्च्छापर्यायः ॥ ७-८ ॥ पित्तजमूर्च्छायमाह—रक्तमित्यादि । वियदाकाशम् । अत्र "सपिपासः ससन्तापो रक्तपीताकुलेक्षणः" इति क्वचिदधिकः पाठः॥९॥१०॥कफजमूर्च्छायमाह—मेघेत्यादि । तमोघनैरिति तमोभिर्घनैश्च; तमोऽन्धकारो, घनोऽत्र मेघवाची ॥ ११ ॥ १२ ॥ सान्निपातिकमाह—सर्वेत्यादि । ननु, सर्वाकृतिरिति विरुद्धम्, उद्देशे

आतङ्कदर्पणव्याख्या ।

गगनं पश्यन् तमः प्रविशति अंधकारमिव प्रविशति मूर्च्छतीत्यर्थः । शीघ्रं च प्रतिबुद्ध्यते वायोः शीघ्रकारित्वात् कार्श्यं श्यावारुणाछाया गात्रस्येति शेषः । मूर्च्छायशब्दो मूर्च्छापर्यायः ॥७॥ ८॥ पित्तजमाह—रक्तमिति । वियदाकाशं, रक्तं, हरितवर्णं शाकवर्णं, पीतं, वा पश्यन् तमः प्रविशतीति मूर्च्छतीत्यर्थः । यदा प्रबुध्यते तदा स्वेदो भवति । सपिपासः तृष्णान्वितः, संतापवांश्च भवति । रक्ते पीते आकुले त्रस्ते इव ईक्षणे लोचने यस्य स तथा । 'अन्ये रक्तपित्ताकुलेक्षणः' इति पठंति । तत्र रक्तपित्तो विकारः जातमात्रे उत्पन्नमात्रे पतति शीघ्रं च प्रतिबुध्यते पीताभाः पीतशरीरच्छविः॥९॥१०॥श्लेष्मजामाह—मेघसंकाशमिति।आर्द्रेण चर्मणा इव प्रावृतैर्वेष्टितैरुपलक्षितः। प्रसेको मुखस्रावः, उपस्थितवमनत्वात्॥११॥१२॥ सन्निपातजामाह—सर्वाकृतिरिति । ननु, सर्वा-

**पृथिव्यापस्तमोरूपं रक्तगन्धस्तदन्वयः ॥**
**तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवाः ॥ १४ ॥**

मधुकोशव्याख्या ।

षड्विधा सा प्रकीर्तितेति अभिहितत्वात्; सन्निपातजया सह सप्तत्वं प्रसज्येत ? उच्यते, उद्देशः सुश्रुतग्रन्थेन चरकग्रन्थेन च विवरणं, चरके हि एकजाः त्रिदोषजाश्चतस्रः पठ्यन्ते यदुक्तमष्टोदरीये—"चत्वारो मूर्च्छाया इति अपस्मारैर्व्याख्याताः" इति, रक्तमद्यविषजानां यथादोषमेतास्वन्तर्भावः, सुश्रुते चैता रक्तादिजा लक्षणचिकित्सा-भेदख्यापनार्थं साक्षात् पठिताः, त्रिदोषजायाः दोषजास्वन्तर्भावः इत्यभिप्रायेण भेद आचार्ययोः संग्रहे चात्र सर्वतन्त्रस्वीकारादुभयमपि लिखितमित्यदोषः । अपस्मार इवेति महताभिघातेन पतति, चिरेण प्रतिबुध्यते । अपस्मारे फेनवामित्वदन्तघट्टना-क्षिवैकृतादिकमाधिकमिति भेदः । बीभत्सचेष्टितैरिति फेनवामित्वादिभिरेव ॥ १३ ॥ रक्तजमूर्च्छासंप्राप्तिमाह—पृथिव्याप इत्यादि । पृथिवी आपश्च एतद्द्वयं तमोरूपं तमोबहुलम्, उक्तं हि—"तमोबहुला पृथिवी, सत्त्वतमोबहुला आपः" इति । पृथि-व्यम्भ इति पाठे अयमेवार्थः । तदन्वयः पृथिव्यम्भोऽन्वयः, तन्मय इति पाठे पृथिवीजलमयः, प्रकृतिविकारभावे मयट् । तस्मादिति यस्मात् पृथिव्यापस्तमोरूपं, रक्तगन्धस्तदन्वयः, मूर्च्छा च तमःप्राया तस्मादित्यर्थः । भुवि मानवाः, इति

आतङ्कदर्पणव्याख्या ।

कृतिरिति विरुद्धम् । पूर्वमुद्देशे 'षड्विधा सा प्रकीर्तिता' इत्युक्तम्, सन्निपातजया सह सप्तसंख्यात्वं स्यात् । उच्यते—उद्देशः सुश्रुते न विवरणं चरकेण यतस्तत्र पठिता वातादिभिस्त्रयः, त्रिदोषजं चतुर्थम् । यदुक्तमष्टोद ( र ) रीयाध्याये चतस्रो मूर्च्छा अपस्मारे व्याख्याताः, यथा चत्त्वारोऽप-स्माराः वातेन पित्तेन श्लेष्मणा सन्निपातेन, तद्वन्मूर्च्छा अपीत्यर्थः । रक्तमद्यविषजानां यथा दोषजास्वन्तर्भावः, सुश्रुते एतच्च लक्षणं चिकित्साभेदख्यापनार्थं साक्षात्पठितम् । त्रिदोषजायाश्च दोषजास्वन्तर्भाव इत्यभिप्रायेण माधवेन संगृहीतेयमिति सर्वतन्त्रस्वीकारात् उभयमपि लिखित-मित्यदोषः अपस्मार इवागत इति । आगतस्यापस्मारस्य वेगवत् सा मूर्च्छा जंतुं प्राणिनं शीघ्रं पातयति चिराच्च प्रतिबुध्यते, विना बीभत्सचेष्टितैरिति । अपस्मारे फेनागमनं दंतावघट्ट-नाक्षिवैकृतसत्त्वादिदर्शनमस्ति । त्रिदोषजायां मूर्च्छायां तु न तथाऽयमेव भेदः अत एव विना बीभत्सचेष्टितैरिति ॥ १३ ॥ पृथिवी आप एतदुभयं तमोरूपं तमोबहुलम् । उक्तं हि सुश्रुते-"तमोबहुला पृथ्वी सत्त्वतमोबहुला आपः" इति तदन्वयः । "पृथिव्यंभस्तमोरूपं रक्तगंधश्च तन्मयः" इतिपाठे तत्र तन्मय इति पृथिवी जलमयस्तदन्वयात् । गंधेपि तमस्त्वं सिद्धं मूर्च्छा च तमःप्राया तस्मादित्यर्थः । अन्ये पृथिव्यंभ इति पठंति तत्र पृथिवी चांभश्च पृथिव्यंभसी

**द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति ॥**
**गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः ॥ १५ ॥**

---

मधुकोशव्याख्या ।

पाञ्चभौतिकत्वेऽपि शरीरस्योद्भूतभूमिगुणा ये ते भुवि मानवाः पार्थिवाः तामसा इत्यर्थः, न तु राजसाः सात्त्विका वा । ननु, चम्पकादिगन्धेनापि मूर्च्छा प्रसज्येत ? तत्रापि गन्धस्य पार्थिवत्वात्, पृथिव्याश्च तमोरूपत्वादित्यत आह—द्रव्यस्वभाव इत्यादि । रक्तस्यायं स्वभावः तेन तद्गत एव गन्धो मूर्च्छयतीति । स्वभावमेव द्रढयति—दृष्ट्वा यदभिमुह्यतीति, 'यच्च दृष्ट्वापि मुह्यति' इति पाठान्तरम् । अन्ये तु, गन्धासंबन्धेऽपि दर्शनमात्रान्मूर्च्छोपलम्भादनैकान्तिकत्वं गन्धस्य मन्यमानाः स्वभावमेव हेत्वन्तरमाहुः; एतेन गन्धस्य प्रायिकत्वमुक्तम् । यदाह भोजः—"स्तब्धाङ्गदृष्टिर्भवति गूढोच्छ्वासस्तथैव च । दर्शनादसृजस्तज्जाद्गन्धाच्चैव प्रमुह्यति" इति । "पृथिव्या यत्तमोरूपम्" इति पाठान्तरं सुगमम् । "पृथिव्यम्भस्तमोरूपं रक्तगन्धेन तत् त्रयम्" इति पाठान्तरस्य जेज्जटलिखितस्यायमर्थः, रक्तगन्धेन तु यदुक्तमव्यभिचरितं प्रकृतिविकारयोस्तादर्थ्यात् किं तत् त्रयमित्यत उक्तं पृथिव्यम्भस्तमोरूपमिति । पृथिव्यम्भस्तमसां रूपमित्यर्थः, शेषं पूर्ववत् । दृष्ट्वेति रक्तमिति शेषः ॥ १४ ॥ विषमद्यजे प्राह गुणा इत्यादि । गुणा दश; यदुक्तं दृढबलेन—"लघु रूक्षमाशु विशदं व्यवायि तीक्ष्णं विकाशि सूक्ष्मं च । उष्णमनिर्देश्यरसं दशगुणमुक्तं विषं तज्ज्ञैः" इति । ते तैलादिष्वस्तास्तीव्राः सन्ति. विषमद्ययोस्तु तीव्रतराः, अतस्तैलादिभिर्न मोहः, किंतु विषौ

आतङ्कदर्पणव्याख्या ।

तयोः संबंधि यत्तमः तद्रूपं तद्बहुलं लक्षणम् । वा रक्तमिति, रूपशब्दोऽत्र बाहुल्ये स्वलक्षणे वा वर्तते यतः सत्त्वरजस्तमसां परमं रूपं दृष्टिपथन्नोपगच्छति किंतु विशेषेष्वाभिव्यज्यते । सर्व एव विशेषास्तमोमया इत्युक्तत्वात् । भुवि मानवा इति पांचभौतिकत्वेऽपि शरीरस्योद्भूतभूमिगुणाः, एतैर्भुवि मानवाः पार्थिवास्तामसा इत्यर्थः । तस्माद्ये मानवास्तामसा भवंति त एव रक्तगंधेन मूर्च्छन्ति न तु राजसाः सात्त्विका वा रक्तगंधेन मूर्च्छंतीति भावः । ननु, चंपकादिगंधेनापि मूर्च्छा प्रसज्येत तत्रापि गंधस्य पार्थिवत्वात् । पृथिव्याश्च तमोरूपत्वादित्यत्राह—द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति रक्तस्यायं स्वभावो येन तद्द्रुतगंधोमूर्च्छयतीति प्रभावमेव द्रढयति दृष्ट्वापि यन्मूर्च्छयतीति रक्तमिति शेषः । यदाह भोजः--"स्तब्धांगदृष्टिर्भवति गूढोच्छ्वासस्तथैव च । दर्शनादसृजस्तजाद्गंधाच्चैव प्रमुह्यति"इति ॥ १४ ॥ विषमद्यजे प्राह—गुणा इति । तत्र गुणा दश, यदुक्तं दृढबलेन—"लघु रूक्षमाशु विशदं व्यवायि तीक्ष्णं विकाशि सूक्ष्मं च । उष्ण-

**त एव तस्मात्ताभ्यां तु मोहौ स्यातां यथेरितौ ॥**
**स्तब्धाङ्गदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्च्छितः ॥ १६ ॥**
**मद्येन विलपंश्छेते नष्टविभ्रान्तमानसः ॥**
**गात्राणि विक्षिपन्भूमौ जरां यावन्न याति तत् ॥ १७ ॥**
**वेपथुस्वप्नतृष्णाः स्युस्तमश्च विषमूर्च्छिते ॥**
**वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः ॥ १८ ॥**

---

मधुकोशव्याख्या।

मद्याभ्यामित। त एवेति गुणा लघुत्वादयः। यथेरिताविति, विषजो मोहो न स्वयं निवर्तते विषस्यापाकित्वात्, मद्यजस्तु मद्यपरिणामात् शाम्यति, अयं च भेदो विषमद्ययोः प्रभावात्। उक्तं हि तन्त्रांतरे—"ये विषस्य गुणाः प्रोक्ताः सन्निपातप्रकोपणाः। त एव मद्ये दृश्यन्ते विषे च बलवत्तराः" इति ॥ १९ ॥ रक्तजादिमूर्च्छात्रयस्य रूपाण्याह—स्तब्धाङ्गेत्यादि मूर्च्छित इत्यन्तं रक्तजायाः। गूढोच्छ्वासश्चास्पष्टोच्छ्वासः। 'मूढ' इति पाठे सन्निरुद्ध इत्यर्थः इति जेज्जटः। मद्येनेत्यादि तदित्यन्तं मद्यजायाः। नष्टविभ्रान्तमानस इत्यत्र 'निष्टलन् भ्रान्तमानसः' इति पाठान्तरे निष्टलन् शब्दं कुर्वन्। वेपथ्वादि विषजायाः। यथास्वं विषलक्षणैरिति विषस्य मूलपत्रक्षीरादिभेदेन प्रातिस्विकं यल्लक्षणमुक्तं सौश्रुतकल्पस्थाने तल्लक्षणयुक्ता मूर्च्छा

आतङ्कदर्पणव्याख्या।

मनिर्देश्यरसं दशगुणमुक्तं विषं तज्ज्ञैः" इति। ते गुणास्तैलादौ व्यस्तास्तीव्राः संति विपमद्ययोस्तु तीव्रतराः अतस्तैलादिभिर्न मोहः किंतु विपमद्याभ्यां मोह एवेति गुणा लघुत्वादयः ॥ १९ ॥ त एव गुणा विगुणा विपमद्ययोस्तीव्रतरत्वेन स्थिताः। तत्रापि भेदः विपे तीव्रतमाः, मद्ये तीव्रतराः, तैलादिषु तीव्रा व्यस्ताः यथेरिताविति ताभ्यां विपमद्याभ्यां यथेरितौ तरतमादिभेदेन यथोक्तौ मोहौ स्याताम्। विषेण तीव्रतमः, मद्येन तीव्रतर इत्यर्थः। विपजो मोहः स्वयं न निवर्तते, विषस्यापाकित्वात्। मद्यजस्तु मद्यपरिणामादेव शाम्यति, विपमद्ययोस्त्वयमेव भेदः प्रभावात्। उक्तं हि तंत्रांतरे—"ये विषस्य गुणाः प्रोक्ताः सन्निपातप्रकोपिणः। त एव मद्ये दृश्यंते विषे तु बलवत्तराः ॥" इति रक्तजाया रूपमाह—स्तब्धांगेत्यादिना—मूर्च्छित इत्यन्तेन। गूढोच्छ्वासः इत्यत्र मूढेति पाठे तत्र सन्निरुद्ध उच्छ्वासश्च स्फुरतीत्यर्थः ॥ १६ ॥ मद्यजामाह—विलपन् प्रलपन्, ॥ नष्टविभ्रांतमानस इति नष्टं स्मृतिरहितं विभ्रांतं विक्षिप्तं मानसं चित्तं यस्य स तथा। जरां यावन्न याति तदिति। यावज्जरां परिपाकं न गच्छति तावद्गात्राणि भूमौ विनिक्षिपन् ताडयन् मूर्च्छितस्तिष्ठतीत्यर्थः ॥ १७ ॥ विषजामाह—वेपथ्विति। वेपथुः कंपः, स्वप्नो निद्रा

मूर्च्छा पित्ततमःप्राया रजःपित्तानिलाद्भ्रमः ॥
तमोवातकफात्तन्द्रा निद्रा श्लेष्मतमोभवा ॥ १९ ॥
( चक्रवद्भ्रमतो गात्रं भूमौ पतति सर्वदा ॥
भ्रमरोग इति ज्ञेयो रजःपित्तानिलात्मकः ॥ १ ॥ )
इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः ॥
निद्रार्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत् ॥ २० ॥

---

मधुकोशव्याख्या ।

भवतीत्यर्थः ॥ १६-१८ ॥ संज्ञानाशसाधर्म्येऽपि मूर्च्छादीनां को भेदः? इत्याह-मूर्च्छा पित्ततमःप्रायेत्यादि । तमोवातकफादिति समाहारद्वन्द्वः । निद्रातन्द्रयोश्चैतानि कारणानि व्यस्तसमस्तानि, तेन सुश्रुतेन यदतिलङ्घितलक्षणे निद्रातन्द्रे पठिते, ते विनैव कफादिति, अतिलंघनस्य श्लेष्मक्षयहेतुत्वात् ॥ १९ ॥ तन्द्रालक्षणमाह-इन्द्रियार्थेष्वित्यादि । निद्राभ्रमयोस्तु लक्षणं नोक्तमिह, अतिप्रसिद्धत्वात् । निद्रा हि विप्लुतमनसः सर्वेंद्रियाणां स्वविषयनिवृत्तिः । यदाह चरकः-"यदा तु मनसि, क्लान्ते कर्मात्मानः क्लमान्विताः । विषयेभ्यो निवर्तन्ते तदा स्वपिति मानवः" इति ।

आतङ्कदर्पणव्याख्या ।

तमोंधकार प्रविष्टस्येवार्थासंवित्तिः ॥ यथास्वं विषलक्षणैरिति । विषस्य मूलकंदपत्रक्षीरादिभेदेन यल्लक्षणं सुश्रुते कल्पस्थाने उक्तं तेषां लक्षणैरेव तीव्रतरत्वेन युक्ता मूर्च्छा भवतीत्यर्थः ॥ १८ ॥ संज्ञानाशसाधर्म्यान्मूर्च्छाया भेदानाह-तत्र मूर्च्छाहेतुमाह-मूर्च्छा पित्ततमःप्राया तमोगुणयुक्तेन पित्तेन मूर्च्छा भवति । भ्रमहेतुमाह-रज इति । रजोगुणेन पित्तानिलाभ्यां युक्तेन भ्रमो भवति, तत्र भ्रमः स्थाणौ पुरुषज्ञानं, पुरुषे विपरीतसत्त्वज्ञानादिकम् । अन्ये चक्रस्थितस्येव संभ्रामद्वस्तुदर्शनमिति । समाहार द्वंद्वैकवचनम् ॥ तंद्राहेतुमाह-तम इति तमोगुणेन युक्ताभ्यां वातकफाभ्यां तंद्रा भवति । निद्राहेतुमाह-श्लेष्मणा मिलितेन तमोगुणेन निद्रा भवति, तस्या लक्षणम् अरतिविक्लांतमनसः सर्वेंद्रियाणां स्वविषयनिवृत्तिः । चरकेपि--"यदा तु मनसि क्लांते कर्मात्मानः क्लमान्विताः । विषयेभ्यो निवर्तते तदा स्वपिति मानवः" इति । अत्र कर्मात्मानः इंद्रियाणि, निरिंद्रियप्रदेशे मनसोवस्थितिर्निद्रेत्यर्थः । सुश्रुतेनातिलंघितलक्षणे निद्रातंद्रे पठिते, अतिलंघितस्य श्लेष्मक्षयत्वान्निद्रातंद्रयोस्तूक्तकारणत्वाद्भेदः । तथा च निद्रायामिंद्रियमनोमोहः, तंद्रायामिंद्रियमोहः ॥ १९ ॥ तंद्रालक्षणमाह-इंद्रियार्थेष्विति । इंद्रियार्थेषु विषयेषु असंप्राप्तिर-

---

१ एतच्च-इन्द्रियार्थेष्वसंप्राप्तिरिति पाठाभिप्रायेण ।

**दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम् ॥**
**स्वयमेवोपशाम्यन्ति संन्यासो नौषधैर्विना ॥ २१ ॥**
**वाग्देहमनसां चेष्टामाक्षिप्यातिबलामलाः ॥**
**संन्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः ॥ २२ ॥**

मधुकोशव्याख्या ।

अत्र कर्मात्मान इन्द्रियाणि; निरिन्द्रियप्रदेशे मनसोऽवस्थितिर्निद्रेतिमतेऽप्ययमेवार्थः। निद्रातन्द्रयोरनुक्तकारणभेदाद्भेदः, उद्भूतजृम्भादेश्चानुभवासिद्धत्वादिति, तथाच निद्रायामिन्द्रियमनोमोहः, तन्द्रायामिन्द्रियमोहः। भ्रमलक्षणं तु चक्रस्थितस्येव भ्रमद्वस्तुदर्शनमिति ॥ २० ॥ संन्यासस्य मूर्च्छादिभ्यो भेदमाह—दोषेष्वित्यादि ( कृतवेगेषु वेगं कृत्वाऽल्पबलेषु यदुक्तं, विषमज्वरे, "वेगं कृत्वा गतबलाः" इत्यादि)॥२१॥ तल्लक्षणमाह—वागित्यादि । अतिवला इत्यनेन मूर्च्छाद्यारम्भकदोषेभ्योऽधिकत्वेन प्रवृद्धा दोषास्तमश्चेति बोधयति । संन्यस्यंति मोहयन्ति। स ना पुरुषः, संन्याससंन्यस्तः संन्यासपीडितः, काष्ठीभूतः इति अत्यन्तनिष्क्रियत्वेन अकाष्ठमेव काष्ठवद्भूतः । अत एव मृतोपम इति अमृत एव मृतोपम इति। मुक्त्वा सद्यःफलां क्रियामिति सूचीव्यधनाञ्जनावपीडनशूकशिम्बीफलावघर्षणादिरूपा न यदि क्रियते

आतङ्कदर्पणव्याख्या ।

ग्रहणम् गौरवमंगानाम्, निद्रार्तस्येवः उत्पन्ननिद्रस्येव ॥ २० ॥ अस्याग्रे क्लमलक्षणं पठंति । यः शरीरे आयासवर्जितः प्रवृद्धश्रमो भवति परं श्वासवर्जितः स क्लम इति कथितः। इंद्रियार्थप्रबाधकः विषयग्रहणेऽसमर्थः । अयं पाठो माधवेन न लिखितः संन्यासस्य मूर्च्छादिभ्यो भेदमाह—दोषेष्विति । आदिशब्दोऽत्र लुप्तो द्रष्टव्यः । आविष्टवेगेषु रोगेषु दोषेषु या मदादिभिर्मूर्च्छा भवति । सा उपशांतवेगेषु स्वयमेवोपशमं याति, भिषक्प्रतीकारं विनेत्यर्थः । सन्यासस्तु चिकित्सकजनसानुभावौषधैर्विना न शाम्यतीत्यर्थः ॥ २१ ॥ तल्लक्षणमाह—वागिति ॥ अतिबला इति । मूर्च्छाद्यारंभकदोषेभ्योधिकत्वेन प्रवृद्धाः प्राणायतनं चेतनास्थानं हृदयमाश्रिताः वाग्देहमनसां चेष्टामाक्षिप्य विनाश्य अबलं हीनसत्त्वं पुरुषं संन्यस्यंति । तदा स ना पुरुषः संन्याससंन्यस्तः संन्यासपीडितः । काष्ठीभूत इत्यतिनिष्क्रियत्वात् । अकाष्ठमेव काष्ठवद्भूतः, अत एव मृतोपमः । मुक्त्वा सद्यःफलां क्रियामिति सद्यःफलं यस्यास्तां क्रियां त्यक्त्वा इत्यर्थः । तत्र सद्यःफला क्रिया सूचीव्यधनं तीक्ष्णांजनमिवपीडनं कपिकच्छू-

१ एतन्मूलं नोपलभ्यते ।

स ना संन्याससंन्यस्तः काष्ठीभूतो मृतोपमः ॥
प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यःफलां क्रियाम् ॥ २३ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने मूर्च्छाभ्रमनिद्रातन्द्रा-
संन्यासनिदानं समाप्तम् ॥ १७ ॥

---

## अथ पानात्ययपरमदपानाजीर्णपानविभ्रम-निदानम् १८.

ये विषस्य गुणाः प्रोक्तास्तेऽपि मद्ये प्रतिष्ठिताः ॥
तेन मिथ्योपयुक्तेन भवत्युग्रो मदात्ययः ॥ १ ॥

---

मधुकोशव्याख्या ।

तदा प्राणैर्विमुच्यते, अन्यथा तु जीवतीति ॥ २२ ॥ २३ ॥ इति श्रीविजयरक्षित-कृतायां मधुकोशव्याख्यायां मूर्च्छाभ्रमनिद्रातन्द्रासंन्यासनिदानं समाप्तम् ॥ १७ ॥

"मूर्च्छा मद्येन च विषेण च" इति वचनात्, मूर्च्छानन्तरं मद्यविकारान् मदात्ययादीनाह । ननु कथं मद्यं मोहयतीत्याह—ये विषस्येत्यादि । ते च विषगुणा मूर्च्छाध्याये निदर्शिताः । मिथ्योपयुक्तेनेति अयथाविधिपीतेन, विधिश्चायं तद्यथा—कुसुमितलतोपगूढैः प्ररूढनिरन्तरनवांकुरनिकररोमाञ्चैर्मधुकरमधुरझङ्कारसीत्कारैर्मुक्तकण्ठकलकण्ठकण्ठकूजितैर्दक्षिणसमीरणसमुल्लसितपल्लवकरप्रचारैस्तरुणतरुभिरुपकान्तरतिभिरतिशोभनेषु तुषारकरकिरणराजिपराजिताशेषतापदोषेषु प्रदेशेषु शृङ्गारसमुचिता-

आतङ्कदर्पणव्याख्या ।

फलावघर्षणादिरूपा यदा न क्रियते तदा प्राणैर्विमुच्यते, अन्यथा तु जीवति ॥ २२ ॥ २३ ॥
इत्यातंकदर्पणे निदानव्याख्यायां मूर्च्छाभ्रमनिद्रातन्द्रासंन्यासनिदानं समाप्तम् ॥ १७ ॥

'मूर्च्छा मद्येन विषेण च' इति वचनान्मूर्च्छानंतरं मद्यविकारानाचष्टे, ननु कथं विषं मोहयतीत्याह—य इति । ये विषस्य गुणाः प्रोक्ताः, ते च विषगुणा मूर्च्छाध्याये निदर्शिताः, ते गुणा मद्येऽपि कीर्तिताः। तेन मद्येन मिथ्योपयुक्तेन अयथाविधिपीतेनोग्रो मदात्ययो भवति । विधिश्चायम् । तद्यथा—कुसुमितलतोपगूढैः प्रकटनिरंतरनवांकुरविकाररोमांचैः मधुकरमधुरझङ्कारसीत्कारैर्मुक्तकंठकलकंठकूजितैर्दक्षिणसमीरणोद्विजितसमुल्लसितपल्लवकरप्रचारैस्तरुणतरुभिरुपक्रांततरललताभिरति

किंतु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् ॥
अयुक्तियुक्तं रोगाय युक्तियुक्तं यथामृतम् ॥ २ ॥
प्राणाः प्राणभृतामन्नं तदयुक्त्या हिनस्त्यसून् ॥
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥ ३ ॥
विधिना मात्रया काले हितैरन्नैर्यथाबलम् ॥
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम् ॥ ४ ॥

---

मधुकोशव्याख्या ।

लंकृतिकमनीयकामिनीसेवितं ललितललनोपनीयमानसुरभिरुचिररूपरसोपदंशं कं नाम परिमितपरार्धमधुपानं न सुखयति? चरके तु विस्तरेणैतदुक्तम् ॥ १ ॥ ननु, विषस्य ये गुणास्ते चेन्मद्येऽपि सन्ति, तर्हि विषवन्मद्यमनुपयोज्यं प्रसज्येत? अत आह—किंत्वित्यादि । यथैवान्नमिति । देहधारकस्वभावं, तदेवायुक्तियुक्तमविधियुक्तं रोगाय, तस्मादहितमपि विशिष्टविधिनोपयुक्तं हितं, हितमप्यविधिनोपयुक्तमनर्थाय भवतीति । अत्रैव दृष्टान्तमाह—प्राणा इत्यादि । तदयुक्त्येति अतिमात्रत्वादिना विसूच्यादिकं कृत्वा मारयतीत्यर्थः । युक्तियुक्तमिति यथा चरकरसायनप्रयोगे उक्तं, "द्वा यवावत्र हेम्नस्तु तिलं दद्याद्विषस्य च" इति । अत्र तिलमिति तिलप्रमाणम् ॥ २ ॥ ३ ॥ विधिनोपयुक्तस्य फलमाह—विधिनेत्यादि । काल इति नित्यगे चावस्थिके च; तद्यथा—ग्रीष्मे शीतमधुरं माध्वीकादि, शीते उष्णतीक्ष्णं गौडिकपैष्टि-

आतङ्कदर्पणव्याख्या ।

शोभनेषु वनोपवनेषु तुषारकरकिरणारंजितप्रदेशेषु शृङ्गाररसमुचितालङ्कृतिकमनीयकामिनीसम्मितं ललितललनोपनीयमानं सुरभिरुचिररसोपदंशं कं नाम परिमितं मधुपानं न सुखयति । चरकेण तु विस्तरेणैतदुक्तम् । विधिः प्रकारः ननु विषस्य ये गुणास्ते चेह मद्येपि संति तर्हि विषवत् मद्यमनुपयोज्यं स्यादित्यत आह—किंत्विति । मद्यं स्वभावेन प्रकृत्या अन्नवत् ज्ञेयं देहधारणस्वभावम्, तदेवान्नं मद्यं वा अयुक्तियुक्तम् । विधिप्रयुक्तं रोगाय भवति युक्तियुक्तममृतवद्भवतीत्यर्थः । तस्मादहितमपि विशिष्टविधिनोपयुक्तं हितम्, हितमप्यविधिनोपयुक्तमनर्थाय भवति ॥ २ ॥ अत्रैव दृष्टांतमाह—प्राणा इति । अन्नं प्राणभृतां शरीरिणां प्राणाः, शरीरधारणात्मकत्वात् । तदेवान्नम् । अयुक्त्या अतिमात्रत्वादिना विसूच्यादीन् कृत्वा मारयतीत्यर्थः । दृष्टांतमाह—प्राणहरमपि तद् विषं युक्तियुक्तं रसायनं भवति, शरीरं धारयतीत्यर्थः ॥ ३ ॥ विधिनोपयुक्तस्य फलमाह—विधिनेति । विधिः पूर्वोक्तो मात्रांतरोक्तः "क्षुद्रकायः पिबेत्प्रातः सोपदंशं पलद्वयम् । मध्याह्ने

**स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ॥**
**भवेदायःप्रकर्षाय बलायोपचाय च ॥ ९ ॥**

---

मधुकोशव्याख्या ।

कादि, तथा वाते स्निग्धादि, एवं वयस्युदाहार्यम् । हितैरन्नैरिति वक्ष्यमाणस्निग्धादिभिर्मद्यविपरीतगुणैः । स्निग्धैरित्युपलक्षणं, तेनान्यैरपि मद्यविपरीतगुणैरिति बोद्धव्यम् । यदुक्तं सुश्रुतेन-"मद्यमम्लं तथा तीक्ष्णं सूक्ष्मं विशदमेव च । रूक्षमाशुकरं चव व्यवायि च विकाशि च" इति । अम्लरसत्वं चास्य उद्भूतत्वेनोक्तं; यदुक्तमन्यत्र-"सर्वेषामम्लजातीनां मद्यं मूर्ध्नि व्यवस्थितम्" इति । मूर्ध्नि व्यवस्थितमुत्कृष्टम् । अन्येऽप्यत्र रसाः सन्ति । यदाह भोजः-मैरेयं मदिरा सीधु चतुर्थं मधु चोच्यते । एकैकं षड्रसं त्वत्र रसतश्चाम्लमिष्यते" इति । अन्नभक्ष्यशब्दयोरुपादा-

आतङ्कदर्पणव्याख्या ।

द्विगुणं तच्च स्निग्धाहारेण वै पिबेत् । प्रदोषेऽष्टपलं तद्वन्मात्रा मद्ये रसायनम् । आरोग्यं धातुसाम्यं च वह्निकांतिबलप्रदम् । अनेन विधिना सेव्यं मद्यं नित्यमतंद्रितैः ।" अन्ये, "बुद्ध्यादयो गुणा यावदुल्लसंति निरत्ययाः । मात्रेयं विहिता मद्ये पाने रोगाय चापराः ॥" काल इति । तत्र कालो द्विविधः नित्यगः, आवस्थिकश्च । तत्र नित्यगे ऋतुसंबंधिनि यथा ग्रीष्मे शीतमधुरं माध्वीकादि, शीते उष्णतीक्ष्णं गौडिकपैष्टिकादि । आवस्थिके काले-वाते स्निग्धादि, एवं वयस्यप्युदाहार्यम् ॥ हितैरन्नैरिति । वक्ष्यमाणस्निग्धत्वादिभिर्मद्यविपरीतगुणैः यथाबलं स्वशक्त्या एवं हृष्टो हर्षयुक्तो यो मद्यं पिबेत्तस्यामृतोपमं स्यात् ॥ ४ ॥ कैः सह पीतं बलोपचयाय भवति, तानाह-स्निग्धैरिति । एतैर्वस्तुभिः सेव्यमानं मद्यमायुःप्रकर्षाय भवति । तथा बलवर्द्धकमिति. । स्निग्धैरित्युपलक्षणम् । तेनान्यैर्मद्यविपरीतगुणैरपि बोद्धव्यं, तेन तीक्ष्णादिदशगुणविपरीतैः मृद्वादिगुणैः सह मद्यं सेव्यमिति । यदुक्तं तंत्रांतरे-"लघुतीक्ष्णोष्णसूक्ष्माम्लाव्यवायाशुगमेव च । रूक्षं विकाशि विशदं मद्यं दशगुणं स्मृतम् ॥" इति । तथा च सुश्रुते-"मद्यमम्लं तथा तीक्ष्णं सूक्ष्मं विशदमेव च । रूक्षमाशुकरं चैव व्यवाये च विकाशि च ॥" इति । अम्लरसत्वं चास्योद्भूतरसत्वेनोक्तम् । यदुक्तमन्यत्र "सर्वेषामम्लजातीनां मद्यं मूर्ध्नि व्यवस्थितम्" इति । मूर्ध्नि व्यवस्थितम् उत्कृष्टम् । अन्येप्यत्र रसाः संति । यदुक्तं तंत्रांतरे-"मद्यस्याम्लस्वभावस्य चत्वारो न रसाः स्मृताः । मधुरश्च कषायश्च कटुकस्तिक्त एव च ॥" यदाह भोजः-षड्रसा इति । "मदिराया रसा व्यक्ता मधुरोष्णतिक्तकाः । लवणाम्लकषायाश्च त्रयः सूक्ष्मतराः स्मृताः ॥" विपर्ययेणैतत् । एवं मैरेये कथिता रसाः "माध्वीके सीधुसंज्ञे च व्यक्तौ चाम्लकटूरसौ । व्यक्ता हि शेषाश्चत्वारो रसा भोजेन कीर्तिताः ॥" इति । अन्नैरिति । गोधूमादिभिः । अन्नभक्ष्याभ्यां लब्धेऽपि मांसेपि मांसग्रहणं विशेषेण हितत्वोपदर्शनार्थं बलं शक्तिः, उपचयः स्थौल्यम् ॥ ९ ॥

काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च ॥
विधिवत्सेव्यमाने तु मद्ये सन्निहिता गुणाः ॥ ६ ॥
बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्ननिद्रारतिवर्धनश्च ॥
संपाठगीतस्वरवर्धनश्च प्रोक्तोऽतिरम्यः प्रथमो मदो हि॥ ७ ॥
अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः सोन्मत्तलीलाकृतिरप्रशान्तः ॥
आलस्यनिद्राभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन॥८ ॥

मधुकोशव्याख्या ।

नेन प्रायो लेह्यं द्रवान्तरपानं च मद्यपानोचितं न भवतीति दर्शयति। अन्नभक्ष्याभ्यां लब्धेऽपि मांसे, मांसग्रहणं विशेषेण हितत्वोपदर्शनार्थम्। बलं शक्तिः, उपचयः स्थौल्यम्। अपरमपि विधिसेवागुणमाह—काम्यतेत्यादि। काम्यता कमनीयमूर्तिता मनसस्तुष्टिः सन्तोषः। काम्यता मनस इति कमनीयवस्तुनि मनोवृत्तिः, तुष्टिश्च मनस एवेति योज्यम्। तेज उत्साहः। विक्रमः पराभिभवार्थं बलवती शरीरचेष्टा ॥ ४-६ ॥ उक्तविधिविपर्ययेण सेव्यमानं मद्यं मदात्ययाय संपद्यते, स च त्रिविधो भवति पूर्वो मध्यमोऽन्तिमश्चेति। तेषां क्रमेणलक्षणमाह—बुद्धीत्यादि। बुद्धिरनुभवः स्मृतिरनुभूतार्थानुसन्धानम्। पानान्ननिद्रारतिवर्धनश्चेति पानादिषु रतिरनुरागस्तद्वर्धनः। संपाठः सम्यक् पाठः। गयदासस्तु 'संपाठच' इति पठित्वा गीतनृत्यवाद्यानि मिलितानि संपाठचमुच्यते, गीतं तु केवलमेव इति व्याचष्टे। स्वरो ध्वनिः प्रोक्तोऽतिरम्य इति मनोविकारकारित्वेऽपि तदात्वेन न दुःखावहत्वात्, अत एव सुश्रुतेन मानसविकारेषु हर्षः पठितः ॥ ७ ॥ द्वितीयमदमाह—अव्यक्तेत्यादि।

आतङ्कदर्पणव्याख्या ।

अपरमपि विधिसेवागुणमाह—काम्यतेति। काम्यता कमनीयमूर्तिता, मनसस्तुष्टिः संतोषः, तेज उत्साहः,विक्रमः पराभिभवार्थं बलवती शरीरचेष्टा॥६॥ उक्तविधिविपर्ययेण सेव्यमानं मद्यं मदात्ययाय भवति। स च त्रिधा भवति मदात्ययः पूर्वो मध्योऽन्तिम इति। तेषां क्रमेण लक्षणमाह—तत्र प्रथमो यथा बुद्धीति। बुद्धिरनुभवः, स्मृतिः पूर्वानुभूतस्मरणं, प्रीतिः परेण मैत्री। सुख इति। शोकाद्यस्मरणेन मनसः प्रसादादनुपहतेन्द्रियवृत्तित्वात्। पानान्ननिद्रारतिवर्द्धन इति। पानादिषु विषये रतिरनुरागः, तद्वर्द्धनः। संपाठः सम्यक्पाठः, गीतं गानं, स्वरो ध्वनिः। प्रोक्तोरम्य इति। ननु, मनोविकारकत्वात् कथमस्यातिरम्यता उच्यते मनोविकारित्वेऽपि तदानेन दुःखावहत्वात्। अत एव सुश्रुतेन मानसविकारेषु हर्षः पठित इति ॥ ७ ॥ मध्यमदमाह—अव्यक्तेति। उन्मत्तस्य लीलाकृतिभ्यां सह वर्तत इति सोन्मत्तलीलाकृतिः। उन्मत्तप्राय इत्यर्थः। अप्रशांतः

गच्छेदगम्यांश्च गुरूंश्च मन्येत्खादेदभक्ष्याणि च नष्टसंज्ञः ॥
ब्रूयाच्च गुह्यानि हृदि स्थितानि मदे तृतीये पुरुषोऽस्वतन्त्रः ९
चतुर्थे तु मदे मूढो भग्नदार्विव निष्क्रियः ॥
कार्याकार्यविभागज्ञो मृतादप्यपरो मृतः ॥ १० ॥

---

मधुकोशव्याख्या ।

विचेष्टो विरुद्धचेष्टः । उन्मत्तस्य लीलाकृतिभ्यां सह वर्तते इति सोन्मत्तलीलाकृतिरुन्मत्तप्राय इत्यर्थः । अप्रशान्तः प्रचण्डः ॥ ८ ॥ तृतीयमदमाह—गच्छेदित्यादि । ननु, चरके द्वितीयतृतीययोर्मध्ये मदान्तरं पठितं, यदाह—"मध्यमं मदमुत्क्रम्य मदमप्राप्य चोत्तमम् । न किंचिदशुभं कुर्युर्नरा राजसतामसाः । को मदं तादृशं गच्छेदुन्मादमिव चापरम्" इति; तत् कुतोऽत्र न पठितम्? उच्यते—द्वितीयमदान्ते तृतीयमदस्य पूर्वावस्थैवातिनिन्दनीया, सुतरां तृतीयो मद इति प्रतिपादनार्थं तत्पठितं, न तु तयोः परमार्थतोऽन्तराले पृथङ्मदान्तरमस्ति; यथा—"कुम्भमीनर्क्षयोर्मध्ये यदा चरति चन्द्रमाः । नाहरेत्तृणकाष्ठानि न गच्छेद्दक्षिणां दिशम्" इति । अत्र हि कुम्भस्य शेषांशो मीनस्य प्रथमांश एतद्द्वयं मध्यशब्देनोच्यते इत्याहुः जेज्जटादयः, हरिचन्द्रव्याख्यानं तु विस्तरत्वान्न लिखितम् । अगम्यान् गुरुदारादीन् दुष्टयानादींश्च । नष्टसंज्ञ इति संज्ञा नामोल्लेखेन संज्ञाज्ञानं, तन्नष्टं यस्य स तथा । गुह्यानि गोप्यानि । अस्वतन्त्रो मदपरवशः ॥९॥ चतुर्थमदमाह—चतुर्थे त्वित्यादि । कार्याकार्यविभागज्ञः कार्यमकार्यमितिबुद्ध्या जानाति । 'कार्याकार्यविभागाज्ञः' इति

आतङ्कदर्पणव्याख्या ।

प्रचंडः । मुहुर्वारंवारम्, आलस्यनिद्राभ्यामभिहतः पीडितः, स चैवंविधोऽल्पनुपहतेंद्रियवृत्तित्वात् ॥ ८ ॥ तृतीयं मदमाह—गच्छेदिति । अगम्यान् गुरुदारादीन् । गुरून् ज्येष्ठान्, न मन्येत् अवगणयेदित्यर्थः । अभक्ष्याणि शास्त्रनिषिद्धानि, चकारात् दुष्टपानादींश्च । संज्ञा नामोल्लेखेन संज्ञाज्ञानं तन्नष्टं यस्य स तथा । हृदि स्थितानि गुह्यानि गोप्यानि, ब्रूयात् । तथा अस्वतंत्रो मदपरवशः । स चैवंविधोऽतीवोपहतेंद्रियत्वाद्भवति ॥ ९ ॥ चतुर्थमदमाह—चतुर्थे मदे पुरुषो मूढोऽज्ञः, भग्नदार्विव निष्क्रियो भवति भग्नवृक्ष इव क्रियारहितः, तथा कार्याकार्यविभागज्ञः कार्यमकार्यं बुद्ध्वा जानाति । 'कार्याकार्यविभागाज्ञः, इति पाठांतरे कार्याकार्यविभागयोरनभिज्ञ इत्यर्थः । मृतादप्यपरो मृत इति । मृतमपेक्ष्यापरोऽयं मृत इव, अत्यंताज्ञानसाधर्म्यात् । 'अवरः' इति पाठांतरे मृतादप्यवर इत्यर्थः । तथाविधावस्थायाः स्वयं कृतत्वात् ॥ १० ॥

को मदं तादृशं गच्छेदुन्मादमिव चापरम् ॥
बहुदोषमिवामूढः कान्तारं स्ववशः कृती ॥ ११ ॥

मधुकोशव्याख्या ।

पाठे कार्याकार्यविभागयोरज्ञ इत्यर्थः। मृतादप्यपरो मृत इति मृतमपेक्ष्यापरोऽयं मृत इव, अत्यन्ताज्ञानसाधर्म्यात् । 'अधमः' इति पाठान्तरे मृतादप्यधम इत्यर्थः, तथाविधावस्थायाः स्वयं कृतत्वात् । क इत्यादि, कः कृती सुकृती कृतकृत्यो वा स्ववशोऽपराधीनस्तादृशमुक्तप्रकारेण निन्दितं मदं गच्छेत् प्राप्नुयात्? न कश्चिदेवंविधं प्राप्नुयादित्यर्थः । कमिवेत्याह—बहुदोषमिवामूढः । कान्तारमिति बहुदोषं हिंस्रादियुक्तं, कान्तारं दूरशून्यमध्वानम्, यदुक्तं चरके—"गच्छेदध्वानमस्वन्तं बहुदोषमिवाऽध्वगः" इति, एवं विदेहेऽपि पठितमिति । अत्रास्वन्तमशोभमानमनिष्टफलत्वेन । ननु, चरकविदेहवाग्भटादिभिश्चतुर्थो न पठितस्तत्कथं सुश्रुतेन पठितः? उच्यते, चरक या द्वितीयतृतीययोरन्तरालावस्था पठिता, सैव सुश्रुतेन तृतीयो मद इति कृत्वा पठितः, यस्तु चरके तृतीयः स च सुश्रुते चतुर्थः पठित इत्यविरोधः । वस्तुगत्या तु त्रय एव मदा इत्युपपादितम् । ननु, किंकारणमेतत् त्रैविध्यमिति चेत्? उच्यते, मद्यं हि वह्नितुल्यं यथा ह्यग्निः सुवर्णानामुत्तममध्यमाधमानामभिव्यञ्जकस्तथा मद्यमपि प्राणिनां सत्त्वरजस्तमोभूयिष्ठानां व्यञ्जकमिति । तथाहि चरकः—"प्रधानाधममध्यानां रुक्माणां व्यक्तिदर्शकः । यथाग्निरेवं सत्त्वाद्यैर्मद्यं प्रकृतिदर्शकम्" इति ।

आतङ्कदर्पणव्याख्या ।

क इति । कः कृती सुकृती कृतकृत्यो वा स्ववशोऽपराधीनस्तादृशमुक्तप्रकारेण निंदितं मदं गच्छेत् प्राप्नुयात् न कश्चिदेवंविधं प्राप्नुयादित्यर्थः । किमिवेत्याह—बहुदोषमिवामूढः कांतारमिति । बहुदोषं हिंस्रादियुक्तं कांतारं शून्यमध्वानं को मूढो गच्छेदपि तु न कोपि । यदुक्तं चरके"गच्छेदध्वानमस्वंतं बहुदोषमिवाध्वगः ।"अस्वंतम् अनिष्टफलत्वेन । चरकविदेहवाग्भटादिभिश्चतुर्थो मदो न पठितः, सुश्रुते तु पठितः, तत्कथं न विरोधः । उच्यते; चरके या द्वितीयतृतीययोरंतरालावस्था पठिता, सैव सुश्रुतेन तृतीयो मद इति कृत्वा पठितः । केयमन्तरालावस्था । यथोक्तं ज्योतिःशास्त्रे—"स कुंभमीनयोर्मध्ये यदा चरति चंद्रमाः । नाहरेत्तृणकाष्ठानि न गच्छेद्दक्षिणां दिशम् ॥" इति । अत्र कुंभस्य शेषांशो मीनस्य प्रथमांश एतद्द्वयं मध्यशब्देनोच्यते इति सैवांतरालावस्था । यस्तु चरके तृतीयः, सुश्रुते स चतुर्थः पठित इत्यविरोधः । वस्तुगत्या त्रय एव मदा इत्युपपादितम् । ननु, किं कारणं किमिदं त्रैविध्यमिति चेत्, उच्यते—मद्यं हि वह्नितुल्यं यथा वह्निः सुवर्णानामधममध्यमोत्तमानामभिव्यंजकः, तथा मद्यमपि प्राणिनां

निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यम् ॥
आपादयेत्कष्टतमान्विकारानापादयेच्चापि शरीरभेदम् ॥ १२ ॥
क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन ॥
व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि ॥ १३ ॥
अत्यम्बुभक्षावततोदरेण साजीर्णभुक्तेन तथाऽबलेन ॥
उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान् १४

---

मधुकोशव्याख्या ।

तस्मात् प्रथमद्वितीयतृतीयमदाः सत्त्वरजस्तमोभूयिष्ठानां क्रमेण भवन्तीत्यर्थः ॥ १० ॥ ॥ ११ ॥ अविधिमद्यपानस्य विकारान्तरहेतुत्वमाह—निर्भक्तमित्यादि । ननु, अयमर्थः स्निग्धैस्तदन्नैरित्यादिना यदुक्तं तद्विपर्ययेणैव लब्धः, तत्कथं पुनरुच्यते ? नैवं, पूर्वं मद्यपानगुणाभिधानार्थमुक्तम्, इदं तु कृच्छ्रतमव्याधिकर्तृत्वाभिधानार्थमिति भेदः । यत्परः शब्दः स शब्दार्थ इत्यभिप्रायः । कष्टतमान्विकारानिति वक्ष्यमाणपानात्ययादीन् । भेदं विनाशं शरीरस्य ॥ १२ ॥ अन्नसहितस्यापि मद्यस्य क्रुद्धत्वादिकारणसहितस्य विकारकारित्वप्रदर्शनार्थमाह—क्रुद्धेनेत्यादि । परिक्षतेन क्षीणेन अवततं व्याप्तम् । विविधान् विकारान् पानात्ययादीनिति ॥ १३ ॥ १४ ॥

आतङ्कदर्पणव्याख्या ।

सत्त्वरजस्तमोभूयिष्ठानामभिव्यंजकः । तथा हि चरकः—"प्रधानाधममध्यानां रुक्माणां व्यक्तिदर्शकः । यथाग्निरेवं सत्त्वानां मद्यं प्रकृतिदर्शकम् ॥" इति । तस्मात्प्रथमद्वितीयतृतीयमदाः,सत्त्वरजस्तमोभूयिष्ठानां क्रमेण भवंतीत्यर्थः ॥ ११ ॥ अविधिमद्यपानस्य विकारांतरहेतुत्वमाह—निर्भक्तमिति । निर्भक्तम् आहाररहितम्, एकांततो नैरंतर्येण सेव्यमानं कष्टतमान् वक्ष्यमाणान् पानात्ययादीन् जनयेत् । शरीरभेदं शरीरविनाशम् । ननु, 'स्निग्धैस्तदन्नैः' इत्यादीनां विपर्ययेणैवायमर्थो लब्धस्तत्किं पुनः कथनम् । नैवं, पूर्वं मद्यपानगुणाभिधानार्थमुक्तम् इदं तु कृच्छ्रतमव्याधिकर्तृत्वाभिधानार्थमुक्तमिति भेदः ॥ १२ ॥ अन्नसहितस्यापि मद्यस्य क्रुद्धत्वादिकारणसहितस्य विकारकारित्वप्रदर्शनार्थमाह—क्रुद्धेनेति । व्यायामभाराध्वभिः परिक्षतेन क्षीणेन वेगावरोधाभिहतेन मूत्रादीनां वेगाभिघातपीडितेन ॥ १३ ॥ अत्यम्बुभक्षैः अवततोदरेण व्याप्तोदरेण । साजीर्णभुक्तेन साजीर्णं भुक्तं यस्य स तथा तेन । अबलेन बलरहितेन, बलम् ओजः । उष्णाभितप्तेन घर्मसंतप्तेन । ईदृशेन पुरुषेण सेव्यमानं विविधान् नानाविधान्,विकारान् पानात्ययादीन् करोति ॥ १४ ॥

पानात्ययं परमदं पानाजीर्णमथापि वा ॥
पानविभ्रममुग्रं च तेषां वक्ष्यामि लक्षणम् ॥ १५ ॥
हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः ॥
विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् ॥ १६ ॥
तृष्णादाहज्वरस्वेदमोहातीसारविभ्रमैः ॥
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् ॥ १७ ॥
छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः ॥
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ॥
ज्ञेयस्त्रिदोषजश्चापि सर्वलिङ्गैर्मदात्ययः ॥ १८ ॥

---

मधुकोशव्याख्या ।

तानेव विवृणोति—पानात्ययमित्यादि । ननु, अयमर्थः 'आपादयेत्कष्टतमान्विकारान्' इत्यनेनैवोक्तत्वात् कथं पुनरुक्तः? उच्यते, पूर्वेण कष्टतमविकारकारित्वमुक्तम्, अनेन तु नानाविधविकारकारित्वमिति भेदः ॥ १५ ॥ तेषामुद्दिष्टानां लक्षणमाह—हिक्केत्यादि । प्रजागरो निद्राविच्छेदः । वातप्रायमित्यनेन सर्वे वातादिप्राया मदात्ययास्त्रिदोषजा उद्भूतत्वेन व्यपदेश इति चरके दर्शितम् । यदाह—"ये विषस्य गुणाः प्रोक्ताः सर्वदोषप्रकोपणाः" इत्यारभ्य, यावत् "सर्वं मदात्ययं विद्यात् त्रिदोषम्" इति । एवं चरकसंवादात्सुश्रुतेऽपि बोध्यम् । विभ्रमो भ्रमः । हरितवर्णस्येत्यनेन

आतंकदर्पणव्याख्या ।

तानत्र विकारान् विवृणोति—पानात्ययमिति । पानात्ययमित्येको विकारः, पानाजीर्णमित्येकः, पानविभ्रममपि चान्यः । तेषां क्रमेण लक्षणं वक्ष्यामि ॥ १५ ॥ तत्र वातिकमदात्ययमाह—हिक्केति । सर्वे मदात्ययाः त्रिदोषजाः, किं तु औद्धत्येन व्यपदेशः । यदुक्तं चरकेण—"ये विषस्य गुणाः प्रोक्ताः सर्वदोषप्रकोपनाः" । तथा च—"सर्वं मदात्ययं विद्यात्त्रिदोषजम्" इति । प्रजागरो निद्रानाशः, शेषं सुगमम् ॥ १६ ॥ पैत्तिकमाह—तृष्णेति । विभ्रमो वस्तुविपरीतज्ञानम् । हरितवर्णस्य पुरुषस्येति । हरितवर्णता पित्तलक्षणं, शेषं सुगमम् ॥ १७ ॥ श्लैष्मिकमाह—छर्दीति । स्तैमित्यं निश्चलता । शीतपरीतस्य शीतयुक्तस्य । त्रिदोषजमाह—ज्ञेय इति । सर्व-

श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च
विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च ॥
लिङ्गं परस्य च मदस्य वदन्ति तज्ज्ञा-
स्तृष्णा रुजा शिरसि सन्धिषु चापि भेदः ॥ १९ ॥
आध्मानमुग्रमथ चोद्गिरणं विदाहः
पानेऽजरां समुपगच्छति लक्षणानि ॥
हृद्गात्रतोदकफसंस्रवकण्ठधूमा
मूर्च्छावमिज्वरशिरोरुजनप्रदाहाः ॥ २० ॥
द्वेषः सुरान्नविकृतेष्वपि तेषुतेषु
तं पानविभ्रममुशन्त्यखिलेन धीराः
हीनोत्तरोष्ठमतिशीतममन्ददाहं
तैलप्रभास्यमपि पानहतं त्यजेत्तु ॥ २१ ॥

---

मधुकोशव्याख्या ।

हरितवर्णताऽपि लक्षणम् ॥ १६-१८ ॥ परमदमाह-श्लेष्मोच्छ्रय इत्यादि । श्लेष्मोच्छ्रयश्चात्र नासास्रावादिना ज्ञेयः । सक्तिः सङ्गः, अप्रवृत्तिरिति यावत् । तन्द्रिस्तन्द्रा । परस्य मदस्येति परमदस्य, छन्दोऽनुरोधादसमासनिर्देशः ॥ १९ ॥ पानाजीर्णमाह-आध्मानमित्यादि । उद्गिरणं वान्तिः, उद्गारो वा । पाने मद्येऽजीर्णमुपगच्छति अपक्वत्वमुपगच्छतीति पानाजीर्णविकार इत्यर्थः ॥ पानविभ्रममाह-हृदित्यादि । कण्ठधूमः कण्ठाद्धूमनिर्गमवत्पीडा । शिरोरुजनं शिरःशूलम् ॥ २० ॥ सुरान्नविकृतेष्विति । सुराविकृतेषु अन्नविकृतेषु च, भावे क्तः । तेषुतेष्विति

आतंकदर्पणव्याख्या ।

लिंगैः सर्वदोपलक्षणैः ॥ १८ ॥ परमदमाह-श्लेष्मेति । श्लेष्मोच्छ्रयो नासास्रावादिना ज्ञेयः । अंगगुरुता शरीरगौरवम्, विरसास्यता मुखस्य वैरस्यम्, विण्मूत्रसक्तिः विण्मूत्रयोरप्रवृत्तिः, तंद्रिस्तंद्रा, परस्येति छंदोनिरोधादसमासनिर्देशः परमदस्येति ज्ञेयम् । शिरसि रुजा पीडा, संधिषु भेदः स्फुटनमिव ॥ १९ ॥ पानाजीर्णमाह-आध्मानमिति । उद्गिरणं वांतिरुद्गारो वा पाने मद्ये अजरामजीर्णं समुपगच्छति प्राप्तवति, पानाजीर्ण इत्यर्थः ॥ पानविभ्रममाह-हृदिति । हृद्गात्रयोस्तोदः व्यथाविशेषः, कंठधूमः कंठाद्धूमनिर्गमवत्पीडा, शिरोरुजनं शिरःशूलम्, प्रदेहः[1] श्लेष्मलिप्तमिव मुखम् ॥२०॥सुराविकृतेषु अन्नविकृतेषु च भावेषु द्वेषः । तेषुतेष्विति । नानाप्रकारेषु सुरामैरेयपि-

---

१ एतच्च 'शिरोरुजनप्रदेहाः' इति पाठाभिप्रायेण ।

जिह्वौष्ठदन्तमसितं त्वथवाऽपि नीलं
पीते च यस्य नयने रुधिरप्रभे वा ॥
हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः
कासभ्रमावपि च पानहतं भजन्ते ॥ २२ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने पानात्ययपरमदपानाजीर्ण-
पानविभ्रमनिदानं समाप्तम् ॥ १८ ॥

मधुकोशव्याख्या ।

नानाविकारेषु सुरामैरेयपिष्टकलङ्कुकादिषु । उशन्ति इच्छन्ति । एते च परम-दादयस्त्रयो न चरके पठिताः, सन्निपातेऽन्तर्भूतत्वात्, सुश्रुतेन तूक्तत्रिदोषजमदात्ययात्पृथगेते पठिताः, विकृत्या पूर्वलक्षणवैलक्षण्याभिधानार्थमित्याहुः ॥ असाध्यल-क्षणमाह—हीनेत्यादि । हीनोत्तरौष्ठं प्रलम्बमानोपरितनौष्ठम् । अतिशीतं बहिः, अमन्ददाहमन्तरे, तैलप्रभास्यं तैलाक्तमुखमिव ॥ २१ ॥ उपद्रवमाह—हिक्केत्यादि । एतैः कृच्छ्रसाध्यं भवति न त्वसाध्यम्, असाध्यलक्षणेभ्यः पृथक्पाठादिति जेज्जटः। ध्वंसकविक्षेपकावपि मद्यविकारौ चरके पठितौ । तद्यथा—"विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते। ध्वंसो विक्षेपकश्चैव रोगस्तस्योपजायते ॥ श्लेष्मप्रसेकः कण्ठा-स्यशोषः शब्दासहिष्णुता । तन्द्रानिद्राभियोगश्च ज्ञेयं ध्वंसकलक्षणम् ॥ हृत्कण्ठरोधः संमोहश्छर्दिरङ्गरुजा ज्वरः। तृष्णा कासः शिरःशूलमेतद्विक्षेपलक्षणम् ॥" इति । सुश्रु-तेन—"विच्छिन्नमद्यः सहसा योऽतिमद्यं निषेवते । तस्य पानात्ययोद्दिष्टा विकाराः संभवन्ति हि॥" इत्यनेन संगृहीतौ बोद्धव्यौ । न वा चिकित्साभेदस्तयोरुक्तः, यतश्च-

आतङ्कदर्पणव्याख्या ।

ष्टकादिषु । अखिलेन लक्षणेन, पानविभ्रमम् । उशंति कथयंति । एते परमदादयस्त्रयो न चरके पठिताः, सन्निपातजेंतर्भूतत्वात्, सुश्रुतेन तु उक्तत्रिदोषजमदात्ययाः पृथगेव पठिताः, पूर्वोक्तलक्षणवैलक्षण्यात् ॥ असाध्यलक्षणमाह—हीनेति । हीनोत्तरोष्ठं प्रलंबमानोपरितनोष्ठम् । अतिशीतं बहिः, अमंददाहमभ्यंतरे, अथवा अतिशीतममंददाहमिति विकल्पेन प्रत्येतव्यम् । एकदैकत्र विरुद्धधर्मद्वयासंभवात्, कदाचिदतिशीतं, कदाचित्तीव्रंदाहम् । उल्वणमिति ॥ तैल-प्रभास्यमिति । तैलाक्तमुखमिव ॥ २१ ॥ उपद्रवानाह—जिह्वेति । एते उपद्रवाः पानहतम् पुरुषान्, भजंते । असितं कृष्णम्, अथवा नीलं चाषपक्षप्रतिमम् । रुधिरप्रभे अतीवरक्ते । वमथु-श्छर्दिः, वेपथुः कंपः । भ्रमश्चक्रारूढस्येव, एतैश्च कृच्छ्रसाध्यत्वं भवति, न त्वसाध्यत्वम् । असा-ध्यलक्षणेभ्यः पृथक्पाठात्—इति जेज्जटः । ध्वंसकविक्षेपकाख्यौ मद्यविकारौ चरके पठितौ । तद्यथा—"विच्छिन्नमद्यः सहसा योऽति मद्यं निषेवते । ध्वंसो विक्षेपकश्चैव रोगस्तस्योपजायते ॥

# अथ दाहनिदानम् १९.

त्वचं प्राप्तः स पानोष्मा पित्तरक्ताभिमूर्च्छितः ॥
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥ १ ॥
कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ध्रुवम् ॥
स उष्यते तृष्यते च ताम्राभस्ताम्रलोचनः ॥ २ ॥
लोहगन्धाङ्गवदनो वह्निनेवावकीर्यते ॥
पित्तज्वरसमः पित्तात्स चाप्यस्य विधिः स्मृतः ॥ ३ ॥

---

मधुकोशव्याख्या ।

रक एवोक्तवान्–"तयोः कर्म चिकित्सा च वातिके यन्मदात्यये" इति ॥ २२ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां पानात्ययपरमदपानाजीर्णपानविभ्रमनिदानं समाप्तम् ॥ १८ ॥

मदात्ययेऽपि दाहो भवत्यतः सप्तप्रकारं दाहमाह, तत्र मद्यजमाह–त्वचमित्यादि । स पानोष्मा स मद्यपानकुपितपित्तस्योष्मा । समानोष्मेति पाठान्तरमयुक्तं, सुश्रुते पानात्यये श्लोकस्यास्य पाठात् ।ः पित्तज एवायं हेतुभेदात्पृथक् पठितः ॥ १ ॥ रक्तजमाह–कृत्स्नेत्यादि । स उष्यते समीपस्थेनेव वह्निना तप्यते, संचूष्यत इति पाठान्तरे आचूषणवद्वेदनामनुभवति । ताम्राभ इति गात्रे । लोहगन्धाङ्गवदन इति लोहस्येव गन्धोऽङ्गे वदने च यस्य स तथा ॥ २ ॥ पित्तजमाह–पित्तेत्यादि । पित्त-

आतङ्कदर्पणव्याख्या ।

श्लेष्मप्रसेकः कंठास्यशोषः सर्वासहिष्णुता । निद्रातंद्रातियोगश्च ज्ञेयं ध्वंसकलक्षणम् ॥ हृत्कंठरोधः संमोहः छर्दिरंगरुजा ज्वरः । तृष्णाकासः शिरः शूलमेतद्विक्षेपलक्षणम् ॥" इति । न वा तयोश्चिकित्साभेद उक्तः, यतश्चरक एवोक्तवान्–"तयोः कर्म चिकित्सा च वातिके यन्मदात्यये" इति ॥ २२ ॥ इत्यातंकदर्पणे निदानव्याख्यायां मदात्ययनिदानम् ॥ १८ ॥

मदात्यये दाहो भवतीत्यतो मदात्ययानंतरं दाहनिदानारम्भः । मद्यजदाहमाह–त्वचमिति । पानोष्मा मद्यपानकुपितपित्तोष्मा, स त्वचं प्राप्तो घोरं दाहं प्रकर्षेण कुरुत इत्यर्थः । कीदृशः पित्तरक्ताभ्यामभिवर्द्धितः । अन्ये 'समानोष्मा' इति पाठांतरं पठंति । तन्न युक्तं, सुश्रुते पानात्यये श्लोकस्यास्य पाठात् । पित्तजोप्ययं हेतुभेदात्पृथक् पठितः ॥ १ ॥ रक्तजमाह–कृत्स्नेति ॥ उद्रिक्तं वृद्धं रक्तं कृत्स्नदेहानुगं सत् ध्रुवं स दहति पुरुषस्तेन उष्यते तथा तृष्यते समीपस्थेन वह्निना तप्यते । संचुष्यते इति पाठांतरे । आचूषणवद्वेदनामनुभवति । ताम्राभ इति । ताम्रामभात्रः ॥२॥ लोहस्येव गंधोऽङ्गे वदने च यस्य स तथा । पित्तजमाह–पित्तज्वरेति । पित्तज्वरे अरत्या-

---

१ पित्तप्रकोपपानादिहेतुभिर्जायते गदः । ऊष्मात्मकोऽपि दाहाख्यः स च सप्तविधो मतः ॥

तृष्णानिरोधादब्धातौ क्षीणे तेजः समुद्धतम् ॥
स बाह्याभ्यन्तरं देहं प्रदहेन्मन्दचेतसः ॥ ४ ॥
संशुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य वेपते ॥
असृजः पूर्णकोष्ठस्य दाहोऽन्यः स्यात्सुदुस्तरः ॥ ५ ॥
धातुक्षयोक्तो यो दाहस्तेन मूर्च्छातृडर्दितः ॥
क्षामस्वरः क्रियाहीनः स सीदेद्भृशपीडितः ॥ ६ ॥

मधुकोशव्याख्या ।

ज्वरसमः पित्तज्वरलिङ्गयुक्तः, पित्तज्वरेऽरत्यामाशयदुष्ट्याद्योऽधिका इति भेदः । स चाप्यस्य विधिरिति पित्तज्वरचिकित्साविधिः ॥ ३ ॥ तृष्णानिरोधजमाह—तृष्णेत्यादि । तेजःसमुद्धतं पित्तोष्मा वृद्ध इत्यर्थः । निष्कृष्य निःसार्य ॥ ४ ॥ अवगाढशस्त्रप्रहारजनितरक्तपूर्णकोष्ठजमाह—असृज इत्यादि । न चोक्तरक्तजेनास्य पौनरुक्त्यं, कृत्स्नदेहानुगमिति वचनात्, कारणभेदाच्च । असृजः पूर्णकोष्ठस्येति पूरणगुणसुहितार्थेत्यादिना ज्ञापकेन कर्तरि षष्ठी, रक्तेन पूरितकोष्ठस्येत्यर्थः । कोष्ठशब्देन हृदयादयो गृह्यन्ते । यदाह सुश्रुतः—"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते" इति ॥ ५ ॥ धातुक्षयजमाह—धात्वित्यादि । धातवो रसादयः । क्रियाहीनो निश्चेष्टः; किंवा भृशपीडितो दाहेन क्रियाही-

आतङ्कदर्पणव्याख्या ।

माशयदुष्ट्याद्योऽधिका इति भेदः। अन्यानि समानलक्षणानि। स चाप्यस्य विधिरिति। पित्तज्वरोक्तचिकित्सेत्यर्थः ॥ ३ ॥ तृष्णानिरोधजमाह—तृष्णेति । तृष्णाविधारणाद् अब्धातौ रसे क्षीणे सति तेजः समुत्थितं पित्तोष्मा वृद्ध इत्यर्थः । स बाह्याभ्यंतरे देहं प्रदहेत् । मंदचेतसः विसंज्ञस्य ॥ ४ ॥ निष्कृष्य निःसार्य कंपते । अवगाढशस्त्रप्रहारजनितरक्तपूर्णकोष्ठजमाह—असृज इति । असृजः रुधिरस्येति "पूरणगुणसुहित—" इत्यादिना ज्ञापकेन कर्तरि षष्ठी । रक्तेन पूरितकोष्ठस्येत्यर्थः । कोष्ठशब्देन, हृदयादयो गृह्यंते । यदाह—सुश्रुतः "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥" । न चोक्तरक्तजे नास्य पौनरुक्त्यं, 'कृत्स्नदेहानुगम्' इति वचनात्, कारणभेदाच्चेति ॥ ५ ॥ धातुक्षयजमाह—धातवो रसादयः, तेषां क्षयेण यो दाहो भवति तेन धातुक्षयजदाहेन क्षामस्वरो दुर्बलस्वरः । क्रियाहीनो निश्चेष्टः किंवा भृशपीडितो दाहेन चिकित्साहीनो यदि भवेत् तदा

मर्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः ॥
सर्व एव च वर्ज्याः स्युः शीतगात्रस्य देहिनः ॥ ७ ॥
इति श्रीमाधवकरविरचिते माधवनिदाने दाहनिदानं समाप्तम् ॥ १९ ॥

---

# अथोन्मादनिदानम् २०.

मदयन्त्युद्गता दोषा यस्मादुन्मार्गमागताः ॥
मानसोऽयमतो व्याधिरुन्माद इति कीर्तितः ॥ १ ॥

---

मधुकोशव्याख्या ।

नश्चिकित्साहीनो यदि भवेत् तदा सीदेत् म्रियत इत्यर्थः ॥ ६ ॥ मर्माभिघातजमाह-मर्मेत्यादि । मर्माणि शिरोहृदयवस्त्यादीनि । जेज्जटस्तु सप्तत्वमन्यथा गणयति-त्वचं प्राप्त इत्यादिना प्रथमः, 'कृत्स्नदेहानुगं रक्तम्' इत्यत्र रक्तस्थाने पित्तं पठित्वा एतदादिना "स चाप्यस्य विधिः स्मृतः" इत्यन्तेन द्वितीयः, तृष्णानिरोधजस्तृतीयोऽसृजः पूर्णकोष्ठजश्चतुर्थः, धातुक्षयजः पञ्चमः, षष्ठस्य तु क्षतजस्य लक्षणं पठति-"क्षतजोऽनश्नतश्चान्नं शोचतश्चाप्यनेकधा । तेनान्तर्दह्यतेऽत्यर्थं तृष्णादाहप्रलापवान् ॥" इति । मर्माभिघातजस्तु सप्तम इति ॥ ७ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां दाहनिदानं समाप्तम् ॥ १९ ॥

मदात्यये 'उन्मादमिव चापरम्' इत्यनेन उन्मादसंकीर्तनमुन्मादसादृश्यं चोक्तं, तथा मदात्ययेऽपि दाहो भवतीति अल्पवक्तव्यतया दाहमभिधाय उन्मादारम्भस्तस्य निरुक्तिमाह-मदयन्तीत्यादि । मदयन्ति मनोविभ्रमं कुर्वन्ति मनोवहा धमनीरनु-

आतङ्कदर्पणव्याख्या ।

सीदेन्म्रियत इत्यर्थः ॥ ६ ॥ मर्माभिघातजमाह-मर्मेति । मर्माणि हृदयशिरोवस्त्यादीनि । 'स चासाध्यतमः स्मृतः' इत्यत्रान्ये 'सोऽसाध्यः सप्तमो मतः' इति पठंति । जेज्जटस्तु सप्तत्वमन्यथा गणयति । त्वचं प्राप्त इत्यादिना प्रथमः, कृत्स्नदेहानुगं रक्तमित्यत्र रक्तस्थाने पित्तं पठित्वा एतदादिना 'स चाप्यस्य विधिः स्मृतः' इत्यंतेन पैत्तिके द्वितीयः, तृष्णानिरोधजस्तृतीयः,असृजः पूर्णकोष्ठस्येति चतुर्थः, धातुक्षयजः पञ्चमः, षष्ठस्य क्षतजस्य लक्षणं पठति-"क्षतजेनाश्नतश्चान्नं शोचतो वाप्यनेकधा । तेनांगं दह्यतेऽत्यर्थं तृष्णादाहप्रलापवान् ॥" इति । आस्यार्थः पूर्वमसृजः-पूर्णकोष्ठस्येत्यादिना कोष्ठस्थेन रक्तेन दाहमभिधायेदानीं प्रकारांतरेणाह-क्षतजेन रक्तेनाश्नतो भोजनं कुर्वतः, शोकं कुर्वतो वापि नरस्यान्यो दाहो रक्तेन भवतीति संबंधः, तेन दाहेनाभ्यंतरं दह्यते, तृष्णामूर्च्छाप्रलापवान्नरो भवतीति शेषः । मर्माभिघातजस्तु सप्तमः सर्वेषामपि दाहानामवस्थायां वर्जयन्नाह-सर्व इति । सर्व एव हि दाहा इति शेषः । शेषं सुगमम् ॥ ७ ॥ इत्यातंकदर्पणे निदानव्याख्यायां दाहनिदानम् ॥ १९ ॥

'मदात्यये उन्मादमिवचापरम्' इत्यन्येनोन्मादसंकीर्त्तनमुन्मादसादृश्यं चोक्तं, तथा मदात्यये दाहो भवतीति तुल्यलक्षणतया दाहमभिधायोन्मादारंभः, तस्य निरुक्तिमाह-मदयंतीति । यस्मा-

एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः ॥
मानसेन च दुःखेन स च पञ्चविधो मतः ॥ २ ॥
विषाद्भवति षष्ठश्च यथास्वं तत्र भेषजम् ॥
स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्ति च ॥ ३ ॥
विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम् ॥
उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः॥ ४ ॥

---

मधुकोशव्याख्या ।

प्राप्ता उन्मार्गमागता विमार्गगताः । उद्गता वृद्धाः, अथवा ऊर्ध्वं हृदयं गताः । एतेन उत्पूर्वेणैव दोषाणां वृद्धत्वं विमार्गगत्वं च दर्शितम् ॥ १ ॥ प्रकारभेदमाह—एकैकश इत्यादि । मानसेन च दुःखेनेति शोकादिना । स चेति षड्विधोऽपि । अत्राप्रवृद्धपदमुपादायापि तरुणपदप्रयोगं कुर्वता सुश्रुतेन स्वतन्त्रोऽपि दोषजनितो मदो भवतीति दर्शितम् । अत एव चरके विधिशोणितीयाध्याये उन्मादात्पृथगेव पठितः सनिदानचिकित्स्य इति ॥ २ ॥ ३ ॥ सामान्यहेतुमाह—विरुद्धेत्यादि । दुष्टं गरसहितमन्नादि । प्रधर्षणं 'धृष' प्रधर्षणे इत्यस्मात् प्रधर्षणमभिभवः । भयहर्षपूर्वो मनोऽभिघात इति भयहर्षाभ्यां मनसोऽभिभवः, भयहर्षपूर्व इति भयं हर्षो वा पूर्वं यस्य स तथा, पूर्वशब्दोऽत्र कारणवाची, चकारोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः, तेन

आतङ्कदर्पणव्याख्या ।

दोषा मदयंति मनोविभ्रमं कुर्वंति, अतोऽयं मानसो व्याधिरुन्माद इति कीर्त्यंत इति संबंधः । कीदृशाः, उद्गता वृद्धाः, अथवा ऊर्ध्वं हृदयं गताः, उन्मार्गमागता विमार्गगाः, मनोवहधमनीरनुप्राप्ताः, तेन ततः पूर्वेणैव दोषाणां वृद्धत्वं विमार्गगत्वं च दर्शितम् ॥ १ ॥ तस्य संख्यामाह—एकैकश इति । वातेन पित्तेन श्लेष्मणा सर्वश इति । सन्निपातेन अत्यर्थमूर्च्छितैः अतिप्रवृद्धैः, मानसेन तु दुःखेनेति शोकादिना विषात् षष्ठो भवति । स चाप्रवृद्ध इति । स च विकारः, यावत् प्रवृद्धो वृद्धिं गतो न भवति, यावच्च तरुणस्तावन्मद इति संज्ञां बिभर्ति, मद इति कथ्यत इत्यर्थः । सुश्रुते स्वतंत्रेऽपि दोषजनितो मदो भवतीति व्याख्यातम् । अत एव चरके विधिशोणितीया ( तकोपा ) ध्याये उन्मादात्पृथगेव पठितः । स निदानचिकित्सित इति ॥ २ ॥ ३ ॥ तस्य सामान्यहेतुमाह । विरुद्धेति—दुष्टं गरदुष्टमन्नादि । अशुचि भोजनं चांडालादिस्पृष्टं, प्रधर्षणं निंदाद्यभिभवनं, मनोभिघात इति । भयहर्षाभ्यां मनोभिभवः, भयहर्षपूर्व इति । भयहर्षौ पूर्वौ यस्य स तथा । पूर्वशब्दोऽत्र कारणवाची, चकारोत्र लुप्त-

तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य ॥
स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः ॥५॥
धीविभ्रमः सत्त्वपरिप्लवश्च पर्याकुला दृष्टिरधीरता च ॥
अबद्धवाक्त्वं हृदयं च शून्यं सामान्यमुन्मादगदस्य लिङ्गम् ६
रूक्षाल्पशीतान्नविरेकधातुक्षयोपवासैरनिलोऽतिवृद्धः ॥
चिन्तादिदुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिं चाप्युपहन्ति शीघ्रम् ७॥

---

मधुकोशव्याख्या ।

कामक्रोधलोभादयोऽपि कारणमिति जेज्जटः । अन्ये त्वाहुः क्रोधादिभिरपि भयहर्षपूर्वक एव भवतीति, तेन तौ निर्दिष्टौ । विषमाश्च चेष्टा इति विषमाङ्गन्यासबलवद्विग्रहादयः, उन्मादहेतव इत्यपि योज्यम् ॥ ४ ॥ संप्राप्तिमाह—तैरित्यादि । तैरुक्तहेतुभिः । अल्पसत्त्वस्य अल्पसत्त्वगुणस्येति चक्रः, जेज्जटस्त्वाह सत्त्वं मनः, तस्य चाल्पत्वं रजस्तमोभ्यामावृतत्वेनाल्पज्ञानजनकत्वात् । मला वातादयः । बुद्धेर्निवासं हृदयमित्यनेन हृदयस्याश्रयस्य दुष्ट्या तदाश्रितज्ञानस्यापि दुष्टिर्भवतीति दर्शयति । स्रोतांसि मनोवहानीति हृदयाश्रिता दश धमन्यः; एतच्च विशेषेण बोध्यं, निखिलदेहस्रोतसामेव मनोऽधिष्ठानत्वेन चरके दर्शितत्वात् । अधिष्ठाय व्याप्येत्यर्थः॥५॥ सामान्यरूपमाह—धीविभ्रम इत्यादि । एतत् सामान्यं पूर्वरूपमिति जेज्जटः, सामान्यरूपमिति चक्रः। धीविभ्रमो भ्रान्तज्ञानत्वम् । सत्त्वपरिप्लवो मनसश्चञ्चलत्वम् । अधीरता कातरत्वम्। अबद्धवाक्त्वमसंबद्धवचनत्वम् । लिङ्ग्यतेऽनेनेति लिङ्गं, तेन पूर्वरूपं रूपं चेति व्याख्यातम् । विरेकशब्देनात्र वान्तिरप्यभिधीयते, विरेचयति देहान्मलं पृथक्करोतीति व्युत्पत्त्या ॥ ६ ॥ वातजमाह—रूक्षेत्यादि । अस्थानहास्येत्यादि । अस्थानेऽविषये हास्योऽस्थान-

आतंकदर्पणव्याख्या ।

निर्दिष्टौ द्रष्टव्यः, तेन: कामक्रोधलोभादयोपि कारणमिति जेज्जटः । अन्ये त्वाहुः—क्रोधादिभिरपि भयहर्षपूर्वक एव भवतीति, तेन तौ निर्दिष्टाविति ॥ विषमाश्चेष्टा इति । विषमांगन्यासबलवद्विग्रहादयः, उन्मादहेतुरितियोज्यम् ॥ ४ ॥ संप्राप्तिमाह—तैरिति । तैरुक्तहेतुभिरल्पसत्त्वस्य नरस्य मला वातादयः प्रदुष्टाः संतो बुद्धेर्निवासं हृदयं प्रदूष्य मनोवहानि स्रोतांसि अधिष्ठाय व्याप्य आशु चेतः प्रमोहयंति । अल्पसत्त्वस्याल्पसत्त्वगुणस्येति चक्रः । जेज्जटस्त्वाह—सत्त्वं मनः, तस्य चाल्पत्वं रजस्तमोभिभूतत्वेनाल्पज्ञानजनकत्वात् । बुद्धेर्निवासं हृदयमित्यनेन हृदयमाश्रिता धमन्यः, एतच्च विशेषणं बोध्यं, निखिलदेहस्रोतसामेव मनोधिष्ठानत्वेन चरके दर्शितत्वात् । अधिष्ठाय व्याप्य ॥ ५ ॥ पूर्वरूपमाह—धीति । धीविभ्रमो भ्रांतज्ञानत्वं, सत्त्वपरिप्लवो मनसश्चंचलत्वम् । अन्ये सत्त्वगुणस्येति ॥ पर्याकुला दृष्टिरिति । आकुलावलोकनम् । अधीरता कातरत्वम् । अबद्धवाक्त्वम् असंबद्धवचनत्वम् । हृदयं शून्यमिति ॥ धीविभ्रमत्वादि सामान्यलक्षणमेवाह ॥ ६ ॥ वातिकमाह—रूक्षेति । एतद्वातिकोन्मादलक्षणम् । रूक्षाल्पशीतान्नैर्भोज्यैः । विरेकशब्देनात्र

अस्थानहास्यस्मितनृत्यगीतवागङ्गविक्षेपणरोदनानि ॥
पारुष्यकार्श्यारुणवर्णताश्च जीर्णे बलं चानिलजस्य रूपम् ८॥
अजीर्णकट्वम्लविदाह्यशीतैर्भोज्यैश्चितं पित्तमुदीर्णवेगम् ॥
उन्मादमत्युग्रमनात्मकस्य हृदि स्थितं पूर्ववदाशु कुर्यात्॥९॥
अमर्षसंरम्भविनग्नभावाः सन्तर्जनातिद्रवणौष्ण्यरोषाः ॥
प्रच्छायशीतान्नजलाभिलाषः पीता च भाः पित्तकृतस्य लिंगम् १०॥

मधुकोशव्याख्या।

हास्यः, एवमस्थानशब्दः स्मितादिषु प्रयोज्यः। स्मितमीषद्धासः। अङ्गविक्षेपो विरुद्धचेष्टा। जीर्णे बलमिति जीर्णे आहारे व्याधेर्बलं भवति ॥ ७ ॥ ८ ॥ पित्तजमाह—अजीर्णेत्यादि। अशीतैरिति उष्णैः। उन्मादमत्युग्रमिति अत्युग्रं तीव्रवेगम्, उन्मादयत्युग्रमिति पाठान्तरे उग्रं यथा भवति तथा उन्मादं जनयति। अनात्मकस्य अनात्मवतः। पूर्ववदिति चिन्तादिदुष्टहृदयस्य बुद्ध्यादिकमुपहत्येत्यादिसंप्राप्त्या। कुर्यादिति वक्ष्यमाणं लिङ्गमिति शेषः। अत्र पक्षे किं तल्लिङ्गमित्याह—अमर्षेत्यादि। अमर्षोऽसहिष्णुत्वं; न तु रोषः, तस्य वक्ष्यमाणत्वात्। संरम्भ आरभटी; विनग्नभावो नग्नत्वम्, संतर्जनं परत्रासनम्, अतिद्रवणं पलायनम्, औष्ण्यं गात्रस्य, औष्ठ्यमिति पाठान्तरे विकृतौष्ठत्वम्। प्रच्छायशीतान्नजलाभि-

आतङ्कदर्पणव्याख्या।

वांतिरप्यभिधीयते। विरेचयति देहान्मलं पृथक् करोतीति व्याख्यानात्। धातुक्षयो रसादिधातुक्षयः, एतैर्दुष्टो वायुश्चिताशोकादिदुष्टं हृदयं मनः प्रविश्य बुद्धिं स्मृतिं च शीघ्रमपहंति ॥ ७ ॥ अनुभूतार्थस्मरणं स्मृतिः। अस्थानहास्यम्—अविषये हास्यम्। एवम् अस्थानशब्दः स्मितादिषु योज्यः। स्मितम् ईषद्धासः, अंगविक्षेपणं विरुद्धचेष्टा, पारुष्यं रौक्ष्यम्, कार्श्यं कृशता, अरुणवर्णता ईषद्रक्तवर्णता, जीर्णे बलमिति। जीर्णे आहारे व्याधेर्बलं भवतीत्यर्थः ॥ ८ ॥ पैत्तिकमाह—अजीर्णेति। अजीर्णादिभिश्चितं संचयतां गतम्। उदीर्णं वेगं पित्तं पूर्ववत्। चिंतादिदुष्टहृदयस्य बुद्ध्यादिकमुपहंति। अजीर्णम् अविदग्धं, अशीतैः उष्णैः, उग्रं तीव्रं यदा भवति तदा उन्मादं जनयति। अनात्मकस्य अनात्मवतः ॥ ९ ॥ अमर्षम् असहिष्णुत्वम्, संरंभ आरभटी, हस्तपादादिविक्षेपमित्यन्ये। विनग्नभावः वस्त्रादित्यागः, संतर्जनं परित्रासनं भर्त्सनमपरस्येत्यर्थः। अभिद्रवणं पलायनम्। औष्ण्यं गात्रस्य, 'औष्ठ्यम्' इति पाठांतरे तत्र विकृतोष्ठत्वम्। चोषो[1]

१ 'रोषाः' इत्यत्र 'चोषाः' इति पाठाभिप्रायेण।

संपूरणैर्मन्दविचेष्टितस्य सोष्मा कफो मर्मणि संप्रदुष्टः ॥
बुद्धिं स्मृतिं चाप्युपहत्य चित्त प्रमोहयन्संजनयेद्विकारम् ११॥
वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियताऽतिनिद्रा ॥
छर्दिश्च लाला च बलं च भुक्ते नखादिशौक्ल्यं च कफात्मके स्यात्
यः सन्निपातप्रभवोऽतिघोरः सर्वैः समस्तैः स च हेतुभिः स्यात् ॥
सर्वाणि रूपाणि बिभर्ति ताद्दग्विरुद्धभैषज्यविधिर्विवर्ज्यः ॥१३॥

मधुकोशव्याख्या ।

लाष इति छायायां शीतयोरन्नजलयोरभिलाषः ॥ ९ ॥ १० ॥ कफजमाह–संपूरणै-रित्यादि । मन्दविचेष्टितस्य आयासशून्यस्य । संपूरणैर्भोजनादिभिः कफो दुष्ट इति संबन्धः । सोष्मा सपित्तः । कफेनापि क्रियमाण उन्मादोऽवश्यं सपित्तेन क्रियते व्याधिमहिम्ना, यथा मूर्च्छा । अन्ये त्वाहुः–केवलकफेनापि क्रियते, सोष्मपदेन तु द्वन्द्वजोऽपि भवतीति सूच्यते । अन्ये त्वाहुः–ऊष्मशब्देन शक्तिरुच्यते, तेनोत्कृष्ट-शक्तिकः कफ इत्यर्थः । मर्मणीति हृदये । विकारमुन्मादम् । नारीविविक्तप्रियतेति नारीप्रियता विजनप्रियता च । बलं च भुक्ते इति व्याधेरिति शेषः । आदिशब्देन त्वङ्मूत्रनेत्रादीनां ग्रहणम्॥ ११॥ १२॥ सान्निपातिकमाह–य इत्यादि। सर्वैः समस्तैरिति सर्वैरिति कृत्वा यत् समस्तैरिति करोति तेनैवं बोधयति–वातादयोऽनेकः स्वनिदानैः कुपिता उन्मादं जनयन्ति, न तु प्रत्येकमेकनिदानकुपिताः । विरुद्धभैषज्यविधिर्विवर्ज्य इति अयमभिसन्धिः–त्रिदोषजे प्रत्येकं वातातिप्रत्यनीका क्रिया कार्या सा च परस्पर-

आतङ्कदर्पणव्याख्या ।

दाहविशेषः ॥ प्रच्छायेत्यादि । छायायाः शीतयोश्चान्नजलयोरभिलाषः । पीता च भाः पीत-वर्णता ॥ १० ॥ श्लैष्मिकमाह–संपूरणैरिति । मंदविचेष्टितस्य आयासशून्यस्य संपूरणैरति-भोजनादिभिः कफो दुष्ट इति संबंधः । सोष्मा सपित्तः । कफेनापि क्रियमाण उन्मादोऽवश्यं सपित्तेन क्रियते व्याधिमहिम्ना, यथा मूर्च्छा । अन्ये त्वाहुः–केवलेनापि कफेन स क्रियते । सोष्म-पदेन तु द्वंद्वजोपि भवतीति सूच्यते । अन्ये त्वाहुः–ऊष्मशब्देन शक्तिरुच्यते, तेनोत्कृष्टशक्तिकः कफ इत्यर्थः । मर्मणि हृदये । चित्तं प्रमोहयन् बुद्धिं स्मृतिं चोपहत्य विकारम् उन्मादम् ॥ ११॥ वाक्चेष्टितं मंदम् । अल्पम् अरोचकता, नारीविविक्तप्रियता नारीप्रियता, विजनेप्रियता च, निद्रा-बाहुल्यं तथा छर्दिः, लालास्रावश्च बलञ्च भुंक्ते नाशयति, व्याधिरिति शेषः । नखनेत्रादीनां शौक्ल्यम् ॥ १२ ॥ सान्निपातिकमाह–य इति । सन्निपातग्रहणेनैव सर्वात्मकत्वं लब्धं पुनः सर्वैरिति यद्ग्रहणं कृतं तद्रजस्तमोग्रहणार्थं, तेन रजस्तमोमिलितैरित्यर्थः । तेन वातादयो

चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यै-
र्वित्रासितस्य धनबान्धवसंक्षयाद्वा ॥
गाढं क्षते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतमो मनसो विकारः ॥ १४ ॥
चित्रं ब्रवीति च मनोऽनुगतं विसंज्ञो
गायत्यथो हसति रोदिति चापि मूढः ॥
रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः
श्यावाननो विषकृतेऽथ भवेद्विसंज्ञः ॥ १५ ॥

---

मधुकोशव्याख्या ।

विरोधिनी, त्रिदोषहरं च किंचिदेव द्रव्यमामलक्यादि, तत्तु नात्र यौगिकं, 'न हि सर्वाणि सर्वत्र यौगिकानि भवन्ति' इति वचनात्। ननु, यद्येवं तदा सर्व एव हि त्रिदोषजविकारा असाध्याः भवेयुरित्यत उक्तं—तादृगिति। कोऽप्ययं संप्राप्तिविशेषो रोगविशेषो वा येनायं विरुद्धभैषज्यविधिर्न सर्व इत्यर्थः। अन्ये त्वाहुः—सर्वैः समस्तैर्हेतुभिर्यः कृतः स एवासाध्यः, न त्वल्पहेतुकृत इति ॥ १३ ॥ शोकादिजमाह—चौरैरित्यादि। क्षते चोपहते, तथा रिरंसोः कामुकस्य अप्राप्तया प्रियया क्षते मनसीति संबन्धः ॥ १४ ॥ तस्य लक्षणमाह—चित्रमित्यादि। चित्रं विविधम्। मनोऽनुगतं गोप्यमपि। विसंज्ञो विपरीतज्ञानः, अत एव मूढः ॥ विषजमाह—रक्तेक्षण इत्यादि। हतबलेन्द्रियभा इति हतं बलमिन्द्रियाणि भाश्च यस्य स तथा। भा दीप्तिः ॥१५॥

आतङ्कदर्पणव्याख्या ।

रजस्तमोभिः मनोदोषैर्मिलिताः समस्तैश्च निदानैः कुपिता उन्मादं जनयंति। सर्वाणि रूपाणि सर्वदोषलक्षणानि बिभर्ति। तादृगिति तादृशः। कोप्येष त्रिदोषसंप्राप्तिविशेषो रोगविशेषो वा, येनायं विरुद्धभैषज्यं विधिर्विवर्ज्यः। विरुद्धभैषज्यविधिरिति कोर्थः त्रिदोषजे प्रत्येकं वातादिप्रत्यनीका क्रिया कार्या, सा च परस्परविरोधिनी। त्रिदोषहरं च किंचिदेव द्रव्यमामलकादि, तच्च नात्र यौगिकमित्यर्थः ॥ १३ ॥ मनोदुःखजमाह—चौरैरिति। नरेंद्रपुरुषैः नृपाधिकारिभिः, अरिभिः, अन्यैरिति सिंहगजादिभिः, वित्रासितस्य क्रोधशस्त्रादिभिः, द्रव्यविनाशात्, पुत्रादिमरणाद्वा, तथा रिरंसोः कामुकस्य प्रियाया अप्राप्त्या, गाढं क्षते मनसीति संबंधः ॥ १४ ॥ तस्य रूपमाह—चित्रमित्यादिना चित्रं विविधं मनोनुगतं गोप्यमपि ब्रवीति। विसंज्ञो विपरीतज्ञानः, अत एव मूढः। हतं बलमिंद्रियाणि भाः

अवाञ्ची वाप्युदञ्ची वा क्षीणमांसबलो नरः ॥
जागरूको ह्यसंदेहमुन्मादेन विनश्यति ॥ १६ ॥
अमर्त्यवाग्विक्रमवीर्यचेष्टो ज्ञानादिविज्ञानबलादिभिर्यः ॥
उन्मादकालोऽनियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत्तम् १७॥
संतुष्टः शुचिरतिदिव्यमाल्यगन्धो
निस्तन्द्रीरवितथसंस्कृतप्रभाषी ॥
तेजस्वी स्थिरनयनो वरप्रदाता
ब्रह्मण्यो भवति नरः स देवजुष्टः ॥ १८ ॥

---

मधुकोशव्याख्या ।

असाध्यलक्षणमाह—अवाञ्चीत्यादि । अवाञ्ची अधोमुखः, उदञ्ची ऊर्द्ध्वमुखः, अत एवान्ये 'अवाङ्मुखस्तून्मुखो वा' इति पठन्ति । जागरूकोऽनिद्रः ॥ १६ ॥ भौतिकोन्मादस्य सामान्यलक्षणमाह—अमर्त्यवागित्यादि । अमर्त्या अमनुष्या अनुचिता वा वागादयो यस्य स तथा । विक्रमः पराक्रमः, वीर्यं शक्तिः, चेष्टा शारीरिकी क्रिया । ज्ञानादिविज्ञानबलादिभिरिति उपलक्षणे तृतीया । ज्ञानं तत्त्वज्ञानं, विज्ञानं शिल्पादिज्ञानं; किं वा ज्ञानं शास्त्रम्, विज्ञानं तदर्थनिश्चयः, आदिशब्देन स्मृत्यादीनां ग्रहणं, तेषां बलम् । अनियत इति न वातादिवदाहारजीर्णादिकालवत् कालनिश्चयः । नियत इति पाठे तु वक्ष्यमाणनियततिथ्यादीनां ग्रहणम्, देवग्रहाः पौर्णमास्यामित्यादि । भूतशब्देनात्र सर्व एव वक्ष्यमाणा देवादयोऽभिधीयन्ते ॥ १७॥ देवजुष्टमाह—संतुष्ट इत्यादि । अतिदिव्यमाल्यगन्ध इति अतिमात्रो दिव्यमाल्यस्येव

आतङ्कदर्पणव्याख्या ।

शरीरदीप्तिश्च यस्य स तथा । श्यावाननः कृष्णमुखः विषजनितोन्मादेन ॥ १५ ॥ असाध्यलक्षणमाह—अवांचीति । अवांची अवाङ्मुखः, उदंची ऊर्ध्वमुखः । 'अवाङ्मुखस्तून्मुखो वा' इति केचित्पठंति । क्षीणं मांसं बलमोजो यस्य स तथा । जागरूकः गतनिद्रः॥१६॥भूतजमुन्मादमाह—अमर्त्यवागिति । अमर्त्यानाममनुष्याणामनुचिता वा वागादयो यस्य स तथा । विक्रमः पराक्रमः, वीर्यं शक्तिः, चेष्टा शरीरक्रिया । ज्ञानादिविज्ञानबलादिभिरिति उपलक्षणे तृतीया । ज्ञानं तत्त्वज्ञानं, विज्ञानं शिल्पादिज्ञानं, किंवा ज्ञानं शास्त्रं, विज्ञानं तदर्थनिश्चयः । आदिशब्देन स्मृत्यादीनां ग्रहणं, तेषां बलम् ॥ अनियत इति । कदाचिन्मध्याह्ने कदाचित्प्रदोषे, न तु वातादिजवद् आहारजीर्णादिकालजनियमः, तं भूतोत्थमुन्मादं कथयेत् । 'नियत.' इति पाठे तु वक्ष्यमाणनियततिथ्यादीनां ग्रहणम् । देवग्रहाः 'पौर्णमास्याम्, इत्यादि । भूतशब्देनात्र सर्वे वक्ष्यमाणा देवादयोऽभिधीयंते ॥ १७ ॥ देवजुष्टमाह—संतुष्ट इति । संतुष्टः संतोषवान्,

संस्वेदी द्विजगुरुदेवदोषवक्ता
जिह्माक्षो विगतभयो विमार्गदृष्टिः ॥
संतुष्टो न भवति चान्नपानजातै-
र्दुष्टात्मा भवति स देवशत्रुजुष्टः॥ १९ ॥
हृष्टात्मा पुलिनवनान्तरोपसेवी
स्वाचारः प्रियपरिगीतगन्धमाल्यः
नृत्यन्वै प्रहसति चारु चाल्पशब्दं
गन्धर्वग्रहपरिपीडितो मनुष्यः ॥ २० ॥

---

मधुकोशव्याख्या ।

गन्धो यस्य स तथा । निस्तन्द्रीः अनिद्रः । अवितथं सत्यम् । विदेहेऽपि--"निःस्वप्नं सत्यसंस्कृतभाषिणम्" इति पठितम् । ब्रह्मण्यो ब्राह्मणानुरक्तः । देवजुष्टो देवग्रहपीडितः । देवग्रहणेन गणमातृकादयोऽपि ग्राह्याः । विदेहेऽपि पठ्यते--"क्रोधनः स्तब्धसर्वाङ्गो लालाफेनाविलाननः । निद्रालुः कम्पनो मूको गणमातृभिरर्दितः" इति ॥ ॥ १८ ॥ देवशत्रुजुष्टमाह--संस्वेदीत्यादि ॥ १९ ॥ गन्धर्वाविष्टमाह--हृष्टेत्यादि । पुलिनं तोयोत्थिततटम्, अन्तरं मध्यं, विशेषो वा । स्वाचारोऽनिन्दिताचारः । प्रियेत्यादि, प्रियाणि परि सर्वतः गीतगन्धमाल्यानि यस्य स तथा । नृत्यन्नित्यादि, चारु नृत्यन्, अल्पशब्दं यथा भवति तथा प्रहसतीति

आतङ्कदर्पणव्याख्या ।

शुचिः स्नानाचमनादिना । अतिमात्रं दिव्यमाल्यस्येव गंधो यस्य स तथा । निस्तंद्रीः निद्रारहितः, अवितथं सत्यं संस्कृतं च प्रभाषत इति । विदेहेप्युक्तम्--'निःस्वप्नं सत्यसंस्कृतभाषणम्' इति तेजस्वी तेजोयुक्तः, स्थिरनयनः निमेषरहितः, वरदाता यतः ब्रह्मण्यः ब्राह्मणानुरक्तः । देवभूतजुष्टः देवग्रहपीडितः । देवग्रहणेन गणमातृकादयो ग्राह्याः । यदुक्तं विदेहे--"क्रोधनः स्तब्धसर्वांगो लालाफेनाविलाननः । निद्रालुः कंपनो मूको गणमातृभिरर्दितः ॥" इति ॥ १८ ॥ असुरजुष्टमाह--संस्वेदीति । यः संस्वेदी स्वेदवान् ब्राह्मणगुरुदेवानां निंदकः, जिह्माक्षः कुटिलदृष्टिः, विमार्गदृष्टिः श्रुतिधर्मनिंदकः, अन्नं शालिमांसादि, पानं क्षीरमद्यादि, तैः संतुष्टो न भवति। दुष्टात्मा पापबुद्धिः । देवशत्रुजुष्टो भवति ॥ १९ ॥ गंधर्वजुष्टमाह--हृष्टात्मेति हृष्टात्मा चिंतादिरहितः संतुष्टात्मा । पुलिनं तोयोत्थितं तटं, वनमुद्यानं, तयोरन्तरं मध्यं विशेषात्सेवत इति । स्वाचारः अनिंदिताचारः । प्रियाणि परि समंततोभावेन गीतगन्धमाल्यानि यस्य स तथा ॥ नृत्यन्नित्यादि । चारु यथा भवति तथा नृत्यन् । अल्पशब्दो यथा भवति तथा प्रहसन्निति

ताम्राक्षः प्रियतनुरक्तवस्त्रधारी
गम्भीरो द्रुतगतिरल्पवाक्सहिष्णुः ॥
तेजस्वी वदति च किं ददामि कस्मै
यो यक्षग्रहपरिपीडितो मनुष्यः ॥ २१ ॥
प्रेतानां स दिशति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि चापसव्यवस्त्रः ॥
मांसेप्सुस्तिलगुडपायसाभिकाम
स्तद्भक्तो भवतिपितृग्रहाभिजुष्टः ॥ २२ ॥
यस्तूर्व्यां प्रसरति सर्पवत्कदाचित्
सृक्किण्यौ विलिहति जिह्वया तथैव ॥
क्रोधालुर्गुडमधुदुग्धपायसेप्सु-
र्ज्ञातव्यो भवति भुजङ्गमेन जुष्टः ॥ २३ ॥

मधुकोशव्याख्या ।

योज्यम् ॥ २० ॥ यक्षाविष्टमाह—ताम्राक्ष इत्यादि । प्रियेत्यादि, प्रियं शोभनं, तनु सूक्ष्मं, रक्तं वस्त्रं धर्तुं शीलं यस्य स तथा ॥ २१ ॥ पितृजुष्टमाह—प्रेतानामित्यादि । प्रेतानां पितॄणां, संवन्धविवक्षिततत्वात् न चतुर्थी । दिशति ददाति । संस्तरेषु कुशपत्ररचितास्तरणेपु । अपसव्यवस्त्रः वामोत्तरीयः । मांसेप्सुरित्यादि, एतदभिधानप्रयोजनं यस्मिन् यस्येच्छा भवति तस्य तेनैव बलिर्दातव्यः; एवमन्यत्रापि द्रष्टव्यम् । तद्भक्तः पितृभक्तः ॥ २२ ॥ नागाविष्टमाह—यस्त्वित्यादि । प्रसरति सर्प-

आतङ्कदर्पणव्याख्या ।

योज्यम् ॥ २० ॥ यक्षजुष्टमाह—ताम्राक्ष इति । ताम्राक्षो रक्तनेत्रः । प्रियं शोभनं तनु सूक्ष्मं रक्तवस्त्रं धर्तुं शीलं यस्य स तथा । गंभीरः अनाकुलितांतःकरणः, द्रुतगतिः उत्तालगतिः, अल्पवाक् अल्पभाषी, सहिष्णुः सहनशीलः । कस्मै किं ददामीत्येवं वदति ॥ २१ ॥ पितृग्रहजुष्टमाह—प्रेतानामिति । प्रेतानां पितॄणाम्, संबंधमात्रस्य विवक्षितत्वान्न चतुर्थी । दिशति ददाति, संस्तरेषु कुशपत्रादिरचितसंस्तरणेषु, पिंडान् अन्नमयान्, शांतात्मा शांतस्वभावः, जलमपि चेति न परं दर्भसंस्तरेषु पिंडान् अपसव्यवस्त्रो वामोतरीयो ददाति किंतु जलमपि चेत्यर्थः । 'अपसव्यहस्तः' इति पाठे दक्षिणहस्तः मांसेप्सुरित्यादि । तदभिधानप्रयोजनं यस्य यत्रेच्छा भवति, तस्य तेनैव बलिर्दातव्यः । एवमन्यत्रापि द्रष्टव्यम् । पायसः क्षीरसिद्धास्तंडुलाः, अभिकामोऽभिलाषुकः, तद्भक्तः पितृभक्तः । तद्भक्तः तिलादिभोजनः इति डल्लनः ॥ २२ ॥ सर्पग्रहजुष्टमाह—य इति । उर्व्यां भूमौ सर्पवदुरसा गच्छति, सृक्किण्यौ ओष्ठप्रांतौ जिह्वया विलिहति ।

१ गणकार्यस्यानित्यत्वाच्छन्दोभङ्गाभावः ।

मांसासृग्विविधसुराविकारलिप्सु-
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः ।
क्रोधालुर्विपुलबलो निशाविहारी
शौचद्विड् भवति स राक्षसैर्गृहीतः ॥ २४ ॥
उद्ध्वस्तः कृशपरुषो विरुद्धलापी
दुर्गन्धो भृशमशुचिस्तथाऽतिलोलः
बह्वाशी विजनवनाम्बुरात्रिसेवी
व्याचेष्टन्भ्रमति रुदन् पिशाचजुष्टः ॥ २५ ॥

---

मधुकोशव्याख्या ।

वदिति उरसा गच्छति । सृक्विण्यौ ओष्ठप्रान्तौ। सृक्विणीशब्द ईकारान्तोऽप्यस्तीत्यु-न्नेयम् ॥ २३ ॥ राक्षसाविष्टमाह—मांसेत्यादि । निशाविहारी निशायामेव भ्रमण-शीलः । राक्षसशब्देन ब्रह्मराक्षसादयोऽपि ग्राह्याः । तथा राक्षसानन्तरं विदेहोऽपि पठति—"देवविप्रगुरुद्वेपी वेदवेदाङ्गविच्छुचिः । आत्मपीडाकरो हासी ब्रह्मराक्षससे-वितः" इति ॥ २४ ॥ पिशाचाविष्टमाह—उद्ध्वस्त इत्यादि । उद्ध्वस्त उद्बाहुः; उद्वस्त्र इति पाठान्तरं न्याय्यं, विदेहेऽपि दिगम्बरपाठात् । परुषो रूक्षः । लोलः सर्वस्मि-न्नन्ने पाने च सलोभः । लोलुरिति पाठान्तरे स एवार्थः । व्याचेष्टन्निति विरुद्धमाचे-

आतङ्कदर्पणव्याख्या ।

क्रोधालुः कोपनः, गुडादिप्रियः, भुजंगमग्रहेण जुष्टो ज्ञेयः ॥ २३ ॥ राक्षसजुष्टमाह—मांसेति । विविधसुराविकाराः पैष्टीप्रभृतयः, भृशमतिशयेन लज्जारहितः, अतिनिष्ठुरः दयारहितः, विपुल-बलः अन्नादिनापि प्रभूतबलः, निशाविहारी निशायामेव भ्रमणशीलः, शौचद्विट् अशुचिः । राक्षसग्रहणेन ब्रह्मराक्षसादयोपि गृह्यंते। यतो राक्षसानंतरं विदेहे पठ्यते—"देवविप्रगुरुद्वेपी वेदवेदां-गनिंदकः । आत्मपीडाकरो हासी ब्रह्मराक्षससेवितः "। इति ॥ २४ ॥ पिशाचजुष्टमाह—उद्ध्वस्त इति । उद्ध्वस्त ऊर्ध्वबाहुः । उद्वस्त्रः, इतिपाठे उद्वस्त्रो नग्नः, विदेहेपि दिगम्बर इति पाठात् । कृशो निर्मांसः, परुषो रूक्षः, विरुद्धलापी विरुद्धभाषी । 'अचिरप्रलापीति पाठांतरम्'। दुर्गंधः, अतिलोलः सर्वस्मिन्नन्नपाने सतृष्णः, अतिचपल इत्यन्ये । अतिलोलुः, इति पाठांतरे अशनलोलुप इत्यर्थः । बह्वाशी प्रचुरभोक्ता, विजनं निर्जनस्थानं, हिमांबु शीताम्बु तयोः सेवी, रात्रेः सेवी रात्रिविचारीत्यर्थः । 'विजनवनांतरोपसेवी' इति पाठांतरम् व्याचेष्टन् विविधं चेष्टन्, 'व्याचेष्टम्'

स्थूलाक्षो द्रुतमटनः स फेनलेही
निद्रालुः पतति च कम्पते च यो हि ॥
यश्चाद्रिद्विरदनगादिविच्युतः स्यात्
सोऽसाध्यो भवति तथा त्रयोदशाब्दे ॥ २६ ॥
देवग्रहाः पौर्णमास्यामसुराः सन्ध्ययोरपि ॥
गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रतिपद्यथ ॥ २७ ॥

---

मधुकोशव्याख्या ।

ष्टन् ॥ २५ ॥ त्रिविधं हिंसाक्रीडापूजार्थं ग्रहा गृह्णन्ति । यदुक्तम्-"अशुचिं भिन्नमर्यादं क्षतं वा यदि वाऽक्षतम् । हिंस्युर्हिंसाविहारार्थं सत्कारार्थमथापि च" इति । तत्र हिंसार्थगृहीतोऽसाध्यो भवति, तस्य श्लोकार्धद्वयेन लक्षणमाह-स्थूलाक्ष इत्यादि । स्थूलाक्षो विवृतनेत्र इति जेज्जटः, द्रुतमटनो द्रुतगतिः, अत एव त्वरितगतिरिति जेज्जटेन पठितम् । यश्चेत्यादि । पर्वतादिपतितः सन् यो गृह्यते सोऽप्यसाध्यः नगो वृक्षः । सर्व एवोन्मादी त्रयोदशेऽब्दे देवतादिगृहीतोऽप्यसाध्यः । विदेहेऽधिकमप्यसाध्यलक्षणं पठ्यते-"मेढ्रप्रवृत्तः क्षतजः सास्राक्षः स्नुतनासिकः । रूक्षजिह्वः पूतिगर्भो हतवागतिदुर्बलः" इत्यादि ॥ २६ ॥ देवादीनां ग्रहणकालमाह-देवग्रहाः

आतंकदर्पणव्याख्या ।

इति पाठांतरे विरुद्धचेष्टं यथा भवति तथा भ्रमति ॥ २५ ॥ त्रिविधं हि हिंसाक्रीडापूजार्थं ग्रहा गृह्णंति । यदुक्तम् "अशुचिं भिन्नमर्यादं क्षतं वा यदि वाऽक्षतम् । हिंस्यहिंसाविहारार्थं सत्कारार्थमथापि च ॥" इति अस्यार्थः भिन्नमर्य्यादं श्रुतिस्मृत्युदितं कर्मणोऽन्यत्र कर्मणि प्रवृत्तम् । अभक्ष्यागम्यहिंसादिप्रवृत्तत्वात्, क्षतं सव्रणं मांसशोणितप्रियत्वात् । अक्षतमपि शौचादिरहितम् । अत्र विहारशब्देन रतिरभिधीयते । सत्कारः पूजा । तत्र हिंसार्थं गृहीतो, साध्यो भवति । तस्य लक्षणमाह-स्थूलाक्ष इति । स्थूलाक्षो विवृतनेत्रः, विद्रुतगतिः । यश्चातिकंपते सोऽसाध्यः । यश्चैतेभ्यः पतितः स्यात् । सोप्यसाध्यः । अद्रिः पर्वतः, द्विरदो गजः, नगो वृक्षः । आदिग्रहणात् तटप्रासादादयो गृह्यंते सर्वत्रोन्मादादिति शेषः । एतेभ्यः पतितः स्यादित्यर्थः । त्रयोदशे वर्षे देवादिगृहीतोऽप्यसाध्यः विदेहेऽधिकमप्यस्याध्यलक्षणं पठितं यथा-"मेढ्रप्रवृत्तः क्षतजः सास्राक्षः स्नुतनासिकः । रूक्षजिह्वः पूतिगर्भो हतवागतिदुर्बलः" इत्यादि ॥ २६ ॥ इदानीं देवग्रहाणां ग्रहणकालमाह-देवग्रहा इति । देवग्रहाः पौर्णमास्यां पूर्णिमायां विशंति अनुप्रवेशं कुर्वंति । असुरा असुरग्रहाः संध्ययोरपीत्यपिशब्दः पादपूरणे । अन्ये अपिशब्दात्

---

१ एतच 'कम्पते च योऽति' इति पाठाभिप्रायेण ।

पित्र्याः कृष्णक्षये हिंस्युः पञ्चम्यामपि चोरगाः ॥
रक्षांसि रात्रौ पैशाचाश्चतुर्दश्यां विशन्ति हि ॥ २८ ॥
दर्पणादीन्यथा छाया शीतोष्णं प्राणिनो यथा ॥
स्वमणिं भास्करार्चिश्च यथा देहं च देहधृक् ॥ २९ ॥

मधुकोशव्याख्या।

इत्यादि। पौर्णमास्यां पूर्णिमायाम्। कृष्णक्षयेऽमावास्यायाम्। प्रायोग्रहणादन्यत्रापि। तिथ्यभिधानप्रयोजनं लक्षणार्थं, तत्तिथौ बलिदानार्थं च ॥ २७ ॥ २८ ॥ ननु, यदि ग्रहाविष्टानां पुंसामुन्मादः स्यात्, तदा विशन्तो ग्रहाः कुतो नोपलभ्यन्ते? अत आह—दर्पणादीनित्यादि। अस्मदादिदर्शनायोग्यत्वान्न दृश्यन्त इत्यर्थः। आदिशब्देन प्रकारवाचिनां जलतैलादीनां ग्रहणम्। छाया प्रकृतिः, शीतोष्णमिति कर्तृपदं, प्राणिन इति कर्मपदम्। स्वमणिमिति सूर्यकान्तम्। देहधृक् आत्मा, मन इति जेज्जटः। अनेकदृष्टान्तप्रयोजनम् जेज्जटलिखितं तच्चात्रानुपयुक्तत्वेन विस्तरभयान्न लिखितम्। देवशब्देन देवाद्यनुचरा देवसधर्माणो गृह्यन्ते, देवानां मनुष्यशरीरेणाशुचिना संबन्धाभावात्। यदाह सुश्रुतः—"न ते मनुष्यैः सह संविशन्ति न ते मनुष्यान् क्वचिदाविशन्ति। ये त्वाविशन्तीति वदन्ति मोहात्ते भूतविद्याविषयाद्-

आतङ्कदर्पणव्याख्या।

पौर्णमास्यामपि गृह्णन्तीति वर्णयंति। प्रायशोऽष्टम्यामिति। प्रायःशब्दात्संध्ययोरपि गंधर्वा विशंतीति लभ्यते ॥ २७ ॥ पित्र्याः पितृग्रहाः कृष्णक्षये कृष्णपक्षक्षये, अमावास्यायामित्यर्थः। प्रायोग्रहणादन्यत्रापि। पंचम्यामपीत्यपिशब्दात्कृष्णक्षयेपि उरगा नागग्रहाः। तिथ्यभिधानप्रयोजनं लक्षणार्थं तेषां तिथौ बलिदानार्थम्। तथा चोक्तं—"ग्रहा गृह्णंति ये येषु तेषां तेषु विशेषतः दिनेषु बलिहोमादीन्प्रयुंजीत चिकित्सकः" ॥ २८ ॥ ननु यदि ग्रहाविष्टानां पुंसाम्, उन्मादः स्यात्। तदा विशंतो ग्रहाः कुतो न लक्ष्यंते इत्यत आह—दर्पणादीनिति। अस्मदादिदर्शनायोग्यत्वान्न दृश्यंते। आदिशब्देन प्रकारवाचिना जलतैलादिग्रहणम्। छाया प्रतिकृतिः। शीतोष्णमिति कर्तृपदं, प्राणिन इति कर्मपदम्। स्वमणिमिति। सूर्यकांतम्। देहधृक् आत्मा, मन इति जेज्जटः। अनेकदृष्टांतप्रयोजनं जेज्जटेन निश्चितं, तच्चात्रानुपयोगित्वान्न लिखितं विस्तरभयाच्च। ननु भूतैः शरीरेऽनुप्रवेशः क्रियते न तु शरीरिणि, तत्कथं शरीरिण इत्यभिधानं न विरुध्यते; उच्यते—शरीरिशब्देनात्र शरीरमभिप्रेतं, स्थानिनि स्थानोपचारात्, यथा मंचाः क्रोशंतीति यथा छायाशीतोष्णादयो दर्पणप्राणिप्रभृतीन् विशंतो न दृश्यंते तद्वद् ग्रहा इत्यर्थः। देवादि-

१ कृष्णक्षये प्रायः' इति पाठाभिप्रायेण।

विशन्ति च न दृश्यन्ते ग्रहास्तद्वच्छरीरिणः ॥
प्रविश्याशु शरीरं हि पीडां कुर्वंति दुःसहाम् ॥ ३० ॥
तपांसि तीव्राणि तथैव दानं व्रतानि धर्मो नियमश्च सत्यम् ॥
गुणास्तथाष्टावपि तेषु नित्या व्यस्ताः समस्ताश्च यथाप्रभावम् ३१
न ते मनुष्यैः सह संविशंति न वा मनुष्यान्क्वचिदाविशंति ॥
ये त्वाविशंतीति वदंति मोहात्ते भूतविद्याविषयादपोह्याः ॥ ३२ ॥
तेषां ग्रहाणां परिचारका ये कोटीसहस्रायुतपद्मसंख्याः ॥
असृग्वसामांसभुजः सुभीमा निशाविहाराश्च तथा विशंति ॥३३॥

**इति श्रीमाधवकरविरचिते माधवनिदाने उन्मादनिदानं समाप्तम् ॥ २० ॥**

---

मधुकोशव्याख्या ।

**पेताः॥" इति ॥ २९-३३॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामुन्माद-निदानं समाप्तम् ॥ २० ॥**

आतङ्कदर्पणव्याख्या ।

शब्देनात्र देवस्यानुचरा देवसधर्माणो गृह्यंते, देवादीनां मनुष्यशरीरेणाशुचिना संबंधाभावात् । यदाह सुश्रुतः-"न ते मनुष्यैः सह" इत्यादि ॥ २९॥३० ॥इदानीं ग्रहाणां तीव्रतमानि यमादि-युक्तां प्रभाववत्तां सुश्रुतोक्तेन श्लोकत्रयेण दर्शयितुमाह-तपांसीति । तपस्तापनलक्षणमुपवासादि । व्रतानि शास्त्रोदितविधिना भोजनादिनियमनानि, धर्मः कायवाङ्मनसां सुचरितम् । गुणास्त-थाष्टाविति । अणिमा १, महिमा २, लघिमा ३, प्राकाम्यम् ४, प्राकाश्यम् ५, ईशित्वम् ६, वशित्वम् ७, यत्रकामावसायित्वम् ८, चेति । अन्ये तु "आवेशश्चेतसो ज्ञानमर्थानां शब्दनक्रिया । दृष्टिः श्रोत्रं स्मृतिः कांतिरिष्टतश्चाप्यदर्शनम्" इत्यष्टविधमैश्वर्यमाहुः । तेषु ग्रहेषु एते गुणा नित्याः, न कादाचित्काः व्यस्ता द्वित्रिचत्वार इत्यादि, समस्ताः सर्वे । यो यस्य प्रभाव इति यथा प्रभावं तत्र व्यस्ता गुणा असुरादिग्रहाणाम्, समस्ता देवग्रहाणाम् ॥ ३१ ॥ अथ ते नियमा-दियुक्ताश्चेति तत्कथमशुचिं देहमाविशंति, न कथंचन, अत एवाह-नेति । ते देवादयो मनुष्यैः सह न विशंति न एकीभवंतीत्यर्थ । न वा मनुष्यान् मानुषदेहान् क्वचिदप्यनुप्रविशंतीत्यर्थः । ये पुनर्वैद्या 'आविशंति' इति मोहादज्ञानात्प्रवदंति, ते वैद्या भूतविद्याविषयाद् तज्ज्ञानादपोह्याः अप-सारणीयास्त्याज्या इत्यर्थः ॥३२॥ के तर्हि गृह्णंतीत्याह-तेषामिति । तेषां देवादीनां परिचारकाः प्रेष्याः, कर्मकरा इत्यर्थः । कोट्यः शतलक्षप्रमाणाः, अयुतं दशसहस्रम्, एतेन कोटिभिः शतलक्ष-प्रमाणगुणितं यत् सहस्रं तादृशैः दशभिः सहस्रैरत्रायुतं बोद्धव्यं तेषां पद्मम्, पद्मं चतुर्दशबिंदुकं तदेव संख्या येषां ते तथा । सुभीमाअत्यर्थं भयानकाः । निशाविहारा रात्रौ भ्रमणशीलाः ॥ ३३ ॥ इत्यातंकदर्पणे निदानव्याख्यायामुन्मादनिदानम् ॥ २० ॥

# अथापस्मारनिदानम् २१.

**( चिन्ताशोकादिभिर्दोषाः क्रुद्धा हृत्स्रोतसि स्थिताः ॥**
**कृत्वा स्मृतेरपध्वंसमपस्मारं प्रकुर्वते ॥ १ ॥)**
**तमः प्रवेशः संरम्भो दोषोद्रेकहतस्मृतेः ॥**
**अपस्मार इति ज्ञेयो गदो घोरश्चतुर्विधः ॥ १ ॥**

---

मधुकोशव्याख्या ।

मनोदुष्टिसाधर्म्यात् समानचिकित्स्यत्वादुन्मादानन्तरमपस्मारमाह । तस्य निरुक्तिः सुश्रुतेन कृता—"स्मृतिर्भूतार्थविज्ञानमपस्तत्परिवर्जने । अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरन्तकृत् ॥" इति । स्मृतिश्च ज्ञानोपलक्षणं, तेनानुभवागमोऽपि बोध्यः । तस्य सामान्यलक्षणमाह—तमःप्रवेश इत्यादि । तमःप्रवेशोऽन्धकारप्रवेश

आतङ्कदर्पणव्याख्या ।

मनोदुष्टिसाधर्म्यात् । समानचिकित्स्यत्वादुन्मादानंतरमपस्मारारंभः । तस्य निरुक्तिः सुश्रुतेन कृता—"स्मृतिर्भूतार्थविज्ञानमपस्तत्परिवर्जनम् । अपस्मार इति प्रोक्तस्ततोऽयं व्याधिरंतकृत् ॥" इति स्मरणाभावाज्जलादौ प्रवेशादिभिः । सुश्रुतादपस्मारस्य निदानं लिख्यते । "मिथ्यायोगेंद्रियार्थानां कर्मणामतिसेवनात् । विरुद्धमलिनाहारविहारकुपितैर्मलैः ॥ वेगनिग्रहशीलानामहिताशुचिभोजिनाम् । रजस्तमोभिभूतानां गच्छतां वा रजस्वलाम् ॥ तथा कामभयोद्वेगक्रोधशोकादिभिर्भृशम् । चेतसोभिभवैः पुंसामपस्मारोऽभिजायते ॥" अस्यार्थः-मिथ्यातींद्रियार्थानां कर्मणां चातिसेवनादिति ज्ञेयम् । तत्रेंद्रियाणां श्रवणस्पर्शनदर्शनरसनघ्राणानामर्था विषयाः शब्दस्पर्शरसरूपगंधाः, तेषामतिसेवनात् । तत्र पुरुषेष्टविनाशादिश्रवणं मिथ्यायोगः, पटहादीनामतिशब्दश्रवणमतियोगः, सर्वशोऽश्रवणमयोगः, अभिघातभूताशुचिसंस्पर्शो मिथ्यायोगः, अतिमात्रशीतोष्णादीनां स्पृश्यानां स्नानाभ्यंगादीनां चातिसेवनमतियोगः, तथा सर्वशोऽसेवनमयोगः, तथा सूक्ष्मादिदर्शनं मिथ्यायोगः, रसानामत्यादानमतियोगः, अनादानमयोगः, तथा पूत्याद्यानां मिथ्यायोगः, अतितीक्ष्णादिगंधाघ्राणमतियोगः, सर्वशोऽघ्राणमयोगः, तत्र कायिककर्मणो व्यायामादिनिषिद्धकालादिषु सेवनमतियोगः, सर्वशोऽसेवनमयोगः । तथा वाचिककर्मणः परुषानृतादिवचनं मिथ्यायोगः, अतिवचनादिकश्चातियोगः, सर्वशो मौनमयोगः । तथा मानसकर्मणः शोकादिचिंतनं मिथ्यायोगः, अतिमात्रचिंतनादिकमतियोगः, सर्वशोऽचिंतनमयोगः, मलिनपूतिद्विष्टामेध्यपर्युषिताहारः, विहारोपि मलिनो दृष्टो दृष्टार्थः, स्मृतिषु विज्ञातव्य इति । वाग्भटात्संप्राप्तिर्लिख्यते- "उन्मादवत्प्रकुपितैश्चित्तदेहगतैर्मलैः । हते सत्त्वे हृदि व्याप्ते संज्ञावाहिषु खेषु च ॥ तमोविशन्मूढमतिर्बीभित्साः कुरुते क्रियाः । दंतान् खादन्वमन्फेनं हस्तौ पादौ च विक्षिपन् ॥ पश्यन्नसंति

हृत्कम्पः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता ॥
निद्रानाशश्च तस्मिंश्च भविष्यति भवत्यथ ॥ २ ॥
कम्पते प्रदशेद्दन्तान् फेनोद्वामी श्वसित्यपि ॥
परुषारुणकृष्णानि पश्येद्रूपाणि चानिलात् ॥ ३ ॥
पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शकः ॥
सतृष्णोष्णानलव्याप्तलोकदर्शी च पैत्तिकः ॥ ४ ॥

---

मधुकोशव्याख्या ।

इव ज्ञानाभाव इत्यर्थः । संरम्भो नेत्रविकृतिः हस्तपदादिविक्षेपणं च ॥ १ ॥ पूर्वरूपमाह—हृत्कम्प इत्यादि । शून्यता हृदयस्यैव । ध्यानं जिह्मायनम् । अत्र मूर्च्छा मनोमोहः । प्रमूढता इन्द्रियमोहः ॥ २ ॥ वातिकलक्षणमाह—कम्पत इत्यादि । श्वसिति खरश्वासो भवति । रूपाणीति प्राणिनः, 'नीलो मामनुधावति' इति सुश्रुतवचनात्, एवं पैत्तिके 'पीतो मामनुधावति' इति- एवं श्लैष्मिके 'श्वेतो मामनुधावति' इति ॥ ३ ॥ पैत्तिकलक्षणमाह—पीतेत्यादि । पीतासृग्रूपदर्शक इति पीतलोहितवर्णसमस्तवस्तुदर्शी । सतृष्णेत्यादि । सतृष्णश्चासावुष्णश्चेति सतृष्णोष्णः, सतृष्णो-

आतङ्कदर्पणव्याख्या ।

रूपाणि प्रस्खलन्पतति क्षितौ । विजिह्माक्षिभ्रुवो दोषवेगेऽतीते प्रबुध्यते ॥ कालांतरेण स पुनश्चैवमेव विचेष्टते॥'' इति । तस्य सामान्यलक्षणमाह-तम इति । तमःप्रवेशोऽन्धकारप्रवेश इव ज्ञानाभाव इत्यर्थः । संरंभो नेत्रविकृतिर्हस्तपादादिविक्षेपणं च तमःप्रवेशादिलक्षणो घोरोऽपस्माराख्यो गदो ज्ञेयः । स चतुर्विध इति । वातात्पित्तात्कफात्सन्निपाताच्चतुर्विध इति । विधानं द्वंद्वजप्रतिषेधार्थं, द्वंद्वजाभावस्तु, व्याधिस्वभावात् ॥ १ ॥ प्राग्रूपमाह—हृदिति । तस्मिन्नपस्मारे भविष्यति सति हृत्कंपादीनि रूपाणि भवंति । शून्यता हृदयस्यैव । ध्यानं जिह्मायनम् । अत्र मूर्च्छा मनोमोहः, प्रमूढता इंद्रियमोहः ॥ २ ॥ वातापस्मारलक्षणमाह—कंपते इति । अनिलात् तथा दंतान्दशति, तथा फेनमुद्वमति, तथा श्वसिति खरश्वासो भवति, परुषारुणकृष्णानि रूपाणि पश्येत् । रूपाणीति पुरुषाः प्राणिनः, 'नीलो मामनुधावति' इति सुश्रुतवचनात्; एवं पैत्तिकेऽपि 'पीतो मामनुधावति' इति । श्लैष्मिके—''शुक्लो मामनुधावति'' इति ॥ ३ ॥ पैत्तिकमाह—पीतेति । पैत्तिकः पित्तापस्मारयुक्तः पुरुषः पीतफेनांगवक्त्राक्षो भवति । पीतासृग्रूपदर्शन इति पीतलोहितवर्णसमस्तवस्तुदर्शनः ॥ सतृष्णेत्यादि । सतृष्णश्चासावुष्णश्चेति सतृष्णोष्णः, सतृष्णोष्णश्चा-

शुक्लफेनाङ्गवक्त्राक्षः शीतहृष्टाङ्गजो गुरुः ॥
पश्येच्छुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ॥ ५ ॥
सर्वैरेतैः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः ॥
अपस्मारः स चासाध्यो यः क्षीणस्यानवश्च यः ॥ ६ ॥
प्रस्फुरन्तं सुबहुशः क्षीणं प्रचलितभ्रुवम् ॥
नेत्राभ्यां च विकुर्वाणमपस्मारो विनाशयेत् ॥ ७ ॥
पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः ॥
अपस्माराय कुर्वन्ति वेगं किंचिदथान्तरम् ॥ ८ ॥

मधुकोशव्याख्या ।

ष्णश्चासावनलव्यासलोकदर्शी चेति समासः ॥ ४ ॥ श्लैष्मिकलक्षणमाह—शुक्ले-त्यादि । हृष्टाङ्गजो हृष्टरोमा । चिरादित्यनेनैव वातपित्तयोरचिरेण वेगमोक्ष इति सूचयति ॥ ५ ॥ सान्निपातिकलक्षणमाह- सर्वैरित्यादि । स चेति स सान्निपातिकः। क्षीणस्यैकदोषजोऽप्यसाध्यः । एवमनवश्च बोध्यः । प्रस्फुरन्तं प्रकम्पन्तम् । नेत्राभ्यां च विकुर्वाणमिति नेत्राभ्यां विकृतिमासादयन्तम् ॥६॥७॥ अपस्मारप्रकोपकालमाह—पक्षादित्यादि । पक्षात् पैत्तिकः, द्वादशाहाद्वातिकः, मासात् श्लैष्मिकः । द्वादशाहा-नन्तरं पक्षे वक्तव्ये तत्पूर्वं पक्षाभिधानं, तेनातोऽधिककालेनापि वेगं करोतीत्याहुः । किंचिदथान्तरमिति उक्तकालेभ्योऽर्वागपि दोषतारतम्यादिति । ननु, वेगं कृत्वा अप-

आतङ्कदर्पणव्याख्या ।

सावनलव्यासलोकदर्शी चेति समासः ॥ ४ ॥ श्लैष्मिकमाह—शुक्ल इति । श्लैष्मिको नरः शुक्लफेनांगवक्त्राक्षो भवति ॥ शीतहृष्टांगज इति । शीतः शीतगात्रः, तथा हृष्टांगजो हृष्टरोमा । चिरादित्यनेन वातपित्तयोरचिरेण वेगमोक्ष इति सूचयति । कृष्णपीतशुक्लदर्शनं वातादीनां प्रभावो न तु पैशाचादिकं रूपमभिप्रेतम् ॥ ५ ॥ सन्निपातजमाह—सर्वैरिति । एतैः सर्वैस्त्रिभिः समस्तैश्च लिंगैस्त्रिदोषजः सान्निपातिको ज्ञेयः । स चेति सान्निपातिकः । क्षीणस्यैकदोषजोप्यसाध्यः । एवमनवश्च बोध्यः ॥ ६ ॥ असाध्यमाह—विस्फुरन्तमिति । विस्फुरन्तं[1] प्रकंपंतम् । बहुशोप्यपस्मरंतं तु इति पाठान्तरं बहुशो बहून्वारानपस्मरंतमप-स्मारवेगवंतं, क्षीणं पुरुषमिति शेषः ॥ नेत्राभ्यां च विकुर्वाणमिति । नेत्राभ्यां विकृतिमासा-

१ अयं 'विस्फुरन्तम्' इत्येव पाठमङ्गीकरोति ।

**देवे वर्षत्यपि यथा भूमौ बीजानि कानिचित्॥**
**शरदि प्रतिरोहन्ति तथा व्याधिसमुच्छ्रयाः ॥ ९ ॥**

**इति श्रीमाधवकरविरचिते माधवनिदाने अपस्मारनिदानं समाप्तम् ॥२१॥**

---

मधुकोशव्याख्या ।

**स्मारारम्भको दोषोऽस्त्येव तत् कुतः सर्वदा वेगं न कुरुते द्वादशाहादिष्वेव कुरुत इत्याह–देवे वर्षतीत्यादि । अयमभिसन्धिः–तेजोऽवनीपवनपयःसनाथं विद्यमानमपि बीजं कालविशेष एवांकुरं जनयति, कालविशेषस्यापि सहकारित्वात् । शरदीति तत्कालोचितबीजाभिप्रायेण, तेन कानिचिद्वर्षास्वपि जनयन्तीति । अयं न्यायः चातुर्थिकज्वरादिष्वपि बोध्यः ॥ ८–९ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामपस्मारनिदानं समाप्तम् ॥ २१ ॥**

आतङ्कदर्पणव्याख्या ।

दयनम्[1] । इत्थंभूतं पुरुषमपस्मारवेगाद्युपद्रवसहितमपस्मारो विनाशयेदिति संबंधः ॥ ७ ॥ वातादिजनितापस्मारवेगादिननियमलक्षणमाह–पक्षादिति । मला वातादयः कुपिताः संतः अपस्मारात् पक्षादथ वा द्वादशाहान्मासाद्वा वेगं कुर्वंति । पक्षात्पैत्तिकः, द्वादशाहाद्वातिकः, मासात् श्लैष्मिकः, द्वादशाहादनंतरं पक्षे वक्तव्ये यत्पक्षाभिधानं प्रथमं तेनात्राधिककालेपि वेगं करोतीत्याह.. .. किंचिदंतरमिति । उक्तकालेन्योऽप्यागमि दोषतारतम्यादिति ॥ ८ ॥ ननु, वेगं कृत्वा अपस्मारारम्भको दोषोऽस्त्येव तत्कुतः सर्वदा वेगं न कुरुते द्वादशादिष्वेव कुरुत इत्यत आह–देव इति । अयमभिसंधिः–तेजोऽवनीपवनतोयसनाथं विद्यमानमपि बीजं कालविशेष एवांकुरं जनयति । कालविशेषस्यापि सहकारित्वात् । तथाऽऽगतस्याप्यपस्मारस्य पुनरुद्भवः संभवति ॥ शरदीति । तत्कालनित्यताऽनियतेति, तेन कानिचिद्वर्षादिष्वपि जनयंतीति । अयं न्यायश्चातुर्थिकज्वरादिष्वपि बोध्य इति । अथ डल्हणाभिप्रायः–यथा वर्षत्यपि देवे भूमावुप्तानि कानिचिद्बीजानि शरदि प्रविरोहंति, तथा सर्वरोगबीजानां वातादीनां कदाचित् कस्यचिदपस्मारादिव्याधिविशेषस्य निदानादिसंगमेपि संदूष्यादिसमुदायेनैव समुद्भवो भवतीत्यर्थः ॥ अन्ये त्वन्यथा व्याख्यानयंति । ननु संचयादिक्रमेणोपयोगो दोषाणां तदातनः कथमल्पेनैव कालेन तद्विकारोद्गमः स्यादित्यत्राह–देवे वर्षतीत्यादि । अवर्षत्यपि देवे यथा शरत्काले भूमौ स्तिमितत्वात्कानिचिद्बीजानि प्ररोहंत्येव, तथा अल्पेनापि कालेन शरीरस्था दोषाः किंचिदुपचिता विकारं जनयंतीति ॥ ९ ॥ इत्यातंकदर्पणे निदानव्याख्यायामपस्मारनिदानम् ॥ २१ ॥

---

[1] 'दयान्तरम्' इति पा०

# अथ वातव्याधिनिदानम् २२.

**रूक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः ॥**
**विषमादुपचाराच्च दोषासृक्स्रवणादपि ॥ १ ॥**

---

मधुकोशव्याख्या ।

अपस्मारवद्वातविकाराणामप्याक्षेपकादीनां वेगकर्तृत्वादपस्मारानन्तरं वातव्याध्यारम्भः । ननु. वातव्याधिरिति कोऽर्थः ? किं वात एव व्याधिर्वातव्याधिः, उत वातेन जनितो व्याधिर्वातव्याधिः ? आद्ये स्वस्थेष्वपि प्रसङ्गः, द्वितीये ज्वरादिषु । उच्यते. व्याधिपदसामानाधिकरण्याद्विकृतो दुःखकारी वातो वातव्याधिः । उक्तं हि सुश्रुते—"पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च" इति । वातजनितोऽसाधारणव्याधिर्वातव्याधिरिति विशेषणीयम्, तेनोभयत्राप्रसङ्गः । यच्चोक्तं—"कफपित्तान्वितो वायुर्वायुरेव च केवलः । कुर्यादाक्षेपकम्—" इत्यादि, तत्रारम्भको वायुरेव, पित्तकफौ त्वनुबन्धाविति न विरोधः स्यात् । चरके हि द्विविधा व्याधय उक्ताः सामान्यजा नानात्मजाश्चेति, तत्र सामान्यजा ये वातादिभिः समस्तैर्व्यस्तैर्वा जन्यन्ते, यथा—ज्वरादयः; नानात्मजा ये नियतैकदोषजन्याः, यथा—आक्षेपकादयो ये वातेनैव जन्यन्ते. न स्वतन्त्रेण पित्तेन कफेन वा; तथा ओषचोषादयः पित्तेनैव, न वातेन कफेन च, तथा तृप्त्यादयः कफेनैव, न वातेन, न पित्तेन; एवं व्यवस्थिते वातव्या-

आतङ्कदर्पणव्याख्या ।

अपस्मारवद्वातविकाराणामाक्षेपकादीनां वेगकर्तृत्वादपस्मारानंतरं वातव्याध्यारम्भः । ननु कोयं वातव्याधिः, किं वात एव व्याधिः, उत वातजनितो व्याधिः । आद्ये स्वस्थेपि प्रसंगः, द्वितीये ज्वरादिषु । उच्यते । चरके द्विविधा व्याधय उक्ताः—सामान्यजा नानात्मजाश्चेति, तत्र सामान्यजा वातादिभिः समस्तैर्व्यस्तैर्वा जन्यंते यथा ज्वरादयः, नानात्मजा ये नियतैकदोषजन्याः । यथाऽऽक्षेपकादयो वातेनैव जन्यंते, न स्वतंत्रेण पित्तेन कफेन वा तथा ओषचोषादयः पित्तेनैव न वातेन न वा कफेन, तथा तृष्णादयो नैव कफेन, नैव च वातेन । एवं व्यवस्थित वातव्याधिवत्पित्तकफव्याधी कस्मान्नोक्तौ । उच्यते—वायोरतिबलत्वेनाशुकारित्वेन च गरीयस्त्वात् तद्विकाराणां दुःसाध्यत्वादाशुकारित्वाद्विशिष्टचिकित्स्यत्वाद् वातव्याध्यभिधानं, न तु पित्तकफव्याध्यभिधानम् । अत एव चरकसुश्रुतादिष्वपि वातरोगाध्याय एव निर्दिष्टो, न तु पित्तकफरोगाध्यायः । तथा च सुश्रुते दोषाणां वात एव रोगसमूहः । अन्यच्च "पित्तं पंगुः कफः पंगुः पंगवो मलधातवः । वायुना यत्र नीयंते तत्र वर्षंति मेघवत् ॥" इति । अतो वातव्याध्यभिधानं तस्य संप्राप्तिपूर्वकं निदानमाह—रूक्षेति । अल्पं स्तोकं लघ्वन्नं पुरातनं षष्टिकादि, व्यवायं मैथुनं,

लंघनप्लवनात्यध्वव्यायामादिविचेष्टितैः ॥
धातूनांसंक्षयाच्चिन्ताशोकरोगातिकर्षणात् ॥ २ ॥
वेगसंधारणादामादभिघातादभोजनात् ॥
मर्माबाधाद्गजोष्ट्राश्वशीघ्रयानापतंसनात् ॥ ३ ॥

---

मधुकोशव्याख्या ।

धिवत् पित्तकफव्याधी कस्मान्नोक्तौ ? उच्यते, वायोरतिवलत्वेन आशुकारित्वेन च गरीयस्त्वात्तद्विकाराणां दुःसाध्यत्वादाश्वेवात्ययकरत्वाद्विशिष्टचिकित्स्यत्वाद्वातव्याध्यभिधानं न तु कफपित्तव्याध्यभिधानम् । अतएव सुश्रुतादिष्वपि वातरोगाध्याय एव निर्दिष्टो, न तु पित्तकफरोगाध्यायः । चन्द्रिकाकारस्त्वाह—पित्तकफयोरुपरसादियोगात् दूष्यविशेषयोगाद्वा हरिद्राचूर्णसंयोगवदत्यन्तविसदृशा रसादिमन्तो विकाराः पृथङ्नामानो जायन्ते, वायोस्तु रसाद्यभावात् दूष्यनिरपेक्षत्वादाक्षेपकादयो वातादनतिभिन्नरूपा नानात्मजास्तेन वातविकाराः पृथगुच्यन्ते,नतु पित्तकफविकारा इति । एतत्तु, वकुलकरप्रभृतयो नानुमन्यन्ते, चरकविरोधात् । चरके हि पित्तकफयोरपि नानात्मजा उक्ताः, यथा—"अशीतिर्वातविकाराः, चत्वारिंशत् पित्तविकाराः, विंशतिः श्लेष्मविकाराः" इति । सुश्रुतेन तु शल्याध्यायिना पित्तकफनानात्मजा न दर्शिताः, पराधिकारेषु न विस्तरोक्तिरित्यभिप्रायेणैवेति । लंघनमुत्पतनम्, उपवासस्यानशनशब्देन वमनादेश्च दोषस्रवणशब्देन वक्ष्यमाणत्वात् । प्लवनं बाहुभ्यां जलप्रतरणम् । आमादिति आमरसात्, तस्य कारणत्वं मार्गावरणद्वारेण न तु स्वरूपेण; आयासादिति पाठान्तरमयुक्तं, तस्य व्यायामशब्देनोक्तत्वात् । मर्माबाधात् मर्माभिघातात् । अपतंसनं गजादिभ्यः शीघ्रयानेन पतनम्, उच्छ्वासरोधो वा; धातुकर्षणमिति स्वर-

आतङ्कदर्पणव्याख्या ।

प्रजागरणं रात्रिजागरणम् ॥ विषमादुपचारादिति । अप्राप्ते क्रियाकाले क्रियाक्रमः । दोषासृक्स्रावणादपि, वमनविरेकाभ्यां दोषस्यातिरेकात् रुधिरस्रवणात् ॥ १ ॥ लंघनमुत्पतनं, प्लवनं तरणं, बाहुभ्यां विचेष्टितम् । रोगादिकर्षणम्, अत्रादिना अध्वज्वरादिष्वतिलंघनम् ॥ २ ॥ आमात् आमरसात्, तस्य कारणत्वं मार्गावरणद्वारेण, न तु स्वरूपेण । अभिघातो लगुडादिभिः । अभोजनादुपवासात् । मर्माबाधात् मर्माभिघातात् अपतंसनं पतनं गजादिभ्यः, तथा शीघ्रयाना-

---

१ 'रोगादिकर्षणात्' इ० पा० ।

देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली ॥
करोति विविधान् व्याधीन्सर्वाङ्गैकाङ्गसंश्रयान् ॥ ४ ॥
अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम् ॥
आत्मरूपं तु यद्व्यक्तमपायो लघुता पुनः ॥ ५ ॥
संकोचः पर्वणां स्तम्भो भङ्गोऽस्थ्नां पर्वणामपि ॥
रोमहर्षः प्रलापश्च पाणिपृष्ठशिरोग्रहः ॥ ६ ॥
खाञ्ज्यपांगुल्यकुब्जत्वं शोषोऽङ्गानामनिद्रता ॥
गर्भशुक्ररजोनाशः स्पन्दनं गात्रसुप्तता ॥ ७ ॥

मधुकोशव्याख्या ।

नादः ॥ २-४ ॥ पूर्वरूपादिकमाह—अव्यक्तमित्यादि । अव्यक्तमिति वक्ष्यमाणानां विकाराणां रूपमेवाव्यक्तं पूर्वरूपं, नतु ज्वरादिवत् विशिष्टमन्यत् । तदेव व्यक्तमात्मरूपं दोषादिभेदेन सम्यक् प्रकाशितं स्वलक्षणमित्यर्थः । अपाय इति वायोश्चपलत्वेन स्तम्भसंकोचकम्पादीनां कदाचिदभावात्, यदुक्तं—"गते वेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपकादिषु" इति । लघुतेति शरीरस्य, वायुना सर्वधातुशोषणात् । अथवा अपायो लघुता इति वातविकाराणामपायोऽभावः, किं तदित्याह—लघुतेति । वातलिङ्गानां लघुताऽल्पत्वेनावस्थानं, न तु निःशेषनिवृत्तिः । यथा बहिरायामनिवृत्तावपि न रूक्षत्वादिनिवृत्तिरित्याहुः ॥ ५ ॥ करोति विविधान् व्याधीनिति यदुक्तं तद्व्याकरोति—संकोच इत्यादि । स्तम्भः पर्वणामेव । पांगुल्यं पंगुता । शोषोऽङ्गानामिति बाहुमुखादीनाम् । अनिद्रतेत्यनेन अल्पनिद्रताऽपि बोध्येत्याहुः । गर्भशुक्ररजोनाश इति गर्भाशयादे-

आतङ्कदर्पणव्याख्या ।

दिभिः ॥ ३ ॥ एतैः कारणैः कुपितो बली वायू रिक्तानि स्रोतांसि पूरयित्वा सर्वांगैकांगजान् व्याधीन् करोति ॥ ४ ॥ अस्य पूर्वरूपमाह—अव्यक्तमिति । वक्ष्यमाणवातादिविकाराणां रूपमेवाव्यक्तं पूर्वरूपं, न तु ज्वरादिवद्विशिष्टमन्यत्। आत्मरूपमित्यादि, तदेव व्यक्तमात्मरूपं दोषादिभेदेन सम्यक्प्रकाशितं, तस्य लक्षणमित्यर्थः ॥ अपाय इति । वायोश्चलत्वात् स्तम्भसंकोचकंपादीनां कदाचिदभावात् । यदुक्तं—"गते वेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपकादिषु" इति । लघुतेति । शरीरस्य वायुना सर्वधातुशोषात् । अथवा—अपायो लघुतेति वातविकारणामपायोऽभावः। किं तदित्याह—लघुतेति । वातलिंगानां लघुता अत्यल्पत्वेनावस्थानं न तु तद्विशेषेण निवृत्तिः । यथा बहिरामयनिवृत्तावपि न रूक्षत्वादिनिवृत्तिरित्याहुः—'करोति विविधान् व्याधीन्' इति ॥ ५ ॥ यदुक्तं तद् व्याकरोति—संकोच इति । संकोचः, पर्वणां स्तंभश्च पर्वणामेव, अस्थ्नां भंगः स्फुटनं, तथा पर्वणां पाण्यादीनां ग्रहः स्तंभ इव ॥ ६ ॥ खाञ्ज्यं खंजता, पांगुल्यं पंगुता । शोषोङ्गा-

शिरोनासाक्षिजत्रूण ग्रीवायाश्चापि हुण्डनम् ॥
भेदस्तोदोऽर्तिराक्षेपो मुहुश्चायास एव च ॥ ८ ॥
एवंविधानि रूपाणि करोति कुपितोऽनिलः ॥
हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत् ॥ ९ ॥
तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः ॥
ब्रध्नहृद्रोगगुल्मार्शः पार्श्वशूलं च मारुते ॥ १० ॥

---

मधुकोशव्याख्या ।

वाताधिष्ठितत्वेन गर्भाद्यग्रहणमिति जेज्जटः । गर्भादिविकृतिरप्यत्र द्रष्टव्या । स्पन्दनं कम्पनम् । हुण्डनं शिरःप्रभृतीनामन्तःप्रवेशो वक्रत्वं वा, धातूनामनेकार्थत्वात् । अन्ये त्वाहुः—शिरोहुण्डनं केशभूमिस्फुटनं शंखललाटभेदश्च, नासाहुण्डनं घ्राणनाशः, अक्षिहुण्डनमक्षिव्युदासः, जत्रुहुण्डनं वक्षउपरोधः, ग्रीवाहुण्डनं ग्रीवास्तम्भः । भेद इति ओष्ठदन्तश्रोण्यादीनाम् । तोदः शूलम् । अर्तिः पीडा, सा च पादपार्श्वश्रोत्राक्षिवक्षसामिति जेज्जटः । आक्षेपः आक्षेपकादिषु वक्ष्यमाणः । आयासः श्रमः ॥ ६-८ ॥ हेत्वित्यादि । हेतुविशेषः आवरणादिः, यथा—श्लेष्मावृतो मन्यास्तम्भकारी; स्थानविशेषः कोष्ठादिः, यथा—पक्वाशयस्थोऽन्त्रकूजनमित्यादि ॥ ९ ॥ एतदेव विवृणोति ( कोष्ठाश्रितवातलक्षणमाह )—तत्रेत्यादि । कोष्ठशब्देनाविशेषात् सर्वे आमाशयादयो गृह्यन्ते, आमाशयादिगं तु पृथगपिवक्ष्यति । निग्रहोऽप्रवृत्तिः ।

आतङ्कदर्पणव्याख्या ।

नामिति । बाहुमुखादीनाम् । अनिद्रतेत्यनेनाल्पनिद्रतेति बोद्धव्यम् ॥ गर्भशुक्ररजोनाश इति । गर्भाशयस्य वाताधिष्ठितत्वाद्गर्भादिविकृतिरप्यत्र द्रष्टव्या । स्पंदनं कंपनम् ॥७॥ हुंडनं शिरःप्रभृतीनाम् अंतःप्रवेशः, वक्रत्वं वा धातूनामनेकार्थत्वात्।अन्ये त्वाहुः—शिरोहुंडनं केशभूमिस्फुटनं, शंखललाटभेदश्च, नासाहुंडनं घ्राणनाशः, अक्षिहुंडनं चक्षुर्विकृतिः,जत्रुहुंडनं वक्षउपरोधः,ग्रीवाहुंडनं ग्रीवास्तंभः ॥ भेद इति । ओष्ठदंतश्रोण्यादीनां भेदः । तोदः शूलं पीडाभेदः । अर्तिः पीडाभेदः, "अर्तिः पीडा सा च पादपार्श्वश्रोत्राक्षिवक्षसाम्" इति जेज्जटः । आक्षेपो वक्ष्यमाणः, आयासः श्रमः ॥८॥ हेत्वित्यादि । हेतुविशेषश्चावरणादिः, यथा श्लेष्मावृतो मन्यास्तंभकारी, स्थानविशेषः । कोष्ठादिः, यथा—पक्वाशयस्थोन्त्रकूजमित्यादि ॥ ९ ॥ स्थानविशेषमाह—तत्रेति । तत्र तेषु स्थानेषु मध्ये कोष्ठाश्रिते वाते दुष्टे सति मूत्रवर्चसोर्निग्रहस्तथा ब्रध्नादयो रोगा भवंति । कोष्ठशब्देनात्र आमाशयादयः सर्वे गृह्यंते । यदुक्तम्—"स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुप्फुसश्च कोष्ठमित्यभिधीयते ॥" । आमाशयादिगतं तु पृथगपि वक्ष्यति । निग्रहोऽप्रवृत्तिः । ब्रध्नः

सर्वाङ्गकुपिते वाते गात्रस्फुरणभञ्जनम् ॥
वेदनाभिः परीताश्च स्फुटन्तीवास्य सन्धयः ॥ ११ ॥
ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः ॥
जंघोरुत्रिकपात्पृष्ठरोगशोषौ गुदे स्थिते ॥ १२ ॥
रुक् पार्श्वोदरहृन्नाभेस्तृष्णोद्गारविसूचिकाः ॥
कासः कण्ठास्यशोषश्च श्वासश्चामाशयस्थिते ॥ १३ ॥
पक्वाशयस्थोऽन्त्रकूजं शूलटोपौ करोति च ॥
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥ १४ ॥
श्रोत्रादिष्विन्द्रियवधं कुर्याद्दुष्टसमीरणः ॥
त्वग्रूक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते ॥
आतन्यते सरागा च पर्वरुक् त्वग्गतेऽनिले ॥ १५ ॥

मधुकोशव्याख्या।

ब्रध्नः कोशवङ्क्षणसन्धिः ॥१०॥११॥ गुदस्थितवातलक्षणमाह—ग्रह इत्यादि। अश्मा इति अश्मरी। रोगो रुजा। गुद इत्युत्तरगुदे पक्वाशय इत्यर्थः, न तु गुदमात्रे; तथा सति अश्मरीकर्तृत्वानुपपत्तेः॥१२॥१३॥पक्वाशयस्थवातलक्षणमाह—पक्वाशयस्थ इत्यादि। ननु, पक्वाशयस्थ इति पुनरुक्तः, गुदे स्थित इत्यनेनैवोक्तत्वात्। उच्यते, गुदे स्थित इति दृढबलस्य लक्षणं, पक्वाशयस्थ इति सुश्रुतस्य; उभयलिङ्गोपन्यासस्तु सकललिङ्गप्रदर्शनार्थमित्यविरोधः ॥ १४ ॥ त्वग्गतवातलक्षणमाह—त्वगित्यादि।

आतङ्कदर्पणव्याख्या।

कोशवंक्षणसन्धिः ॥ १० ॥ सर्वांगकुपितलक्षणमाह—सर्वांगेति। भंजनं भंगस्त्वक्पीडेत्यर्थः। संधयो वेदनया परीता युताः स्फुटंतीव ॥ ११ ॥ पक्वाशयकुपितमाह—ग्रहः अप्रवृत्तिः, गुद इत्युत्तरगुदे पक्वाशये न तु पायौ, अन्यथा अश्मर्यनुत्पत्तेः। न चैवं पक्वाशयस्थ (१४) इत्यादिना पौनरुक्त्यं दोषाय, तस्य संग्रहेऽत्र लिखितत्वात्। गुदे स्थित इति दृढबलस्य लक्षणम्। 'पक्वाशयस्थ' इति सुश्रुतस्य उभयलिंगोपन्यासस्तु सकललिंगदर्शनार्थमित्यविरोधः। पात् चरणम्, पृष्ठरोगाः स्तंभादयः, रोगो रुजाविशेषः, तथा शोषश्च ॥ १२ ॥ आमाशयकुपितमाह—रुगिति। सुगमम् ॥ १३ ॥ सुश्रुतोक्तं पक्वाशयगतवातलक्षणमाह—अन्त्रकूजम् अंत्राव्यक्तशब्दं करोति। आटोपो रुजापूर्वकक्षोभः। त्रिकस्फिजोरुपरि संधिगतवातलक्षणः ॥ १४ ॥ श्रोत्रादिगतलक्षणमाह—श्रोत्रादिषु गते श्रोत्रत्वक्चक्षुर्घ्राणरसनेन्द्रियाणां विनाशः स्वस्व-

रुजस्तीव्राः ससन्तापा वैवर्ण्यं कृशताऽरुचिः ॥
गात्रे चारूंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥ १६ ॥
गुर्वङ्गं तुद्यतेऽत्यर्थं दण्डमुष्टिहतं यथा ॥
सरुक् श्रमितयत्यर्थं मांसमेदोगतेऽनिले ॥ १७ ॥
भेदोऽस्थिपर्वणां सन्धिशूलं मांसबलक्षयः ॥
अस्वप्नः सन्तता रुक् च मज्जास्थिकुपितेऽनिले ॥ १८ ॥

---

मधुकोशव्याख्या ।

आतन्यते विस्तार्यत इव । त्वग्गते इति उपधातुरूपां त्वचं प्राप्ते । चन्द्रिकाकारस्तु त्वक्शब्देन रसमाह, तेन रसगत इत्यर्थः । हृदयस्थस्य रसस्यामाशयसामीप्यादामाशयगतवातलक्षणेनैव तदधिगतेः रसगतस्यानभिधानमिति कार्तिकः ॥१५॥असृग्गतवातलक्षणमाह—रुजा इत्यादि । अरूंपि व्रणाः । भुक्तस्य स्तम्भः भुक्तवतो गात्रस्तम्भः, सन्तर्पणेन रक्तस्य वृद्धेः । अन्ये त्वसृग्गतवातलक्षणं न पठन्ति, वातरक्तेन सहाभेदात्; तन्न, अत्र दुष्टो वायुः रक्तेनावृतः कुप्यति, वातरक्ते तु स्वकारणादुभावपि हस्त्यादिगमनकुपितौ विशिष्टसंप्राप्त्या हस्तपादगतावेव वातरक्ताख्यं विकारं जनयत इति ॥१६॥ मांसमेदोगतवातलक्षणमाह—गुर्वित्यादि । श्रमितं श्रान्तं निस्सहमित्यर्थः। मांसमेदोगतवायोरेकलिङ्गत्वम्, अदूरान्तरेण प्रत्यासत्तेराश्रयप्रभावात् । एवं मज्जा-

आतङ्कदर्पणव्याख्या ।

विपर्येप्यग्रहणशक्तिता । सांप्रतं धातुकुपितस्य लक्षणम् । तत्र रसकुपितमाह—त्वगिति । त्वक् त्वचा रौक्ष्यादियुक्ता तुद्यते आतन्यते विस्तार्य्यते इव, त्वक्शब्देनात्र रसोभिप्रेतः, तदाधारत्वात् पर्वरुक् सर्वत्वग्व्यथा ॥ १५ ॥ रक्तकुपितमाह—रुज इति । वैवर्ण्यं विच्छायता, गात्रे अरूंषि व्रणाः, शरीरे भुक्तस्य स्तंभ इति । भुक्तवतो गात्रस्य स्तंभः संतर्पणेन रक्तवृद्धेः । अन्ये त्वसृग्वातलक्षणं न पठंति, वातरक्तेन सहाभेदात् । तन्न । अत्र तु दुष्टो वायुः रक्तेनावृतः कुप्यति । वातरक्ते तु स्वकारणाद् उभावपि हस्त्यादिगमनकुपितौ विशिष्टसंप्राप्त्याह—हस्तपादगतावेव वातरक्ताख्यं विकारं जनयत इति ॥ १६ ॥ मांसमेदोगतमाह—गुर्विति। अनिले मांसमेदोगते सति अंगं शरीरं गुरुभागिकं स्तब्धं निश्चलं दंडमुष्टिभ्यां हतमिव सरुक् पीडायुक्तं, श्रमितं श्रांतं निःसहमित्यर्थः मांसमेदोगतवातयोरेकलिंगत्वमदूरांतरेण प्रत्यासत्तेराश्रयभेदात् । एवं मज्जास्थिकुपिते वाच्यम् । सुश्रुते चात्र विशेष उक्तः—"कर्कशास्तोदवहुलान्ग्रंथीन्मांसं समाश्रितः । वायुर्मेदोगतः कुर्याद् ग्रंथीन्मन्दरुजो व्रणान् ॥" तथा मज्जास्थिकुपितस्यापि वातस्य विशेष उक्तः—"अस्थिशोषं च भेदं च कुर्याच्छूलं च तत्स्थितः । तथा मज्जगते रुक् च न कदाचित्प्रशाम्यति ॥" इति॥१७॥भेद इति ।

क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा ॥
विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः ॥ १९ ॥
कुर्याच्छिरागतः शूलं शिराकुञ्चनपूरणम् ॥
स बाह्याभ्यन्तरायामं खल्लीं कौब्ज्यमथापि वा ॥ २० ॥
सर्वाङ्गैकाङ्गरोगांश्च कुर्यात्स्नायुगतोऽनिलः ॥
हन्ति सन्धिगतः सन्धीञ्छूलाटोपौ करोति च ॥ २१ ॥
प्राणे पित्तावृते छर्दिर्दाहश्चैवोपजायते ॥
दौर्बल्यं सदनं तन्द्रा वैरस्यं च कफावृते ॥ २२ ॥

---

मधुकोशव्याख्या।

स्थिकुपिते वाच्यम् ॥ १७ ॥ १८ ॥ शुक्रस्थवातलक्षणमाह--क्षिप्रमित्यादि। गर्भमिति दुष्टशुक्रारब्धत्वाद्गर्भस्य। विकृतिमिति गर्भस्य शुक्रस्य च ॥ १९ ॥ शिरागतवातलक्षणमाह--कुर्यादित्यादि। आकुञ्चनं संकोचः। पूरणं स्थूलत्वं, यदुक्तमन्यत्र--"सुप्तास्तन्व्यो बृहत्यो वा शिरा वाते शिरागते" इति। खल्लीं वक्ष्यमाणाम् ॥ २० ॥ सन्धिगतवातलक्षणमाह--हन्तीत्यादि। हन्ति सन्धिगतः सन्धीनिति सन्धिविश्लेषस्तम्भादिकं करोति ॥ २१ ॥ पित्तकफावृतानां प्राणादीनामर्धार्धश्लोकेन लिङ्गान्याह-

आतङ्कदर्पणव्याख्या।

सुगमम् ॥ १८ ॥ क्षिप्रमिति। अनिलः शुक्रस्थः कुपितः सन् शुक्रं क्षिप्रं शीघ्रं मुंचति बध्नाति च, तथा गर्भमपि क्षिप्रं मुंचति बध्नाति च। दुष्टशुक्रारब्धित्वाद्गर्भस्य तथा विकृतिमिति गर्भस्य शुक्रस्य च जनयेत् ॥ १९ ॥ कुर्यादिति। शिरागतो वायुः शूलं शिराकुंचनपूरणं च, तथा बाह्याभ्यंतरमायासं तथा खल्लीं वक्ष्यमाणां कौब्जां च कुर्यात्। कुंचनं संकोचः। पूरणं स्थूलत्वम्, यदुक्तमन्यत्र--"सुप्तास्तन्व्यो बृहत्यो वा शिरावाते शिरागते" इति ॥ २० ॥ स्नायुगतोऽनिलः सर्वांगरोगानेकांगरोगांश्च कुर्यात्। सुश्रुतेनाप्युक्तम्--"स्नायुप्राप्तः स्तंभकंपौ शूलमाक्षेपणं तथा"। वाग्भटेनोक्तम्--"तस्य स्नाय्वास्थितः कुर्याद्गृध्रस्यायामकुब्जताम्॥" इति। संधिगतो वायुः सधीन् हंति, तथा शूलशोफौ करोति, संधिष्विति शेषः। हंति संधीनिति संधिश्लेषस्तंभादिकं करोति। एतेनाकुंचनप्रसारणयोरभाव उक्तः ॥ २१ ॥ [अत्र पंचविधस्य वायोर्नामान्याह--प्राणेति। स्थानस्थाः। स्थानशब्देनात्र साम्यमुच्यते। प्रापयंति धारयंति] पित्तकफावृतानां प्राणादीनामर्द्धार्द्धश्लोकेन लिंगान्याह--प्राण इति। सदनमंगग्लानिः ॥ २२ ॥

---

१ एतन्मूलं लेखप्रमादाद्भ्रष्टमिति भाति।

उदाने पित्तयुक्ते तु दाहो मूर्च्छा भ्रमः क्लमः ॥
अस्वेदहर्षौ मन्दोऽग्निः शीतता च कफावृते ॥ २३ ॥
स्वेददाहौष्ण्यमूर्च्छाः स्युः समाने पित्तसंवृते ॥
कफेन सक्ते विण्मूत्रे गात्रहर्षश्च जायते ॥ २४ ॥
अपाने पित्तयुक्ते तु दाहौष्ण्यं रक्तमूत्रता ॥
अधःकाये गुरुत्वं च शीतता च कफावृते ॥ २५ ॥
व्याने पित्तावृते दाहो गात्रविक्षेपणं क्लमः ॥
स्तम्भनो दण्डकश्चापि शूलशोथौ कफावृते ॥ २६ ॥

---

मधुकोशव्याख्या ।

प्राण इत्यादि । गात्रहर्षो रोमाञ्चः । दण्डको दण्डवत् स्तम्भः । परस्परं च प्राणादीनामावरणानि विंशतिर्भवन्ति । यदुक्तं चरके—"मारुतानां हि पञ्चानामन्योन्यावरणं शृणु" इत्यादि । एषां च लक्षणं चरक एव द्रष्टव्यम् । विदेहे चैक एव वायुः स्थानकर्मभेदात् पञ्चधैवोच्यते इत्याहुः, संसर्गिद्रव्यत्वेनैकाश्रये जलवत्पृथगवस्थानानुपपत्तेः । ईशानोऽप्याह—यथैको देवदत्तः स्थानभेदाद् गृहस्थो वानप्रस्थः, कर्मभेदात्

आतङ्कदर्पणव्याख्या ।

क्लमोऽनायसंश्रयः, हर्षो रोमहर्षः, शीतस्तंभौ इति पाठांतरम्, कफेन संयुते ॥ २३ ॥ समाने विण्मूत्रयोः संगः, तथा गात्रहर्षो रोमांचः, "कफाधिकं च विण्मूत्रं रोमहर्षः कफावृते" इति पाठांतरम् कफाधिकं श्लेष्मबहुलम् । विष्टामूत्रमिति ॥ २४ ॥ अपान इति सुगमम् ॥ २५ ॥ व्यान इति । दंडको दंडवत्स्तंभः परस्परं च प्राणादीनामावरणानि विंशतिर्भवंति । यदुक्तं चरके—"मारुतानां च पंचानामन्योन्यावरणं शृणु" इत्यादि । एषां च लक्षणं चरक एव द्रष्टव्यम् । तथा वाग्भटोक्तं च द्वाविंशतिविधं वायोरावरणं लिख्यते—"वायोरावरणं काले बहुभेदं प्रचक्षते । लिंगपित्तावृते दाहस्तृष्णा शूलं भ्रमः क्लमः ॥ कट्वूष्णैश्चाम्ललवणैर्विदाहः शीतकामिता । शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम् ॥ लवनायासरूक्षोष्णकामिता च कफावृते । रक्तावृते सदाहार्तिस्त्वग्मांसान्तरयोर्भृशम् ॥ भवेत्सरागः श्वयथुर्जायंते मंडलानि च । मांसेन कलितः शोफो विवर्णः पिडिकास्तथा ॥ हर्षः पिपीलिकानां च संचार इव जायते । चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्वरोचकः ॥ आमवात इति ज्ञेयः स कृच्छ्रो मेदसावृते । स्पर्शमस्थ्यावृतेत्युष्णं पीडनं चाभिनंदति । सूच्येव तुद्यतेऽत्यर्थमंगं सीदति शूल्यते ॥ मज्जावृते विनयनं जृंभणं परिवेष्टनम् । शूलं च पीड्यमानेन पाणिभ्यां लभते सुखम् ॥ शुक्रावृतेऽतिवेगो वा निष्फलत्वञ्च शुक्रगे । भुक्ते कुक्षौ

**यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः ॥**
**तदाक्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः ॥ २७ ॥**

---

मधुकोशव्याख्या ।

कुम्भकारो मालाकार इत्युच्यते, तथा वायुरपीति ॥ २२–२६ ॥ आक्षेपकस्य सामान्यलक्षणमाह–यदा त्वित्यादि । सर्वा इति ऊर्ध्वाधस्तिर्यग्गाः । आक्षिपति देहं हस्त्यारूढपुरुषस्येव गात्रं चालयति । मुहुश्चर इति हेतुगर्भविशेषणम् । बहिश्चर इति पाठान्तरे कोष्ठाद्बहिः शाखागतश्चरन्नाक्षेपकं करोतीत्यर्थः । चन्द्रिकाकारस्तु एतन्नानुमन्यते, स्थानगाम्भीर्यादाक्षेपकस्य तदारम्भकवायोर्बहिश्चरत्वायुक्तत्वात् ॥ २७ ॥

आतङ्कदर्पणव्याख्या ।

रुजा जीर्णे शाम्यत्यन्नावृतेऽनिले । मूत्राप्रवृत्तिराध्मानं बस्तौ मूत्रावृते भवेत् । विडावृते विबंधोधः स्वस्थाने परिकृंतति । व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः । शकृत्पीडितमन्नेन दुःखं शुष्कं चिरात्सृजेत् ॥ सर्वधात्वावृते वायौ श्रोणिवंक्षणपृष्ठरुक् । विलोमो मारुतोऽस्वस्थं हृदयं पीडयतीति च ॥ भ्रमो मूर्छा रुजा दाहः पित्तेन प्राण आवृते । विदग्धेऽन्ने च वमनमुदानेऽपि भ्रमादयः ॥ दाहोऽन्तररुजा भ्रंशो दाहो व्यानेन सर्वगः । क्लमोऽङ्गचेष्टासंगश्च संतापः सहवेदनः ॥ समान ऊष्मोपहतिरतिस्वेदोऽरतिः सतृट् । दाहश्च स्यादपाने तु मले हारिद्रवर्णता ॥ रजोतिवृत्तिस्तापश्च योनिमेहनपायुषु । श्लेष्मणा त्वावृते प्राणे सादस्तंद्रारुचिर्वमिः ॥ ष्ठीवनं क्षवथूद्गारनिश्वासोच्छ्वाससंग्रहः । उदाने गुरुगात्रत्वमरुचिर्वा स्वरग्रहः । बलवर्णप्रणाशश्च व्याने पर्वास्थिवाग्ग्रहः ॥ गुरुतांगेषु सर्वेषु स्खलितं च गतौ भृशम् । समानेऽतिहिमांगत्वमस्वेदो मंदवह्निता ॥ अपाने सकफं मूत्रशकृतः स्यात्प्रवर्तनम् ॥ इति द्वाविंशतिविधं वायोरावरणं विदुः । प्राणादयस्तथान्योन्यमावृण्वंति यथाक्रमम् । सर्वं द्वाविंशतिविधं विद्यादावरणं च तत् । निःश्वासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः । हृद्रोगो मुखशोषश्च प्राणेनोदान आवृते ॥ उदानेनावृते प्राणे वर्णौजोबलसंक्षयः । दिशानया च विभजेत्सर्वमावरणं भिषक् ॥" इति । देहे च एक एव वायुः पृथक्कायस्थाननामकर्मभेदात्पंचधा इत्याहुः । संसर्गिद्रव्यत्वेनैकाश्रये जलवत् पृथगवस्थानानुपपत्तेः । ईशानोप्याह–"यथैवैको देवदत्तः स्थानभेदाद्गृहस्थो वानप्रस्थः, कर्मभेदान्मालाकारः कुंभकार इत्युच्यते, तथा वायुरपीति ॥ २६ ॥ आक्षेपकस्य सामान्यलक्षणमाह–यदेति ॥ सर्वा इति । ऊर्ध्वाधस्तिर्यग्धमनीः मुहुर्मुहुर्देहमाक्षिपति । हस्त्यारूढस्येव गात्रं चालयति मुहुश्चर इति हेतुगर्भविशेषणं वारंवार संचरणशीलः । बहिश्चरः इति पाठांतरे तत्र कोष्ठाद्बहिः शाखागतश्चरन् आक्षेपं करोतीत्यर्थः ॥ २७

मुहुर्मुहुश्चाक्षेपणादाक्षेपक इति स्मृतः ॥
क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रपद्यते ॥ २८ ॥
पीडयन् हृदयं गत्वा शिरः शंखौ च पीडयन् ॥
धनुर्वन्नमयेद्गात्राण्याक्षिपेन्मोहयेत्तदा ॥ २९ ॥
स कृच्छ्रादुच्छ्वसेच्चापि स्तब्धाक्षोऽथ निमीलकः ॥
कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः ॥ ३० ॥
दृष्टिं संस्तभ्य संज्ञां च हत्वा कण्ठेन कूजति ॥
हृदि मुक्ते नरः स्वास्थ्यं याति मोहं वृते पुनः ॥ ३१ ॥

---

मधुकोशव्याख्या ।

अस्यैवावस्थाविशेषावपतन्त्रकापतानकावाह--क्रुद्ध इत्यारभ्य एके तदपतानकमित्यन्तेन । स्वैः कोपनैरित्यनेन रूक्षादिकुपितः स्वतन्त्रो न त्वावरणकुपित इतीशानः । निमीलको निमीलिताक्षःस्तब्धाक्षो वा भवतीत्यर्थः । आक्षेपकश्चतुर्विधो भवति, दण्डापतानकोऽभ्यन्तरायामो बहिरायामोऽभिवातजश्चेति । दृढबलेन यद्यपि आक्षेपकात् पूर्वमन्तरायामबहिरायामौ पठितौ, तथाप्याक्षेपकविशेषावेतौ मन्तव्यौ सुश्रुतदर्शनात्॥२८-३१॥

आतङ्कदर्पणव्याख्या ।

आक्षेपणात् चालनात् । अस्यैवावस्थाविशेषावपतंत्रकापतानावाह-क्रुद्धः, इत्यारभ्य 'एके तमपतानकम्' इत्यंतेन । स्वैः कोपनैरित्यनेन रूक्षादिकुपितः स्वतंत्रः,न त्वावरणकुपित इतीशानजः कपोत इव कूजेत्, निःसंज्ञः संज्ञारहितः, सोऽपतंत्रकः स्थानात् पक्वाशयात् क्रुद्धे शिरसि उद्दिश्य पीडयन् रुजन् हृदयं ततस्तस्माच्छिरःशंखौ च पीडयेत् । आक्षिपेत् चालयेत्, मोहयेदिन्द्रियाणि, कष्टेनोच्छ्वासं मुंचति निमीलको निमीलिताक्षः स्तब्धाक्षो वा भवतीत्यर्थः । दृष्टिं रूपग्रहणयोग्यां संस्तभ्याच्छाद्य संज्ञां ज्ञानविषयिणीं बुद्धिं विनाश्य वायुना मुक्ते हृदि सुखं लभते । आवृतमेव मूर्च्छान्वितमेवापतंत्रमेके त्वपतानमाहुः । तंत्रांतरे अपतंत्रकलक्षणं पठितम् । तद्यथा-"क्रुद्धः स्वैः कोपनैर्वायुरपानो नाभिसंश्रयः । संदूष्य हृदयस्थं च मनो व्याकुलयेत्ततः ॥ पीडयन् हृदयं प्राप्य शिरःशंखौ च पीडयेत् । आक्षिप्य चाखिलं देहं मोहयेच्च पुनःपुनः ॥ स कृच्छ्रादुच्छ्वसेच्चापि स्वेदशैत्ययुतो बहिः । स निद्रां लभते नीतः प्राप्य चाशु प्रबुध्यते ॥ त्रसते कंपते भूयो निःसंज्ञः सोपतंत्रकः । प्रलापौ वक्त्रकटुता भ्रमो मूर्च्छा रुचिस्तृषा ॥ तस्मिन्पित्तान्विते स्वेदः पीताभः शीतकामिता" इति । "शिरोंगगौरवं ग्लानिः शीतद्विट् मंदवेदनः । कफान्विते च सदनं शैत्यं च हृदयग्रहः ॥ वातोल्वणेंगस्फुरणं शिरोमन्याकटिव्यथा । धैर्यादिविप्लवो

वायुना दारुणं प्राहुरेके तदपतानकम् ॥
कफान्वितो भृशं वायुस्तास्वेव यदि तिष्ठति ॥ ३२ ॥
दण्डवत्स्तम्भयेद्देहं स तु दण्डापतानकः ॥
धनुस्तुल्यं नमेद्यस्तु स धनुस्तम्भसंज्ञकः ॥ ३३ ॥
अंगुलीगुल्फजठरहृद्वक्षोगलसंश्रितः ॥
स्नायुप्रतानमनिलो यदाक्षिपति वेगवान् ॥ ३४ ॥

---

मधुकोशव्याख्या ।

एषां लक्षणमाह--कफान्वित इत्यादि । भृशं कफान्वित इत्यनेन पित्तमपि न वार्यत इत्याहुः । चरके त्वस्यासाध्यत्वं केवलवातजत्वेन द्रष्टव्यम् । यदाह--"पाणिपादशिरःपृष्ठश्रोणीः स्तभ्नाति मारुतः । दण्डवत् स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः" इति । तास्विति सर्वधमनीषु ॥ ३२ ॥ अन्तरायामबहिरायामयोः साधारणं रूपमाह--"धनुस्तुल्यं नमेद्यस्तु स धनुस्तम्भसंज्ञकः" इति । ॥ ३३ ॥ विशेषलक्षणमाह--अंगुलीत्यादि । वक्षो बाहुद्वयान्तरम् । हृदयं तदभ्यन्तरं द्व्यंगुलम् । स्नायुप्रतानं लतावदनेकप्ररोहं, स्नायुजालम् । स्नायुरित्युपलक्षणं, तेन शिराकण्डरयोरपिग्रहणम् । यदुक्तं तन्त्रान्तरे--"महाहेतुर्बली वायुः शिराः सस्नायुकण्डराः । मन्यापृष्ठाश्रिता बाह्याः संशोष्यायामयेद्बहिः" इत्यादि । अभ्यन्तरायामं क्रोडे नतं, बाह्यायामं पृष्ठे नतम् । अन्तरायामबहिरायामाभ्यां तन्त्रान्तरोक्तकुब्ज-

आतङ्कदर्पणव्याख्या ।

दैन्यं विषयेष्वनवस्थितः" ॥ २८--३१ ॥ तेषां लक्षणमाह--कफान्वित इति । तास्विति । सर्वधमनीषु भृशं कफान्वित इत्यनेन पित्तमपि न वार्य्यत इत्याहुः । चरके त्वस्याऽसाध्यत्वं केवलवातजत्वेन द्रष्टव्यम् । यदाह--"पाणिपादशिरःपृष्ठश्रोणीः स्तभ्नाति मारुतः । दंडवत्स्तब्धगात्रस्य दंडकः सोनुपक्रमः ॥" इति ॥ ३२ ॥ स्तंभसामान्यः धनुस्तंभः, अस्यैव भेदः धनुस्तुल्यमिति । धनुस्तुल्यं क्रोडेन नम्रस्तिष्ठति दंडापतानकस्तु शुष्ककाष्ठदंडवत् ॥ ३३ ॥ अंतरायामबहिरायामयोः साधारणरूपमाह--अंगुलीति । बली वायुः कुपितः गुल्फौ चरणघुटिके, वक्षो बाहुद्वयांतरम्--हृदयं तदभ्यंतरं द्व्यंगुलम्, स्नायुप्रतानं लतावदनेकप्ररोहं स्नायुजालम्, स्नाय्वित्युपलक्षणम्, तेन शिराकण्डरयोरपि ग्रहणम् । यदुक्तं तंत्रांतरे--"महाहेतुर्बली वायुः शिराः सस्नायुकण्डराः । मन्यापृष्ठाश्रिता बाह्याः संशोष्यायामयेद्बहिः ॥" इत्यादि । ततः स्नायुप्रतानमनुरिव

विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन् ॥
अभ्यन्तरं धनुरिव यदा नमति मानवम् ॥ ३५ ॥
तदाऽस्याभ्यन्तरायामं कुरुते मारुतो बली ॥
बाह्यस्नायुप्रतानस्थो बाह्यायामं करोति च ॥ ३६ ॥
तमसाध्यं बुधाः प्राहुर्वक्षःकट्यूरुभञ्जनम् ॥
( हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् ॥
क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत् ॥ )
कफपित्तान्वितो वायुर्वायुरेव च केवलः ॥ ३७ ॥
कुर्यादाक्षेपकं त्वन्यं चतुर्थमभिघातजम् ॥
गर्भपातनिमित्तश्च शोणितातिस्रवाच्च यः ॥ ३८ ॥

---

मधुकोशव्याख्या ।

स्यावरोधः। यदुक्तं-"हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक्। क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशेत्" इति ॥ ३४-३६ ॥ उक्तानामाक्षेपकप्रकाराणां कफपित्तानुबन्धमाह-कफपित्तान्वित इत्यादि। एतच्च दण्डापतानकलक्षणमेव जेज्जटेन व्याख्यातम्। पित्तकफानुबन्धश्चात्र शैत्यशोथगुरुत्वानीत्यादिनोक्तलक्षण एव बोध्यः। चतुर्थमभिघातजमिति दण्डापतानकादित्रितयापेक्ष्य चतुर्थत्वम्, अभिघातजं दण्डाद्यभिघातकुपितवातजम्; अस्य च लक्षणं-"यदा तु धमनीः सर्वाः" इत्यादिनोक्तसामान्यलक्षणं द्रष्टव्यम् ॥ ३७ ॥ असाध्यत्वमाह-गर्भपातेत्यादि। गदाधरस्त्वाह-कफपित्तान्वित इत्यादिना निमित्तभेदेनाक्षेपकाश्चतुर्धा इति। तद्यथा-एकः कफान्वि-

आतङ्कदर्पणव्याख्या ।

नामयेत्। तदायामं क्रोडनं विष्टब्धाक्षहनुकंठकपोलसंधिः। बहिरायामलक्षणमाह-बाह्येति। पूर्ववद्बाह्यप्रतानं धनुर्वदानमेत्। बाह्यायामं पृष्ठे नतम्। वक्षःकट्यूरुभंगत्वात् तमसाध्यम् ॥ ३४-३६ ॥ उक्तानामाक्षेपप्रकाराणां कफपित्तानुबंधमाह-कफेति। कफपित्तानुबंधश्चात्र शैत्यशोषगुरुत्वानीत्यादिनोक्तलक्षणे बोद्धव्यः, केवलः स्वतंत्र आक्षेपं करोति। अन्यं चतुर्थमभिघातजम्, दंडाभिघातकुपितवातजातस्य तु लक्षणम्। 'यदा तु धमनीः सर्वाः' इत्यादिना ज्ञेयम्। असाध्यमाह-गर्भेति। अत्रापतानकमुपलक्षणम्, तेन चतुष्टयमपि गृह्यते। 'कफपित्तान्वितः' इत्यादि। निमित्तभेदेन चतुर्थ आक्षेपक इति गदाधरः। तद्यथा-एकः कफान्वितेन वातेन, द्वितीयः पित्ता-

---

१ क्वचिदयमप्युपलभ्यते ।

अभिघातनिमित्तश्च न सिध्यत्यपतानकः ॥
गृहीत्वार्धं तनोर्वायुः शिराः स्नायूर्विशोष्य च ॥ ३९ ॥
पक्षमन्यतरं हन्ति सन्धिबन्धान्विमोक्षयन् ॥
कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः ॥ ४० ॥
एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ॥
सर्वाङ्गरोगस्तद्वच्च सर्वकायाश्रितेऽनिले ॥ ४१ ॥
दाहसन्तापमूर्च्छाः स्युर्वायौ पित्तसमन्विते ॥
शैत्यशोथगुरुत्वानि तस्मिन्नेव कफान्विते ॥ ४२ ॥

---

मधुकोशव्याख्या ।

तेन वातेन, द्वितीयः पित्तान्वितेन, तृतीयः कफेन, चतुर्थोऽभिघातेनेति । अत्र पक्षे गर्भपातशोणितातिस्रावजौ केवलवातेन ग्राह्यौ; एतेषां च मुहुर्मुहुराक्षेपणं बोध्यम्, आक्षेपकविशेषत्वात् ॥ ३८ ॥ पक्षवधमाह—गृहीत्वेत्यादि । अर्धमिति अर्धमर्यादया, अर्धनारीश्वरवत् । पक्षं बाहुकक्षपार्श्वादिभागम्, अन्यतरमिति वामं दक्षिणं वा। सन्धिबन्धान् कफसहितस्नायुभिर्वृतान् मोक्षयन्निति गदाधरः; अत एव शिराः स्नायूर्विशोष्येत्युक्तम् । अर्धकाय इत्युक्तेऽपि कृत्स्नग्रहणं युगपत् सर्वार्धाङ्गव्याप्त्यर्थम् । अकर्मण्य ईषच्चेष्टाक्षमः । विचेतनोऽचेतनः, ईषत्स्पर्शादिज्ञानवानित्यर्थः । तद्वच्चेत्यनेन शिराः स्नायूर्विशोष्य चेत्यादिसंप्राप्तिलक्षणं चातिदिशति ॥ ३९–४१ ॥ तस्यैव साध्यासाध्यज्ञानार्थमाह—दाहेत्यादि । एतच्च लक्षणमन्यत्रापि वातरोगे द्रष्टव्यम्।

आतङ्कदर्पणव्याख्या ।

न्वितेन, तृतीयः केवलेन, चतुर्थोऽभिघातजेनेति । अत्र गर्भपातशोणितातिस्रावजौ केवलवातेन ग्राह्याविति । एषां च मुहुर्मुहुराक्षेपणं ज्ञेयम्, आक्षेपकविशेषात् ॥ ३७॥३८ ॥ पक्षवधमाह—गृहीत्वेति । वायुस्तनोः शरीरस्यार्द्धं गृहीत्वा शिराः स्नायूर्विशोष्य शोषयित्वा अन्यतरं पक्षं हंति निरीहं करोति ॥ अर्द्धमिति । अर्द्धमर्यादया अर्द्धनारीश्वरवत् । पक्षमिति शरीरार्द्धं बाहुकक्षपार्श्वादिभागम्, अन्यतरमिति वामं दक्षिणं चेति । किं कुर्वन्, संधीनां वंधान् सन्धिबन्धान् कफसहितस्नायुभिर्वृतान् विमोक्षयन्निति गदाधरः । अतः शिराः स्नायू विशोष्येत्युक्तम् । तस्य तथाविधस्य पुंसः कृत्स्नो निःशेष अर्द्धकायोऽकर्मण्यो विचेतनः स्यात् । अर्द्धकाय इत्युक्तेपि कृत्स्नग्रहणं युगपत्सर्वांगव्याप्त्यर्थम् । अकर्मण्य ईषच्चेष्टाक्षयः। विचेतनोऽल्पचेतनः ईषत्स्पर्शादिज्ञानवानित्यर्थः ॥३९॥४०॥ केचिदाचार्यास्तं व्याधिमेकांगरोगं विदुः, अन्ये पक्षवधं विदुः । सर्वकायाश्रिते समस्तदेहगते वाते तद्वत्सर्वांगरोगमित्याहुः। तद्वच्चेत्यनेन 'शिराः स्नायूर्विशोष्य च'इत्यादिसंप्राप्ति लक्षणं चातिदिशति ॥ ४१ ॥ तस्यैव साध्यासाध्यत्वज्ञानार्थमाह—दाहेति । एवं लक्षणमन्यत्रापि वातरोगे

शुद्धवातहतं पक्षं कृच्छ्रसाध्यतमं विदुः ॥
साध्यमन्येन संयुक्तमसाध्यं क्षयहेतुकम् ॥ ४३ ॥
उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि वा ॥
हसतो जृम्भतो वापि भाराद्विषमशायिनः ॥ ४४ ॥
शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः ॥
अर्दयत्यनिलो वक्रमर्दितं जनयत्यतः ॥
वक्रीभवति वक्रार्धं ग्रीवां व्याप्य प्रवर्तते ॥ ४५ ॥

मधुकोशव्याख्या ।

अत एव सामान्येन वायाविति कृतवान् । शुद्धः केवलः । अन्येनेति कफेन पित्तेन वा । क्षयहेतुकमिति धातुक्षयकुपितशुद्धवातजमिति ॥ ४२॥४३ ॥ अर्दितमाह--उच्चैरित्यादि । अर्दयति पीडयति । अपवर्तते वक्रीभवति । चलति कम्पते । वाक्सङ्गोऽनिर्गमो वचनस्य । आदिशब्देन भ्रूगण्डादीनां ग्रहणम् । वैकृतं वेदनास्फुरणवक्रत्वादिकम् । ग्रीवेत्यादि । यस्मिन् पार्श्वेऽर्दितं तस्मिन् ग्रीवादीनां वेदनेति योज्यम् । तन्त्रान्तरे तु मुखार्धवच्छरीरार्धव्यापकोऽप्यर्दितः पठितः । यदाह दृढबलः--"अर्धे तस्मिन्मुखार्धे वा केवले स्यात्तदर्दितम्" इति । ननु, यद्येवं तदा अर्दितार्धाङ्गवातयोः को भेदः ? उच्यते, वेगित्वेनार्दिते कदाचिद्वेदना भवति, अर्धाङ्गवाते तु सर्वदैवेति भेदः । अथवा यथोक्तः सर्वलिङ्गोऽर्दितस्तद्विपरीतस्त्वर्धांगवात इत्याहुः । सुश्रुतेन तु मुखमात्र एवार्दितः पठितः, अर्धशरीरस्यार्धांगवातेन लब्धत्वात् । स एवात्र माधवेन

आतङ्कदर्पणव्याख्या ।

द्रष्टव्यम् ॥ ४२ ॥ पक्षाघातस्य साध्यासाध्यत्वं दर्शयन्नाह—शुद्धेति । शुद्धः केवलः, कृच्छ्रसाध्यं कष्टसाध्यम्, अन्येन संसृष्टं कफेन पित्तेन वा युक्तं क्षयहेतुकं धातुक्षयजमित्यर्थः ॥ ४३ ॥ अर्दितस्य निदानपूर्वकं लक्षणमाह—उच्चैरिति । उच्चैर्भाषणं, कठिनानि पूगफलादीनि खादतः, विषमाच्छयनात् ग्रीवादिवैपरीत्यशयनात्, अर्दयति पीडयति, ग्रीवां व्याप्य प्रवर्त्तते, वक्रीभवति, चलति कंपते, वाक्संगो वचनस्यानिर्गमः । आदिशब्देन गंडनासादीनां ग्रहणं, वैकृतं वेदनास्फुरणवक्रत्वादिकम् । ग्रीवेत्यादि । यस्मिन् पार्श्वेऽर्दितं तस्मिन्पार्श्वे ग्रीवादीनां वेदनेति योज्यम् । चिबुकं मुखकुहरस्यार्द्धभागः । तंत्रांतरे—मुखार्द्धवच्छरीरार्द्धव्यापकोऽप्यर्दितः पठितः ।

---

1 एतच्च साध्यमन्येन संसृष्टम्' इ० पा० ।

शिरश्चलति वाक्सङ्गो नेत्रादीनां च वैकृतम् ॥
ग्रीवाचिबुकदन्तानां तस्मिन्पार्श्वे च वेदना ॥ ४६ ॥
( यस्याग्रजो रोमहर्षो वेपथुर्नेत्रमाविलम् ॥
वायुरूर्ध्वं त्वचि स्वापस्तोदो मन्याहनुग्रहः ॥ )
तमर्दितमिति प्राहुर्व्याधिं व्याधिविचक्षणाः ॥
क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिणः ॥ ४७ ॥
न सिध्यत्यर्दितं गाढं त्रिवर्षं वेपनस्य च ॥
गते वेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपकादिषु ॥ ४८ ॥
जिह्वानिर्लेखनाच्छुष्कभक्षणादभिघाततः ॥
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनू ॥ ४९ ॥

---

मधुकोशव्याख्या ।

लिखितः ॥ ४४-४६ ॥ तस्यासाध्यलक्षणमाह-क्षीणस्येत्यादि । अनिमिषाक्षस्य निमेषासमर्थचक्षुषः । प्रसक्ताव्यक्तभाषिण इति प्रसक्तं प्रकर्षेण सक्तम् अप्रवृत्तम्, अव्यक्तं पीडितवर्णपदं भाषितुं शीलं यस्य स तथा । अन्ये तु प्रसक्तं निरन्तरमाहुः, तन्न; चरके-"दीना जिह्वा समुत्क्षिप्ता काले सज्जति चास्य वाक्" इति वचनात् । त्रिवर्षमिति अतीतवर्षत्रयम्; अथवा त्रयाणां मुखनासाचक्षुषां वर्षं स्रवणं यत्र तत्तथेत्याहुः ॥ ४७ ॥ आक्षेपकादीनामर्दितान्तानां वेगित्वमाह-गत इत्यादि । स्वास्थ्यं पीडालाघवं, भारापगमे सुखित्वव्यपदेशवत् ॥ ४८ ॥ हनुग्रहमाह-जिह्वेत्यादि । हनुमूलस्थः कपोलमूलस्थः । हनू स्रंसयित्वाऽधः कृत्वा । विवृतास्यत्वं संवृतास्यत्वं च,

आतङ्कदर्पणव्याख्या ।

यदाह दृढबलः-"अर्द्धे तस्मिन्मुखार्द्धे वा केवले स्यात्तदर्दितम्" इति ॥ ४४-४६ ॥ तस्यासाध्यलक्षणमाह-क्षीणस्येति । निमेषासमर्थचक्षुषः ॥ प्रसक्तेति । प्रकर्षेण सक्तं लग्नम् अप्रवृत्तम्, कंठताल्वादिवर्णोच्चारणस्थानेषु, अव्यक्तमस्फुटं पीडितवर्णपदं भाषितुं शीलं यस्य स तथा । अन्ये तु प्रसक्तं निरंतरमाहुः तन्न, चरके-"काले सज्जति चास्य वाक्" इति वचनात् ॥ ४७ ॥ त्रिवर्षमिति । अतीतवर्षत्रयम्, अथवा त्रयाणां मुखनासिकाचक्षुषां वर्षं स्रवणं यत्र तत्तथेत्याहुः । वेपनस्य कंपनशीलस्य । आक्षेपकादीनामर्दितानां तावद्वेगित्वमाह-गत इति । भारापगमे सुखित्वव्यपदेशवत् ॥ ४८ ॥ हनुस्तंभमाह-जिह्वेति । जिह्वानिर्लेखनात् जिह्वाघर्षणात् दंतकाष्ठादिना, शुष्केत्यादि, चणकादीनाम् । अभिघाततः ताडनात् । हनुमूलस्थः कपोलमूलस्थः । हनुं स्रंसयित्वा अधः कृत्वा, विवृतास्यत्वं प्रसारितवदनत्वम्, संवृतास्यत्वं संकुचितमुखताम् । अत्र

करोति विवृतास्यत्वमथवा संवृतास्यताम् ॥
हनुग्रहः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम् ॥ ५० ॥
दिवास्वप्नासनस्थानविवृतोर्ध्वनिरीक्षणैः ॥
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणावृतः ॥ ५१ ॥
वाग्वाहिनीशिरासंस्थो जिह्वां स्तम्भयतेऽनिलः ॥
जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ॥ ५२ ॥
रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः शिराः ॥
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिराग्रहः ॥५३॥

---

मधुकोशव्याख्या।

वायोरनियतकारित्वात् ॥ ४९॥५० ॥ मन्यास्तम्भमाह--दिवास्वप्नेत्यादि । स एवेति वातः ॥ ५१ ॥ जिह्वास्तम्भमाह—वाग्वाहिनीत्यादि । वाग्वाहिनी या शिरा तत्र संस्थ इति योज्यम्, समस्तपक्षे "पुंवत् कर्मधारयजातीयदेशीयेषु" इत्यनेन पुंवद्भावप्राप्तेः । अन्नपानवाक्येष्वनीशतेति अन्नपानाभ्यवहारवचनेषु असामर्थ्यम् ॥ ५२ ॥ शिराग्रहमाह—रक्तमित्यादि । मूर्धधरा इति ग्रीवागतास्तासां रूक्षत्वं वेदनावत्त्वं कृष्णत्वं कुर्यात् । सोऽसाध्य इति स्वरूपेणैव, काकणकुष्ठवत् । शिरोग्रह इति पाठान्तरेऽपि शिरोधारकशिरादुष्ट्या शिरोवेदनाकारित्वात् शिरोग्रह इति व्यपदेशः, लक्षणं

आतङ्कदर्पणव्याख्या ।

संवृतिर्विवृतिर्वायोरनियतकारित्वात् । स एव वातः कुपित इत्यर्थः । तेन कृच्छ्राच्चर्वणं भाषणं च स्यात् ॥ ४९ ॥ ५० ॥ मन्यास्तंभमाह—दिवेति । आसनमुपवेशः, स्थानमूर्ध्वभवनम्, विवृतोर्ध्वनिरीक्षणं वक्रमार्गावलोकनम् । स एवेति वातो दिवास्वप्नादिभिः कुपितः सन्, श्लेष्मणावृतो मन्यास्तंभं प्रकुरुते, मन्यास्तंभं केचिदपतानकपूर्वरूपं मन्यंते ॥ ५१ ॥ जिह्वास्तंभमाह—वागिति । वाग्वाहिनी या शिरा तत्र संस्थ इति योज्यम् ॥ अन्नपानवाक्येष्वनीशतेति । अन्नपानाभ्यवहारवचनेष्वसामर्थ्यम् ॥ ५२ ॥ शिराग्रहमाह—रूक्षाः सवेदनाः कृष्णा इति । रूक्षकृष्णवेदनावत्त्वं कुर्यात् । सोऽसाध्य इति । स्वरूपेण च हस्तगतद्रव्यवत् । 'शिरोग्रहः' इति पाठांतरे तत्र शिरोधारकशिरादुष्ट्या शिरोवेदनाकारित्वात्, शिरोग्रहलक्षणं तु तदेव ॥ ५३ ॥

---

१ 'स्वप्नाऽऽसनस्थान-' इति पा० ।

स्फिक्पूर्वा कटिपृष्ठोरुजानुजङ्घापदं क्रमात् ॥
गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥
वाताद्वातकफात्तन्द्रा गौरवारोचकान्विता ॥ ५४ ॥
वातजायां भवेत्तोदो देहस्यापि प्रवक्रता ॥
जानुकट्यूरुसन्धीनां स्फुरणं स्तब्धता भृशम् ॥ ५५ ॥
वातश्लेष्मोद्भवायांतु निमित्तं वह्निमार्दवम् ॥
तन्द्रामुखप्रसेकश्च भक्तद्वेषस्तथैव च ॥ ५६ ॥
तलं प्रत्यङ्गुलीनां याः कण्डरा बाहुपृष्ठतः ॥
बाह्वोः कर्मक्षयकरी विश्वाची चेति सोच्यते ॥ ५७ ॥

---

मधुकोशव्याख्या ।

तु तदेव ॥ ५३ ॥ गृध्रसीमाह—स्फिक्पूर्वेत्यादि । स्फिक् पूर्वा प्रथमतो ग्राह्या स्तम्भरुक्तोदैर्यस्याः सा स्फिक्पूर्वा, ईशानस्तु पूर्वा प्रथमा गृध्रसी वातादिति योजयति, एषा च व्याख्या स्फिक्शब्दस्य नपुंसकत्वेन 'पूर्वा स्फिक् सकटीपृष्ठ' इत्यादिना पाठेन वा उपपद्यते, नान्यथा । स्फिक्पूर्वमिति पाठान्तरं जानुजंघापदमित्यनेन योज्यम् । क्रमादिति न युगपत् । वातादिति छेदः । वातकफारब्धा गृध्रसी, सा उक्तवातलक्षणयुक्ता गौरवादियुक्तापि भवतीति गृध्रसीद्वयमुक्तम्॥५४—५६॥विश्वाचीमाह—तलमित्यादि । तलं हस्तस्योपरिभागः, तलशब्दोऽत्र उपरिवचनः, यथा—भूतलमिति गयादासः । तेनायमर्थः—बाह्वोः पृष्ठं बाहुपृष्ठं, तत आरभ्य हस्ततलं लक्षीकृत्या-

आतङ्कदर्पणव्याख्या ।

गृध्रसीमाह—स्फिगिति । गृध्रसी स्तंभरुक्तोदैः क्रमात् कटिपृष्ठोरुजानुजंघापदं गृह्णाति, तथा मुहुः स्पंदते सा वातजा ज्ञेया, कथंभूता गृध्रसी, स्फिक् पूर्वा प्रथमतो ग्राह्या स्तंभरुक्तोदैर्यस्याः सा स्फिक्पूर्वा । ईशानस्तु पूर्वा प्रथमा गृध्रसी वातादिति योजयति । एषा च व्याख्या स्फिक्शब्दस्य नपुंसकत्वेन, 'पूर्वा स्फिक् सकटीपृष्ठ—' इत्यादिपाठेन वोपपद्यते, नान्यथा । 'स्फिक्पूर्वम्' इति पाठांतरं जानुजंघापदमित्यनेन योज्यम् । क्रमादिति न युगपत् । गृध्रसी रंघिणीति लोके । वातादिति छेदः, वातकफारब्धा गृध्रसी, सा प्रोक्ता वातलक्षणयुक्ता तंद्रीगौरवादियुक्तापि भवतीति गृध्रसीद्वयमुक्तम् ॥ ५४ ॥ गृध्रस्याः पुनरपि विशेषलक्षणमाह—वातजायामिति । सुगमम् ॥ ५५ ॥ ५६ ॥ विश्वाचीमाह—तलमिति । कंडरा महास्नायुः, तलं हस्तस्योपरिभागः, तलशब्दोऽत्रोपरिवचनः, यथा—भूतलमिति । तेनायमर्थः—बाह्वोः पृष्ठं बाहुपृष्ठं, तदारभ्य हस्त-

वातशोणितजः शोथो जानुमध्ये महारुजः ॥
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत् ॥ ५८ ॥
वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा ॥
खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥ ५९ ॥

---

मधुकोशव्याख्या ।

ङ्गुलीनां याः कण्डरास्ताः संदूष्य बाह्वोः कर्मक्षयकरी या सा विश्वाची । बाह्वोः कर्म ग्रहणाकुञ्चनादि, द्वित्वं चात्र संभवपरं, तेनैकबाहावपि भवति वातरक्तवत् । विश्वाची चेति चकारेण गृध्रसीविश्वाच्योः खल्वीसंज्ञां दर्शयति, तयोरपि करमूलावमोटनकारित्वात् । यदुक्तं हारीते-"गृध्रसी विश्वची चोक्ता खल्वी तीव्ररुजान्विता" इति गयादासः । चक्रस्त्वाह-चरके 'खल्वी तु पादजंघोरुकरमूलावमोटनी' इत्यनेन विश्वाच्याः पृथगेव खल्वी पठिता, सुश्रुतेन तु खल्वी न पठितैव; नहि तेन तन्त्रान्तरोक्तसर्वविकाराः पठ्यन्ते, चरकोक्तपरस्परवातावरणलक्षणमेव न पठितं, हारीतेन तु तीव्ररुजायोगात् गृध्रसीविश्वाच्योः खल्वीत्वं पठितं, भवति हि धर्मान्तरयोगात् कस्यचिद्विकारस्य रोगान्तरत्वं, यथा-अष्ठीलैव प्रत्यष्ठीला, अश्मर्येव शर्करा, पाण्डुरोग एव कामलेत्यादि ॥ ५७ ॥ क्रोष्टुशीर्षमाह-वातेत्यादि । वातशोणितज इति वातरक्ताख्यविकारजः, चिकित्साभेदार्थं पृथक् पठित इति गयादासः । वातशोणिताभ्यां जात इति जेज्जटः । दृश्यते ह्ययं वातरक्तव्यतिरेकेणापि, जानुदेशनियतत्वेन विशिष्टलक्षणत्वेन च इतरवातरक्तशोथाद्भेद इति । क्रोष्टुकशीर्षवत् शृगालमस्तकवत् स्थूलः ॥५८॥ खञ्जमाह-वायुरित्यादि । सक्थ्नः ऊर्ध्वजंघायाः, कण्डरां महास्नायुमाक्षिपेत् ईषत्

आतंकदर्पणव्याख्या ।

तलं लक्षीकृत्यांगुलीनां याः कण्डराः ताः सन्दूष्य बाह्वोः कर्मक्षयकरी या सा विश्वाची । बाह्वोः कर्म-आकुंचनग्रहणादि, द्वित्वं चात्र संभवपरम्, तेनैकबाहावपि भवति, वातरक्तवत् । विश्वाची चेति चकारेण गृध्रसीविश्वाच्योः खल्वीसंज्ञा दर्शिता, तयोरपि करमूलावमोटकत्वात् ॥ ५७ ॥ क्रोष्टुशीर्षमाह-वातेति । वातशोणिताभ्यां जातो वातशोणितजः, न पुनर्वातरक्तेन व्याधिना जनितः, जानुमध्ये ऊरुजंघयोः संधिः स्थौल्येन आकृत्या च क्रोष्टुशीर्षवत् ॥५८॥ खंजपंगुवातावाह-वायुरिति । यदा कट्यां स्थितो वायुः सक्थ्नः ऊर्ध्वजंघायाः कंडरा महास्नायुमाक्षिपेत् ईषत् क्षिपेत्, किंचिद्गतिमत्त्वादिति गयादासः । तदा जंतुः खंजो भवति, 'पंगुः सक्थ्नोर्द्वयोर्वधात्' इति । सर्वथा गतिविघातात् पंगुरित्यर्थः । सक्थ्नोरिति द्विवचनेनैव द्वित्वे लब्धे द्वयोरितिपदेन नियमयति-सक्थिद्वयस्यैव वधात्पंगुः, एकसक्थिवधात्खञ्ज इति । वधश्चात्र गमनक्रिया-

प्रक्रामन्वेपते यस्तु खञ्जन्निव च गच्छति ॥
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ६० ॥
रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा ॥
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥ ६१ ॥
पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ॥
विशेषतश्चंक्रमतः पाददाहं तमादिशेत् ॥ ६२ ॥
हृष्येते चरणौ यस्य भवेतां चापि सुप्तकौ ॥
पादहर्षः स विज्ञेयः कफवातप्रकोपतः ॥ ६३ ॥

---

मधुकोशव्याख्या ।

क्षिपेत्, किंचिद्गतिमन्दत्वादिति गयादासः । सक्थ्नोरिति द्विवचनेनैव द्वित्वे लब्धे द्वयोरिति पदेन नियमयति—सक्थिद्वयस्यैव वधात् पंगुः, एकसक्थिवधात् खञ्ज इति । वधश्चात्र गमनादिक्रियानाशः ॥ ५९ ॥ खञ्जविशेषमाह—प्रक्रामन्नित्यादि । प्रक्रामन्निति गमनमारभमाणो वेपते । प्रशब्दोऽयमादिकर्मणि । खञ्जन्निव गच्छति विकलयन्निव गच्छति, गमनारम्भवेपनेन खञ्जादस्य भेदः । मुक्तेत्यादि । मुक्तसन्धिप्रबन्धनमिति शिथिलीकृतसन्धिबन्धनमित्याहुः । कलायखञ्ज इति शास्त्रे रूढा संज्ञा ॥६०॥ वातकण्टकमाह—रुक्पाद इत्यादि । विषमपादन्यासकुपितः श्रमकुपितो वा वायुर्गुल्फे वेदनां जनयन् वातकण्टकमित्याहुः, अयमेवान्यत्र 'खुड्डुकावात' इत्युक्तः ॥ ६१ ॥ पाददाहमाह—पादयोरित्यादि । विशेषतश्चङ्क्रमत इत्यनेन स्थितस्य मन्दो दाह इति दर्शयति । वैवर्ण्यादेरभावाद्वातरक्तादस्य भेदः॥ ६२ ॥ पादहर्षमाह—हृष्येते इत्यादि । हृष्येते हर्षयुक्तौ भवतः, हर्षश्च रोमाञ्चमायः ।*अन्तःशीतो झिणिझिणिवत् वेदनावि-

आतङ्कदर्पणव्याख्या ।

नाशः ॥ ५९ ॥ कलायखंजमाह—प्रक्रामन्निति । प्रक्रामन् पादविक्षेपं कुर्वन्, वेपते कंपते । खंजन्निवेत्यादि वैकल्यं कुर्वन्निव गच्छति । मुक्तसंधिप्रबंधनं शिथिलीकृतसंधिबंधनम् । कलायखंज इति शास्त्रे रूढिः संज्ञा ॥ ६० ॥ वातकंटकमाह—रुगिति । यदा विषमपादन्यासकुपितः श्रमकुपितो वा वायुर्गुल्फवेदनां जनयति, तं वातकंटकमित्याहुः । अयमेवान्यत्र 'खुड्डुकावात' इत्युक्तः ॥ ६१ ॥ पाददाहमाह—पादयोः विशेषतश्चंक्रमतः विशेषेण गच्छतः, विशेषतश्चंक्रमत इत्यनेन स्थितस्य मंदो दाह इति दर्शयति, वैवर्ण्यादेरभावाद्वातरक्तादस्य भेदः॥६२॥पादहर्षमाह—हृष्येते

अंशदेशस्थितो वायुः शोषयेदंसबन्धनम् ॥
शिराश्चाकुञ्च्य तत्रस्थो जनयेदवबाहुकम् ॥ ६४ ॥
आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः ॥
नरान्करोत्यक्रियकान्मूकमिन्मिनगद्गदान् ॥ ६५ ॥

---

मधुकोशव्याख्या ।

शेष इत्याहुः, झिणिझिणि तु न चिरानुबन्धिनी केवलवातजेति भेदः ॥ ६३ ॥ अंसेत्यादिना श्लोकार्धेनांसशोषः केवलवातज उच्यते । अंसबन्धकारकः श्लेष्मा अंसबन्धनः; एतदनन्तरम् 'अंसशोषं जनयेत्' इति शेष इति कार्तिकः ॥ अवबाहुकमाह–शिराश्चेत्यादिना । तत्रस्थोऽसस्थः, अयं च वातकफजः । अन्ये तु मिलित्वा अवबाहुकलक्षणमाहुः तन्न, यतः सुश्रुतेनोक्तम्–"अंसशोषावबाहुकयोर्बाहुमध्ये शिराव्यधः" इति । एतदनन्तरं सुश्रुतेन बाधिर्यं पठितं–"यदा शब्दवहं वायुः" इत्यादिना, माधवेन तु प्रकरणानुरोधं मन्यमानेन कर्णरोग एव एतत् पठितं, किंतु सुश्रुतेन वातव्याधौ बाधिर्यं पठित्वा बाधिर्यकर्णशूलौ शालाक्येऽपि पठितौ पुनरुक्तमिति चेत्, नैवम्, संप्राप्तिभेदभिन्नत्वात्; वातव्याधौ शब्दवहमित्यनेन कर्णशष्कुल्यवच्छिन्ननभोदेश उक्तः, शालाक्ये च शब्दवहाः शिरा इत्युक्तम् । माधवेन तु कर्णरोगे शब्दाश्रवणत्वाविशेषादेतदेव तत्र पठितमित्यविरोधः ॥ मूकादीनाह–आवृत्येत्यादि । अक्रियकान् अवचनक्रियकानिति, नञयमभावे ईषदर्थे च ।

आतङ्कदर्पणव्याख्या ।

हर्षयुक्तौ भवतः, हर्षश्च रोमांचप्रायः । अन्तःशीतो झिणिझिणिवत् वेदनाविशेषः ॥६३॥ अर्द्धार्द्धश्लोकेनांसशोषावबाहुकयोर्लक्षणमाह–अंसेति । अंसशब्देनांससमीपोपलक्षितदेशोंसदेशः । अंसो बाहुशिरः, तत्र स्थितो व्यवस्थितः ॥ अंसबंधनमिति । अंसबंधनकारकः श्लेष्मा अंसबंधनः, तम् अंसबंधनं श्लेष्माणं शोषयित्वा स तदनंतरम् अंसशोषं जनयेदिति वाक्यशेषः । इति कार्तिकः ॥ शिराश्चेत्यादिना अवबाहुकः । तत्रस्थोऽसदेशस्थः, शिराः आकुंच्यावबाहुकं जनयेत् । अयं च कफवातजः अयम् अंशशोषमवबाहुकमिति रोगद्वयमुक्तवान्, अन्ये तु मिलित्वावबाहुकलक्षणमाहुः–तन्न, यतः सुश्रुतेन रोगरूपं पृथक् पठितम्–"अंसशोषावबाहुकयोर्बाहुमध्ये शिराव्यधः" इति ॥ ६४ ॥ मूकादीन् जिह्वागतान् वातरोगांस्त्रीनाह–आवृत्येति । वायुः सकफः कुपितः सन्, शब्दवाहिनीर्धमनीरावृत्यावरुध्य नरान् अक्रियकान् अवचनक्रियकान् करोति । अत्र नञ् अभावे ईषदर्थे च । मूकोऽवचनः, मिन्मिनः सानुनासिकसर्ववचनः, गद्गदो लुप्तपदव्यंजनाभिधायी । एषां तुल्यहेत्वभिधानेपि दुष्टेरुत्कर्षादिभिरदृष्टवशाद्वा

अधो या वेदना याति वर्चोमूत्राशयोत्थिता ॥
भिन्दतीव गुदोपस्थं सा तूनी नाम नामतः ॥ ६६ ॥
गुदोपस्थोत्थिता या तु प्रतिलोमं प्रधाविता ॥
वेगैः पक्काशयं याति प्रतितूनीति सोच्यते ॥ ६७ ॥
साटोपमत्युग्ररुजमाध्मातमुदरं भृशम् ॥
आध्मानमिति तं विद्याद् घोरं वातनिरोधजम् ॥ ६८ ॥

---

मधुकोशव्याख्या।

आद्यो मूकोऽवचनः, द्वितीयो मिन्मिनः सानुनासिकसर्ववचनः, तृतीयो गद्गदो लुप्तव्यञ्जनाभिधायी। एषां समानकारणाभिधानेऽपि दुष्टेरुत्कर्षादिभिरदृष्टवशाद्वा भेद इत्युन्नेयम् ॥ ६४ ॥ ६५ ॥ तूनीमाह—अध इत्यादि। अध इति गुदोपस्थम्। वेदना शूलम्। वर्चोमूत्राशयोत्थिता पक्काशयमूत्राशयोत्थिता पक्काशयमूत्रपुटयोर्व्यस्तसमस्तयोर्जाता। उपस्थं स्त्रीपुंसयोर्गुह्यम्। नामतः प्रसिद्धितः ॥ ६६ ॥ प्रतितूनीमाह—प्रतिलोममित्यादि। प्रतिलोमम् ऊर्ध्वम्। वेगैर्वातकृतोद्गमैः। सेत्यनेन भिन्दतीवेत्यतिदिश्यते ॥ ६७ ॥ आध्मानमाह—साटोपमित्यादि। साटोपमिति आटोपश्चलचलमिति गयादासः; गुडगुडाशब्द इति कार्तिकः। आध्मातं वातपूर्णचर्मपुटकस्थानीयम्। उदरमिति पक्काशयः, प्रत्याध्मानस्य आमाशयसंभवत्वात्। घोरमिति कष्टप्रदम्। आमाशयसमुत्थत्वेन प्रत्यासत्त्या पार्श्वहृदययोरपि वेदनाशंकानिरासार्थमाह—विमुक्तपार्श्वहृदयमिति। तदेवेत्यनेन साटोपादित्वमतिदिशति।

आतङ्कदर्पणव्याख्या।

भेद इत्युन्नेयम् ॥ ६५ ॥ तूनीवातमाह—अध इति। या वेदना शूलम् अध इति गुदोपस्थं याति नामतः प्रसिद्धितः सा तूनी नाम वर्चोमूत्राशयोत्थिता पक्काशयमूत्रपुटयोर्व्यस्तसमस्तयोर्जाता, भिंदतीव गुदोपस्थमिति भेदं कुर्वतीव गुदोपस्थस्येत्यर्थः। उपस्थं स्त्रीपुंसयोर्गुह्यम् ॥ ६६ ॥ प्रतितूनीमाह—गुदेति। गुदोपस्थोत्थिता सैव वेदना प्रतिलोममित्यूर्ध्वं प्रधाविता सती वेगैर्वातकृतोद्गमैर्मुहुर्मुहुः स्वभावोपशमोपलक्षितैः पक्काशयं याति, सा प्रतितूनीत्युच्यते, सैवेत्यनेन भिंदतीत्यतिदिश्यते ॥ ६७ ॥ आध्मानलक्षणमाह—साटोपमिति। साटोपादिलक्षणयुक्तमुदरमाध्मानं जानीयात्। साटोपमिति। आटोपश्चलनम् तेन सह वर्तत इति साटोपमिति गयादासः। गुडगुडाशब्द इति कार्तिकः। आध्मानमिति। आध्मातं वातपूर्णचर्मपुटकस्थानीयम् उदरमिति पक्काशयः, प्रत्या-

विमुक्तपार्श्वंहृदयं तदेवामाशयोत्थितम् ॥
प्रत्याध्मानं विजानीयात्कफव्याकुलितानिलम् ॥ ६९ ॥
नाभेरधस्तात्संजातः संचारी यदि वाऽचलः ॥
अष्ठीलावद्घनो ग्रन्थिरूर्ध्वमायत उन्नतः ॥ ७० ॥
वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम् ॥
एतामेव रुजोपेतां वातविण्मूत्ररोधिनीम् ॥
प्रत्यष्ठीलामिति वदेज्जठरे तिर्यगुत्थिताम् ॥ ७१ ॥
मारुतेऽविगुणे वस्तौ मूत्रं सम्यक्प्रवर्तते ॥
विकारा विविधाश्चात्र प्रतिलोमे भवन्ति च ॥७२ ॥

---

मधुकोशव्याख्या ।

कफव्याकुलतानिलं कफावृतवातम्॥६८॥६९॥ अष्ठीलामाह—नाभेरित्यादि । अष्ठीला उत्तरापथे वर्तुलः पाषाणविशेष इति जेज्जटमतानुवादी कार्तिकः । कर्मकाराणां वर्तुला दीर्घा लौहभाण्डी इति गयदासः । ऊर्ध्वमायत उपरिदीर्घः । उन्नतः तिर्यगुन्नतः । वातकृताष्ठीला वाताष्ठीलेति स्वरूपपरं, व्यावृत्त्यभावात् । बहिर्मार्गावरोधिनीं वातमूत्रपुरीषावरोधिनीम् । सैव जठरे तिर्यगुत्थिता तिर्यगायता प्रत्यष्ठीलेति भेदः । वातविण्मूत्ररोधिनीमिति विशेषपरम्॥७०॥७१॥ अष्ठीलाव्यतिरिक्तामपि वातविकृतिं मूत्ररोधिनीमाह—मारुत इत्यादि । अविगुणेऽनुलोमगे, प्रतिलोमे प्रतिलोमगे, मारुत

आतंकदर्पणव्याख्या ।

ध्मानस्यामाशयसंभवत्वात् । घोरमिति कष्टप्रदम् । प्रत्याध्मानमाह—विमुक्तेति । विमुक्तं पार्श्वहृदयं येन तत्तथा कफाकुलितं वातमित्यर्थः ॥ ६८ ॥ ६९ ॥ अष्ठीलामाह—नाभेरिति । अष्ठीलावत् अष्ठीलासदृशं ग्रंथिं वाताष्ठीलां विजानीयात् । अष्ठीला उत्तरापथे वर्त्तुलः पाषाण इति जेज्जटानुवादी कार्तिकः । कर्मकाराणां वर्त्तुला दीर्घा लौहभांडी इति गयादासः । घनं संहतावयवम् । ऊर्ध्वमायतमुपरिदीर्घम् उन्नतं तिर्यगुन्नतम् । वातकृताऽष्ठीला वाताष्ठीला इति स्वरूपपरम्, व्यावृत्त्यभावात् । बहिर्मार्गनिरोधिनीं वातमूत्रपुरीषरोधिनीम् । प्रत्यष्ठीलामाह—एतामिति । प्रत्यष्ठीलेतिभेदः । वातमूत्रपुरीषरोधिनीमिति विशेषपरम् ॥ ७० ॥ ७१ ॥ अष्ठीलाव्यतिरिक्तामपि मूत्ररोधिनीं वातविकृतिमाह—मारुत इति । अविगुणेऽनुलोमे मारुत इत्यर्थः ।

---

१ एतच्च अष्ठीलावद्घनं 'ग्रन्थिमूर्ध्वमायतमुन्नतम्' इति पाठाभिप्रायेण ।
२ एतच्च 'बहिर्मार्गनिरोधिनीम्' इति पा० ।

सर्वाङ्गकम्पः शिरसो वायुर्वेपथुसंज्ञकः ॥
खल्वी तु पादजंघोरुकरमूलावमोटनी ॥ ७३ ॥
अधः प्रतिहतो वायुः श्लेष्मणा मारुतेन वा ॥
करोत्युद्गारबाहुल्यमूर्ध्ववातः स उच्यते ॥ ७४ ॥
स्थाननामानुरूपैश्च लिङ्गैः शेषान्विनिर्दिशेत् ॥
सर्वेष्वेतेषु संसर्गं पित्ताद्यैरुपलक्षयेत् ॥ ७५ ॥
हनुस्तम्भार्दिताक्षेपपक्षाघातापतानकाः ॥
कालेन महताढ्यानां यत्नात्सिध्यन्ति वा नवा ॥
नरान्बलवतस्त्वेतान्साधयेन्निरुपद्रवान् ॥ ७६ ॥
विसर्पदाहरुक्सङ्गमूर्च्छारुच्यग्निमार्दवैः ॥
क्षीणमांसबलं वाता घ्नन्ति पक्षवधादयः ॥ ७७ ॥

---

मधुकोशव्याख्या ।

इति सम्बन्धः । विकारा अश्मरीमूत्रकृच्छ्रादयः ॥ ७२ ॥ वेपथुवातविकारमाह—सर्वेत्यादि । शिरसः कम्प इति संबन्धः, शिर इत्यवयवोपलक्षणम्, तेन हस्तादेरपि कम्पो वेपथुरित्यर्थः । खल्वी शिरामोड इति लोके ॥ ७३ ॥ ७४ ॥ अनुक्तवातरोगसंग्रहणार्थमाह—स्थानेत्यादि । स्थानानुरूपैर्यथा—कुक्षिशूलं, नखभेद इत्यादि । नामानुरूपैर्लिंगैर्यथा—शूलमित्युक्ते कीलनिखातवद्वेदनाविशेष एवोच्यते, तथा भेदतोदादिभिरपि पीडाविशेष एव गम्यते ॥ ७५ ॥ ७६ ॥ वातोपद्रवमाह—विसर्पेत्यादि । वाता इति वातविकाराः, कार्यकारणयोरभेदोपचारात् ।

आतंकदर्पणव्याख्या ।

विकाराः अश्मरीमूत्रकृच्छ्रादयः ॥ ७२ ॥ सर्वांगकंपवातमाह—सर्वांगस्य शिरसश्च कंप इति संबंधः । शिरस इत्यवयवोपलक्षणम्, तेन हस्तपादयोरपि कंपो वेपथुरिति । खल्वीमाह—खल्वीति ॥ मोटिनीति । परिवर्तनशीला ॥ ७३ ॥ ऊर्द्ध्ववातमाह—अध इति ॥ ७४ ॥ अनुक्तवातरोगसंग्रहार्थमाह—स्थानेति । स्थानानुरूपैर्लिंगैर्यथा—कुक्षिशूलं, पृष्ठशूलं, नखभेदः । नामानुरूपैर्यथा—कुक्षिशूलमित्युक्ते कीलनिखातवद् वेदनाविशेष एवोच्यते, तथा तोदभेद इत्यादि पीडाविशेष एव गम्यते ॥ पित्ताद्यैरिति । पित्तश्लेष्मरुधिरैः संसर्गं द्विदोषजं च लक्षयेत् ॥ ७५ ॥ उक्तरोगाणां कृच्छ्रसाध्यत्वमाह—हन्विति । एतेष्वेकः कश्चिन्मुच्यत इत्यर्थः । परं कः सिद्ध्यति, यः तरुणो भवति । तथा निरुपद्रवान् उपद्रवरहितान् । वातोपद्रवानाह—विसर्पेति । वाता इति ।

शूनं सुप्तत्वचं भग्नं कम्पाध्माननिपीडितम् ॥
रुजार्तिमन्तं च नरं वातव्याधिर्विनाशयेत् ॥ ७८ ॥
अव्याहतगतिर्यस्य स्थानस्थः प्रकृतिस्थितः ॥
वायुः स्यात्सोऽधिकं जीवेद्वीतरोगः समाः शतम् ॥ ७९ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने वातव्याधिनिदानं
समाप्तम् ॥ २२ ॥

---

मधुकोशव्याख्या ।

वातादिति पाठे तु वातात् पक्षवधादय इति योज्यम् । शूनं सशोथम् । सुप्तत्वचं स्पर्शानभिज्ञत्वगिन्द्रियम् ॥ ७७ ॥ ७८ ॥ इदानीं पञ्चविधस्यापि प्रकृतिस्थस्य वायोर्लिङ्गं कार्यं चाह–अव्याहतेत्यादि । यस्येति पुरुषस्य, अव्याहतगतिः अनवरुद्धमार्गः; स्थानस्थः स्वस्थानव्यवस्थितः, प्रकृतिस्थितोऽक्षीणश्चावृद्धः, एतद्विशेषणत्रयं हेतुमद्भावेन योज्यम् । वीतरोगो नीरोगः, कफपित्तदुष्टेरपि प्रेरकवातेनान्तरीयकत्वात् । अधिकं समाः शतं पञ्चदिनाधिकविंशतिवर्षशतम् । यदाह वराहः, आयुर्निरूपणे–''समाः षष्टिर्द्विघ्ना मनुजकरिणां पञ्च च निशाः'' इत्यादि ॥ ७९ ॥
इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां वातव्याधिनिदानं समाप्तम् ॥ २२ ॥

आतङ्कदर्पणव्याख्या ।

वातविकाराः, कार्यकारणयोरभेदोपचारेण । 'वातात्' इति पाठे तु वातात् पक्षवधादयः इति योज्यम्, संगो मूत्रपुरीषवाताप्रवृत्तिः क्षीणं मांसबलं यस्य स तथा ॥ ७६ ॥ ७७ ॥ असाध्यमाह–शूनमिति । शूनं शोथयुक्तम् । सुप्तत्वचं स्पर्शानभिज्ञत्वगिंद्रियम् भग्नास्थि, रुजार्तिमंतम् अतीव पीड्यार्तम् ॥ ७८ ॥ इदानीं पंचविधस्यपि प्रकृतिस्थस्य वायोः कार्यं लिंगं च प्राह–यस्य पुरुषस्य अव्याहतगतिः अरुद्धमार्गः, स्थानस्थः स्वाशयव्यवस्थितः, प्रकृतौ स्थितः, न वृद्धो न च क्षीणः वायोर्विशेषणत्रयम् । वीतरोगो नीरोगः, कफपित्तदुष्टेरपि प्रेरकवातेनांतरीयकत्वात् । अधिकं समाः शतं पंचदिनाधिकं विंशतिवर्षशतम । यदाह वराहमिहिर आयुर्निरूपणाध्याये–''समाः षष्टिर्द्विघ्नामनुजकरिणां पंच च निशाः'' ॥ ७९ ॥ इत्यातंकदर्पणे निदानव्याख्यायां वातव्याधिनिदानम् ॥ २२ ॥

---

# अथ वातरक्तनिदानम् २३.

लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः ॥
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥ १ ॥
कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः ॥
दध्यारनालसौवीरशुक्ततक्रसुरासवैः ॥ २ ॥
विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः ॥
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ॥
स्थूलानां सुखिनां चापि कुप्यते वातशोणितम् ॥ ३ ॥

मधुकोशव्याख्या ।

वातव्याधिविशेषत्वात्तदनन्तरं वातरक्तमाह । ननु, सुश्रुते वातरोगाध्याय एव वातरक्तं पठितं तत् कुतोऽत्र संग्रहे पृथक् पाठः? उच्यते, सत्यपि वातरोगत्वे निदानवैशिष्ट्यात् विशिष्टदोषदूष्यख्यापनार्थं हस्तादिदेश एव संप्राप्तिकथनार्थं क्रियाविशेषख्यापनार्थं च पृथक्करणम्। अत एव चरके वातव्याध्यनन्तरं पृथग्वातरक्ताधिकारः । ननु, 'रुजस्तीव्राः ससंतापाः' इत्यादिना रक्तगतस्य वातस्य लक्षणं वातव्याधावेवोक्तं, ततश्च वातरक्ताभिधानं पुनरुक्तं स्यात्, नैवम्, वातरक्तं हि दुष्टेन वातेन रक्तेन च विशिष्टसंप्राप्तिकं विकारान्तरमेव । उक्तं हि चरके—"वायुः प्रवृद्धो वृद्धेन रक्तेनावारितः पथि । क्रुद्धः संदूषयेद्रक्तं तज्ज्ञेयं वातशोणितम्॥" इति। रक्तगतवाते तु वात एव दुष्टो रक्तमदुष्टमेव गच्छतीति भेदः । लवणाम्लेत्यादि । क्लिन्नशुष्कशब्दौ मांसेन संबध्येते । पिण्याकस्तिलकल्कः । निष्पावः शिम्बिः, पललं

आतंकदर्पणव्याख्या ।

वातव्याधिविशेषत्वात्तदनंतरं वातरक्तमाह—ननु, सुश्रुते वातव्याध्यध्याये एव वातरक्तं पठितं तत्कुतोऽत्र संग्रहे पृथक् पठितम्, उच्यते, सत्यपि वातरोगत्वे निदानवैशिष्ट्याद्विशिष्टसंप्राप्तिकथनं क्रियाविशेषज्ञापनार्थं च पृथक्करणम्। अत एव चरकेपि वातव्याध्यनंतरं पृथग् वातरक्ताध्याय उक्तः । तस्य निदानमाह—लवणेति । लवणादिभिर्भोजनैः, तथा क्लिन्नशुष्कांबुजादिभिः तथा कुलत्थादिभिस्तथा दध्यादिभिः तथा विरुद्धादिभिः तथा प्रायशः सुकुमाराणां पुंसां तथा मिथ्याहारविहारिणां स्थूलानां च सुखिनां च वातरक्तं प्रकुप्यति । क्लिन्नशुष्कशब्दौ मांसेन संबध्येते । पिण्याकः तिलकल्कः, निष्पावः शिम्बिः, पललं मांसम्, क्लिन्नं शटितम् । अंबुजा मत्स्यादयः, आरनालादयः कांजिकभेदाः, सुरा पिष्टकृता, आसवो मद्यम्, विरुद्धं क्षीरमत्स्यादि, अध्यशनं भुक्तोपरिभोजनम्, सुकुमारा मृदुदेहावयवाः, स्थूला मेदस्विनः सुखिनश्च सम्य-

हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च विदाह्यन्नं सविदाहोऽशनस्य
कृत्स्नं रक्तं विदहत्याशु तच्च दुष्टं स्रुतं पादयोश्चीयते तु
तत्संपृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम् ॥४
स्वेदोऽत्यर्थं नवा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् ॥
सन्धिशैथिल्यमालस्यं सदनं पिडकोद्गमः ॥ ५ ॥
जानुजंघोरुकट्यंसहस्तपादाङ्गसन्धिषु ॥
निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥ ६ ॥

---

मधुकोशव्याख्या ।

मांसम् । प्रायश इत्यादि । सुकुमारा मृदुदेहावयवास्तेषामल्पचेष्टत्वाल्लवणादिभिः र कट्वम्लजागरादिभिश्च वातः कुप्यतीति ईशानः ॥ १-३ ॥ संप्राप्तिमाह-हस्त्यश्वे त्यादि । हस्त्यादिगमनं वातवृद्धौ विशेषेण रक्तस्य द्रवस्याधोगमनेऽपि हेतुः, विद ह्यन्नं च शोणितवृद्धौ । हस्त्यादिगमनं विशेषेण, पदेनापि गमनं हेतुरेव । तद्रक्तम् संपृक्तं वायुना दूषितेन स्वहेतुवृद्धेन । तत्प्राबल्यादिति द्वयोर्दुष्टत्वेऽपि वातस्य प्रा ल्यात् दोषत्वेन प्राधान्याद्वातरक्तव्यपदेशः, नतु रक्तवात इति ॥ ४ ॥ पूर्वरूपमाह स्वेदेत्यादि । स्वेदोऽत्यर्थं न वेति घर्मागमनमत्यर्थं भवति सर्वथा वा न भवति, एत व्याधिमहिम्ना कुष्ठवत् । क्षतेऽतिरुगिति यदि कारणान्तरात् क्षतं स्यात् तदातिश

आतङ्कदर्पणव्याख्या ।

कृप्रवृत्त्यादिवर्जिताः । तेषामल्पचेष्टत्वात् लवणादिभिः रक्तम्, तिक्तकटुकषायादिभिर्वात कुप्यतीति-ईशानः ॥ १ ॥ २ ॥ ३ ॥ तस्य संप्राप्तिमाह-हस्तीति । विदाहि विरूढकादिकम् अश्नतः भुक्तवतः, विदाहात्, कृत्स्नशरीरगतरक्तमाशु विदहति विदाह्यन्नं शोणितवृद्धौ हस्त्यादिगम च विषमपादेनापि गमनं हेतुः ॥ तत्संपृक्तमिति । तद्रक्तपित्तं संसृष्टं वायुना दूषितेन स्वहेतुवृद्धे सह तत्प्राबल्याद्वातरक्तमुच्यते-तत्प्राबल्यादिति द्वयोर्दुष्टत्वेऽपि वातस्य प्राबल्याद्दोषत्वेन प्राधान्य द्वातरक्तव्यपदेशः, न तु रक्तवात इति । तद्वत्पित्तमेति दुष्टं पित्तमित्यर्थः । दूषितेनासृजाक्तमि दूषितेन रक्तेन मिश्रं तथा दुष्टः श्लेष्मा दूषितेन रक्तेनाक्तो मिश्रः ॥ ४ ॥ तस्य पूर्वरूपमाह-स्वे इति । घर्मागमनमत्यर्थं भवति सर्वथा वा न भवति, एतच्च व्याधिमहिम्ना कुष्ठवत् बोद्धव्यम् कार्ष्ण्यम् अंगानाम् क्षतेऽतिरुगिति । यदि कारणांतरात् क्षतं भेदः स्यात्, तदा ह्यतिशयं रुजा भवति, तद्देशस्य दुष्टत्वात् । सदनम् अंगानाम्, पिडिका प्रादुर्भावो जान्वादिषु, निस्तो

कण्डूः सन्धिषु रुग्भूत्वाभूत्वा नश्यति चासकृत् ॥
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम् ॥ ७ ॥
वातेऽधिकेऽधिकं तत्र शूलस्फुरणभञ्जनम् ॥
शोथस्य रौक्ष्यं कृष्णत्वं श्यावता वृद्धिहानयः ॥ ८ ॥
धमन्यङ्गुलिसन्धीनां संकोचोऽङ्गग्रहोऽतिरुक् ॥
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥ ९ ॥
रक्ते शोथोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ॥
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥ १० ॥
पित्ते विदाहः संमोहः स्वेदो मूर्च्छा मदस्तृषा ॥
स्पर्शासहत्वं रुग्रागः शोथः पाको भृशोष्मता ॥ ११ ॥
कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः ॥
कण्डूर्मन्दा च रुग्द्वन्द्वं सर्वलिङ्गं च संकरात् ॥ १२ ॥

मधुकोशव्याख्या ।

रुजा स्यात्, तद्देशस्य दुष्टत्वात् ॥ ५–७ ॥ वातरक्तस्य दोषान्तरसंसर्गेण लक्षणान्याह–वातेऽधिक इत्यादि । वृद्धिहानय इति वातरक्तलक्षणानाम् रक्त इत्यत्राधिक इत्यनुवर्तनीयम्, एवं वक्ष्यमाणपित्तादिषु । एतच्चारम्भकरक्तादन्यद्रक्तान्तरं बोध्यम्, रक्तमपि रक्तान्तरदूषकम् । यदुक्तं दुष्टरक्तलक्षणे–"पित्तवद्रक्तेनातिदुष्टं च" इति । शमं नैतिं शान्ति न याति । द्वन्द्वसर्वलिङ्गं च संकरात् द्विदोषत्रिदोषमेलकात् द्वन्द्व-

आतङ्कदर्पणव्याख्या ।

पीडाविशेषः, सुप्तिस्त्वचः, वैवर्ण्यं विच्छायता, एतत्पूर्वरूपं वातरक्तस्य ॥ ५–७ ॥ दोषांतरसंसर्गे कारणमाह–वातेऽधिक इति । जानुजंघादिस्थानेषु वातरक्तलक्षणानां शूलाधिक्यं ज्ञेयम्, तथा शोथस्य रौक्ष्यादिकं वृद्धिहानयश्च विज्ञेयाः, धमन्याः संकोचः, अंगग्रहः, शीतद्वेषः, अनुपशयः असात्म्यम् ॥ ८ ॥ ९ ॥ रक्ताधिकलक्षणमाह–रक्त इति । रक्त इत्यत्राधिक इत्यनुवर्तनीयम्, एवं वक्ष्यमाणपित्तादिषु चिमिचिमेति कंडूभेदः शमं न याति, क्लेदश्च द्रवत्वम्, एतच्चारंभकरक्ताद्रक्तांतरं बोद्धव्यम्, यतो रक्तांतरं दूषकम्, यत् दुष्टरक्तलक्षणं पित्तवत् रक्तेनातिकृष्णं भवति ॥ १० ॥ पित्ताधिकमाह–पित्त इति । भृशोष्मता संतापाधिक्यम् ॥ ११ ॥ कफाधिकमाह–कफ इति । कफाधिके स्तैमित्यम् आर्द्रता, मन्दा अदारुणा, अल्पपीडा मन्दा रुक् चेति लक्षणभेदः ॥ द्वंद्वजसान्निपातिकावाह–द्वंद्व इत्यादि । संकरात् द्विदोषमेलकात् त्रिदोषमेलकाच्च द्वंद्वलिं सर्व

पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥
आखोर्विषमिव क्रुद्धं तद्देहमुपसर्पति ॥ १३ ॥
आजानु स्फुटितं यच्च प्रभिन्नं प्रस्रुतं च यत् ॥
उपद्रवैश्च यज्जुष्टं प्राणमांसक्षयादिभिः ॥ १४ ॥
वातरक्तमसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ॥
अस्वप्नारोचकश्वासमांसकोथशिरोग्रहाः ॥ १५ ॥
मूर्च्छातिमदरुक्तृष्णाज्वरमोहप्रवेपकाः ॥
हिक्कापाङ्गुल्यविसर्पपाकतोदभ्रमक्लमाः ॥ १६ ॥

मधुकोशव्याख्या ।

लिङ्गं सर्वलिङ्गं च क्रमाद्वातरक्तं भवति ॥ ८-१२ ॥ पादयोर्जातमप्रतिक्रियमाणं देशान्तरं व्याप्नोति, पादवद्धस्तयोरपि भवतीति दर्शयन्नाह-पादयोरित्यादि । आखोर्विषमित्यनेन मन्दविसर्पणतां दर्शितवान्, एतद्वातरक्तं चरकेण द्विविधमुक्तम् । यदाह-"उत्तानमथ गम्भीरं द्विविधं वातशोणितम् । त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वन्तराश्रयम्" इति । सुश्रुतेन तु कुष्ठवदुत्पत्तौ उत्तानस्योत्तरकालं गम्भीरत्वमुक्तमिति मतभेद एव ॥ १३ ॥ असाध्यत्वादिकमाह-आजान्वित्यादि । आजानु जानुपर्यन्तं गतमसाध्यम् । तथा स्फुटितादिकं स्फुटितं दलितत्वक्, प्रभिन्नं विदीर्णत्वक्, उपद्रवैरित्यादौ आदिशब्देन वक्ष्यमाणानामस्वप्नादीनां ग्रहणम् । याप्यं संवत्सरोत्थितमित्यनेन संवत्सरादर्वाक् साध्यम्, यदि स्फुटितत्वादयो न भवेयुरित्याहुः । पांगुल्यं पंगुता ।

आतङ्कदर्पणव्याख्या ।

लिंगं च भवेत् ॥ १२ ॥ पादयोर्जातमप्रतिक्रियमाणं प्रदेशांतरं प्राप्नोति । पादवद्धस्तयोरपि भवतीति दर्शयन्नाह-पादयोरिति । कदाचिदिति । अप्रतिक्रियमाणं हस्तयोरपि मूलमास्थाय । आखोर्विषमिवेत्यनेन मंदविसर्पितां दर्शितवान्, एतच्च वातरक्तं चरकेण द्विविधमुक्तं तद्यथा-"उत्तानमथ गंभीरं द्विविधं वातशोणितम् । त्वङ्मांसाश्रयमुत्तानं गम्भीरं त्वंतराश्रयम्" इति ॥ १३ ॥ एतस्यैवासाध्ययाप्यत्वे आह-आजान्विति । आजानु जानुपर्यंतमसाध्यम्, स्फुटितं दलितत्वक्, प्रभिन्नं विदीर्णम्, प्रस्रुतं स्रावयुक्तम् । उपद्रवैरित्यादिप्राणमांसक्षयादिभिः, आदिग्रहणेन च वक्ष्यमाणानामस्वप्नादीनां ग्रहणम् । याप्यं संवत्सरोत्थितमित्यनेन संवत्सरादर्वाक् साध्यम्, यदि स्फुटितत्वादयो न भवेयुः । उपद्रवानाह-अस्वप्नेति । मांसकोथो मांसगलनम्, मूर्च्छायो मूर्च्छा, अमंद-

१ एतच्च 'मूर्च्छायो मन्दरुक्तृष्णा' इति पाठाभिप्रायेण ।

अंगुलीवक्रतास्फोटदाहमर्मग्रहार्बुदाः ॥
एतैरुपद्रवैर्वर्ज्यं मोहेनैकेन वापि यत् ॥ १७ ॥
अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् ॥
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ॥
त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः ॥ १८ ॥
इति श्रीमाधवकरविरचिते माधवनिदाने वातरक्तनिदानं समाप्तम् ॥ २३ ॥

## अथोरुस्तम्भनिदानम् २४.

शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ॥
जीर्णाजीर्णे तथायाससंक्षोभस्वप्नजागरैः ॥ १ ॥
सश्लेष्ममेदःपवनः साममत्यर्थसंचितम् ॥
अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते ॥ २ ॥

मधुकोशव्याख्या ।

मोहेनैकेति वचनात् पूर्वोक्तैः समस्तैर्द्वित्र्यादिभिश्चेति बोधयतीति ॥ १४–१८ ॥
इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां वातरक्तनिदानं समाप्तम् ॥ २३ ॥

वातव्याधिविशेषत्वादूरुस्तम्भमाह—शीतोष्णेत्यादि । शीतोष्णग्रहणमनुक्तपरस्परविरोधिद्वन्द्वोपलक्षणार्थम्, तेन गुरुस्निग्धाभ्यां लघुरूक्षयोर्ग्रहणं बोध्यमिति जेज्जटः । संशुष्कं कठिनं द्रवविरोधित्वात् । जीर्णाजीर्णे इति । प्रभूतं जीर्णं, स्तोकमजीर्णमित्याहुः, तस्मिन् भोजनमिति शेषः । अत एव दृढबलेन—"जीर्णाजीर्णे समश्नतः" इति पठितम् । एते च यथासंभवं श्लेष्मादीनां हेतवः । सश्लेष्ममेदःपवन इति सश्ले-

आतङ्कदर्पणव्याख्या ।

रुक् पीडाबाहुल्यम्, मोह इंद्रियार्थानाम्, पांगुल्यं पंगुता, मोहेनैकेनेति वचनात् पूर्वोक्तैः समस्तैश्चेति ज्ञापयति । पुनश्च साध्यासाध्यत्वमाह—अकृत्स्नेति । यस्य च सर्वे उपद्रवा भवेयुः सोऽप्यसाध्यः । 'अकृत्स्नोपद्रवम्' इत्यादिकं माधवेन गृहीतं पुस्तकांतरेषु दृष्ट्वालिखितमिति ॥ १४–१८ ॥ इत्यातंकदर्पणे निदानव्याख्यायां वातरक्तनिदानम् ॥ २३ ॥

वातव्याधिविशेषत्वादूरुस्तंभमाह—तस्य निदानपूर्वं संप्राप्तिमाह—शीतेति । शीतोष्णादिग्रहणमनुक्तपरस्परविरोधिद्वंद्वदोषोपलक्षणार्थम्, तेन गुरुस्निग्धाभ्यां लघुरूक्षयोर्ग्रहणं बोद्धव्यमिति जेज्जटः । संशुष्कं कठिनम्, द्रवविरोधित्वात् ॥ जीर्णाजीर्णे इति । प्रभूतं जीर्णम्, स्तोकमजीर्णमित्याहुः । तस्मिन् भोजने इति शेषः । अत एव दृढबलेन 'जीर्णाजीर्णे समश्नतः' इति पठितम् । आयासो व्यायामः, स्वप्नं दिवा जागरणम् ॥ १ ॥ सश्लेष्ममेदःपवन इति । संश्लेष्ममेदश्चासौ पवनश्च सश्लेष्ममेदःपवनः, अत्यर्थ-

सक्थ्यस्थिनी प्रपूर्यान्तः श्लेष्मणा स्तिमितेन च ॥
तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ ३ ॥
परकीयाविव गुरू स्यातामतिभृशव्यथौ ॥
ध्यानाङ्गमर्दस्तैमित्यतन्द्राच्छर्द्यरुचिज्वरैः ॥ ४ ॥
संयुक्तौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः ॥
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥ ५ ॥
प्राग्रूपं तस्य निद्रातिध्यानं स्तिमितता ज्वरः ॥
रोमहर्षोऽरुचिश्छर्दिर्जङ्घोर्वोः सदनं तथा ॥ ६ ॥
वातशङ्किभिरज्ञानात्तस्य स्यात्स्नेहनात्पुनः ॥
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥ ७ ॥

---

मधुकोशव्याख्या ।

समेदश्चासौ पवनश्चेति समेदःपवनः । इतरं दोषं पित्तम् । अस्यां संप्राप्तौ वातस्य प्राधान्यमुक्तम्, अत एव सुश्रुते महावातव्याधावयं रोगः पठितः । चरके तु कफप्राधान्यमुक्तम् । यदाह-"ऊरू श्लेष्मा समेदस्को वातपित्तेऽभिभूय तु" इत्यादि । तत्र चरके आवरकस्य श्लेष्मणः प्राक् चिकित्स्यत्वेन प्राधान्यम्, आरम्भकत्वेन तु सुश्रुते पवनस्येति न विरोधः। परकीयावित्यनेन उत्क्षेपणगमनादिष्वप्रभुत्वं दर्शयति। ध्यानादिभिर्ज्वरान्तैरुपलक्षितः पुरुष इति शेषः ॥ १-६ ॥ वातशङ्किभिरिति। सुप्तिसंकोचकम्पादिवातरोगसदृशलिङ्गदर्शनात् तच्छङ्किभिः अज्ञानादनिश्चयात्, मोहादिती-

आतङ्कदर्पणव्याख्या ।

संचितमितरं दोषं पित्तम्, अस्यां सम्प्राप्तौ वातस्य प्राधान्यत्वमुक्तम्, अत एव सुश्रुते महावातव्याधावयं पठितः । चरके तु कफप्राधान्यम् । आरंभकत्वेन तु सुश्रुते पवनस्येति न विरोधः॥२॥ स्तिमितेन मंदेन, स्तभ्नाति स्तंभयति, अचेतनौ स्पर्शज्ञानरहितौ । परकीयाविवेत्यनेन उत्क्षेपणगमनादिष्वप्रभुत्वं दर्शयति । ध्यानादिभिः ज्वरांतैरुपलक्षितः, पुरुष इति शेषः । अपरे आढ्यवातमाहुः ॥ ३ ॥ ४ ॥ ५ ॥ प्राग्रूपमाह-प्रागिति ॥ ६ ॥ तस्यानुपशयमाह-वातेति । सुप्तिसंकोचकम्पादिवातरोगसदृशलिंगदर्शनात्तच्छंकिभिर्वातरोगोयमिति भ्रमः, अज्ञानादनियमात्, स्नेहवात् अभ्यंगादेः तत्रोपशयानुपशयज्ञानार्थं स्नेहनम् । यदुक्तम्-"गूढलिंगं व्याधिमुपशयानुपशयाभ्यां परीक्षेत" इति । ततः स्नेहनादनुपशयो भवतीत्याह-पादयोरित्यादि ।

जंघोरुग्लानिरत्यर्थं शश्वच्चादाहवेदने ॥
पादं च व्यथते न्यस्तं शीतस्पर्शं न वेत्ति च ॥ ८ ॥
संस्थाने पीडने गत्यां चालने चाप्यनीश्वरः ॥
अन्यनेयौ हि संभग्नावूरू पादौ च मन्यते ॥ ९ ॥
यदा दाहार्तितोदार्तो वेपनः पुरुषो भवेत् ॥
ऊरुस्तम्भस्तदा हन्यात्साधयेदन्यथा नवम् ॥ १० ॥

इति श्रीमाधवकरविरचिते माधवनिदाने ऊरुस्तम्भनिदानं समाप्तम् ॥ २४ ॥

---

मधुकोशव्याख्या ।

शानः। तत्रोपशयानुपशयज्ञानार्थं स्नेहनं, यदुक्तं-"गूढलिङ्गं व्याधिमुपशयानुपशयाभ्यां परीक्षेत" इति। ततः स्नेहनादनुपशयो भवतीत्याह-पादयोरित्यादि। उद्धरणमूर्ध्वचालनम्। आदाहवेदने इति आङ् ईषदर्थे; अन्ये त्वीषदर्थ एव नञमाहुः, उद्धूतदाहस्यासाध्यत्वेन वक्ष्यमाणत्वात्। 'आनाहवेदने' इति पाठान्तरमयुक्तम्, चरकटीकाकारैः सर्वैरव्याख्यातत्वात्। व्याधिस्वभावादयं चोरुस्तम्भ एक एव त्रिदोषारब्धः न तु वातादिभेदादनेकविधः। उक्तं हि चरके व्याधिसंख्यायाम्-'एक एवोरुस्तम्भः' इति। संभग्नाविव संभग्नौ ॥ ७-१० ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामूरुस्तम्भनिदानं समाप्तम् ॥ २४ ॥

आतङ्कदर्पणव्याख्या ।

उद्धरणम् ऊर्ध्वचालनम् ॥ शश्वच्चादाहवेदनेति । आङ् ईषदर्थे, अन्ये त्वीषदर्थे नञमाहुः। उद्धूतदाहस्यासाध्यत्वेन वक्ष्यमाणत्वात् । 'आनाहवेद (प) ने' इति पाठांतरं न युक्तम्, चरकटीकाकारैः सर्वैरव्याख्यातत्वात्। व्याधिस्वभावादयं चोरुस्तंभ एक एव त्रिदोषारब्धः, न तु वातादिभेदादनेकविधः । असाध्यत्वमाह-यदेति ॥ अन्यथेति । पूर्वोक्तैरुपद्रवै रहितं चोत्पन्नमात्रमेव ॥ ७-१० ॥ इत्यातंकदर्पणे निदानव्याख्यायामूरुस्तंभनिदानम् ॥ २४ ॥

---

# अथामवातनिदानम् २५.

विरुद्धाहारचेष्टस्य मन्दाग्नेर्निश्चलस्य च ॥
स्निग्धं भुक्तवतो ह्यन्नं व्यायामं कुर्वतस्तथा ॥ १ ॥
वायुना प्रेरितो ह्यामः श्लेष्मस्थानं प्रधावति ॥
तेनात्यर्थं विदग्धोऽसौ धमनीः प्रतिपद्यते ॥ २ ॥
वातपित्तकफैर्भूयो दूषितः सोऽन्नजो रसः ॥
स्रोतांस्यभिष्यन्दयति नानावर्णोऽतिपिच्छिलः ॥ ३ ॥

मधुकोशव्याख्या ।

ऊरुस्तम्भे वायुः साम इत्युक्तम्, अतस्तदनन्तरमामवातमाह—विरुद्धेत्यादि । विरुद्धाहारः संयोगादिविरुद्धः, विरुद्धा च चेष्टा यथा—अजीर्णे व्यायामव्यवायजलप्रतरणादि । स्निग्धं भुक्तवतो व्यायामं कुर्वत इति मिलितो हेतुः । श्लेष्मस्थानमामाशयसन्ध्यादि तेन वातेन विदग्धो दूषितोऽसावामो धमनीः प्रतिपद्यते, धमनीभिः प्रतिपद्यत इति पाठान्तरे श्लेष्मस्थानमिति योज्यम् । सोऽन्नजो रस इति आमः, अन्नरसस्यैवापक्वस्य तन्त्रान्तरे आमव्यपदेशात् । यदुक्तं—"ऊष्मणोऽल्पबलत्वेन धातुमांद्यमपाचितम्" इत्यादि । अन्यैरप्युक्तम्—"आमाशयस्थः कायाग्नेर्दौर्बल्यादवि-

आतङ्कदर्पणव्याख्या ।

ऊरुस्तंभे वायुः साम इत्युक्तम्, अतस्तदनंतरमामवातनिदानमाह—विरुद्धेति । विरुद्धाहारचेष्टस्य तथा मंदाग्नेरेवंविधस्य पुरुषस्य निश्चलस्य व्यापाररहितस्य, विरुद्धाहारः क्षीरमत्स्यादिः संयोगादिविरुद्धः । विरुद्धा चेष्टाऽजीर्णे चाहारविधिः, ततोऽधिकव्यायामव्यवायजलप्रतरणादिकम् । स्निग्धमन्नं भुक्तवतो व्यायामं कुर्वत इति मिलितो हेतुर्न पृथक्त्वेन । आमवाते विगतव्यायामत्वात् । अन्ये व्यायामं वाप्यकुर्वत इत्यादि पठंति । तन्नातियुक्तम्, निश्चलस्येत्यनेनैव लब्धत्वात् । श्लेष्मस्थानं प्रधावति । आमाशय उरःशिरःकंठसंधय इति । श्लेष्मस्थाननिचितेन वातेन विदग्धो दूषित आमो धमनीः शिराः प्रतिपद्यते 'धमनीभिः प्रपद्यते' इति पाठांतरम्, तत्र श्लेष्मस्थानमिति योज्यम् । अपक्वस्यैवाम इति संज्ञा अन्नरसस्यैवाऽपक्वस्य तंत्रांतरे आम इति व्यपदेशात् । यदुक्तम्—"ऊष्मणोल्पबलत्वेन धातुमांद्यमपाचितम् । दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ जठरानलदौर्बल्यादविपक्वस्तु यो रसः । स आमसंज्ञको देहे सर्वरोगप्रकोपकः" इति । अन्यैरप्युक्तम्—"आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः । आद्य आहारधातुर्यः स आमः परिकीर्तितः ॥" अन्यत्रापि—"अविपक्वमसंयुक्तं दुर्गन्धं बहु पिच्छिलम् । सदनं सर्वगात्राणामाम इत्यभिधीयते ॥" । तथापरे—"अविपक्वरसं केचित्केचित्तं मलसंचयम् । प्रथमं दोषदुष्टिं वा केचिदामं प्रचक्षते ॥" इति ॥ १ ॥ २ ॥ त्रिभिर्दोषैरतिशयदूषितोन्नरसः स्रोतांस्यभिष्यंदयति लिंपति

जनयत्याशु दौर्बल्यं गौरवं हृदयस्य च ॥
व्याधीनामाश्रयो ह्येष आमसंज्ञोऽतिदारुणः ॥ ४ ॥
युगपत्कुपितावन्तस्त्रिकसन्धिप्रवेशकौ ॥
स्तब्धं वा कुरुतो गात्रमामवातः स उच्यते ॥ ५ ॥
अङ्गमर्दोऽरुचिस्तृष्णा आलस्यं गौरवं ज्वरः ॥
अपाकः शून्यताङ्गानामामवातस्य लक्षणम् ॥ ६ ॥
स कष्टः सर्वरोगाणां यदा प्रकुपितो भवेत् ॥
हस्तपादशिरोगुल्फत्रिकजानूरुसन्धिषु ॥ ७ ॥

---

मधुकोशव्याख्या ।

पाचितः । आद्य आहारधातुर्यः स आम इति कीर्तितः" इति । अपरे त्वाहुः,—"अविपक्कमसंयुक्तं दुर्गन्धं बहु पिच्छिलम् । सदनं सर्वगात्राणामाम इत्यभिधीयते" इति । अन्ये त्वाहुः—"आहारस्य रसः शेषो यो न पक्वोऽग्निलाघवात् । स मूलं सर्वरोगाणामाम इत्यभिधीयते" इति । तथाचापरे—"आममन्नरसं केचित्केचित्तु मलसंचयम् । प्रथमां दोषदुष्टिं च केचिदामं प्रचक्षते" इति । नानावर्ण इति वातादिदूषितत्वाद्बहुवर्णः । युगपदित्यादि, वातकफौ युगपत्कुपितावन्तःकोष्ठे त्रिकसन्धिप्रवेशकौ भवतः, अथवा गात्रं स्तब्धं कुरुतः, त्रिकसन्धिषु प्रवेशस्तद्गतवेदनया बोध्यः ॥ १–५ ॥ आमवातसामान्यलक्षणमाह—अङ्गमर्द इत्यादि ॥ ६ ॥ ७ ॥

आतङ्कदर्पणव्याख्या ।

अतिपिच्छिलत्वात् । नानावर्ण इति । वातादिदूषितत्वाद्बहुवर्णः । ततो वह्नेर्मंदत्वं जायति, हृदये गौरवं भवति, तस्य स्थानत्वात् । सर्वेषां रोगाणामयमेव कारणीभूतो आमसंज्ञकः ॥३॥४॥तस्यैव रूपमाह—युगपदिति।युगपदेकभागमेव कुपितौ वातकफौ अंतःकोष्ठे त्रिकसंधिप्रवेशकौ भवतः । त्रिके कटिमन्याशयसन्धी, तत्र तथा संधिषु प्रविश्य, अथवा गात्रस्तब्धं कुरुतः, त्रिषु संधिप्रवेशश्च तद्गतवेदनयाबोद्धव्यः॥ ५ ॥स आमवातः कथ्यते।आमवातस्य सामान्यलक्षणमाह—अंगेति।अंगमर्दोंगभंगः, अरुचितृष्णे प्रसिद्धे, आलस्ययुक्तमंगगौरवं ज्वरश्च । अपाक आहारस्य, अंगानां शून्यत्वम् एतदामवातस्य स्वरूपकथनम् ॥ ६ ॥ तस्यैवाऽतिप्रवृद्धस्य लक्षणमाह—स इति । आमवातो यदा कुपितो भवति, तदा सर्वरोगाणां मध्ये कष्टतमः कृच्छ्रसाध्यः स्यादित्यर्थः । हस्तपादादीनां संधिषु सरुजं श्वयथुं कुर्यात् । संधिमेव पृथग्व्याख्यानयंति, गुल्फौ चरणोपरिग्रंथी, त्रिकं स्फिक्-

करोति सरुजं शोथं यत्र दोषः प्रपद्यते ॥
स देशो रुज्यतेऽत्यर्थं व्याविद्ध इव वृश्चिकैः ॥ ८ ॥
जनयेत्सोऽग्निदौर्बल्यं प्रसेकारुचिगौरवम् ॥
उत्साहहानिं वैरस्यं दाहं च बहुमूत्रताम् ॥ ९ ॥
कुक्षौ कठिनतां शूलं तथा निद्राविपर्ययम् ॥
तृट्छर्दिभ्रममूर्च्छाश्च हृद्ग्रहं विड्विबद्धताम् ॥
जाड्यान्त्रकूजमानाहं कष्टांश्चान्यानुपद्रवान् ॥ १० ॥
पित्तात्सदाहरागं च सशूलं पवनानुगम् ॥
स्तिमितं गुरु कण्डूं च कफदुष्टं तमादिशेत् ॥ ११ ॥
एकदोषानुगः साध्यो द्विदोषो याप्य उच्यते ॥
सर्वदेहचरः शोथः स कृच्छ्रः सान्निपातिकः ॥ १२ ॥

**इति श्रीमाधवकरविरचिते माधवनिदाने आमवातनिदानं समाप्तम् ॥ २५ ॥**

---

मधुकोशव्याख्या ।

अस्यैवातिवृद्धस्य लक्षणमाह—स इति । वृश्चिकैः करीषजकीटविशेषैः । स इति आमवातः । जाड्यमकर्मण्यत्वम् । अन्यानुपद्रवान् संकोचखञ्जत्वादीन् ॥८–१०॥ तस्य विशेषलक्षणान्याह—पित्तादित्यादि । तस्य साध्यत्वादिकमाह—एकेत्यादि ॥ ११ ॥ १२ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामामवातनिदानं समाप्तम् ॥ २५ ॥

आतङ्कदर्पणव्याख्या ।

पृष्ठसंन्धिः, ऊरुजंघादेशः, स देशो वृश्चिकैः सविषकीटविशेषैर्व्याविद्धो दष्ट इवात्यर्थं रुज्यते तुद्यते ॥ ७ ॥ ८ ॥ उपद्रवानाह—अग्निमांद्यं जनयेत्, प्रसेको लालास्रावः, अरुचिगौरवं प्रसिद्धम्, उत्साहहानिं कर्माक्षमत्वम्, वैरस्यादयः प्रसिद्धाः॥९॥कुक्षौ काठिन्यम्, शूलम्, कुक्षावेव निद्राविपर्ययो निद्रानाशः, तृडादयः प्रसिद्धाः, विड्विबद्धता विड्ग्रहः, जाड्यम् अंगानामकर्मण्यता, अन्ये जाड्यं कर्कशत्वमित्याहुः। आनाह ऊर्ध्वाधोभागनिरोधिता॥ अन्यानुपद्रवानिति वातव्याधिनिदानोक्तान् ॥ १० ॥ पित्तादियुक्तस्य विशेषलक्षणमाह—पित्तादिति । यदा पित्तेन मिलितो भवति, तदा दाह रोगवान् भवति, यदि तु वातानुगं, तदा सशूलं सव्यथं जानीयात् । यद्यप्यामो वातेन नीयमानस्तथापि प्रदेशस्थितेन मिलितत्वात् तेनैवानुगतत्वमिति । स्तिमितं जडम्, गुरुं गौरवयुक्तम्, कंडूमंतं, कफोत्तरं जानीयात्। साध्यासाध्यत्वमाह—एकदोषानुग इति । सुगमम् ॥ ११ ॥ १२ ॥ इत्यातंकदर्पणे निदानव्याख्यायामामवातनिदानम् ॥ २५ ॥

# अथ शूलपरिणामशूलान्नद्रवशूलनिदानम् २६.

**दोषैः पृथक् समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् ॥**
**सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः ॥ १ ॥**
**व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात् ॥**
**कलायमुद्गाढकिकोरदूषादत्यर्थरूक्षाध्यशनाभिघातात् ॥ २ ॥**

---

मधुकोशव्याख्या ।

आमवाते शूलं भवतीत्यतस्तदनन्तरं शूलनिदानम्। ज्वरादिवत् शूलस्यापि प्रागुत्पत्तिरस्ति। यदाह हारीतः—"अनङ्गनाशाय हरस्त्रिशूलं मुमोच कोपान्मकरध्वजश्च। तमापतन्तं सहसा निरीक्ष्य भयार्दितो विष्णुतनुं प्रविष्टः॥ स विष्णुहुङ्कारविमोहितात्मा पपात भूमौ प्रथितः स शूलः। स पञ्चभूतानुगतं शरीरं प्रदूषयत्यस्य हि पूर्वसृष्टिः" इति। एतेन शूलसंभवत्वादस्य शूलसंज्ञा, शूलनिखातवद्वेदनाजनकत्वाच्च। यदाह वृद्धसुश्रुतः—"शंकुस्फोटनवत्तस्य यस्मात्तीव्रातिवेदना। शूलासक्तस्य भवति तस्माच्छूलमिहोच्यते" इति। कफपित्तादिशूलेष्ववश्यंभावी वायुरित्याह—सर्वेष्वित्यादि। प्रभुः कर्ता ॥ १ ॥ वातिकमाह—व्यायामेत्यादि। शीतजलातिपानात् शीतलजलस्य प्रभूतपानात्। आढकी तुवरी, कोरदूषः कोद्रवः, विरूढजान्नम् अंकुरितधान्यकृतमन्नम्, विरुद्धं क्षीरमत्स्यादि, वल्लूरं शुष्कमांसम्। यद्यपि सर्वैरेव वातकोपैर्वातशूलं स्यात्तथापि व्यायामादिपाठेनैतद्दर्शयति—व्यायामादयो यथा वातहेतवस्तथा शूलहेतवोऽपीति; दोषव्याधिहेतव इत्यर्थः। एवं पित्तश्लेष्मादिष्वपि द्रष्ट-

आतङ्कदर्पणव्याख्या।

आमवाते च शूलं भवति, अतस्तदनंतरं शूलनिदानमाह—ज्वरादिवच्छूलस्यापि प्रागुत्पत्तिरस्ति। यदुक्तं हारीते—"अनंगनाशाय हरस्त्रिशूलं मुमोच कोपान्मकरध्वजश्च। तमापतंतं सहसा निरीक्ष्य भयार्दितो विष्णुतनुं प्रविष्टः॥ स विष्णुहुंकारविमोहितात्मा पपात भूमौ प्रथितः स शूलः। स पंचभूतानुगतं शरीरं प्रदूषयत्यस्य हि पूर्वसृष्टिः॥" इति। स च देहिनां शरीरं दूषयत्यस्य हि प्रागुत्पत्तिरिति। अत एवास्य शूलिसंभवत्वात् शूल इति संज्ञा, शूलनिखात इव वेदनाजनकत्वात्। यदाह वृद्धसुश्रुतः—"शंकुस्फोटनवत्तस्य यस्मात्तीव्रा च वेदना। शूलासक्तस्य भवति तस्माच्छूलमिहोच्यते॥" संख्यायां संप्राप्तौ च कफपित्तादिशूलेष्वपि वायोः प्राधान्यमित्यत आह—दोषैरिति। प्रभुः कर्त्ता ॥ १ ॥ वातिकमाह—व्यायामो मल्लयुद्धादिः, यानं तुरगरथादि, मैथुनं स्त्रीसेवा, प्रजागरं रात्रौ, एषामतियोगात्, शीतजलस्य प्रभूतपानात्, कलायस्त्रिपुटः, आढकी तुवरी, कोरदूषः कोद्रवः, अत्यर्थरूक्षद्रव्यसेवा, अध्यशनं भुक्तस्योपरिभोजनम्।

कषायतिक्तातिविरूढजान्नविरुद्धवल्लूरकशुष्कशाकात् ॥
विट्शुक्रमूत्रानिलवेगरोधाच्छोकोपवासादतिहास्यभाष्यात् ॥३॥
वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पार्श्वपृष्ठत्रिकवस्तिदेशे ॥
जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम् ॥ ४ ॥
मुहुर्मुहुश्चोपशमप्रकोपी विड्वातसंस्तम्भनतोदभेदैः ॥
संस्वेदनाभ्यञ्जनमर्दनाद्यैः स्निग्धोष्णभोज्यैश्च शमं प्रयाति ॥५॥
क्षारातितीक्ष्णोष्णविदाहितैलनिष्पावपिण्याककुलत्थयूषैः ॥
कट्वम्लसौवीरसुराविकारैः क्रोधानलायासरविप्रतापैः ॥ ६ ॥

---

मधुकोशव्याख्या ।

व्यम् । जीर्णे इत्याहारे, घनागमे वर्षासु, मेघोदये च; मुहुर्मुहुरुपशमप्रकोपौ वायोश्चलत्वेन ॥२-५॥ पैत्तिकमाह-क्षारेत्यादि । क्षारो यवक्षारादिः मुष्ककादिकृतक्षारद्रव्यं च, तीक्ष्णोष्णं मरिचराजिकादि, विदाहि वंशकरीरादि, तैलं तिलविकृतिः, निष्पावः शिम्बिः, पिण्याकः निःस्नेहसर्षपादिकल्कः, कुलत्थयूषोऽत्र कुलत्थान्नपानोपलक्षणः । सौवीरं सन्धानविशेषः । रविप्रतापो रौद्रः । ग्राम्यातियोगो मैथुनातिसेवा । विदाहीति पूर्वं पठित्वापि अशनैर्विदग्धैरित्यनेनाविदाहिवस्तुनोऽपि दोषवशेन विदाहित्वं

आतङ्कदर्पणव्याख्या ।

अभिघातो लोष्टादिभिः ॥ २ ॥ कषायतिक्तरससेवा, विरूढान्नमंकुरितधान्यकृतमन्नम्, विरुद्धं मत्स्यक्षीरादि, वल्लूरं शुष्कमांसम्, शुष्कशाकं प्रसिद्धम् । यद्यपि सर्वैरेव वातकोपनैः वातशूलं स्यात्, तथापि व्यायामादिपाठेनैतद्बोधयति । यथा व्यायामादयो वातहेतवः, तथा शूलस्यापि हेतव इति दोषव्याधिहेतव इत्यर्थः । एवं पित्तशूलादिषु द्रष्टव्यम् । शोको बंधुवियोगात्, उपवासः अभोजनम्, अतिहासः, अट्टाट्टहासः, अतिभाष्यं बहुप्रलपनम्, । एतैः कारणैर्दुष्टो वायुः शूलं कुर्यात् ॥३॥ स्थानसंश्रयमाह-हृत् हृदयं,पार्श्वं, पृष्ठत्रिकम् स्फिक्कटिसंधिः, वस्तिः मूत्राशयः, वायोः स्थानत्वात् । जीर्णे आहारे, प्रदोषे संध्यासमये, घनागमे वर्षागमे, शीते शीतकाले, एतेष्वधिकं प्रकोपं प्रयाति ॥ ४ ॥ मुहुर्मुहुरुपशमप्रकोपौ वायोश्चंचलत्वात्, मुहुर्मुहुः वारंवारं प्रकोपोपशमौ भवतः । विड्वातसंस्तंभनतोदभेदः, पुरीषादीनां यदा स्तंभः, तदा प्रकोपः, यदा च तेषां प्रवृत्तिस्तदोपशमः, भेदोऽभिघात इव । एतदुपलक्षणम् । यदा तोदभेदौ, तदा प्रकोपः, शांतिरुपशयः । उपशयमाह-संस्वेदनाभिः शमं शांतिं प्रयाति स्निग्धोष्णभोज्यैर्भोजनैश्च ॥ ५ ॥ पैत्तिकमाह-क्षारेति । क्षारो यवक्षारादिः मुष्ककादिकृतक्षारश्च, तीक्ष्णोष्णं मरिचराजिकादि, विदाहि वंशकरीरादि, तैलं तैलविकृतिः, निष्पावः शिम्बिः, पिण्याको

ग्राम्यातियोगादशनैर्विदग्धैः पित्तं प्रकुप्याशु करोति शूलम् ॥
तृण्मोहदाहार्तिकरं हि नाभ्यां संस्वेदमूर्च्छाभ्रमचोषयुक्तम् ॥ ७॥
मध्यन्दिने कुप्यति चार्धरात्रे विदाहकाले जलदात्यये च ॥
शीते च शीतैः समुपैति शान्ति सुस्वादुशीतैरपि भोजनैश्च ॥ ८॥
आनूपवारिजकिलाटपयोविकारै-
र्मांसेक्षुपिष्टकृशरातिलशष्कुलीभिः ॥
अन्यैर्बलासशनकैरपि हेतुभिश्च
श्लेष्मा प्रकोपमुपगम्य करोति शूलम् ॥ ९ ॥

---

मधुकोशव्याख्या ।

दर्शितम् । यदाह सुश्रुतः—"स्रोतस्यन्नवहे पित्तमग्नौ वा यस्य तिष्ठति । विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते" इति । विदाहकाल इत्याहारस्य जलदात्यये शरदि ॥ ६–८ ॥ श्लैष्मिकमाह—आनूपेत्यादि । आनूपवारिजं मांसादिकम्, किलाटं तक्रकूर्चिका. कृशरा तिलतण्डुलमाषयवागूः । सूर्योदये प्रातः । कुसुमागमे

आतङ्कदर्पणव्याख्या ।

निःस्नेहस्तिलकल्कः" खलिरिति लोके, कुलत्थयूषोत्र कुलत्थान्नपानोपलक्षणः । कटुः कटुकरसः अम्लश्च सौवीरं संधानविशेषः । अन्ये कांजिकम् । सुराविकारः शालिषष्टिकपिष्टैः कृतं मद्यं सुरा तस्याविकारः । पुनर्नवाशालिपिष्टैः कृता श्वेतसुरा, विभीतकत्वक्शालितण्डुलपिष्टैस्तु विभीतिका सुरा इत्यादि । क्रोधः कोपः, अनलो वह्निसेवा, आयासः श्रमकारि कर्म, रविप्रतापोऽतिघर्मः ॥६॥ ग्राम्यातियोगः मैथुनातिसेवा, अशनैर्विदग्धैरित्यनेनाविदाहिवस्तुनोऽपि दोषवशेन विदाहित्वं दर्शितम् । यदाह–सुश्रुतः—"स्रोतस्यन्नवहे पित्तमग्नौ वा यस्य तिष्ठति । विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते" इति । एभिः कारणैर्दुष्टपित्तं शूलं जनयेत् । तृट् तृषा, मोहो नष्टचित्तता, दाहः प्रसिद्धः । नाभ्यां पित्तशूलस्य स्थानत्वात् । स्वेदादयः प्रसिद्धाः, चोषः चुष्यत इव वेदनाविशेषः, एतैर्युक्तम् ॥ ७ ॥ मध्यं दिने अर्द्धरात्रे च कोपं याति विदाहकालः आहारस्य पाकावस्थिकः, निदाघकाले इति पाठान्तरम् । जलदात्यये शरदि, शीते शीतकाले, शीतवीर्यैः सुस्वादुशीतैः मधुरशीतभोजनैश्च शांतिं गच्छति ॥ ८ ॥ श्लैष्मिकमाह—आनूपेति । आनूपमांसं जलप्रदेशचारिणां मांसं वारिजं मत्स्यादीनां जलचराणां मांसम्, किलाटः तक्रकूर्चिका[1], अन्ये सद्यः प्रसूतमहिषीक्षीरकृतमाहुः । पयोविकारः पायसं दध्यादि, मांसं ग्राम्यमांसम् । इक्षुरिति इक्षुविकारैः, पिष्टमिति पिष्टान्नम्, कृशरा तिलतंडुलमाषयवागूः, एतैः श्लेष्मजननैः श्लेष्मप्रकोपं

---

१ तक्रभेदः ।

हृल्लासकाससदनारुचिसंप्रसेकै-
रामाशये स्तिमितकोष्ठशिरोगुरुत्वैः ॥
भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रं
सूर्योदयेऽथ शिशिरे कुसुमागमे च ॥ १० ॥
सर्वेषु दोषेषु च सर्वलिङ्गं विद्याद्भिषक्सर्वभवं हि शूलम् ॥
सुकृष्टमेनं विषवज्रकल्पं विवर्जनीयं प्रवदन्ति तज्ज्ञाः ॥११॥
आटोपहृल्लासवमीगुरुत्वस्तैमित्यकानाहकफप्रसेकैः ॥
कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शूलमुदाहरन्ति ॥१२॥
द्विदोषलक्षणैरेतैर्विद्याच्छूलं द्विदोषजम् ॥
वस्तौ हृत्पार्श्वपृष्ठेषु स शूलः कफवातिकः ॥
कुक्षौ हृन्नाभिमध्येषु स शूलः कफपैत्तिकः ॥ १३ ॥

---

मधुकोशव्याख्या ।

वसन्ते ॥ ९-११ ॥ आमशूलमाह—आटोपेत्यादि । कफस्य लिङ्गेन कफशूलोक्तलिङ्गेन ॥ १२ ॥ वातपैत्तिकश्चरकोक्तवातपैत्तिकशूलस्थाने द्रष्टव्यः । एवं सान्निपातिकोऽपि उक्तदोषत्रयस्थाने । यदुक्तं—"वातात्मकं वस्तिगतं वदन्ति पित्तात्मकं चापि वदन्ति नाभ्याम् । हृत्पार्श्वकुक्षौ कफसन्निविष्टं सर्वेषु देशेषु च सन्निपातात्"

आतङ्कदर्पणव्याख्या ।

प्राप्य शूलं कुर्यात् ॥ ९ ॥ उपद्रवानाह—हृल्लासेति । हृल्लास उपस्थितवमनत्वमिव' सदनं गात्रभंगः, संप्रसेको लालास्रावः । आमाशये रुजं कुरुत इति योज्यम् । स्तिमितकोष्ठमिति बद्धकोष्ठता, सूर्योदये प्रातः, पुष्पागमे वसंते, एतेषु कालेष्वविशेषेण कुप्यति ॥ १० ॥ सान्निपातिकमाह—सर्वेष्विति । त्रिदोषाणां मिलितैर्लक्षणैस्त्रिदोषजं जानीयात् । सुकष्टम् असाध्यम्, विषवज्रतुल्यं मारणात्मकत्वात् ॥११॥ आटोपो गुडगुडाशब्दः, सरुक् गुरुत्वम्, स्तैमित्यम्, उदरे आनाह ऊर्द्धाधोवातनिरोधः, कफप्रसेकः कफस्रावः । कफस्य लिंगेनेति श्लैष्मिकशूलोक्तिलिंगेन तमामोद्भवं शूलं जानीयात् ॥ १२ ॥ द्विदोषजमाह—द्विदोषेति । द्विदोषजैर्लक्षणैर्द्विदोषं जानीयात् इत्यर्थः । वातकफस्य स्थानसंश्रयत्वेनोपद्रवानाह—वस्ताविति । वस्तौ मूत्राशये,

---

१ एतच्च 'विषवज्रतुल्यम्' इति पाठाभिप्रायेण ।

दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिकः ॥
एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः ॥ १४ ॥
सर्वदोषोत्थितो घोरस्त्वसाध्यो भूर्युपद्रवः ॥
स्वैर्निदानैः प्रकुपितो वायुः सन्निहितस्तदा ॥ १५ ॥
कफपित्ते समावृत्य शूलकारी भवेद्बली ॥
भुक्ते जीर्यति यच्छूलं तदेव परिणामजम् ॥ १६ ॥

मधुकोशव्याख्या ।

इति ॥ साध्यत्वादिलक्षणमाह—एकेत्यादि । भूर्युपद्रवः उपद्रवास्तु तृष्णादयः । यदुक्तं—"वेदना च तृषा मूर्च्छा आनाहो गौरवारुची । कासः श्वासश्च हिक्का च शूलस्योपद्रवाः स्मृताः" इति ॥ परिणामशूलमाह—स्वैरित्यादि । अस्य च त्रिदोषजस्यापि नियतपरिणामकालसंभवत्वेन पित्तोल्बणत्वं द्रष्टव्यम् । यदुक्तमन्यत्र-"बलासः प्रच्युतः स्थानात्पित्तेन सह मूर्च्छितः । वायुमादाय कुरुते शूलं जीर्यति भोजने ॥ कुक्षौ जठरपार्श्वेषु नाभौ वस्तौ स्तनान्तरे । पृष्ठमूलप्रदेशेषु सर्वेष्वेतेषु वा पुनः ॥ भुक्तमात्रेऽथवा वान्ते जीर्णेऽन्ने च प्रशाम्यति । षष्टिकव्रीहिशालीनामोदनेन विवर्धते ॥ तत्परिणामजं शूलं दुर्विज्ञेयं महागदम् । तमाहू रसवाहानां स्रोतसां दुष्टिहेतुकम् ॥ केचिदन्नद्रवं प्राहुरन्ये तत्पक्तिदोषतः । पक्तिशूलं वदन्त्येके केचिदन्नविदाहजम्" इति । भुक्ते जीर्यति आहारे पच्यमाने ॥ १३—१६ ॥ तस्य वाता-

आतङ्कदर्पणव्याख्या ।

पार्श्वयोर्द्वयोः ॥ कफपैत्तिकमाह—कुक्षाविति । कुक्षावुदरे ॥ १३ ॥ वातपैत्तिकमाह—दाहेति । दाहः सर्वांगतापः, घोरो दारुणः, यदुक्तं तंत्रांतरे—"वातात्मकं वस्तिगतं वदंति पित्तात्मकं चापि वदंति नाभौ । हृत्पार्श्वकुक्षौ कफसन्निविष्टं सर्वेषु देशेषु च संनिपातात्" ॥ १४ ॥ साध्यासाध्यत्वमाह—भूर्य्युपद्रव इति । उपद्रवास्तृषादयः।यदुक्तं—"वेदना च तृषा मूर्च्छा आनाहो गौरवारुची। कासश्वासौ च हिक्का च शूलस्योपद्रवाः स्मृताः ॥" इति । परिणामशूलमाह—स्वैः कारणैः कुपितो बलवान्वातः सन्निहितो निकटो यदाऽभे कफपित्ते समावृत्य व्याप्य तिष्ठेत्, तदा शूलकारी भवेत् । अस्य च त्रिदोषजस्यापि नियतपरिणामकालसंबद्धत्वेन पित्तोल्बणत्वं द्रष्टव्यम् । यदुक्तमन्यत्र—"बलासः प्रच्युतः स्थानात्पित्तेन सह मूर्च्छितः । वायुमादाय कुरुते शूलं जीर्यति भोजने ॥ कुक्षौ जठरपार्श्वेषु नाभ्यां वस्तौ स्तनांतरे । पृष्ठमूलप्रदेशेषु सर्वेष्वेतेषु वा पुनः ॥ भुक्तमात्रेऽथवा वान्ते जीर्णे चान्ने प्रशाम्यति । षष्टिकव्रीहिशालीनामोदनेन विवर्द्धते ॥ परिणामभवं शूलं दुर्विज्ञेयं महागदम् । तमाहू रसवाहानां स्रोतसां दुष्टिहेतुकम्। किंचिदन्नद्रवं प्राहुरन्ये तत्पक्तिदोषजम् । पक्तिशूलं वदंत्येके केचिदन्नविदाहजम् ॥" इति ॥ १५ ॥ तस्य सामान्यलक्षणमाह—भुक्त इति ।

१ एतच्च 'तृष्णादाहारुचिरवेदम्' इतिपाठाभिप्रायेण ।

तस्य लक्षणमप्येतत्समासेनाभिधीयते ॥
आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः ॥ १७ ॥
स्निग्धोष्णोपशमप्रायं वातिकं तद्वदेद्भिषक् ॥
तृष्णादाहारतिस्वेदं कट्वम्ललवणोत्तरम् ॥ १८ ॥
शूलं शीतशमप्रायं पैत्तिकं लक्षयेद्बुधः ॥
छर्दिहृल्लाससंमोहं स्वल्परुग्दीर्घसन्तति ॥ १९ ॥
कटुतिक्तोपशान्तं च तच्च ज्ञेयं कफात्मकम् ॥
संसृष्टलक्षणं बुद्ध्वा द्विदोषं परिकल्पयेत् ॥ २० ॥
त्रिदोषजमसाध्यं तु क्षीणमांसबलानलम् ॥
जीर्णे जीर्यत्यजीर्णे वा यच्छूलमुपजायते ॥ २१ ॥

मधुकोशव्याख्या ।

दिभेदेन लक्षणान्याह—आध्मानेत्यादि । तृष्णादाहारतिस्वेदा यत्र सन्ति तत् तृष्णादाहारतिस्वेदम् । कट्वम्ललवणोत्तरं कट्वम्ललवणैर्वृद्धम् । शीतशमप्रायं शीतलोपशमबहुलम् । छर्दिहृल्लाससंमोहलिङ्गानि यस्मिन् सन्ति तच्छर्दिहृल्लाससंमोहम् । दीर्घसन्ततीति चिरानुबन्धि ॥ १७–२० ॥ त्रिदोषविकृतिविशेषमन्नद्रवाख्यं शूलमाह—जीर्ण इत्यादि । जीर्णे 'आहारे' इति शेषः । एवं जीर्यत्यजीर्णे वेति

आतङ्कदर्पणव्याख्या ।

आहारे पच्यमाने ॥ १६ ॥ वातिकमाह—आध्मानेति । आध्मानं ध्मातमिव वातेनोदरपूरणम् । आटोपो गुडगुडाशब्दवत्, विण्मूत्रयोरप्रवृत्तिः, अरतिः सुखाभावः, वेपनं कंपः, ॥ १७ ॥ स्निग्धैरुष्णैश्च शांतिं व्रजेत् । पैत्तिकमाह—तृष्णेति । आहारे पच्यमाने तृष्णादाहारुचिस्वेदा यस्मिन्, तत्तृष्णादाहारुचिस्वेदम्, कट्वम्ललवणोत्तरं कट्वम्ललवणैर्वृद्धम् ॥ १८ ॥ शीतशमप्रायम् । उपक्षयबहुलम् ॥ श्लैष्मिकमाह—छर्दीति । छर्दिहृल्लाससंमोहा यस्मिन्, इंद्रियार्थानामल्पा रुक् यस्मिन्, दीर्घसंतति चिरानुबंधि ॥ १९ ॥ कटुतिक्तैः रसैरुपशममेति ॥ द्विदोषजसान्निपातिकमाह—संसृष्टमिति ॥ २० ॥ क्षीणं मांसं बलम्, अनलो वह्निर्यत्र, तत् असाध्यत्रिदोषजविकृतिविशेषमन्नद्रवाख्यमाह—जीर्णेति । जीर्णे आहारे, तथा जीर्यति पच्यमाने, अपथ्येपि तथा भुक्तेपि

१ एतच्च 'तृष्णारुचिस्वेदाम्' इति पाठाभिप्रायेण ।

पथ्यापथ्यप्रयोगेण भोजनाभोजनेन च ॥
न शमं याति नियमात्सोऽन्नद्रव उदाहृतः ॥ २२ ॥
( अन्नद्रवाख्यशूलेषु न तावत्स्वास्थ्यमश्नुते ।
वान्तमात्रे जरत्पित्तं शूलमाशु व्यपोहति ॥ १ ॥ )

इति श्रीमाधवकरविरचिते माधवनिदाने शूलपरिणामशूलान्न-
द्रवशूलनिदानं समाप्तम् ॥ २६ ॥

---

## अथोदावर्तानाहनिदानम् २७.

वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः ॥
क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्तसंभवः ॥ १ ॥

---

मधुकोशव्याख्या ।

सर्वदेत्यर्थः । न शमं याति नोपशेते इत्यर्थः । न त्वसाध्यम्, चिकित्साविधानादिति ॥ ॥ २१-२२ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां शूलनिदानं समाप्तम् ॥ २६ ॥

उदावर्तेऽपि शूलं भवतीति शूलानन्तरमुदावर्तमाह—वातेत्यादि । अश्रमश्रु, इन्द्रियशब्देनात्र शुक्रम्, क्षुत् बुभुक्षा । धृत्या वेगविधारणेन । एते वातादयस्त्रयोदश नियमार्थम्; तेनान्येषां क्रोधादीनां वेगविधारणं न तद्धेतुः; स्वास्थ्यहेतुत्वात् । यदाह चरकः—"लोभशोकभयक्रोधमानवेगान्विधारयेत्" इत्यादि । सर्वोदावर्तेषु च वायुरेव कारणम् । यदाह सुश्रुतः—"सर्वेष्वेतेषु विधिवदुदावर्तेषु कृत्स्नशः । वायोः क्रिया विधातव्याः स्वमार्गप्रतिपत्तये" इत्यादि । उद्धूतन वेगविधारणेनावृतस्य वायोर्वर्तनमित्युदावर्तनिरुक्तिः । अन्ये तु वायोरूर्ध्वमावर्तो गमनमित्युदावर्तमाहुः, तन्न, अश्रु-

आतङ्कदर्पणव्याख्या ।

न शांतिं गच्छति सर्वदेत्यर्थः । प्रायेण त्रिदोषजविकृतित्वादसाध्यम् ॥ २१ ॥ २२ ॥ इत्यातंकदर्पणे निदानव्याख्यायां शूलान्नद्रवनिदानम् ॥ २६ ॥

उदावर्ते शूलं भवतीति शूलानंतरमुदावर्तारंभः । उदावर्त्तमाह—वातेति । एतेषां धृत्या वेगविधारणेन, अश्रु चक्षुर्जलम्, क्षवश्छिक्का, इंद्रियशब्देन शुक्रमुच्यते, क्षुत् क्षुधा, एते वातादयस्त्रयोदश नियमार्थाः, तेनान्येषामपि क्रोधादीनां विधारणं न तद्धेतुः,स्वास्थ्यहेतुत्वात् । यदुक्तं चरके—"लोभशोकभयक्रोधमानवेगान्विधारयेत्" इत्यादि सर्वेषूदावर्त्तेषु वायुरेव कारणम् । यदाह सुश्रुताचार्यः—"सर्वेष्वेतेषु विधिवदुदावर्तेषु कृत्स्नशः । वायोः क्रिया विधातव्याः स्वमार्गप्रति-

वातमूत्रपुरीषाणां सङ्गो ध्मानं क्लमो रुजा ॥
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ॥ २ ॥
आटोपशूलौ परिकर्तिका च सङ्गः पुरीषस्य तथोर्ध्ववातः ॥
पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ॥ ३ ॥
वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा ॥
विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥ ४ ॥
मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात्पवनात्मकाः स्युः ॥
तथाक्षिनासावदनामयाश्च भवन्ति तीव्राः सह कर्णरोगैः ॥ ५ ॥
आनन्दजं वाप्यथ शोकजं वा नेत्रोदकं प्राप्तममुञ्चतो हि ॥
शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन ॥ ६ ॥

मधुकोशव्याख्या ।

स्रावादेरव्यापकत्वात्; छत्रिणो गच्छन्तीति न्यायेन वा समाधानीयम् ॥ १ ॥ उक्तवाताद्युदावर्तानां क्रमेण लक्षणमाह--वातेत्यादि । अन्ये इति तोदशूलादयः । मेहनं शेफः । विनाम आनाहपीडया ( बन्धनवत्पीडया ) नतगात्रत्वम् । वंक्षणयोरानाहो बन्धनवत्पीडा । नेत्रोदकं अश्रु, प्राप्तमागतम्, अमुञ्चतो नरस्येति शेषः । चकारात्तन्त्रान्तरोक्तप्रतिश्यायहृद्रोगारुचिप्रभृतीनां ग्रहणम् । अर्धावभेदोऽर्धशिरःशूलम् ।

आतङ्कदर्पणव्याख्या ।

पत्तये ॥'' इति । उद्धूतेन वेगविधारणेनावृतस्य वायोरावर्तनमुदावर्त इति निरुक्तिः । अन्ये तु वायोरूर्ध्वमावर्त्तो गमनमित्युदावर्त इत्याहुः ॥ १ ॥ उक्तवाताद्युदावर्त्तानां क्रमेण लक्षणमाह—वातेति । अपानवातस्य धारणात्, आध्मानं ध्मातमिवोदरे, संगोऽप्रवृत्तिः, क्लमोऽनायासश्रमः, रुजा उदरे, अन्ये इति शूलतोदादयः ॥ २ ॥ पुरीषावरोधजमाह—आटोपेति । पुरीषवेगे धारिते सति आटोपः सरुक् गुडगुडाशब्दः । शूलमिति पक्वाशये, परिकर्तिका कर्त्तनवद्व्यथा, संगः पुरीषस्याप्रवृत्तिः, ऊर्ध्ववात उद्गारबाहुल्यम्, अथवा मुखात्पुरीषनिर्गमनम्, ऊर्ध्ववातादेव ॥ ३ ॥ मूत्रनिग्रहमाह—वस्तीति । मूत्रनिग्रहे विधारणे सति, वस्तौ मूत्राशये, मेहने मेढ्रे, व्यथा मूत्रकृच्छ्रमल्पमल्पं कष्टेन मूत्रप्रवर्तनम्, विनामः आनाहपीडया नतगात्रत्वम्, वंक्षणयोरूरुसंध्ययोः, आनाहः पूर्णत्वम् ॥ ४ ॥ जृंभाघातजमाह—मन्येति । शूलम्, मन्याकंठयोः स्तंभः, शिरोरोगाः पवनजाः, तथाक्षिनासादीनां पवनजा रोगाः स्युः, तीव्रा दारुणाः, तथा कर्णरोगाः स्युः—जृंभाविधारणात् ॥ ५ ॥ अश्रूदावर्तमाह—आनंदजामिति । नेत्रोदकमानंदजनितं शोकजं वा,

१ एतदाद्याः पञ्च श्लोका आतङ्कदर्पणसहितमुद्रितपुस्तके 'वायुः कोष्ठानुगो रूक्षैः' इत्यादित्रयोदशश्लोकान्त उपलभ्यन्ते ।

मन्यास्तम्भः शिरःशूलमर्दितार्धावभेदकौ ॥
इन्द्रियाणां च दौर्बल्यं क्षवथोः स्याद्विधारणात् ॥ ७ ॥
कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथवाऽप्रवृत्तिः ॥
उद्गारवेगेऽभिहते भवन्ति घोरा विकाराः पवनप्रसूताः ॥ ८ ॥
कण्डूकोठारुचिव्यङ्गशोथपाण्ड्वामयज्वराः ॥
कुष्ठवीसर्पहृल्लासाश्छर्दिनिग्रहजा गदाः ॥ ९ ॥
मूत्राशये वै गुदमुष्कयोश्च शोथो रुजा मूत्रविनिग्रहश्च ॥
शुक्राश्मरी तत्स्रवणं भवेच्च ते ते विकारा विहते च शुक्रे ॥ १० ॥
तन्द्राङ्गमर्दावरुचिः श्रमश्च क्षुधाभिघातात्कृशता च दृष्टेः ॥
कण्ठास्यशोषः श्रवणावरोधस्तृष्णाविघाताद्धृदये व्यथा च ॥ ११ ॥

---

मधुकोशव्याख्या ।

कूजोऽव्यक्तभाषणमिति कार्तिकः । वायोरप्रवृत्तिरुच्छ्वासनिरोधः । घोरा विकारा हिक्कादयः । मूत्राशये वस्तौ, मूत्रायन इति पाठे स एवार्थः । वैशब्दः पादपूरणे । तत्स्रवणं शुक्रस्य स्यन्दनम् । अतिजाड्यं गौरवम् । "शिरोगात्राक्षिगौरवम्" इति

आतङ्कदर्पणव्याख्या ।

द्विविधमपि लोचनजलं प्राप्तमागतममुंचतो नरस्येति शेषः । शिरोगुरुत्वादयो रोगाः पीनसेन सह तीव्रा जायंते, चकारात्तंत्रांतरोक्तप्रतिश्यायहृद्रोगारुचिप्रभृतीनां ग्रहणम् ॥ ६ ॥ छिक्कोदावर्तमाह—मन्येति । क्षवथोः छिक्कायाः, अर्द्धावभेदकोऽर्द्धशिरःशूलम्, इन्द्रियाणां चक्षुरादीनां ग्रहणे दौर्बल्यं श्रवणनयननासानामयथार्थं विपर्ययग्रहणम् ॥ ७ ॥ उद्गारोदावर्तमाह—कंठेति । उद्गारे विधारिते सति कंठमुखयोः पूर्णत्वमाहारेण वेति. अतीवतोदः हृद्यामाशये वातिव्यथा, कूजः अव्यक्तभाषणं वायोरप्रवृत्तिरुच्छ्वासादिनिरोधः, घोरा विकाराः पवनजा हिक्कादयः ॥ ८ ॥ छर्द्युदावर्तमाह—कोठो वरटीदष्टसंस्थानः, व्यंगं मुखलांछनम्, शोफादयः प्रसिद्धाः ॥९॥ शुक्रोदावर्तमाह—मूत्राशय इति । मैथुनवृत्तौ शुक्रविधारणात् मूत्राशये वस्तौ । अन्ये 'मूत्रायने' इति पठंति, तत्र मूत्रमार्गे गुदमुष्कयोश्च श्वयथुः । वैशब्दः पादपूरणे, तयोरेव पीडा मूत्रनिग्रहो मूत्राघातः शुक्राश्मरीरोगः, तत्स्रवणं शुक्रस्यंदनम्, ते विकारा इति वातकुंडल्यादयः ॥ १० ॥ क्षुदुदावर्तलक्षणमाह—तंद्रेति । तंद्रा निद्राभेदः, अंगमर्दोऽगभंगः, श्रमः कर्मेन्द्रियाणामसामर्थ्यम्, दृष्टेः कृशता मांद्यम्, चकारात् कार्श्यदौर्बल्यादयः, तंत्रांतरोक्ता ग्राह्याः ॥ तृडुदावर्तलक्षणमाह—कंठेति । श्रवणावरोधः शब्द-

---

१ एतच्च—'शोफपांड्वामयज्वरः' इति पाठाभिप्रायेण ।

श्रान्तस्य निःश्वासविनिग्रहेण हृद्रोगमोहावथवापि गुल्मः ॥
जृम्भाङ्गमर्दोऽक्षिशिरोऽतिजाड्यं निद्राभिघातादथवापि तन्द्रा १२

वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः ॥
भोजनैः कुपितः सद्य उदावर्तं करोति च ॥ १३ ॥
वातमूत्रपुरीषासृक्कफमेदोवहानि वै ॥
स्रोतांस्युदावर्तयति पुरीषं चातिवर्तयेत् ॥ १४ ॥
ततो हृद्बस्तिशूलार्तो हृल्लासारतिपीडितः ॥
वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः ॥ १५ ॥
श्वासकासप्रतिश्यायदाहमोहतृषाज्वरान् ॥
वमिहिक्काशिरोरोगमनःश्रवणविभ्रमान् ॥
बहूनन्यांश्च लभते विकारान्वातकोपजान् ॥ १६ ॥

---

मधुकोशव्याख्या ।

तन्त्रान्तरे पाठः ॥ २-१२ ॥ वेगनिरोधजानुदावर्तानभिधाय रूक्षादिकुपितवातजमाह-वायुरित्यादि । उदावर्तयति आवृणोति । अतिवर्तयेत् शोषयेत् । कृच्छ्रेण लभत इति कष्टेन प्रवर्तयति । अत्र केचित् सुश्रुतोक्तमसाध्यलक्षणं पठन्ति-"तृष्णार्दितं परिक्लिष्टं क्षीणं शूलैरुपद्रुतम् । शकृद्वमन्तं मतिमानुदावर्तिनमुत्सृजेत्"

आतङ्कदर्पणव्याख्या ।

स्याग्रहणम्, अंगुलिपिहित इव ॥ ११ ॥ श्वासोदावर्तलक्षणमाह-श्रान्तस्येति । श्रांतस्य धावनादिना खिन्नस्य, निःश्वासविनिग्रहेण हृद्रोगादयो भवंति । हृद्रोगो हृदयविकारः, मोहो मूर्च्छा गुल्मस्यापि संभवः । निद्रोदावर्तमाह-जृंभेति । अक्ष्णोः शिरसि च जाड्यगौरवम् । अन्ये 'जृंभांगमर्दोक्षिशिरोभिजाड्यम्' इति पठंति । तत्र शिरस्यतिगौरवम् ॥१२॥ त्रयोदशवेगावरोधजानुदावर्तानभिधायेदानीं रूक्षादिभोजनजनितवातजानाह-वायुरिति । कोष्ठानुगः कोष्ठशब्देन समस्तमुदरमध्यमुच्यते, रूक्षादिभिश्चणकराजमाषादिभिः, तथा कषायादिभिः रसैः कुपितः ॥ १३ ॥ तस्य संप्राप्तिमाह-वातेति । ततः स्वैः कारणैः कुपितो वायुः वातमूत्रादीनां स्रोतांस्युदावर्तयति ऊर्द्ध्वमावृणोति पुरीषं चातिवर्तयेत् ॥ १४ ॥ तद्धृद्बस्त्यादिभिः तथा हृल्लासादिभिः पीडितः कृच्छ्रेण कष्टेन वातमूत्रपुरीषाणि लभते, वैद्यप्रयत्नात्प्राप्नोतीत्यर्थः ॥ १५ ॥ श्वासादीनन्यांश्च वातप्रकोपजान् रोगान् लभते । मनोविभ्रमः स्थाणौ पुरुषज्ञानमित्यादि, श्रवणविभ्रमो विपरीतश्रवणम् । अत्र

आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन ॥
प्रवर्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति ॥ १७ ॥
तस्मिन्भवन्त्यामसमुद्भवे तु तृष्णाप्रतिश्यायशिरोविदाहाः ॥
आमाशये शूलमथो गुरुत्वं हृत्स्तम्भ उद्गारविघातनं च ॥ १८ ॥
स्तम्भः कटीपृष्ठपुरीषमूत्रे शूलोऽथ मूर्च्छा शकृतश्च छर्दिः ॥
शोथश्च पक्काशयजे भवन्ति तथाऽलसोक्तानि च लक्षणानि॥१९॥

इति श्रीमाधवकरविरचिते माधवनिदाने उदावर्तानाह-
निदानं समाप्तम् ॥ २७ ॥

---

मधुकोशव्याख्या ।

इति ॥ १३-१६ ॥ इदानीं विगुणानिलजत्वेन समानचिकित्स्यत्वेनानाहमाह—आममित्यादि । नेति पूर्वेण संबध्यते । एवं छर्दिरित्येक एव छकारश्छन्दोऽनुरोधात् । स्तम्भशब्दः कट्यादेः स्तब्धतावाची, मूत्रपुरीषयोश्चाप्रवृत्तिवाची । अलसोक्तानीति आध्मानवातनिरोधादीनि ॥ १७-१९ ॥ इति श्रीविजयरक्षितकृतायां मधुकोश-व्याख्यायामुदावर्तानाहनिदानं समाप्तम् ॥ २७ ॥

आतंकदर्पणव्याख्या ।

केचित् सुश्रुतोक्तमसाध्यलक्षणं पठंति—"तृष्णार्दितं परिक्लिष्टम्" इत्यादि ॥ १६ ॥ विगुणा-निलजत्वेन समानचिकित्स्यत्वेनानाहमाह—आममिति ॥ प्रवर्तमानं नेति पूर्वेण संबध्यते, नाप्रवर्तमानमित्यर्थः । यथा स्वंस्वं मार्गमित्यर्थः । एवमामं निचितं विगुणानिलेन विबद्धं सत् स्वमार्गे प्रवर्तमानं शकृद्वा एवंभूतमानाहविकारमुदाहरंतीति पिंडार्थः ॥ १७ ॥ आमजमानाह-माह—तस्मिन्निति । तस्मिन्नानाहे आमसमुद्भवे तृष्णासंचितामजाते गुरुत्वम् आमाशय एव, उद्गारवि-घातनम् उद्गारप्रवृत्तिः, शेषं सुगमम् ॥ १८ ॥ शकृत्संचयजमाह—स्तंभ इति । स्तंभशब्दः कट्यादेः स्तब्धभाववाची, पुरीषमूत्रयोश्चाप्रवृत्तिवाचीति शूलोत्र कट्यादिष्वेव छर्दिरित्येक एव छ-कारः छंदोनुरोधात् । पक्काशयजे पक्काशयोत्थे आनाहे इति व्याख्यानयंति, ते च पक्काशयोत्थाः, आनाहाः पुरीषाद्भवतीन्तीच्छंति, तथापि स पूर्वोक्त एव परिफलितोऽर्थः । अलसोक्तानीति आध्मा-नवातनिरोधादीनि ॥१९॥ इत्यातंकदर्पणे निदानव्याख्यायामुदावर्तानाहनिदानं समाप्तम् ॥२७॥

# अथ गुल्मनिदानम् २८.

**दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारतः ।**
**कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्ग्रन्थिरूपिणम् ॥**
**तस्य पञ्चविधं स्थानं पार्श्वहृन्नाभिवस्तयः ॥ १ ॥**
**हृन्नाभ्योरन्तरे ग्रन्थिः संचारी यदि वाऽचलः ॥**
**वृत्तश्चयोपचयवान्स गुल्म इति कीर्तितः ॥ २ ॥**

---

मधुकोशव्याख्या ।

गुल्मेऽप्यानाहो भवतीत्यानाहानन्तरं गुल्ममाह—दुष्टा इत्यादि । पञ्चधेति वातपित्तकफसन्निपातरक्तजाः । द्वन्द्वजास्तु प्रकृतिसमसमवेतत्वान्न पृथग्गण्यन्ते, अर्शोरोगवत् । कोष्ठान्तरामाशयादिमध्ये, ग्रन्थिरूपिणं गुडकाकारम् । तस्येत्यादि । एतदेव विवृणोति पार्श्वेत्यादि । पार्श्वे द्वे गणनीये, अन्यथा पञ्चत्वानुपपत्तिः, अत एव पार्श्वे इति द्विवचनान्तमेव क्वचित् पठ्यते ॥ १ ॥ सामान्यगुल्मरूपमाह—हृदित्यादि । नाभिशब्देन वस्तिर्बोध्यः सामीप्यात्, यथा गङ्गायां घोष इत्याहुः, वस्तेरपि गुल्माश्रयत्वेनोक्तत्वात् । अत एव हृद्वस्त्योरन्तरे इति पाठान्तरम् । अन्ये त्वाहुः, वस्तौ विद्रधिरेव स्यान्न तु गुल्म इति । तन्न, गुल्मलक्षणप्रतीतेः । एतत् पञ्चस्थानकथनं दोषजाभिप्रायेण, रक्तजस्य तु गर्भाशयः स्थानम्; अथ वा पार्श्वस्थितत्वात् गर्भाशयस्य पार्श्वग्रहणेनैव ग्रहणम् । वृत्तो वर्तुलः । चयापचयवानिति कदाचिदुपचीयते,

आतङ्कदर्पणव्याख्या ।

गुल्मोऽप्याध्मानं भवतीत्याध्मानानंतरं गुल्मनिदानम्, तस्य संप्राप्तिमाह—दुष्टा इति । दुष्टाः स्वकारणैः मिथ्याहाराध्यशनादिभिः, मिथ्याविहारो बलवद्विग्रहादिः । पंचधेति । वातपित्तकफसन्निपातरक्तजान्येवं पंच, द्वंद्वजास्तु प्रकृतिसमसमवेतत्वात्पृथङ् न गण्यंते, अर्शोरोगवत् । कोष्ठांतः आमाशयादिमध्ये, ग्रंथिरूपिणं गुटिकाकारं, तेषां स्थानान्याह—तस्येति । पार्श्वे द्वे गणनीये, अन्यथा पंचत्वानुपपत्तिः । अन्ये पार्श्वे इति द्विवचनांतमेव पठंति । हृद् हृदयम्, वस्तिः मूत्राशयः॥१॥ सामान्यं गुल्मरूपमाह—हृदिति । नाभिशब्देन वस्तिर्बोध्यः सामीप्यादेव, यथा गंगायां घोष इति वस्तेरपि गुल्माश्रयत्वेनोक्तत्वात् ।अन्ये 'हृद्वस्त्योरंतरे' इत्येव पाठांतरं पठंति। अन्ये तु वस्तौ विद्रधिरेव स्यान्न तु गुल्म इति । तन्न, वस्तेरपि गुल्मस्थानत्वात्, तथा च चरके -''पंचस्थानानि गुल्मस्य पार्श्वे हृन्नाभिवस्तयः'' इति । संचारी चलनशीलः, अथ अचलः स्थिरः, वृत्तो वर्त्तुलः ॥ चयापचयवानिति । कदाचित् चयेन वृद्धिं गच्छति, कदाचिदपचीयते हीनो भवति । एतल्लक्षणं सामान्योक्तमपि वातके व्यवतिष्ठते, तल्लक्षणे तदभिधानात् इति जेज्जटः । गदाधरस्तु सामान्यलक्षणमेवाह,

**न व्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः ॥**
**पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापरः ॥ ३ ॥**

मधुकोशव्याख्या ।

कदाचिदपचीयते एतच्च सामान्योक्तमपि वातिकं व्यवतिष्ठते, तल्लक्षणे तदभिधानात्-दिति जेज्जटः । गदाधरस्तु सामान्यलक्षणमाह, सर्वगुल्मानां वातमूलत्वात् । चयोपचयवानिति पाठान्तरं दोषस्य चयेनोपचयवानिति । गुल्म इति लतादिपिहितसंस्थाननिर्देशाद्धि गुल्मव्यपदेशो लोके, तत्साहश्यात् संचितपरिपिण्डितदोषेऽपि गुल्मसंज्ञेत्याहुः । व्याप्यचन्द्रस्त्वाह-संपिण्डितदोषो गुडकेन मीयत इति निरुक्तिः ॥ २ ॥ पूर्वोक्तं पञ्चविधत्वं विवृणोति-न इत्यादि । व्यस्तैरित्यनेनैकजो द्वन्द्वजोऽपि ग्राह्यः । पञ्चधा गुल्म इत्यनेन विरोध इति चेत् । न, नहि तत्रावधारणं कृतं पञ्चधैवेति । अत एव सूत्रस्थाने चरकेण पञ्च गुल्मा इत्यभिधायापि "संसृष्टलिङ्गानपरांश्च गुल्मांस्त्रीनादिशेद्दोषपथकल्पनार्थम्" इत्युक्तं, समानचिकित्स्यत्वेन तत्रान्तर्भावात् । रक्तेन चापर इति स्त्रीणामेव । वक्ष्यति हि-"स रौधिरः स्त्रीभव एव गुल्मः" इति । रक्तं चात्रार्तवं न धातुरूपम्; धातुरूपरक्तजस्तु गुल्मो यद्यप्यस्त्येव तथाऽपि नतत्संक्रान्तिकी भवतीति पृथगुपदिश्यते । पृथग्ज्ञानानभिधानं तु पित्तगुल्मसमाननिदानचिकित्स्यत्वेन तत्रान्तर्भावात्, सुश्रुते रक्तातीसारवत् । विशेषलक्षणं च यदाह चरकः-"तृष्णाज्वरपरीदाहशूलस्वेदाग्निमार्दवैः । गुल्मिनामरुचौ चापि रक्तमेवावसेचयेत्-" इति । धातुरूपरक्तजः स्त्रीणां पुंसां च भवति-इति

आतङ्कदर्पणव्याख्या ।

सर्वगुल्मानां वातारब्धत्वात्। "चयोपचयवान्" इति पाठान्तरम्। तत्र दोषस्य चयः, तेन उपचयवान् वृद्धिमान् इत्यर्थः । स गुल्मः लतादिपिहितस्थानविशेषादौ गुल्मव्यपदेशो लोके तत्सादृश्यवत्संचितपरिपिंडितदोषेपि गुल्मसंज्ञेत्याहुः । वाप्यचंद्रस्त्वाह-संपिंडितो दोषो गुडकत्वेन मीयत इति निरुक्तिः ॥ २ ॥ तस्य संख्यामाह-स इति । स गुल्मो व्यस्तैर्वातपित्तश्लेष्मभिरुच्छ्रितैः प्रवृद्धैस्त्रिभिरपि जायते, पुरुषाणां व्यस्तैरित्यनेन एकजो द्वंद्वजश्च ग्राह्यः । एवं पंचधा गुल्म इत्यनेन वचनेन विरोध इति चेत् । न, नहि तत्रावधारणं कृतं पंचधैवेति । अत एव सूत्रस्थाने चरकेण पंच गुल्मा इत्यभिधायापि "संसृष्टलिंगानपरांस्तु गुल्मांस्त्रीनादिशेद्दोषपथकल्पनार्थम्" इत्यभिहितम् । "ज्ञेयो रक्तेन चापरः" इति स्त्रीणामेव । यदुक्तमिहैव--'स रौधिरः स्त्रीभवगुल्म एव' इति । रक्तं चात्रार्तवम्, पृथग्ज्ञानानभिधानं तु पित्तगुल्मसमाननिदानचिकित्स्यत्वेन तत्रान्तर्भावात् । चरकसुश्रुतयो रक्तातिसारवत् । विशेषलक्षणं यदाह चरकः-"तृष्णाज्वरपरीदाहशूलस्वेदाग्निमार्दवैः । गुल्मिनामरुचौ चापि रक्तमेवावसेचयेत् ॥" इति । धातुरूपरक्तजश्च स्त्रीणां पुंसां

**उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि ॥**
**आटोपमाध्मानमपक्तिशक्तिरासन्नगुल्मस्य वदन्ति चिह्नम् ॥ ४ ॥**

मधुकोशव्याख्या ।

भट्टारहरिचन्द्रः । तथा च क्षीरपाणिः—"स्त्रीणामार्तवजो गुल्मो न पुंसामुपजायते । अन्यस्त्वसृग्भवो गुल्मः स्त्रीणां पुंसां च जायते" इति । व्याप्यचन्द्रस्त्वाह—वातादिदोषजस्यैवापचाराद्रक्ते दुष्टे रक्तजव्यपदेशः, यथा चरके कफपित्तमेहानामतिकर्षणादुत्तरकालं वातसंसर्गे सति वातमेहत्वमुक्तम् । यदुक्तम्—"या वातमेहान्प्रति पूर्वमुक्ता वातोल्बणानां विहिता क्रिया सा । वायुर्हि मेहेष्वतिकर्षितेषु कुप्यत्यसाध्यान् प्रति नास्ति चिन्ता" इति । क्षीरपाणेरप्येवमेवाभिप्रायः । यदि तु पृथक् स्यात् तदा तमपि नवमं लिङ्गस्थानादिभिरभिधास्यत् । न चोक्तं जेज्जटगयदासाभ्यां हरिचन्द्रमतमेवानुमतमिति । सर्वगुल्मेषु वातकारणत्वं ज्ञेयम् । यदुक्तं चरके—"गुल्मिनामनिलशान्तिरुपायैः सर्वशो विधिवदाचरितव्या । मारुते ह्यवजितेऽन्यमुदीर्णं दोषमल्पमपि कर्म निहन्यात्" इति । सुश्रुतेऽप्युक्तं—"कुपितानिलमूलत्वाद्गुल्म इत्यभिधीयते—" इति । न चैतावता नानात्मजत्वप्रसङ्गः, वातस्यानुबन्धरूपत्वात्, ज्वरे पित्तवत् । ननु, वातव्यभिचारात् द्विदोषजस्त्रिदोषजो वा गुल्मः स्यान्न केवलं कफजः पित्तजो वेति, ततश्च पञ्चत्वेति विरोधः । नैतत्, अनुबन्धरूपेण वातजव्यपदेशो नत्वनुबन्ध्यरूपेणेति ॥ ३ ॥ पूर्वरूपमाह—उद्गारेत्यादि । पुरीषबन्धो विड्बन्धः । तृप्तिरन्नानभिलाषः । सुश्रुतेऽपि हि 'द्वेषोऽन्ने' इति पठितम् । अक्षमत्व-

आतंकदर्पणव्याख्या ।

च भवतीति भट्टारकहरिश्चंद्रः । तथा च क्षीरपाणिः—"स्त्रीणामार्तवजो गुल्मो न पुंसामुपजायते, अन्यस्त्वसृग्भवो गुल्मः स्त्रीणां पुंसां च जायते ॥" इति । व्याप्यचंद्रस्त्वाह—वातादिदोषजस्यैवापचाराद्रक्ते दुष्टे रक्तजव्यपदेशः, यदुक्तं चरके—कफपित्तप्रमेहाणामतिकर्षणादुत्तरकाले वातसंसर्गे सति वातमेहत्वमुक्तम् । यदुक्तम्—"या वातमेहान्प्रति पूर्वमुक्ता वातोल्बणानां विहिता क्रिया सा । वायुर्हि मेहेष्वतिकर्षितेषु कुप्यत्यसाध्यान्प्रति नास्ति चिंता ॥" इति । क्षीरपाणेरप्ययमेवाभिप्रायः । यदि तु पृथक् स्यात्, तदा तस्यापि लिंगस्थानादिभिरभिधानं स्यात्, तच्च नोक्तम्, जेज्जटगयदासाभ्यां तु हरिश्चंद्रमतमेवानुमतमिति । सर्वगुल्मेषु वातकारणत्वं ज्ञेयम् यदुक्तं चरके—"गुल्मिनामनिलशांतिरुपायैः सर्वशो विधिवदाचरणीया । मारुते ह्यविजितेऽन्यमुदीर्णं दोपमल्पमपि कर्म निहन्यात् ॥" इति । सुश्रुतेप्युक्तम्—"कुपितानिलमूलत्वात्संचितत्वान्मलस्य च । तुल्यवद्वाविशालत्वाद्गुल्म इत्यभिधीयते ॥" इति ॥ ३ ॥ तस्य पूर्वरूपमाह—उद्गारेति । उद्गारबहुलता, पुरीषबन्धो विड्विबंधः, तृप्तिरन्नानभिलाषः, सुश्रुते हि—"द्वेषोऽन्ने"

अरुचिः कृच्छ्रविण्मूत्रवातताऽन्त्रविकूजनम् ॥
आनाहश्चोर्ध्ववातत्वं सर्वगुल्मेषु लक्षयेत् ॥ ५ ॥
रूक्षान्नपानं विषमातिमात्रं विचेष्टनं वेगविनिग्रहश्च ॥
शोकोऽभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः ॥ ६ ॥
यः स्थानसंस्थानरुजाविकल्पं विड्वातसङ्गं गलवक्त्रशोषम् ॥
श्यावारुणत्वं शिशिरज्वरं च हृत्कुक्षिपार्श्वांसशिरोरुजं च ॥७॥

---

मधुकोशव्याख्या।

मसामर्थ्यम्। आटोपोऽत्र रुजापूर्वकः क्षोभः, तलतलं वा; ननु गुडगुडाशब्दः, तस्यान्त्रकूजनेनैव गृहीतत्वात्; नाप्याध्मानं तस्योपात्तत्वात्। अपक्तिशक्तिः मन्दाग्निता। अपक्तृशक्तिरिति पाठे स एवार्थः ॥ ४ ॥ गुल्मसाधारणरूपमाह— अरुचिरित्यादि ॥ ५ ॥ वातिकमाह—रूक्षेत्यादि। विषमातिमात्रमिति अन्नपान-विशेषणम्। विचेष्टनं विरुद्धचेष्टा बलवद्विग्रहादि। अतिमलक्षयो विरेकादिना। निरन्नता निराहारता। विकल्पशब्दः स्थानादिभिः प्रत्येकं योज्यः। स्थानविकल्पो यथा—कदाचिन्नाभौ कदाचित् पार्श्वयोः, कदाचिद्बस्तावित्यादिस्थानान्तरगमनम्। संस्थानविकल्पो यथा—कदाचिदल्पः, कदाचिन्महान्, वृत्तो, दीर्घो वेति। रुजावि-

आतङ्कदर्पणव्याख्या।

इति पठितम्। अक्षमत्वम् असामर्थ्यम्। तृप्त्यक्षमत्वं सौहित्यासहिष्णुतेति केचित्। अंत्रवि-कूजनम् अंत्राणामव्यक्तशब्दानुकरणम्। आटोपो रुजापूर्वकः क्षोभः, न तु गुडगुडाशब्दः, तस्यांत्रकूजनेनोक्तत्वात्। आध्मानमुपात्तयोराध्मानमिव, अपक्तिशक्तिः मंदाग्नित्वादाहारस्यापाकः ॥४॥ सर्वगुल्मानां साधारणलक्षणमाह—अरुचिरिति। कृच्छ्रविण्मूत्रवातता कष्टेन विण्मूत्रवातप्रवर्तनम्। अंत्रविकूजनं गुडगुडाशब्दः, आनाहः ऊर्ध्वाधोवातनिरोधः, ऊर्ध्ववातत्वमुद्गारबाहुल्यम् ॥ ५ ॥ वातगुल्मस्य हेतुपूर्वकं लक्षणमाह—रूक्षेति। विषमातिमात्रमिति अन्नपानविशेषणम्। विषमं बहु स्तोकमकालभोजनम्, एवं जलपानमपि, अतिमात्रं मात्राधिकम्, एवं जलस्यापि। विचेष्टनं विरुद्धचेष्टा बलवद्विग्रहादिः, अभिघातो लगुडादिना, अतिमलक्षयो विरेकादिना, निरन्नता निरा-हारता ॥ ६ ॥ य इति। स्थानविकल्पो यथा—कदाचिन्नाभौ, कदाचिद्बस्तौ, कदाचित्पार्श्व-योरित्यादिस्थानान्तरगमनम्। संस्थानविकल्पो यथा—कदाचिद्वर्तुलः, कदाचिद्दीर्घ इत्यर्थः। रुजावि-कल्पो यथा—कदाचिदल्पा रुक्, कदाचिन्महती, तोदरूपा भेदरूपा, अनेकरूपा वेति। विड्वातसंगं विड्वाताप्रवृत्तिः, कंठवक्त्रयोः शोषः, श्यावारुणत्वं शरीरस्य, शीतज्वरः, हृत्कुक्ष्यादीनां पीडा,

करोति जीर्णे त्वधिकं प्रकोपं भुक्ते मृदुत्वं समुपैति यश्च ॥
वातात्स गुल्मो नच तत्र रूक्षं कषायतिक्तं कटु चोपशेते ॥ ८ ॥
कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्रोधातिमद्यार्कहुताशसेवा ॥
आमाभिघातो रुधिरं च दुष्टं पैत्तस्य गुल्मस्य निमित्तमुक्तम् ॥ ९ ॥
ज्वरः पिपासा वदनाङ्गरागः शूलं महज्जीर्यति भोजने च ॥
स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहः पैत्तिकगुल्मरूपम् ॥ १० ॥
शीतं गुरु स्निग्धमचेष्टनं च संपूरणं प्रस्वपनं दिवा च ॥
गुल्मस्य हेतुः कफसंभवस्य सर्वस्तु दुष्टो निचयात्मकस्य ॥ ११ ॥
स्तैमित्यशीतज्वरगात्रसादहृल्लासकासारुचिगौरवाणि ॥
शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य ॥ १२ ॥

---

मधुकोशव्याख्या ।

कल्पो यथा—कदाचिदल्पा, कदाचिन्महती, तोदरूपा, अनेकरूपा वेति । नच तत्रोपशेते न सुखयति ॥ ६–८ ॥ पैत्तिकमाह—कट्वित्यादि । आमाभिघात इति विदग्धाजीर्णजनितदुष्टरसेनाभिभवः, अन्ये तु आमाभिघाताविति पठन्ति, तत्राम उक्तरूपः, अभिघातो लगुडादेः रक्तदूषको ज्ञेयः जीर्यतीति सप्तम्यन्तम् । व्रणवत् स्पर्शासह इति योज्यम् ॥ ९ ॥ १० ॥ श्लैष्मिकमाह—शीतमित्यादि । संपूरणं तृप्तिभोजनम् ।

आतङ्कदर्पणव्याख्या ।

अंसः भुजयोरुपरिभागः ॥ ७ ॥ जीर्णे आहारे प्रकुप्यति, भुक्ते च शांतिं गच्छति, स वातिको गुल्मः । रूक्ष आहारः कषायतिक्तकटुका रसाः, तत्र तस्मिन्वातगुल्मे नोपशेते न सुखयति, वातकारणत्वात् ॥ ८ ॥ पैत्तिकगुल्ममाह—कट्विति । विदाहि वंशकरीरादि, अतिशब्दो मद्यादिषु योज्यः ॥ आमाभिघात इति । विदग्धाऽजीर्णजनितदुष्टरसेनाभिभवः, अन्ये—आमाभिघाताविति पठंति, तत्राम उक्तरूपः, अभिघातो लगुडादिना रक्तदूषको ज्ञेयः । एते पैत्तिकगुल्मस्य हेतवः ॥ ९ ॥ तस्य लक्षणमाह—ज्वर इति । ज्वरः प्रसिद्धः, पिपासा पातुमिच्छा वदनांगरागः मुखे शरीरे चारुणता, आहारे जीर्यति पच्यमाने महच्छूलं भवति, व्रणवत् स्पर्शासह इति योज्यम् । एतत्पित्तगुल्मरूपम् ॥ १० ॥ श्लैष्मिकमाह—शीतमिति । शीतादिभिर्द्रव्यैरचेष्टनमत्यायामः । संपूरणमिति—आहारादिना कोष्ठस्य तृप्तिरिव, एतत् सर्वं कफगुल्मस्य हेतुः, एतस्यैव श्लोकपादेन सान्निपातिकस्य हेतुमाह—सर्व इति । निचयात्मकस्य सान्निपातिकस्य गुल्मवातजाद्युक्तहेतुः कारणं, तथा सर्वदोक्तलक्षणानि च भवंति ॥ ११ ॥ पुनः श्लैष्मिकस्यैव लक्षणमाह—स्तैमित्येति । स्तैमित्यं निश्चलत्वम्, शीतज्वरादयः सुबोध्याः, शैत्यं शीतगात्रता, कठिनो-

निमित्तरूपाण्युपलभ्य गुल्मे द्विदोषजे दोषबलाबलं च ॥
व्यामिश्रलिङ्गानपरांश्च गुल्मांस्त्रीनादिशेदौषधकल्पनार्थम् ॥१३॥
महारुजं दाहपरीतमश्मवद्घनोन्नतं शीघ्रविदाहि दारुणम् ॥
मनःशरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥१४॥

---

मधुकोशव्याख्या ।

सर्व इति वातजाद्युक्तः। निचयात्मकस्य सन्निपातजस्य। कठिनोन्नतत्वं गुल्मस्य ॥ ११ ॥ १२ ॥ द्वन्द्वात्मकेषु त्रिषु एकजहेतुलक्षणातिदेशार्थमाह—निमित्तेत्यादि। निमित्तानि च रूपाणि चेति द्वन्द्वः। दोषबलाबलं च इत्यनेन समद्विदोषद्वन्द्वजत्रयेण एकोल्वणादिद्विदोषजोऽपि ग्राह्य इति दर्शयति, अन्यथा बहुत्वापत्तेः। औषधकल्पनार्थमिति एकदोषजाभिहितचिकित्सामेलकेन तान् चिकित्सेदित्यर्थः ॥ १३ ॥ सान्निपातिकमाह—महारुजमित्यादि। अश्मवत् घनोन्नतं पाषाणवत् कठिनमुन्नतं च। मन इत्यादि, मनोऽपहारिणं मनोवैकल्यकारिणम्, शरीरापहारिणं कृशत्ववैवर्ण्यकरम्, अग्न्यपहारिणमग्निवैषम्यकरम्, बलापहारिणमसामर्थ्यकरम्। ननु, असाध्यमिति विरुद्धं—"सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः" इति सुश्रुतवचनात्। नैवम्, अयं च विकृतिविषमसमवेतोऽसाध्यः, प्रकृतिसमसमवेतस्तु साध्य इत्याहुः। ननु, सोऽप्यसाध्यः, यदाह सुश्रुतः—"सर्वात्मके सर्वरुजोपपत्तिस्तं चाप्यसाध्यं प्रवदन्ति तज्ज्ञाः" इति। उच्यते, तं चापीति अपिशब्दादचिरोत्थितः साध्यो विश्वामित्रसंवादादिति गय-

आतङ्कदर्पणव्याख्या ।

न्नतत्वं गुल्मस्यैव" ॥ १२ ॥ द्वंद्वादिकेषु त्रिष्वेकजहेतुलक्षणातिदेशार्थमाह—निमित्तेति। लिंगानि[1] लक्षणानि द्विदोषजे गुल्मे दोषाणां बलाबलं च ज्ञात्वा व्यामिश्रलिंगान् मिलितलिंगान् परान् त्रीन् गुल्मान् औषधकल्पनार्थमादिशेत्, एकदोषजाभिहितचिकित्सामेलकेन च चिकित्सेदित्यर्थः॥१३॥ त्रिदोषजस्यासाध्यत्वमाह—महारुजमिति। महारुजं तीव्रपीडाकरं दाहपरीतदेहं संतापेन व्याप्ताखिलदेहम्, शीघ्रेण विदाहकरम्, दारुणं मारणात्मकम्, अश्मवद् घनोन्नतं पाषाणवत् कठिनोन्नतम्, मन इत्यादि। मनोपहारिणं मनोवैकल्यकरम्, शरीरापहारिणं कृशत्ववैवर्ण्यकरम्, अग्न्यपहारिणमग्नेर्वैषम्यादिकरम्, बलापहारिणमसामर्थ्यकरम्। एतल्लक्षणं विकृतिसमवेतस्य। प्रकृति-

---

1 एतच्च निमित्तलिंगानीतिपाठाभिप्रायेण।

**नवप्रसूताऽहितभोजना या या चामगर्भं विसृजेदृतौ वा ॥
वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम् ॥
पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणं चाप्यपरं निबोध ॥ १९ ॥**

मधुकोशव्याख्या ।

दासः ॥ १८ ॥ रक्तगुल्ममाह—नवेत्यादि । आमगर्भं विसृजेदिति नवममासादर्वाक् प्रसूते, ऋतौ आर्तवप्रवृत्तिकाले, अहितभोजनेति संबन्धः । एतच्चोपलक्षणार्थं, तेनाहाराचारादिकं ज्ञेयम् । यदाह चरकः—"ऋतावनाहारतया भयेन विरूक्षणैर्वेगविधारणैश्च । संस्तम्भनोल्लेखनयोनिदोषैर्गुल्मः स्त्रियं रक्तभवोऽभ्युपैति" इति । पैत्तस्य पैत्तिकगुल्मस्य, विशेषणं पैत्तिकगुल्मात् विशेषलक्षणम् । पिण्डितः समुदितः । एवकारोऽत्र अवधारणे एतदेव स्फुटयति—नाङ्गैर्नावयवैश्चिरात् स्पन्दत इति संबन्धः । समगर्भलिङ्ग इति आर्तवादर्शनमुखस्रवणस्तनमुखकृष्णत्वदोहदादिगर्भलक्षणयुक्तः, एतच्च व्याधिप्रभावात्; यथा—क्षयार्शसोः स्त्रीरिरंसाकृष्णत्वङ्नखादयः । अन्ये तु समगर्भलिङ्गोऽविकृतगर्भलिङ्ग इत्याहुः । उक्तविशेषणैरेव स्त्रीभवत्वे लब्धे स्त्रीग्रहणेन कुमारीमतिवृद्धां च निषेधयति, अनुद्भूतक्षीणरजस्कत्वात्तयोः । व्यतीतेऽतिक्रान्ते । गर्भसमानलिङ्गत्वेन संशयः गर्भो वा रक्तगुल्मो वा इति, तच्छङ्कानिरासार्थं दशमे मासे व्यतीते इत्युक्तम्; नवमदशमयोः प्रसवकालत्वादित्येके । तन्न, यः स्पन्दते पिण्डित एव नाङ्गैरित्यादिनैव विशेषदर्शनेन संशयस्य निवर्तितत्वात् । गर्भो हि निरन्तरं प्रत्यङ्गैर्निःशूलं स्पन्दते. गुल्मस्तु एतद्विपरीतेन । किंच नवमे दशमे प्रसूत इत्युत्सर्गः, नतु नियमः; तदाधिककालेऽपि प्रसवदर्शनात्, आगमाच्च । उक्तं हि चरके—"तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपि स्यात्" इति । तस्मान्नेदं दशममासव्यतिक्रमे चिकित्साविधानस्य प्रयोजनं, किंतु व्याधिमहिम्ना तावतैव कालेन तस्य चिकित्सया सुखोच्छेदनमिति । यथा ज्वरे पुराणे एव क्षीरपानविरेचने । उक्तं हि तन्त्रान्तरे—"रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्" इति । पुराणता चास्य दशममासव्यतिक्रमेणैव भवति । जेज्जटेनाप्युक्तं—यद्यर्वाक् रक्तभेदनं क्रियते

आतंकदर्पणव्याख्या ।

समवेतस्तु साध्यः ॥ १४ ॥ स्त्रीणां रक्तजगुल्मस्य संप्राप्तिमाह—नवेति । या स्त्री नवप्रसूता सती अहितभोजना भवति, या चामगर्भं विसृजेदिति नवमासादर्वाक् प्रसूते, ऋतावार्तवप्रवृत्तिकाले अहितभोजनेति संबंधः । अन्यथा ऋतौ तदसंभवात् । एतच्चोपलक्षणं तेनाहारादिकमपि ज्ञेयम् । यदाह—चरकः—"ऋतावनाहारतया भयेन विरूक्षणैर्वेगविधारणैश्च । संस्तंभनोल्लेखनयोनिदोषैर्गुल्मः स्त्रियं रक्तभवोऽभ्युपैति ॥" तस्य लक्षणमाह—पैत्तस्येति । पैत्तिकगुल्मस्या-

यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात्सशूलः समगर्भलिङ्गः ॥
स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥ १६ ॥
संचितः क्रमशो गुल्मो महावास्तुपरिग्रहः ॥
कृतमूलः शिरानद्धो यदा कूर्म इवोत्थितः ॥ १७ ॥

मधुकोशव्याख्या।

तदा गर्भशय्यां क्षिणोति, तल्लीनत्वाद्रक्तस्य; एकादशमासे तु परिपिण्डितगुल्मे स्नेहादिनोपस्कृतदेहाया न गर्भशय्यायाः विकृतिमादधाति रक्तभेदनमिति ॥ १५ ॥ ॥ १६ ॥ चिरजस्यावस्थायामसाध्यत्वमाह–संचित इत्यादि । महावास्तुपरिग्रहः सकलोदरव्यापी । कृतमूलो धात्वन्तरावगाही । शिरानद्धः शिराजालवान् । हृद-

आतङ्कदर्पणव्याख्या ।

स्थेवापरं विशेषणम्, तदेव स्फुटयति, चिरात् पिंडीभूत इव स्पंदते हस्तपादादिभिरित्यर्थः । सशूलः पीडायुक्तः । समगर्भलिंग इति आर्त्तवादर्शनमुखपांडुस्तनकृष्णत्वदोहदादिलक्षणयुक्तः, एतच्च व्याधिप्रभावात्, यथा–क्षयार्शसोः, स्त्रीरिरंसाकृष्णत्वङ्नखादयः । अन्ये तु समगर्भलिंग इति अविकृतगर्भलिंग इत्याहुः । स स्त्रीभव एव रक्तजो गुल्मो दशमे मासे व्यतीते सति चिकित्स्यः स्यात् । रौधिर इत्यनेन विशेषणेनार्त्तवयुक्तायां कुमार्गमतिवृद्धां च निषेधयति । अनुद्भूतक्षीररजस्कत्वात्तयोः । व्यतीतेऽतिक्रान्ते । गर्भसमानलिंगत्वेन संशयः–गर्भो वा रक्तगुल्मो वेति, तच्छंकानिरासार्थं मासे व्यतीते दशमे इत्युक्तं नवमदशमयोः प्रसवकालत्वादित्येके, तन्न, 'यः स्पंदते पिंडित एव नांगैः' इत्यादिनैव संशयस्य निवर्तितत्वात् । गर्भो ह्यंगेन निरंतरं निःशूलं स्पंदते, गुल्मस्तु एतद्विपरीतेनेति, किंच नवमे दशमे प्रसूयत इति सामान्यं न तु नियमः, तदधिककालेऽपि प्रसवदर्शनात्, आगमाच्च । यदुक्तं चरके–"तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपि स्यात् ।" तस्मान्नेदं दशमासव्यतिक्रमे चिकित्साभिधानस्य प्रयोजनम्, किंतु व्याधिमहिम्ना तावता कालेन तस्य चिकित्सया सुखोच्छेद्यत्वात् । यथा ज्वरे पुराण एव क्षीरपानविरेचने उक्तं हि तंत्रांतरे "रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्" इति । पुराणता चास्य दशमासातिक्रमेणैव भवति। यदुक्तं जेज्जटेन–यद्यर्वाक् रक्तभेदनं क्रियते, तदा गर्भाशयं क्षिणोतीति, तल्लीनत्वाद्रक्तस्य, दशमादूर्ध्वंपिंडिते गुल्मे स्नेहादिनोपस्कृतदेहाया न गर्भाशये क्षतिमादधाति, रक्तभेदनमिति ॥ १५ ॥ १६ ॥ चिरजस्यावस्थायामसाध्यत्वमाह–संचित इति ।

दौर्बल्यारुचिहृल्लासकासच्छर्द्यरतिज्वरैः ॥
तृष्णातन्द्राप्रतिश्यायैर्युज्यते स न सिध्यति ॥ १८ ॥
गृहीत्वा सज्वरं श्वासच्छर्द्यतीसारपीडितम् ॥
हृन्नाभिहस्तपादेषु शोथः कर्षति गुल्मिनम् ॥ १९ ॥

मधुकोशव्याख्या ।

यादौ गृहीत्वा शोथो गुल्मिनं कर्षति, मरणायेति शेषः । ग्रन्थिमूढता ग्रन्थिरूपस्य गुल्मस्याकस्माद्विलयनमिति । ननु च, अन्तर्विद्रधिगुल्मयोः को भेदः, समानस्थानसंभवत्वात्? उच्यते विद्रधिः पच्यते, गुल्मो न पच्यते निराश्रयत्वात् । यदाह सुश्रुतः-"न निबन्धोऽस्ति गुल्मस्य विद्रधिः सनिबन्धनः । गुल्मस्तिष्ठति दोषेषु विद्रधिर्मांसशोणिते । विद्रधिः पच्यते तस्माद्गुल्मः क्वापि न पच्यते" इति । ननु, गुल्मोऽपि पच्यत एव । यदाह चरकः-"विदाहशूलसंक्षोभस्वप्ननाशारतिज्वरैः । विदह्यमानं जानीयाद्गुल्मं तमुपनाहयेत्" इति । उच्यते, गुल्मो न पच्यते निराश्रयत्वात् । यदा तु कारणवशादाश्रयं मांसादिकमासादयति वातोपशमनार्थं कृतस्वेदादिभिर्वा रक्तदुष्टिर्भवति, तदा पच्यमानो विदाहनिमित्तकं विद्रधित्वमाप्नोति । उक्तं हि-"सर्वः शीघ्रविदाहित्वाद्विद्रधीत्यभिधीयते" इति । न हि यस्मात् विकारात् यदुत्पद्यते विकारान्तरं तत् स एव भवतीति; माभूत् प्लीहेव उदरम्, अश्मर्येव शर्करा, इत्यादि शास्त्रोक्तविरोधविस्तरः । तस्माद्विद्रधिः पच्यते गुल्मो न पच्यते इति सिद्धान्तो निरपवादः । ये तु अन्तर्विद्रधिं न पठन्ति तेषामयमभिप्रायः-गुल्मे पक्के विद्रधौ च पाटनशोधनरोपणादेः अपक्के च विरेकलेपविम्लापनादेश्चिकित्सितस्य

आतङ्कदर्पणव्याख्या ।

अनुपक्रांतत्वात्-चिरकालानुबंधित्वात् क्रमशः क्रमेण, संचितो वृद्धिं गतो, गुल्मो महावास्तुपरिग्रहः सकलोदरव्यापी, कृतमूलो धात्वंतरावगाही । शिरानद्धः शिराजालवान् । यदा कूर्मवदुन्नतः स्यात् दौर्बल्यादिभिरुपद्रवैर्युक्तो भवति, तदा न सिद्ध्यतीत्यर्थः ॥ १७ ॥ १८ ॥ पुनरसाध्यलक्षणमाह-गृहीत्वेति । हृल्लासादिषु गृहीत्वा शोफो गुल्मिनं गुल्मयुक्तं रोगिणं कर्षति मारयतीत्यर्थः ।

श्वासः शूलं पिपासान्नविद्वेषो ग्रन्थिमूढता ॥
जायते दुर्बलत्वं च गुल्मिनो मरणाय वै ॥ २० ॥
इति श्रीमाधवकरविरचिते माधवनिदाने गुल्मनिदानं समाप्तम् ॥ २८ ॥

## अथ हृद्रोगनिदानम् २९.

अत्युष्णगुर्वन्नकषायतिक्तश्रमाभिघाताध्यशनप्रसङ्गैः ॥
संचिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः ॥ १ ॥

मधुकोशव्याख्या ।

प्रायो विशेषाभावादलं पृथग्विकारस्वीकारेणेति ॥ १७-२० ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां गुल्मनिदानं समाप्तम् ॥ २८ ॥

गुल्मस्य हृदयं स्थानमुक्तम, अतो हृदयसंकीर्तनात् हृद्रोगारम्भ प्रसङ्गः । सातत्येन सेवा, अत्युष्णादयो यथायोग्यं वातादीनां क्रिमेश्च निदानमिति बोध्यम् ॥ १ ॥

आतंकदर्पणव्याख्या ।

सज्वरश्वासं ज्वरश्वासान्यानुद्दहन्तम् ॥ १९ ॥ पुनश्चासाध्यलक्षणमाह-श्वासेति । श्वासादय उपद्रवाः गुल्मिनो मारणाय भवंति, ग्रंथिमूढता ग्रंथिरूपस्यैव गुल्मस्याकस्मादिल्ल्यनमदर्शनमिति । ननु, वातविद्रधिगुल्मयोः को भेदः, समानस्थानसंस्थानत्वात्? उच्यते, विद्रधिः पच्यते, गुल्मो न पच्यते, निराश्रयत्वात्। यदाह-सुश्रुतः-"न निबंधोस्ति गुल्मस्य विद्रधिः सनिबंधनः। गुल्मस्तिष्ठति दोषे स्वे विद्रधिर्मांसशोणिते ॥ विद्रधिः पच्यते तस्माद्गुल्मः क्वापि न पच्यते" इत्यादि । ननु, गुल्मोपि पच्यमान इव । यदाह-चरकः-"विदाहशूलं संक्षोभस्वप्ननाशारतिज्वरैः । विदह्यमानं जानीयाद्गुल्मं तमुपनाहयेत्" । इति उच्यते-गुल्मो न पच्यते निराश्रयत्वात्, यदि तु कारणवशात् आश्रयं मांसादिकमासादयति, वातोपशमनार्थं कृतस्वेदादिभिर्वातरक्तदुष्टिर्भवति, तदा पच्यमानो विदाहलिङ्गकं विद्रधित्वमेवाप्नोतीति । उक्तं हि-"स वै शीघ्रविदाहित्वाद्विद्रधीत्यभिधीयते" इति । यद्येवं, तदा तस्माद्विकारांतरमुत्पद्यते तस्य एव भवति । माभूदेवं तदा प्लीहैव उदरं जठर एव शोफः एवं शास्त्रविरोधः, तस्माद्विद्रधिः पच्यते, गुल्मो न पच्यत इति सिद्धांतः। ये तु अंतर्विद्रधिं न पठंति, तेषामयमभिप्रायः-गुल्माऽपेक्षया विद्रधौ च पाटनशोधनरोपणादेः अपक्वे च विरेकलेपनविम्लापनादेश्चिकित्सितस्य प्रायो विशेषाभावादलं पृथग्विकारस्वीकारेणेति ॥ २० ॥ इत्यातंकदर्पणनिदानव्याख्यायां गुल्मनिदानम् ॥ २८ ॥

गुल्मस्य हृदयस्थानमुक्तमतो गुल्मानंतरं हृद्रोगारंभः। तस्य हेतुमाह-अतीति । उष्णादिभिरतिशब्दः प्रत्येकं संबध्यते । उष्णादयोऽतिसेविता वातादीनां हृदामयानां क्रिमिजस्य च

१ एतच्च-सज्वरश्वासमितिपाठाभिप्रायेण ।

दूषयित्वा रसं दोषा विगुणा हृदयं गताः ॥
हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते ॥ २ ॥
आयम्यते मारुतजे हृदयं तुद्यते तथा ॥
निर्मथ्यते दीर्यते च स्फोटयते पाटयतेऽपि च ॥ ३ ॥
तृष्णोष्मादाहचोषाः स्युः पैत्तिके हृदयक्लमः ॥
धूमायनं च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥ ४ ॥
गौरवं कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्दवम् ॥
माधुर्यमपि चास्यस्य बलासावतते हृदि ॥ ५ ॥

मधुकोशव्याख्या ।

तस्य संप्राप्तिं सामान्यलक्षणं चाह—दूषयित्वेत्यादि । दूषयित्वा रसमिति रसस्य हृदयाश्रयत्वात् । विगुणाः कुपिताः । हृद्रोगमिति वाच्ये यद्बाधाग्रहणं तद्दोषभेदेन बाधावैचित्र्यज्ञापनार्थम् । बाधाशब्देन चात्र नानाविधा पीडेति जेज्जटः, भङ्गवत् पीडेति गयदासः । हृद्रोगमिति 'वा शाकल्यत्ररोगेषु' इति रोगे परे हृदयस्य हृद्भावः, अथ वा हृदो रोगो हृद्रोगः ॥ २ ॥ वातिकहृद्रोगलक्षणमाह—आयम्यत इत्यादि । आयम्यते आकृष्यत इव । तुद्यते सूच्येव । निर्मथ्यते दण्डेनेव । दीर्यते द्विधेव क्रियते । स्फोटयते आरयेव । पाटयते कुठारेणेव ॥ ३ ॥ पैत्तिकलक्षणमाह—तृष्णेत्यादि । ऊष्मा किंचिद्दाहः । हृदयक्लमः हृदयाकुलत्वम्, ग्लानिरिति यावत् ॥ ॥ ४ ॥ श्लैष्मिकमाह—गौरवमित्यादि । बलासावतते कुपितकफव्याप्ते, दोषा दुष्टा

आतङ्कदर्पणव्याख्या ।

हेतवो भवंति, श्रमो धनुःकर्षणादिः, अभिघातो हृद्येव, संचिंतनं नृपतिभयादिकम्, स च पंचप्रकारः, वातादिभिस्त्रयः, सन्निपातेन क्रिमिभिश्च ॥ १ ॥ तस्य संप्राप्तिमाह—दूषयित्वेति । विगुणाः कुपिता दोषा रसं दूषयित्वा हृदयं गताः हृद्रोगमिति वाच्ये यद्बाधाग्रहणं तद्दोषभेदेन, बाधाशब्देनात्र नानाविधा पीडेति जेज्जटः, भंगवत्पीडेति गयदासः । हृदि रोगो हृद्रोग इति निरुक्तिः ॥ २ ॥ वातिकमाह—आयम्यत इति । मारुतजे हृद्रोगे हृदयमायम्यते आकृष्यत इव, तुद्यते सूच्येव, निर्मथ्यते दंडेनेव, स्फोट्यते आरयेव, पाट्यते कुठारेणेव ॥ ३ ॥ पैत्तिकमाह—उष्मा प्रादेशिको दाहः, हृदि किंचिद्दाह इत्यर्थः । दाहः सर्वांगिकः, चोषः चूष्यते इव, हृदये क्लमो हृदयाकुलत्वं ग्लानिरित्यर्थः । धूमायनं धूमोद्गिरणमिव, क्लेदः[1] किंचित् दुर्गंधः, सटित इव मुखस्यैव शोषश्च ॥ ४ ॥ श्लैष्मिकमाह—गौरवमिति । बलासावतते हृदि कुपितकफव्याप्ते

१ एतच्च—'क्लेदः शोषो मुखस्य च' इतिपाठाभिप्रायेण ।

**विद्यात्त्रिदोषं त्वपि सर्वलिङ्गं तीव्रार्तितोदं क्रिमिजं सकण्डूम् ॥**
**उत्क्लेदः ष्ठीवनं तोदः शूलं हृल्लासकस्तमः ॥**
**अरुचिः श्यावनेत्रत्वं शोषश्च क्रिमिजे भवेत् ॥ ६ ॥**

---

मधुकोशव्याख्या ।

दूषयितारो भवन्तीत्यागमात् ॥ ९ ॥ सान्निपातिकमाह—विद्यादित्यादि । सर्वलिङ्गमित्यनेन प्रकृतिसमसमवायारब्धत्वमुक्तं तेन चिकित्साऽप्यस्य प्रत्येकं वातादिजस्य या सा मिलितैव कार्या । अपचारात्त्विह ग्रन्थिरुत्पद्यते ततः क्रिमिसंभवः । उक्तं हि चरकेण—"त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते । तिलक्षीरगुडादीनि ग्रन्थिस्तस्योपजायते ॥ मर्मैकदेशे संक्लेदं रसश्चास्योपगच्छति । संक्लेदात् क्रिमयश्चास्य भवन्त्युपहतात्मनः" इति । तस्यैवेदं लक्षणमाह—तीव्रार्तितोदं क्रिमिजं सकण्डूमिति । उत्क्लेद इत्यादिना तमोऽन्तं त्रिदोषजहृद्रोगलक्षणम्; तत्र तोदशूले वातात्, उत्क्लेदहृल्लासौ कफात्, भ्रमः पित्तात्, ष्ठीवनं कफपित्तात्; अरुचिरित्यादिना क्रिमिजस्येति जेज्जटः । गयदासस्त्वाह—श्यावनेत्रत्वपर्यन्तेन त्रिदोषजलक्षणमिति । स्यादेतत् त्रिदोषजपदं न तावदत्र सुश्रुतेन पठितम्; अतः सर्वमेव उत्क्लेदादि शोषान्तं क्रिमिजलक्षणं भविष्यति । नैवम्, "विद्यात्त्रिदोषं त्वपि सर्वलिङ्गं तीव्रार्तितोदं क्रिमिजं सकण्डूम्" इति दृढबलस्य वाक्यम् । उत्क्लेद इत्यादिस्तु एक एव श्लोकः सुश्रुतेन पठितः, न तु पृथक् सन्निपातलक्षणम्, ततस्त्रिदोषजस्यानभिधाने सुश्रुते न्यूनत्वं स्यात् । त्रिदोषाश्मरीवत् तस्यासंभव एवेति चेत्, नैवम्, तन्त्रान्तरेषु पठितत्वात् । तथाच हारीतः—"सर्वाणि रूपाणि च सन्निपातात्त्रिरोगेत्थितं चापि वदन्त्यसाध्यम्" इति । चरकेऽप्युक्तं—"हेतुलक्षणसंसर्गादुच्यते सान्निपातिकः" इति; तथा—"त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते" इत्यादि । कण्ठरवेण तु त्रिदोषजपदं यन्न पठितं सुश्रु-

आतङ्कदर्पणव्याख्या ।

दुष्टा दोषा दूषयितारो भवंतीत्युक्तत्वात् । गौरवं हृदयस्य; स्तंभो जडता, मार्दवं जलप्लुतमिव, माधुर्यं मुखे ॥ ९ ॥ त्रिदोषजक्रिमिजयोर्मिलितमेव लक्षणमाह—विद्यादिति । विद्यात्त्रिदोषादिवद् द्वयं दृढबलोक्तलक्षणम्, उत्क्लेद इत्यादिकमेकपद्यं सुश्रुतोक्तं तीव्रार्त्तितोदमिति भिन्नतंत्रीयत्वात्पौनरुक्त्यं न वाच्यं, त्रिदोषजे सर्वदोषाणां लिंगानि भवंति, सर्वलिंगमित्यनेन प्रकृतिसमवायारब्धत्वमुक्तं तेन चिकित्साप्यस्य प्रत्येकं वातादिजस्य या सा मिलितैव कार्या । अपचारात् क्रिमिजे ग्रंथिर्भवति, ततश्च क्रिमिसंभवः, क्रमयो जायंतेऽस्मिन्निति क्रिमिज इति निरुक्तिः । उक्तं हि

( मर्मैकदेशं संक्लेदो रसश्चाप्युपगच्छति ॥
संक्लेदात्कृमयश्चास्य भवन्त्युपहतात्मनः ॥ )
( क्लमः सादो भ्रमः शोषो ज्ञेयास्तेषामुपद्रवाः ॥
क्रिमिजे क्रिमिजातीनां श्लैष्मिकाणां च ये मताः ॥ ७ ॥ )

इति श्रीमाधवकरविरचिते माधवनिदाने हृद्रोगनिदानं समाप्तम् ॥ २९ ॥

---

मधुकोशव्याख्या ।

तेन, तत् क्रिमिजस्यापि त्रिदोषजत्वख्यापनार्थमित्याचक्षते । ननु. दोषजावान्तरावस्थाविशेषत्वात् क्रिमिजोऽपि दोषज एव, तत् कथं हृदामयः पञ्चविध इति ? नैवम्. रोगजस्यापि रोगस्य पृथक्त्वदर्शनात् । यदुक्तं--'निदानार्थकर' इत्यादि । द्विदोषजस्त्वनुक्तोऽपि प्रकृतिसमसमवायत्वाद्बोध्यः ॥ ६ ॥ सर्वेषामुपद्रवानाह--क्लम इत्यादि । श्लैष्मिकाणां क्रिमीणां ये उपद्रवास्ते क्रिमिजहृद्रोगेऽपि स्युः । ते च हृल्लासास्यस्रवणाविपाकादयः ॥ ७ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां हृद्रोगनिदानं समाप्तम् ॥ २९ ॥

आतङ्कदर्पणव्याख्या ।

चरके--"त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते । तिलक्षीरगुडादीनि ग्रंथिस्तस्योपजायते" सप्तोत्तरे मर्मशते त्रीणि मर्माणि शिरोहृदयबस्तयः प्रधानानि, तत्र हृदयाश्रितविकारानाह--मर्मेति । तीव्रार्तितोदं क्रिमिजं सकंडूमित्यादि । उत्क्लेद इत्यादिकमेव त्रिदोषहृद्रोगलक्षणम्, तत्र तोदशूले वातात्, तोदो व्यथाविशेषः, उत्क्लेदहृल्लासौ कफात्, उत्क्लेदः अपक्वदोषाणां स्वांशोदयाच्च्युतिः, हृल्लासः हृदयादीषदंबुनिर्गमः, तमः पित्तात् तमोंधकारप्रविष्टस्येव, ष्ठीवनं कफपित्तात् एतत्त्रिदोषलक्षणम्, अरुचीत्यादिना । कृमिजस्येति । एतत्सुगमम् ॥ सर्वेषामेवोपद्रवानाह--क्लम इति । श्लैष्मिकाणां कृमीणां ये उपद्रवाः ते कृमिजे हृद्रोगेपि मताः । ते च हृल्लासास्यस्रवणविपाकादय इति ॥ ६ ॥ ७ ॥ इत्यातंकदर्पणे निदानव्याख्यायां हृद्रोगनिदानम् ॥ २९ ॥

---

१ अयं श्लोक आतंककदर्पणसहितमुद्रितपुस्तकानुसारेण ।

२ लक्षणमिति शेषः ।

# अथ मूत्रकृच्छ्रनिदानम् ३०.

व्यायामतीक्ष्णौषधरूक्षमद्यप्रसङ्गनित्यद्रुतपृष्ठयानात् ॥
आनूपमांसाध्यशनादजीर्णात्स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ ॥१॥
पृथङ्मलाः स्वैः कुपिता निदानैः सर्वेऽथ वा कोपमुपेत्य वस्तौ ॥
मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात् ॥२॥
तीव्रार्तिरुग्वङ्क्षणवस्तिमेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात् ॥
पीतं सरक्तं सरुजं सदाहं कृच्छ्रं मुहुर्मूत्रयतीह पित्तात् ॥ ३ ॥

---

मधुकोशव्याख्या ।

मर्मान्तरं मर्मशते त्रीणि मर्माणि शिरोहृदयवस्तयः प्रधानानि । तत्र हृदयगतविकारानभिधाय वस्तिगतविकारानाह—व्यायामेत्यादि । मूत्रकृच्छ्राणीति मूत्रस्य कृच्छ्रेण महता दुःखेन प्रवृत्तिः । अष्टाविति दोषैः पृथक् त्रीणि, सन्निपातेनैकम्, शल्यजपुरीषजशुक्रजाश्मरीजानीत्येकैकानि । ननु, शर्कराजं मूत्रकृच्छ्रं सुश्रुतेन पठितम्; तच्चात्र संग्रहेऽपि पठितम्. 'अश्मरी शर्करा चैव तुल्य' इत्यादिना; तत् कथमष्टौ ? नव प्राप्नुवन्ति । उच्यते, शर्करा अश्मरीभेद एव । यदाह दृढबलः—"एषाश्मरी मारुतभिन्नमूर्तिः स्याच्छर्करा मूत्रपथात् क्षरन्ती" इति । अतोऽश्मरीजेनैव शर्कराजग्रहणमिति मन्यमानो दृढबलो अष्टावित्यपठत् ॥ १ ॥ २ ॥ मूत्रकृच्छ्रस्य वातजादिभेदेन लक्षणान्याह—तीव्रेत्यादि । सलिङ्गस्य समेढ्रस्य । सपिच्छं पिच्छि-

आतङ्कदर्पणव्याख्या ।

हृदयस्य प्रधानमर्मत्वाद्वस्तेरपि मर्मत्वात्, अतो हृद्रोगानंतरं वस्तिव्याधित्वान्मूत्रकृच्छ्रारंभः । तस्य हेतुमाह—व्यायामेति । तीक्ष्णौषधं राजिकादियुक्तम्, मद्यप्रसंगोऽतिमद्यसेवा, नृत्यादेः, पृष्ठजंगमयानात्, अन्ये—नित्यद्रुतपृष्ठयानादिति पठंति । नित्यं शीघ्रं तुरगादिगमनम्, आनूपाः सजलप्रदेशचारिणो मत्स्यादयः, अध्यशनं भुक्तस्योपरिभोजनम्, मूत्रकृच्छ्राणीति मूत्रस्य कृच्छ्रेण महता दुःखेन प्रवृत्तिः अष्टाविति दोषैस्त्रीणि सन्निपातेनैकं शल्यजं पुरीषजं शुक्रजमश्मरीजमित्यष्टौ ॥ १ ॥ तस्य संप्राप्तिपूर्वकं लक्षणमाह—पृथगिति । पृथक् भिन्नाः, अथ सर्वैः स्वैर्हेतुभिः कुपितास्ततो वस्तौ मूत्राशये कोपं प्राप्य यदा मूत्रमार्गं मेढ्रं परिपीडयंति, तदा नरः कष्टेन मूत्रयतीत्यर्थः ॥ २ ॥ वातजमाह—तीव्रेति । तीव्रा मारणात्मिका, वंक्षणे ऊरुमेढ्राणामंतरालसंधौ, स्वल्पं स्तोकं, मुहुर्वारंवारं वातात् कृच्छ्रम् । पैत्तिकमाह—पीतमिति । इह पित्तात् कृच्छ्रे पीतादि

---

१ एतच्च—नृत्यद्रुतपृष्ठयानादितिपाठाभिप्रायेण ।

बस्तेः सलिङ्गस्य गुरुत्वशोथौ मूत्रं सपिच्छं कफमूत्रकृच्छ्रे ॥
सर्वाणि रूपाणि तु सन्निपाताद्भवन्ति तत्कृच्छ्रतमं हि कृच्छ्रम् ॥४॥
मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु वा ॥
मूत्रकृच्छ्रं तदाघाताज्जायते भृशदारुणम् ॥ ५ ॥
वातकृच्छ्रेण तुल्यानि तस्य लिङ्गानि निर्दिशेत् ॥
शकृतस्तु प्रतीघाताद्वायुर्विगुणतां गतः ॥ ६ ॥
आध्मानं वातशूलं च मूत्रसङ्गं करोति च ॥
अश्मरीहेतु तत्पूर्वं मूत्रकृच्छ्रमुदाहरेत् ॥ ७ ॥
शुक्रे दोषैरुपहते मूत्रमार्गे विधाविते ॥
सशुक्रं मूत्रयेत्कृच्छ्राद्बस्तिमेहनशूलवान् ॥ ८ ॥
अश्मरी शर्करा चैव तुल्यसंभवलक्षणे ॥
विशेषणं शर्करायाः शृणु कीर्तयतो मम ॥ ९ ॥

---

मधुकोशव्याख्या ।

लम् । कृच्छ्रतमं कष्टसाध्यम् । कृच्छ्रं मूत्रकृच्छ्रम् । मूत्रवाहिष्विति मूत्रवहस्रोतःसु । अश्मरीहेतु तत्पूर्वमिति अश्मरीहेत्विति लक्ष्यपदम्, तत्पूर्वमिति लक्षणपदम्, तत्पूर्वम् अश्मरीपूर्वकम् ॥ ३-८ ॥ मूत्रकृच्छ्रहेतुत्वेनोक्तयोरश्मरीशर्करयोः समानतामवान्तर-भेदं चाह—अश्मरीत्यादि । अश्मरी शर्करा चैवेत्यनन्तरम् 'एते' इत्याध्याहार्य तुल्य-संभवलक्षणे इत्यनेन द्विवचनान्तेन संबन्धनीयम्, यथा—"तयोर्जगृहतुः पादान् राजा

आतङ्कदर्पणव्याख्या ।

लिंगं मूत्रं मुहुर्मूत्रयति नर इति शेषः । पीतं सरक्तं वर्णद्वयान्न्यूनाधिकपित्तप्रकोपात् ॥३॥ श्लेष्मि-कमाह—वस्तेरिति । वस्तेः सलिंगस्य मेहनयुक्तस्य वस्तेः गुरुत्वशोथौ भवतः । सपिच्छं पिच्छिलं भवति । त्रिदोषजमाह—सर्वाणीति । सर्वाणि सर्वदोषलिंगानि, तत् कृच्छ्रं त्रिदोषजं कृच्छ्र-तमं कष्टसाध्यम् ॥ ४ ॥ शल्यजमाह—मूत्रेति । मूत्रवहस्रोतस्सु शल्येन क्षतेषु सत्सु अथवा अभि-हतेषु पीडितेषु तदाघातात् भृशं दारुणं तीव्रं मारणात्मकम् ॥ ५ ॥ पुरीषजमाह—शकृत इति । पुरीषस्य प्रतीघातात् अवरोधात् विगुणीभूतो दूषितो वायुः आध्मानं वातशूलं च कुर्यात् । मूत्र-नाशं च कुर्यात्, ततो मूत्रकृच्छ्रं च जायते । अश्मरीजमाह—अश्मरीहेतुमूत्रकृच्छ्रमपि तस्य कृच्छ्रस्य अश्मर्येव कारणम् ॥ ६ ॥ ७ ॥ शुक्रजमाह—शुक्र इति । मूत्राशये स्रवणव्यथा-युक्तः पुरुष इति शेषः ॥ ८ ॥ मूत्रकृच्छ्रहेतुत्वेनोक्तयोरश्मरीशर्करयोर्नवत्वसंख्यानिरासार्थं समा-नत्वे अवांतरभेदमाह—अश्मरीति । अश्मरी च शर्करा च एते उभे तुल्यसंभवलक्षणे तुल्यः संभव

पच्यमानाश्मरी पित्ताच्छोष्यमाणा च वायुना ॥
विमुक्तकफसन्धाना क्षरन्ती शर्करा मता ॥ १० ॥
हृत्पीडा वेपथुः शूलं कुक्षावग्निश्च दुर्बलः ॥
तया भवति मूर्च्छा च मूत्रकृच्छ्रं च दारुणम् ॥ ११ ॥
मूत्रवेगनिरस्ताभिः प्रशमं याति वेदना ॥
यावदस्याः पुनर्नैति गुडिका स्रोतसो मुखम् ॥ १२ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने मूत्रकृच्छ्रनिदानं समाप्तम् ॥ ३० ॥

---

मधुकोशव्याख्या ।

राज्ञी च मागधी" इत्यादिवत्; तुल्यः संभव उत्पत्तिकारणं लक्षणं च ययोस्ते तथा तुल्यं संभवलक्षणैरिति पाठान्तरं तुल्यं सदृशे, करित्यत उक्तं—संभवलक्षणैरिति; तुल्या संभवलक्षणैरिति पाठान्तरे स एवार्थः। विशेषणं विशेषः। तमेव विवृणोति—पच्यमानेत्यादि। कफसंधानं कफेनावयवसंश्लेषः. कफ एव वा संधानं कफसंधानम्, संधीऽयतेऽनेनेति व्युत्पत्त्या। तेन पित्तपाकवातशोषौ संधानविमोक्षहेतुत्वेनोक्तौ। क्षरन्तीति वस्तितः। चरके हि—"स्याच्छर्करा मूत्रपथात् क्षरन्ती" इत्येवं पठितम्। कुक्षौ शूलमिति संबन्धः। तया शर्करया इति ॥ ९—१२ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां मूत्रकृच्छ्रनिदानं समाप्तम् ॥ ३० ॥

आतङ्कदर्पणव्याख्या।

उत्पत्तिः कारणं च ययोः ते तथा समाननिदानलिंगे इत्यर्थः। कीर्त्तयतः कथयतो मम शर्कराया विशेषणं शृणु ॥ ९ ॥ पित्तेन पच्यते वायुना शोष्यते, संधानं कफेनावलंबनं संश्लेषः, अथवा कफ एव संधानं संधीयतेऽनेनेति व्युत्पत्त्या एतेन पवनाद्विशोषणात् पित्तवातौ संधानरूपस्य कफस्य शोषकत्वेन तौ शर्कराया हेतुत्वेनोक्तौ पित्तेन पाचिता, वायुना शोषिता, श्लेष्मणा संधिता अश्मरी ताभ्यां विमुक्तसंधाना शर्करा क्षरंती सती शर्करारूपा, क्षरंतीति बस्तितः। एतावता हेतुलक्षणत्वेन एक एव रोगः संधानाभावात् क्रियाभेदः अतो, मूर्च्छा च मूत्रकृच्छ्रं द्वे अपि कारणे ॥१०॥ तस्य उपद्रवानाह—हृदिति। शूलं कुक्षाविति संबंधः तया शर्करया ॥ ११॥१२॥ इत्यातंकदर्पणे निदानव्याख्यायां मूत्रकृच्छ्रनिदानम् ॥ ३० ॥

---

# अथ मूत्राघातनिदानम् ३१.

जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश ॥
प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः ॥ १ ॥
रौक्ष्याद्वेगविघाताद्वा वायुर्वस्तौ सवेदनः ॥
मूत्रमाविश्य चरति विगुणः कुण्डलीकृतः ॥ २ ॥
मूत्रमल्पाल्पमथ वा सरुजं संप्रवर्तते ॥
वातकुण्डलिकां तां तु व्याधिं विद्यात्सुदारुणम् ॥ ३ ॥
आध्मापयन्वस्तिगुदं रुद्ध्वा वायुश्चलोन्नताम् ॥
कुर्यात्तीव्रार्तिमष्ठीलां मूत्रविण्मार्गरोधिनीम् ॥ ४ ॥

---

मधुकोशव्याख्या ।

मूत्रविकारसाधर्म्यात् मूत्राघातानाह—जायन्त इत्यादि । मूत्रकृच्छ्रमूत्राघातयोश्चायं विशेषः । मूत्रकृच्छ्रे कृच्छ्रत्वमतिशयितम्, ईषद्विबन्धः; मूत्राघाते तु विबन्धो बलवान्, कृच्छ्रत्वमल्पमिति । मूत्रविघाताद्यैर्मूत्रवेगविधारणादिभिः, आद्यशब्देन पुरीषशुक्रवेगविघातादीनां रूक्षाशनादीनां च ग्रहणम् । वातकुण्डलिकादयस्त्रयोदशेति संबन्धः ॥ १ ॥ वातकुण्डलिकामाह—रौक्ष्यादित्यादि । आविश्येत्यावृत्य; आविध्येति पाठान्तरे स एवार्थः । चरति गच्छति विगुणः कुपितः । कुण्डलीकृत इति वात्यावद्धस्तावेव भ्रमंस्तिष्ठतीति ॥ २ ॥ ३ ॥ अष्ठीलामाह—आध्मापयन्नित्यादि । रुद्ध्वेति वस्तिगुदमेव । अष्ठीलातुल्यत्वात् अष्ठीला, सा च वातव्याधावुक्ता ॥ ४ ॥

आतङ्कदर्पणव्याख्या ।

मूत्रविकारसाधर्म्यान्मूत्राघातानाह—मूत्रकृच्छ्रमूत्राघातयोश्चायमेव भेदः । मूत्रकृच्छ्रे कृच्छ्रत्वमतिशयितमीषद्विबंधः, मूत्राघाते तु विबंधो बलवान् कृच्छ्रत्वमल्पमिति । तेषां संप्राप्तिमाह—जायंत इति । मूत्रवेगविधारणाद्यैः आदिशब्देन पुरीषशुक्रादिवेगविघातानां रूक्षाशनादीनां च ग्रहणम्, वातकुंडलिकादयस्त्रयोदशेति संबन्धः ॥१॥ तेषां मध्ये वातकुंडलिकालक्षणमाह—रौक्ष्येति । रौक्ष्यादिभिर्वेगविघातादिभिश्च विगुणो दुष्टः, कुंडलीभूतो वायुः, बस्तौ मूत्राशये, चरति प्रधावति आबद्धत्वाद्भ्रमनं तिष्ठतीत्यर्थः । वात्यावत् आविश्य आवृत्य मूत्रमिति । तस्मान्मूत्रमल्पमल्पं सव्यथं प्रवर्तते तं व्याधिं वातकुंडलिकामाहुः ॥ सुदारुणं मारणात्मकत्वात् ॥ २ ॥ ३ ॥ अष्ठीलामाह—आध्मापयन्निति । आध्मापयन् पूरयन् वस्तिगुदं तथा वस्तिगुदमेव रुद्ध्वा वायुरष्ठीलां कुर्यात् । अष्ठीलातुल्यत्वादष्ठीला, अष्ठीला उत्तरापथेन नदीषु पाषाणपिंडी, चलोन्नताम्-चलां चलनशीलाम्,

वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः ॥
निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः ॥ ५ ॥
मूत्रसङ्गो भवेत्तेन वस्तिकुक्षिनिपीडितः ॥
वातवस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥ ६ ॥
चिरं धारयतो मूत्रं त्वरया न प्रवर्तते ॥
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥ ७ ॥
मूत्रस्य वेगेऽभिहते तदुदावर्तहेतुकः ॥
अपानः कुपितो वायुरुदरं पूरयेद्भृशम् ॥ ८ ॥
नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम् ॥
तन्मूत्रजठरं विद्यादधोवस्तिनिरोधनम् ॥ ९ ॥

मधुकोशव्याख्या ।

वातवस्तिमाह—वेगमित्यादि । वस्तिकुक्षिनिपीडितः इति वस्तौ कुक्षौ च निपीडितः संपिण्डितो वायुरिति संबन्धः; 'वस्तिकुक्षी निपीडयन्' इति पाठान्तरं वस्तिकुक्ष्यो- रुजाकर इति ॥ ५ ॥ ६ ॥ मूत्रातीतमाह—चिरमित्यादि । त्वरया न प्रवर्तते इति मूत्र- मित्यर्थः । मेहमानस्य मूत्रं त्यजतः । वहमानस्येति पाठान्तरं सुगमम् ॥ ७ ॥ मूत्रजठरमाह—मूत्रस्य वेग इत्यादि । तदुदावर्तहेतुक इति मूत्रवेगधारणजनितोदावर्त- निमित्तः । अधोवस्तिनिरोधनमिति वस्तेरधोभागे विबन्धकारकम् ॥ ८ ॥ ९ ॥

आतङ्कदर्पणव्याख्या ।

उन्नताम् ऊर्ध्वस्थिताम्, तीव्रार्तिम् अतिव्यथाम्, मूत्रमार्गं मंदम्, विमार्गः वायुः, तयोः रोधि- नीम् ॥ ४ ॥ वातवस्तिमाह—वेगमिति । अकुशलो मूर्खः, तस्य पुरुषस्य वस्तेर्मुखं निरुणद्धि वस्तिगतो वायुः, तेन वायुना मूत्रसंगो विघात् भवति ॥ वस्तिकुक्षिनिपीडित इति । वस्तौ कुक्षौ निपीडितः, संपिंडितो वायुरिति संबंधः । 'वस्तिकुक्षिनिपीडयन्' इति पाठे तत्र वस्तिकुक्षौ चरन् ॥ ५ ॥ ६ ॥ मूत्रातीतमाह—चिरमिति । चिरं चिरकालं मूत्रं धारयतः पुंसः त्वरया वेगेन न प्रवर्त्तते, मेहमानस्य मूत्रं त्यजतः प्रवर्त्तते चेत्तदा मंदं शनैः, 'वाहमानस्य' इति पाठांतरं सुग- मम् ॥ ७ ॥ मूत्रजठरमाह—मूत्रस्येति । तदुदावर्त्तहेतुतः[1] इति मूत्रवेगधारणजनितोदावर्त्तनिमित्ततः । अपानः 'अपानसंज्ञकः कुपितः' अतिशयेनोदरं पूरयति । ततो नाभेरधस्तात्तीव्रवेदनमा- ध्मानं कुर्यात् । अधस्ताद्वस्तिनिरोधनं वस्तेरधोभागे विबंधकारकम् ॥ ८ ॥ ९ ॥

[1] एतच्च—"तदुदावर्तहेतुतः" इतिपाठाभिप्रायेण ।

वस्तौ वाऽप्यथ वा नाले मणौ वा यस्य देहिनः ॥
मूत्रं प्रवृत्तं सज्जेत सरक्तं वा प्रवाहतः ॥ १० ॥
स्रवेच्छनैरल्पमल्पं सरुजं वाऽथ नीरुजम् ॥
विगुणानिलजो व्याधिः स मूत्रोत्सङ्गसंज्ञितः ॥ ११ ॥
रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ ॥
मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ १२ ॥
अन्तर्वस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् ॥
अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ॥ १३ ॥

---

मधुकोशव्याख्या ।

मूत्रोत्सङ्गमाह—वस्तावित्यादि । नाले मेढ्रे, मणौ मेढ्राग्रे । प्रवृत्तं सज्जेतेति संसक्तं सन्न प्रवर्तते । सरक्तं वा प्रवाहत इति प्रवाहणकुपितवायुना वस्त्यादिभेदजनितरक्तयुक्तं मूत्रं प्रवर्तते ॥ १० ॥ ११ ॥ मूत्रक्षयमाह—रूक्षस्येत्यादि । तदाह्वयमिति मूत्रक्षयाख्यं, कारणे कार्योपचारात् ॥ १२ ॥ मूत्रग्रन्थिमाह—अन्तरित्यादि । अन्तर्वस्तिमुखे वस्तिमुखस्याभ्यन्तरे । ग्रन्थिर्गुडकाकारः । ननु, स्थानवेदनाकारणानामभिन्नत्वादश्मर्या सह को भेदः ? उच्यते, अश्मर्यां पित्तादिकं संहन्यते, अत्र तु रक्तमेव । उक्तं हि तन्त्रान्तरे—"रक्तं वातकफाद्दुष्टं वस्तिद्वारे सुदारुणम् । ग्रन्थिं कुर्यात्स कृच्छ्रेण सृजेन्मूत्रं तदावृतम् ॥ अश्मरीसमशूलं तं रक्तग्रन्थिं प्रचक्षते" इति । विशेषज्ञानं तु कुत इति चेत् ? अश्मरीपूर्वरूपोक्तस्य मूत्रे वस्तसगन्धत्वादेर्भावाभावा-

आतङ्कदर्पणव्याख्या ।

मूत्रोत्संगमाह—वस्ताविति । वस्तौ मूत्राशये अथवा नाले मेढ्रे, अथवा मणौ मेढ्राग्रे, मूत्रं सज्जते न प्रवर्तते । सरक्तं वा प्रवर्तते प्रवाहत इति शनैर्मंदम् । अल्पमल्पं स्तोकं सव्यथं वा रुजारहितं वा प्रवर्त्तते मूत्रमिति संबंधः ॥१०॥११॥ मूत्रक्षयमाह—रूक्षस्येति । क्लांतदेहस्य श्रान्तशरीरस्य, वस्तिस्थौ मूत्राशयस्थौ, पित्तमारुतौ मूत्रनाशं कुरुतः । व्यथा दाहयुक्तं तदाह्वं मूत्रक्षयाख्यं कारणे कार्योपचारात् ॥ १२ ॥ मूत्रग्रंथिमाह—अंतरिति—अंतर्वस्तिमुखस्याभ्यंतरे ग्रंथिर्गुटिकाकारः, स्थिरः अचलः, अल्पो लघुरामलकाकारः । ननु, स्थानवेदनाकाराणामभिन्नत्वादश्मर्या सह को भेद उच्यते । अश्मर्यां पित्तादिकं संहन्यते, अत्र तु रक्तमेव । अथवा अयं सहसा भवेत्, अश्मरी तु संचयेन । अन्यच्च अश्मरी पित्तेन पच्यते, वायुना शोष्यते, कफेन बध्यते, अत्र तु रक्तमेव । उक्तं हि तंत्रांतरे—"रक्तं वातकफाद्दुष्टं वस्तिद्वारे सुदारुणम् । ग्रंथिं कुर्यात्स

मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम् ॥
स्थानाच्च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्तते ॥ १४ ॥
भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥
व्यायामाध्वातपैः पित्तं वस्तिं प्राप्यानिलान्वितम् ॥१५॥
वस्तिं मेढ्रं गुदं चैव प्रदहेत्स्रावयेदधः ॥
मूत्रं हारिद्रमथ वा सरक्तं रक्तमेव वा ॥ १६ ॥
कृच्छ्रात्पुनःपुनर्जन्तोरुष्णवातं ब्रुवन्ति तम् ॥
पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत् ॥ १७ ॥
कृच्छ्रान्मूत्रं तदा पीतं श्वेतं रक्तं घनं सृजेत् ॥
सदाहं रोचनाशङ्खचूर्णवर्णं भवेत्तु तत् ॥ १८ ॥

---

मधुकोशव्याख्या ।

भ्यास् ॥ १३ ॥ मूत्रशुक्रमाह—मूत्रितस्येत्यादि । मूत्रितस्य मूत्रवेगितस्य । स्थानाच्च्युतं स्वस्थानाद्भ्रष्टं शुक्रम् ॥ १४ ॥ उष्णवातमाह—व्यायामेत्यादि । व्यायामात् विरोधिसौम्यधातुक्षयात्तेजोवृद्ध्या पित्तवृद्धिः । अनिलान्वितमनिलसंयुतम् । अनिलावृतमिति पाठान्तरं सुगमम् । सरक्तमीषल्लोहितम् ॥ १५ ॥ १६ ॥ मूत्रसादमाह—पित्तमित्यादि। संहन्येते स्त्यानीक्रियेते। शुष्कमल्पं तन्मूत्रं पित्तेन रोचनाभम्. कफेन

आतङ्कदर्पणव्याख्या ।

कृच्छ्रेण सृजेन्मूत्रं तदावृतम् ॥ अश्मरीसमशूलं हि रक्तग्रंथिं प्रचक्षते ।'' तथा अश्मरीपूर्वरूपोक्तस्य मूत्रे वस्तसगंधत्वादेरभावात् ॥ १३ ॥ मूत्रशुक्रमाह—मूत्रितस्येति । मूत्रितस्य मूत्रवेगयुक्तस्य वातेनोद्धृतं स्थानात् च्युतं स्वस्थानात् भ्रष्टम्, मूत्रयतो मूत्रं कुर्वतः पुरुषस्य प्राक् प्रथमं प्रवर्तते ॥ १४ ॥ अथ वा पश्चात् भस्ममिलितोदकसदृशम् । उष्णवातमाह—व्यायामेति । व्यायामाद्विरोधित्वेन सौम्यधातुक्षयात् तेजोवृद्ध्या पित्तवृद्धिः, तत्कुपितं पित्तम्, अनिलान्वितमनिलसंयुतं वस्तिं प्राप्य वस्त्यादिकं प्रदहन् मूत्रमधः स्रावयेत् । कीदृशम् ? हारिद्रम्, अथ वा सरक्तम् । ईषद्रक्तम्, अथ केवलं रक्तमेव । 'अनिलावृतम्' इति पाठांतरम् ॥ १५ ॥ १६ ॥ मूत्रसादमाह—पित्तमिति । वातेन संहन्येते स्त्यानीक्रियेते, तदा कृच्छ्रात् मूत्रयेत् । पित्तेन पीतरक्तकफेन, श्वेतं घनम्, त्रिदोषेण समस्तवर्णम्, तदेव शुष्कम्, पित्तेन रोचनाचूर्णाभम्,

शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ॥
रूक्षदुर्बलयोर्वातेनोदावर्तं शकृद्यदा ॥ १९ ॥
मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः ॥
विड्गन्धं मूत्रयेत्कृच्छ्राद्विड्विघातं विनिर्दिशेत् ॥ २० ॥
द्रुताध्वलंघनायासैरभिघातात्प्रपीडनात् ॥
स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥ २१ ॥
शूलस्पन्दनदाहार्तो बिन्दुंबिन्दुं स्रवत्यपि ॥
पीडितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्तिमान् ॥ २२ ॥
वस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम् ॥
पवनप्रबलं प्रायो दुर्निवारमबुद्धिभिः ॥
तस्मिन्पित्तान्विते दाहः शूलं मूत्रविवर्णता ॥ २३ ॥

---

मधुकोशव्याख्या ।

शंखचूर्णाभम्, समस्तवर्णमुक्तसकलवर्णं सन्निपातात् ॥१७॥१८॥ विड्विघातमाह–रूक्षेत्यादि । अनुपद्येत प्राप्नुयात् । विड्गन्धमित्यत्र वाशब्दो द्रष्टव्यः ॥ १९॥२० ॥ वस्तिकुण्डलमाह–द्रुतेत्यादि । लङ्घनमुत्पतनम्, उद्वृत्तः स्वस्थानादूर्ध्वं गतः, गर्भवदिति गर्भिण्या उदरान्तर्गतापत्यवत् । एतेन वस्तिपुटस्य पार्श्वगमनं दर्शितम् । पीडित इति नाभेरधः । उद्वेष्टनार्तिः उद्वेष्टनरूपार्तिः । शस्त्रविषोपमं शस्त्रविषसदृशमिति ॥ २१ ॥ २२ ॥ विभिन्नार्थसूचनार्थं प्रसिद्धानुभवोपदर्शनार्थं वा तस्यैव दोषान्तरानुबन्धिनो लक्षणमाह–तस्मिन्नित्यादि । श्लेष्मणा अन्विते तस्मिन्निति बोध-

आतङ्कदर्पणव्याख्या ।

कफेन शंखचूर्णाभम्, सन्निपाताद् उक्तसकलवर्णम् । विड्विघातमाह–रूक्षेति । द्वयोस्तयोर्वातेन अधोवृतं मूत्राशयाद्यो नालमूत्रात्स्रोतांसि अनुपद्येत आप्नुयात्, तदा विट्संसृष्टं पुरीषमिति । तं विड्गंधं मूत्रं कृच्छ्रात् मूत्रयेत् । 'उदावर्त्तम्' इति पाठांतरम्, तत्रापि स एवार्थः ॥ १९ ॥ ॥ २० ॥ वस्तिकुंडलमाह–द्रुतेति । द्रुताध्वलंघनं द्रुतेन अध्वगमनम्, लंघनमुत्पतनं वा, अभिघाताल्लगुडादिभिः, प्रपीडनाद्वा निष्पीडनात्, एतैर्हेतुभिर्वस्तिरुद्वृत्तः स्वस्थानात् ऊर्ध्वं गतः, गर्भवदिति । गर्भिण्या उदरांतर्गताऽपत्यवत्तिष्ठति, एतेन वस्तिपुटस्य पार्श्वगमनमपि सूचितम् ॥ २१ ॥ पीडित इति नाभेरधः, तथा संस्तंभादियुक्तः, उद्वेष्टनरूपा अर्तिः । उद्वेष्टनरूपपीडातियुक्तं शस्त्रविषोपममिति विभिन्नार्थसूचनार्थम्, प्रसिद्धप्रभावोपदर्शनार्थं च । शस्त्रोपमं शीघ्रेण मारणात्मकम्, विषोपममिति कालांतरेण । विषमत्र गरः ॥ २२ ॥ प्रायेण वातबहुलं तस्यै-

श्लेष्मणा गौरवं शोथः स्निग्धं मूत्रं घनं सितम् ॥
श्लेष्मरुद्धबिलो वस्तिः पित्तोदीर्णो न सिध्यति ॥ २४ ॥
अविभ्रान्तबिलः साध्यो न तु यः कुण्डलीकृतः ॥
स्याद्वस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च ॥ २५ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने मूत्राघातनिदानं समाप्तम् ॥ ३१ ॥

---

# अथाश्मरीनिदानम् ३२.

वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजाऽपरा ॥
प्रायः श्लेष्माश्रयाः सर्वा अश्मर्यः स्युर्यमोपमाः ॥ १ ॥

---

मधुकोशव्याख्या ।

व्यम् ॥ २३ ॥ तस्यैव साध्यत्वासाध्यत्वमाह—श्लेष्मरुद्धबिल इत्यादि । बिलं वस्तिमुखशुषिरम् । पित्तोदीर्णः उपचितपित्तः, स एव अविभ्रान्तबिलोऽनावृतबिलः । कफेन कुण्डलीकृतोऽसाध्य इति बोध्यम । अकुण्डलीकृतस्तु साध्यत्वेनोक्तः ॥२४॥ कुण्डलीभूतस्यैव लिङ्गमाह—स्यादित्यादि । एतौ विड्विघातवस्तिकुण्डलौ सुश्रुतेन न पठितौ, तेन हि मूत्रोदकसादमेव द्विधा पठित्वा द्वादश मूत्राघाता इत्युक्तम्, सर्वानभिधानं तु पराधिकारत्वेनेति मन्तव्यम् ॥ २५ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां मूत्राघातनिदानं समाप्तम् ॥ ३१ ॥

मूत्ररोधित्वसाधर्म्यादश्मरीमाह—वातेत्यादि । श्लेष्माश्रया इति श्लेष्मसमवायिकारणाः, शुक्रजां विना, तत्र शुक्रस्यैव समवायिकारणत्वात् । तथाच दृढबलः—

आतङ्कदर्पणव्याख्या ।

वेतरदोषानुबंधेन लक्षणमाह—तस्मिन्निति ॥ २३ ॥ अविभ्रांतबिलः कफेनाऽरुद्धमुखः, यनः कफेन कुंडलीकृतो न भवति स साध्यः, कुंडलीकृतस्त्वसाध्यः ॥ बिलं वस्तिमुखसुपिरम् । कुंडलीभूतस्य तस्यैव लिंगमाह—स्यादिति । श्लेष्मणा रुद्धबिलः वस्तिः कुंडलाकारत्वेन तिष्ठति ॥ "वातकुंडलिकाष्ठीला वातवस्तिस्तथैव च । मूत्रातीतः सजठरो मूत्रोत्संगः क्षयस्तथा ॥ मूत्रग्रंथिर्मूत्रशुक्रमुष्णवातस्तथैव च । मूत्रसादो विड्विघातो वस्तिकुण्डलिका तथा ॥" एते मूत्राघातास्त्रयोदश ज्ञेयाः ॥ २५ ॥ इत्यातंकदर्पणे निदानव्याख्यायां मूत्राघातनिदानं समाप्तम् ॥३१॥

मूत्ररोधित्वसामान्यादश्मरीमाह—वातेति । श्लेष्माश्रयाः श्लेष्मसमवायिकारणाः परं शुक्रजां विना तत्र शुक्रस्यैव समवायिकारणत्वात् । तथा च दृढबलः—"विशोषयेद्वस्तिगतं सशुक्रं मूत्रम्"

विशोषयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा ॥
यदा तदाऽश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गो ॥२॥
नैकदोषाश्रयाः सर्वा अथासां पूर्वलक्षणम् ॥
वस्त्याध्मानं तदासन्नदेशेषु पारितोऽतिरुक् ॥ ३ ॥
मूत्रे वस्तसगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ॥
सामान्यलिङ्गं रुङ्नाभिसेवनीवस्तिमूर्धसु ॥
विशीर्णधारं मूत्रं स्यात्तया मार्गे निरोधिते ॥ ४ ॥

मधुकोशव्याख्या ।

"विशोषयेद्वस्तिगतं सशुक्रम्" इत्यादि, एतच्च सामान्योक्तमपि विशेषेण संबध्यते । यथा—हलङ्ड्यादिसूत्रे 'दीर्घात्' इति विशेषणं ङ्याब्भ्यां संबध्यते, नतु हला । अत एवात्र प्रायोग्रहणं कृतवान् । अन्ये तु शुक्राश्मर्यामपि कफकारणत्वमिच्छन्त्येव, विरोधाभावात् । प्रायःशब्दश्चात्र विशेषार्थः । यमोपमा इति असति चिकित्सिते अवश्यमेव मारकत्वात् । पित्तेष्विवेति वातशोषितेषु । नैकदोषाश्रया इति त्रिदोषजाः, उत्कटदोषेण व्यपदेशः ॥ पूर्वरूपमाह—अथेत्यादि वस्तसगन्धत्वं वस्तसमानगन्धत्वम् ॥ १–३ ॥ तासां सामान्यलक्षणमाह—सामान्येत्यादि । रुक् शूलम् वास्तिमूर्धा नाभेरधोदेशः । विशीर्णधारं सविच्छेदधारम् । तया इत्यश्मर्या । मार्गः मूत्रवाहिस्रोतः ।

आतङ्कदर्पणव्याख्या ।

इत्यादि । अत एवात्र प्रायोग्रहणम् । अन्ये तु शुक्राश्मर्यामपि कफकारणत्वमिच्छंत्येव, विरोधाभावात् । प्रायःशब्दश्चात्र विशेषार्थः । 'यमोपमाः असति चिकित्सितेऽवश्यमेव मारकत्वात् ॥ १ ॥ तस्याः संप्राप्तिमाह—विशोषयेदिति । पवनो वस्तिगतं सशुक्रं मूत्रं सपित्तं कफं वा शोषमुपनयेद् यदा, तदाश्मरी भवति—क्रमेण शनैर्वर्द्धमाना यथा गोः पित्तेषु रोचना भवति ॥ २ ॥ तस्यामनेकदोषाश्रयत्वमाह—नैकेति । त्रिदोषजा इत्यर्थः । पूर्वरूपमाह—वस्त्याध्मानमिति । वस्त्याध्मानं वस्तेरापूरः, तदासन्नदेशेषु वस्तिशिरोमुष्कमेढ्रादिषु परितः समंतादतिरुक् अतिवेदना ॥ मूत्रे वस्तसगंधत्वं बृहत्तमवस्तसमानगंधत्वम्, तथा मूत्रकृच्छ्रं ज्वरोऽरुचिश्च भवति ॥ तासां सामान्यलक्षणमाह—विशीर्णेति । विशीर्णधारं सविच्छेदम्, तया अश्मर्या, मार्गनिरोधने मूत्रवाहिस्रोतस आवरणे सति । वस्तिमूर्द्धा नाभेरधोदेशः, तस्मिन् रुद्धे सति रुक् शूलम् ॥ पुनः स्वल-

१ 'मार्गे निरोधिते' इत्यत्र 'मार्गनिरोधने' इति पाठाभिप्रायेण ।

तद्व्यपायात्सुखं मेहेदच्छं गोमेदकोपमम् ॥
तत्संक्षोभात्क्षते सास्रमायासाच्चातिरुग्भवेत् ॥ ५ ॥
तत्र वाताद्भृशं चार्तो दन्तान्खादति वेपते ॥
मृद्गाति मेहनं नाभिं पीडयत्यनिशं क्वणन् ॥ ६ ॥
सानिलं मुञ्चति शकृन्मुहुर्मेहति बिन्दुशः ॥
श्यावारुणाऽश्मरी चास्य स्याच्चिता कण्टकैरिव ॥ ७ ॥
पित्तेन दह्यते बस्तिः पच्यमान इवोष्मवान् ॥
भल्लातकास्थिसंस्थाना रक्तपीताऽसिताऽश्मरी ॥ ८ ॥

मधुकोशव्याख्या ।

तद्व्यपायात् वायुना कदाचिदश्मरीकृतमार्गरोधव्यपगमात् । मेहेत् मूत्रयेत् । अच्छमनाविलम् । गोमेदकोपममिति । गोमेदको लोहितमणिस्तद्वर्णम् । तत्संक्षोभात् निरुद्धमार्गमूत्रेण पीडनात्, अश्मरीसंघट्टनाद्वा क्षते जाते मूत्रवहादौ सास्रं सरक्तं मूत्रं प्रवर्तते । आयासात् प्रवाहनादिजनितक्लमात् ॥ ४ ॥ ५ ॥ वातजामाह–तत्रेत्यादि । क्वणन् आर्तनादं कुर्वन् ॥ ६ ॥ सानिलं सशब्दम्, मूत्रप्रवृत्त्यर्थं कृतातिकुन्थनात् । मेहति बिन्दुश इति बिन्दुंबिन्दुं मूत्रयति, "बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्", इति अल्पार्थे शस्प्रत्ययः । श्यावेत्यादि । अश्मर्या आकारकथनम्, एतच्चाकृष्टानां प्रत्यक्षसंवादेन शास्त्रप्रामाण्यख्यापनार्थमित्याहुः । आकृष्टासु दोषोचितचिकित्सार्थमित्यन्ये ॥ ७ ॥ पित्तजामाह–पित्तेनेत्यादि । पच्यमानः क्षारेणेव । ऊष्मवान् ऊष्ण-

आतङ्कदर्पणव्याख्या ।

क्षणान्तरमाह–तद्व्यपायादिति । तद्व्यपायात् वायुना कदाचिदश्मरीकृतमार्गनिरोधव्यपगमात् । मेहेत् मूत्रयेत् । अच्छमनाविलम् । गोमेदकोपममिति । गोमेदक आलोहितपीतमणिस्तद्वर्णम्, तत्संक्षोभात् निरुद्धमार्गमूत्रपीडनात् अश्मरीसंघट्टनाद्वा क्षते जाते सति मूत्रवहस्रोतसि सास्रं सरक्तं मूत्रं प्रवर्तते । आयासात् प्रवाहनादिकजनितात्, प्रवाहनं कंठबलेन शब्दन, मूत्रस्याजननं न्किंुडनमिति लोके ॥३॥४॥५॥ वातजाश्मरीमाह–तत्रेति । भृशमत्यर्थमार्तः पुमान् दंतैर्दन्तान् खादति कटकटायते, वेपते कंपते, मेहनं लिंगं, मृद्गाति मथ्नाति, अनिशं क्वणन् क्रंदयन् नाभिदेशं पीडयति ॥ ६ ॥ शकृत्पुरीषं. सानिलं सशब्दं मुंचति, मुहुर्वारंवारं बिंदुशः बिंदुंबिंदुं, मेहति मूत्रयेत् । श्यावेत्यादि । श्यावा किंचित् श्यामा, अरुणा किंचिद्रक्ता, एतच्चाश्मर्या वर्णाकारकथनमाकृष्टानां प्रत्यक्षसंवादेन शास्त्रस्य प्रामाण्यख्यापनार्थमित्याहुः । आकृष्टासु दोषोचितक्रियार्थमित्यन्ये कंटकैरन्वितेव ॥७॥ पित्तजामाह–पित्तेनेति । पित्तेन याऽश्मरी तया वस्तिर्मूत्रकोशो

१ 'गृह्णाति' इत्यत्र 'मृद्गाति' इति पाठाभिप्रायेण ।

वस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ॥
अश्मरी महती श्लक्ष्णा मधुवर्णाऽथ वा सिता ॥ ९ ॥
एता भवन्ति बालानां तेषामेव च भूयसा ॥
आश्रयोपचयाल्पत्वाद्ग्रहणाहरणे सुखाः ॥ १० ॥
शुक्राश्मरी तु महतां जायते शुक्रधारणात् ॥
स्थानाच्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ॥
शोषयत्युपसंगृह्य शुक्रं तच्छुक्रमश्मरी ॥ ११ ॥

---

मधुकोशव्याख्या ।

स्पर्शः असिता कृष्णा ॥ ८ ॥ श्लेष्मजामाह—वस्तिरित्यादि । श्लक्ष्णा मसृणा । मधुवर्णा ईषत् पिङ्गलशुक्ला ॥ ९ ॥ एता इति त्रिदोषजा बालानां स्युः, तेषां तन्निदानाभ्यासात् । भूयसा प्रायेण, तेन महतामपि त्रिदोषजा भवन्ति । तेषामेव बालानां ग्रहणाहरणे सुखा इति संबन्धः । आश्रयोपचयाल्पत्वादिति आश्रयो वस्तिः, उपचयः स्थौल्यम्, तयोरल्पत्वम्; तच्च तद्देहाल्पत्वात् । आहरणं पाटनादिपूर्वकमाकर्षणं ग्रहणं तदर्थमेवाङ्गुलिभ्यां धारणम् । उक्तं हि सुश्रुते—"प्रायेणैतास्तिस्रोऽश्मर्यो दिवास्वप्नसमशनाध्यशनशीतस्निग्धमधुराहारप्रियत्वाद्विशेषेण बालानां भवन्ति, तेषामेवाल्पवस्तिकायत्वादल्पमांसोपचयाच्च वस्तेः सुखग्रहणाहरणा भवन्ति" इति ॥ १० ॥ शुक्राश्मरीमाह—शुक्रेत्यादि । तुशब्दोऽवधारणे; तेन महतामेव नतु

आतङ्कदर्पणव्याख्या ।

दह्यते, पच्यमानः क्षारेणेव, ऊष्मवान् उष्णस्पर्शः, भल्लातकास्थिसंस्थाना भल्लातकमज्जाकारा, असिता कृष्णा ॥ ८ ॥ श्लेष्मजामाह—वस्तिरिति । वस्तिर्निस्तुद्यत इव शूलेनेव शीतस्पर्शः, गुरुर्गौरवयुक्तः, महती कुक्कुटांडतुल्या, श्लक्ष्णा मसृणा, मधुवर्णा ईषत्पीतशुक्ला, सिता शुभ्रा॥९॥ प्रायेण शिशूनां भवतीत्याह—एता इति । त्रिदोषजा बालानां भवन्ति, तेषामेव तन्निदानाभ्यासात् । भूयसा प्रायेणेति, तेन महतामपि हेतुना त्रिदोषजा भवंति, तेषामेव बालानां ग्रहणाहरणे सुखा इति संबंधः । अत्रैव हेतुमाह—आश्रयोपचयाल्पत्वादिति । आश्रय आधारो वस्तिः, उपचयः स्थौल्यम् । तयोरल्पत्वम्, तच्च तद्देहाल्पत्वात् । अतस्ता ग्रहणाहरणे सुखाः सुखेनाहर्तुं शक्याः । महतां तु यथोक्तहेत्वभावा ग्रहणाहरणे ता दुःखावहा इति । ग्रहणं बडिशादिना, आहरणं पाटनादिपूर्वकर्माकर्षणम्, तदर्थमेवांगुलीभ्यां धारणं ग्रहणम् । उक्तं हि सुश्रुते—"प्रायेणैतास्तिस्रोऽश्मर्यो दिवास्वप्नसमशनाध्यशनशीतस्निग्धगुरुमधुराहारप्रियत्वाद्विशेषेण बालानां भवंति, तेषामेवाल्पवस्तिकायत्वान्मांसोपचयाल्पत्वाच्च वस्तेः सुखग्रहणाहरणा भवंति ॥"इति॥१०॥ शुक्राश्मरीमाह—शुक्रेति । शुक्राश्मरी तु महतामेव जायते, न तु बालानां, तुशब्दोऽवधारणे, तेषां वक्ष्यमाणसंप्राप्तेरभावात्, न

**वस्तिरुङ्मूत्रकृच्छ्रत्वमुष्कश्वयथुकारिणी ॥**
**तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ॥ १२ ॥**
**पीडिते त्ववकाशेऽस्मिन्नश्मर्येव च शर्करा ॥**
**अणुशो वायुना भिन्ना सा तस्मिन्ननुलोमगे ॥ १३ ॥**

---

मधुकोशव्याख्या ।

बालानां तेषां वक्ष्यमाणमंप्रामेग्भावात्ः नतु शुक्रभावात्, अन्यथा पड्धातुकत्वं स्यात्। शुक्रधारणादुपस्थितशुक्रवेगस्य मैथुनाकरणात्। मुष्कयोरन्तरे मेढ्रेण सहेति शेषः। सुश्रुते हि 'मेढ्रवृषणयोरन्तरे' इत्येवोक्तम्। मेढ्रवृषणमध्यगतवस्तिमुख इत्यर्थः। तत्रैव शुक्रवहस्रोतसो वस्तिमुखेन सह संबन्धात्। तथाभूतं शुक्रमेवाश्मरीति ॥११॥ वस्तिरुक् वस्तिशूलम्, मुष्कश्वयथुकारिणी वृषणयोः शोथकारिणी। तस्यां शुक्राश्मर्याम्। एति वर्तते। तुशब्दोऽवधारणे। अवकाशेऽस्मिन्निति मेढ्रवृषणयोरन्तरे। अस्मिन्नेव पीडिते सति विलीयते प्रविलयमापद्यत इत्यर्थः। अत एव सुश्रुतः—"पीडितमात्रे च तस्मिन्नेवावकाशे प्रविलयमापद्यते" इति॥ सैवावस्थाभेदाश्मरी शर्करा, पञ्चमी न भवतीत्याह—अश्मर्येव चेति। चकारात् सिकताऽपि भवतीति मन्तव्यम्। अत एव शर्करा सिकतान्वितेति वक्ष्यति। शर्करासिकतयोश्च महत्त्वाल्पत्वाभ्यां भेदः॥ कथमश्मरी शर्करा भवतीत्याह—अणुश इत्यादि। अणुशोऽल्पशः। अत्रार्थे सुश्रुतः—

आतङ्कदर्पणव्याख्या ।

तु शुक्राभावात्। अन्यथा पड्धातुकत्वं स्यात्॥ च्युतमभुक्तमिति। मैथुनादुपस्थितवेगस्य शुक्रस्य धारणादित्यर्थः। अमुक्तं भृतमित्यर्थः। मुष्कयोरंतरे मेढ्रवृषणमध्यगतवस्तिमुख इत्यर्थः। तथाभूतं शुक्रम् अनिलः एकीकृत्य शोषयति, सा शुक्राश्मरीति ॥ ११ ॥ तस्या लक्षणमाह—वस्तिरुगिति। वस्तिरुगित्यादि सुगमम्। उत्पन्नमात्रायां तस्यां यदा सा कथमपि विलीयते विलयं याति, तदा शुक्रम् एति मूत्रपथादागच्छति ॥ १२ ॥ परमवकाशे छिद्रे पीडिते सति॥ चतुर्थपादेन शर्करालक्षणम्। सैवाश्मरी अणुशो वायुना भिन्ना विदारिता शर्करा कथ्यते। सा शर्करा अनुलोमगे मूत्रस्रोतसाऽधः प्रवृत्ते तस्मिन्वायौ मूत्रेण सह एति, प्रतिलोमगे ऊर्ध्वे[1] प्रवृत्ते वायौ विबध्यते[2] बंधं प्राप्नोति, न बहिर्मूत्रेण निष्क्रामति, अश्मरी त्वनुलोमगे मारुते न निरेति, शर्करा

---

१ एतच्च 'तस्याम्' इत्यत श्लोकारम्भाभिप्रायेण ।
२ एतच्च 'प्रतिलोमे विबध्यते' इतिपाठाभिप्रायेण ।

निरेति सहमूत्रेण प्रतिलोमे निरुध्यते ॥
मूत्रस्रोतःप्रवृत्ता सा सक्ता कुर्यादुपद्रवान् ॥ १४ ॥
दौर्बल्यं सदनं कार्श्यं कुक्षिशूलमथारुचिम् ॥
पाण्डुत्वमुष्णवातं च तृष्णां हृत्पीडनं वमिम् ॥ १५ ॥
प्रशूननाभिवृषणं बद्धमूत्रं रुजातुरम् ॥
अश्मरी क्षपयत्याशु सिकता शर्करान्विता ॥ १६ ॥

इति श्रीमाधवकरविरचिते माधवनिदानेऽश्मरी-
निदानं समाप्तम् ॥ ३२ ॥

---

मधुकोशव्याख्या ।

"पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः । सा भिन्नमूर्तिर्वातेन शर्करेत्यभिधीयते" इति । मूत्रस्रोतःप्रवृत्ता सा सक्तेति मूत्रमार्गगा सती संलग्नेत्यर्थः ॥ १२--१५ ॥ असाध्यलक्षणमाह-प्रशूनेत्यादि । रुजातुरं शूलपीडितमित्यर्थः ॥ १६ ॥ इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायामश्मरीनिदानं समाप्तम् ॥ ३२ ॥

आतङ्कदर्पणव्याख्या ।

तु मूत्रेण सह निष्क्रामनीत्यनयोर्भेदः । साऽश्मरी मूत्रमार्गप्रवृत्ता सक्ता निर्गता दौर्बल्यादीनुपद्रवान् कुर्यात्॥तानेवाह-दौर्बल्यमिति । दौर्बल्यमिन्द्रियाणाम्, सदनं ग्लानिः, कार्श्यमंगानाम्, । कुक्षिशूलं हृदयशूलम्, उष्णवातं मूत्रघातुनिदानोक्तम्, शेषं सुगमम् ॥ १२-१५ ॥ तस्या असाध्यत्व-माह-प्रशूनेति प्रशूननाभिवृषणं श्वयथुयुक्तनाभिवृषणं पुरुषमश्मरी क्षपयति विनाशयति, सिकता वालुका तत्सदृशी या शर्करा तया सहिताश्मरीत्यर्थः॥ १६ ॥ इत्यातंकदर्पणे निदान-व्याख्यायामश्मरीनिदानम् ॥ ३२ ॥

---

# अथ प्रमेहप्रमेहपिडकानिदानम् ३३.

**आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि ॥**
**नवान्नपानं गुडवैकृतं च प्रमेहहेतुः कफकृच्च सर्वम् ॥ १ ॥**
**मेदश्च मांसं च शरीरजं च क्लेदं कफो वस्तिगतः प्रदूष्य ॥**
**करोति मेहान्समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि ॥ २ ॥**

---

मधुकोशव्याख्या ।

चन्द्रोदयप्रणयपर्पावगदुग्धसिन्धुप्रभ्रमं वहन्ति यद्गुणकीर्तिगुच्छः ॥
तेन व्यधायि गुरुणा विजयेन शिष्यप्रेम्णाऽमर्गरुगवर्धमधुकोपबन्धः ॥ १ ॥
श्रीकण्ठदत्तभिषजा गुरुभक्तिलेशादारभ्यते प्रभृति संप्रति मेहरोगात् ॥
सूक्तीर्विचिन्त्य मधुशीकरमुज्झिरन्तीर्टीकाकृतः कतिपयस्य तदायशेषः ॥ २ ॥

अश्मरीरोगानन्तरं वस्तिविकृतिसाम्यात्प्रमेहनिदानमुच्यते—आस्यासुखमित्यादि । आस्या उपविष्टस्य चेष्टोपरमस्तेन कृतं सुखमास्यासुखम्; एवं स्वप्नसुखमिति द्रष्टव्यम् । तेनासनादिदोषादास्यादुःखं स्वप्नदुःखं वा न प्रमेहहेतुः । गुडवैकृतमिति गुडविकाराः शर्करादयः, तथा गुडकृताश्च भक्ष्याः । प्रमेहहेतुः कफकृच्च सर्वमित्यनुक्तहेतुसंग्रहार्थमुक्तम् । एष साधारणो हेतुः प्रमेहस्य; विशेषहेतुस्तु चरके निदानस्थाने—"हायनकोद्दालक" इत्यादिना कफजस्य, 'उष्णाम्ललवण' इत्यादिना पित्तजस्य, 'कटुतिक्तकषाय' इत्यादिना वातजस्याभिहितः । एतेन सामान्यहेतुसहितो विशिष्टहेतुः कफजादिप्रमेहस्य । किंच कफजनिदानमप्येतदास्यासुखादि बोद्धव्यम् ॥१॥ कफपित्तवातजमेहानां क्रमेण संप्राप्तिमाह—मेद इत्यादिना । अत्र कफजा एव मेहा

आतङ्कदर्पणव्याख्या ।

अश्मरीरोगानंतरं वस्तिविकृत्यधिकारात् प्रमेहनिदानमाह—आस्येति । आसनमास्या उपविष्टस्य चेष्टोपरमः, तेन कृतं सुखम्, एवं स्वप्नसुखं द्रष्टव्यम् । दधीनीति बहुवचनात्सर्वजातीनां दध्नां निषेधः । ग्राम्यौदकानूपरसाः । रस्यंत इति रसाः, रसशब्देन आहार उच्यते, कार्ये कारणोपचारात् । कानि ग्राम्यौदकानि ? मांसानि, तत्र ग्राम्याः छागौरभ्रमेदःपुच्छप्रभृतयः, औदका मत्स्यकूर्मादयः, आनूपाः जलसंनिधिचारिणो हंसचक्रवाकादयः, एवं मांसानि पयांसि क्षीराणि, अत्रापि बहुवचनं दधिवत् । पानं नवाभिवृष्टिजलपानम् । गुडवैकृतमिति । शर्करादयो गुडविकारा गुडकृतभक्ष्याश्च, एतत्सर्वं प्रमेहहेतुः कफकृच्च । सर्वमिति । आहाराचारादिकं कफकारिषु साधारणो हेतुः, प्रमेहस्य विशिष्टहेतुस्तु चरके निदानस्थाने—"हायनकोद्दालक" इत्यादिना कफजस्य "उष्णाम्ललवण" इत्यादिना पित्तजस्य, "कटुतिक्तकषाय" इत्यादिना वातजस्याभिहितः ॥ १ ॥ कफपित्तवातमेहानां क्रमेण संप्राप्तिमाह—मेद इति । अत्र कफजा एव मेहा

**क्षीणेषु दोषेष्ववकृष्य धातून्संदूष्य मेहान्कुरुतेऽनिलश्च ॥**
**साध्याः कफोत्था दश पित्तजाः षड्याप्या न साध्यः पवनाच्चतुष्कः॥**
**समक्रियत्वाद्विषमक्रियत्वान्महात्ययत्वाच्च यथाक्रमं ते ॥ ३ ॥**

मधुकोशव्याख्या ।

भूयस्त्वेन साध्यत्वेन च आदावुच्यन्ते । तानेवेति मेदोमांसशरीरजक्लेदान् । उष्णैरिति । उष्णवीर्यस्पर्शैर्द्रव्यैः । क्षीणेषु दोषेष्विति प्रवृद्धत्वेनैव क्षीणेषु, न तु समानापेक्षया क्षीणेषु; अनेन वृद्धे कफे पित्ते वा यो वायुर्लंघनादिना क्रमेण वृद्धो भवति न महासाध्यमेहचतुष्टयप्रकरणे विवक्षित इति सूच्यते । तत्र हि चिकित्साविधानात् साध्यत्वमस्ति । यदुक्तं-"या वातमेहान्प्रति पूर्वमुक्ता वातोल्बणानां विहिता क्रिया सा । वायुर्हि धातुष्वतिकर्षितेषु कुप्यत्यसाध्यान्प्रति नास्ति चिन्ता" इति । दोषेष्विति कफपित्तेषु, द्वयोश्च बहुवचनं व्यक्त्यपेक्षया बहुत्वात् । अवकृष्येति वस्तिमुखं नीत्वा । धातूनिति वसामज्जौजोलसीकाख्यान् ।। समक्रियत्वादिति कफस्य दोषस्य दूष्यस्य च मेदःप्रभृतेः समानत्वात् कटुतिक्तादिक्रियायाः । अत्र व्याधि-

आतङ्कदर्पणव्याख्या ।

भूयस्त्वेन साध्यत्वेन चादावुच्यंते । शरीरजं क्लेदं वस्तिगतं वस्तिप्राप्तं प्रदूष्य श्लैष्मिकान् मेहान् करोति । यदुक्तम्-"मूत्राघाताः प्रमेहाश्च शुक्रदोषास्तथैव च । मूत्रदोषाश्च ये चापि वस्तौ चैव भवंति हि" उष्णैरुष्णवीर्यस्पर्शैः द्रव्यैः समुदीर्णवेगं पित्तं तानेव मेदोमांसशरीरक्लेदान् वस्तिगतान् प्रदूष्य पैत्तिकान् मेहान् करोति ॥ २ ॥ पित्तप्रमेहसंप्राप्तिमुक्त्वा वातप्रमेहसंप्राप्तिमाह-क्षीणेष्विति । अनिलो दोषेषु क्षीणेषु वस्तौ धातूनवकृष्य मेहान् धातून् वसामज्जौजोलसीकाख्यान् अवकृष्य वस्तिमुखं नीत्वा वातजान् मेहान् कुरुते । बहुवचनं व्यक्त्यपेक्षया बहुत्वात् क्रमेण कफपित्तवातजानां दूष्यवर्गत्वेन साध्यासाध्यत्वमाह-साध्या इति । दोषदूष्याणां समक्रियत्वात् । अत्र दोषः श्लेष्मा, दूष्याणि रसमांसमेदोमज्जाशुक्रालसीकौजांसि, दोषस्य श्लेष्मणः, एषां दूष्यवर्गाणां कटुतिक्तकषायादिभिः समैव क्रिया, अत एव कफजाः प्रमेहाः दश साध्याः, प्रमेहेन विना अन्येषां रोगाणामतुल्यदूष्यत्वमेव साध्यत्वहेतुः । यदुक्तम्-"ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता । रक्तगुल्मे पुराणत्वं सुखसाध्यत्वहेतवः ॥" इति । दोषदूष्याणां विषमक्रियत्वादिति । अत्र दोषः पित्तम्, दूष्याणि रसमांसादीनि, शीतमधुरादिका क्रिया पित्तहंत्री, सा रसमांसमेदोजनयित्री, एतेन विषमक्रियत्वात् षट् पित्तजा याप्याः, मज्जादिगंभीरधात्वपकर्षकत्वेन बहुव्यापितकरत्वात् आशुकारित्वात् चतुष्टयस्यासाध्यत्वं महात्ययत्वाद्विनाशिकारित्वात् । अप्रवृद्धे कफे पित्ते वा वायुवृद्धो भवति, तत्र हि चिकित्साविधानाद् वातचतुष्टयस्यासाध्यत्वमुक्तम्-"या वातमेहान्प्रतिपूर्वमुक्ता वातोल्बणानां विहिता क्रिया सा । वायुर्हि मेहेष्वतिकर्षितेषु कुप्य-

**कफः सपित्तः पवनश्च दोषा मेदोऽस्रशुक्राम्बुवसालसीकाः॥**
**मज्जा रसौजः पिशितं च दूष्याः प्रमेहिणां विंशतिरेव मेहाः॥४॥**

मधुकोशव्याख्या।

महिम्ना तुल्यदूष्यता साध्यताया हेतुः। तेन "न च तुल्यगुणो दूष्यो न दोषः प्रकृतिर्भवेत्" इति चरकवचनं कृतसाध्यतार्थं नोद्भावनीयम्। यदुक्तं--"ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्" इति। विषमक्रियत्वादिति पित्तस्य प्रमेहप्रधानदूष्यस्य च मेदःप्रभृतेश्चान्योन्यविपरीतक्रियत्वात्; पित्तहरं हि मधुरादि मेदस्करम्. मेदोहरं च कटुकादि पित्तकरमिति क्रियावैषम्यम्; अत्र व्याधिस्वभावो हेतुः. तेनान्येषु व्याधिषु परस्परविरुद्धदोषदूष्यसंसर्गेऽप्युभयप्रत्यनीकभेषजविधिरविरोधीति। महात्ययत्वादिति मज्जादिगम्भीरधात्वपकर्षकत्वेन बहुव्यापत्तिकरत्वात्; आशुकारित्वादितीशानः। चकारात् विषमक्रियत्वं च वातजानां समुच्चीयते॥ २॥ ३॥ सर्वमेहानां दोषदूष्यसंग्रहमाह--कफ इत्यादिना। वसा मांसस्नेहः, सर्वदेहस्नेह इत्यन्ये। लसीका उदकविशेषः। यथाह चरकः--"यत्तु मांसत्वगन्तरे उदकं तल्लसीकाशब्दं लभते" इति। रसौज इति रसश्च ओजश्च इति द्वन्द्वः। ओजश्चात्रार्धाञ्जलिपरिमितं श्लेष्मरूपम्। यदुक्तं--"श्लेष्मलस्योजसोऽर्धाञ्जलिः परिमाणम्" इति। न त्वष्टबिन्द्वात्मकं तस्य भ्रंशेन मरणाभिधानात्। ननु रस एवौजो रसौज इति कुतो न कल्प्यते ? रसोऽप्योजःशब्दोनोच्यते। यदुक्तं--"तस्मिन्काले पचत्यग्निर्यदन्नं कोष्ठमागतम्। मलीभवति तत्प्रायः कल्प्यते किंचिदोजसे" इति। ओजसे इति रसायेत्यर्थः। नैवम्, ओजसो हि मधुमेहे दूष्यत्वेनोक्तत्वात्, ओजःशब्दोपादानवैफल्याच्च। यद्यप्यत्र बहूनि मेदःप्रभृतीनि दूष्यत्वेनोच्यन्ते तथापि पूर्वं मेदोमांसशरीरजक्लेदानां सर्वमेहेष्ववश्यम्भाविदूष्यत्वेन पृथगभिधानम्। मज्जादयस्तु मेहविशेषे दूष्याः। तद्यथा--लसीकावसामज्जौजांसि वातिके, न पैत्तिके, न श्लैष्मिके। ईशानः पुनराह--रसरक्तशुक्राणि सर्वमेहेषु कदाचित् दूष्यन्ते न त्ववश्यमिति। किंच सर्वमेहानामेव दोषत्रयजन्यत्वं

आतङ्कदर्पणव्याख्या।

त्यतोऽन्यान्प्रति नास्ति चिंता" इति॥ ३॥ प्रमेहे दूष्यवर्गमाह--कफ इति। सर्वत्र मेहानामयं दोषदूष्यसंग्रहः। त्रयो दोषाः, अस्रं रक्तम्, अम्बु शरीरक्लेदः, वसा मांसस्नेहः, लसीका उदकविशेषः, यदुक्तं चरके--"यत्तु मांसत्वगन्तरे उदकं, तल्लसीकाशब्देन लभ्यते"। यदुक्तमन्यत्रापि--"तेजोभूतः परं सूक्ष्मः स रक्तरस उच्यते। लसीका नाम लभते सामगंधिस्त्वगाश्रितः" इति। रसश्च ओजश्च रसौज इति द्वंद्वः। ओजश्चात्रार्द्धांजलिपरिमितं श्लेष्मरूपम्। यदुक्तं "श्लेष्म-

दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः ॥
दाहश्चिक्कणता देहे तृट् स्वाद्वास्यं च जायते ॥ ५ ॥
सामान्यं लक्षणं तेषां प्रभूताविलमूत्रता ॥
दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः ॥ ६ ॥

---

मधुकोशव्याख्या ।

सकलदूष्याश्रयित्वं च 'कफः सपित्तः' इत्यादिनोपदर्श्यते । मेदोमांसादीनि तु अत्यन्तदूष्योपदर्शनार्थं पृथगुक्तानि । यतश्चरकेऽपि कियन्तःशिरसीयाध्याये सकलमेहवाचकमधुमेहकथने दोषत्रयप्रकोपोऽभिहितः । तथाहि—"समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः । दर्शयत्याकृतिं गत्वा क्षयमाप्याय्यते पुनः" इति । तथा सुश्रुतोऽप्याह—"वातपित्तमेदोभिरन्वितः श्लेष्मा मेहान् जनयति" इत्यादि । कफादीनां द्व्यल्वणादिसंसर्गस्यानन्त्येन सर्वमेहावस्थाविशेषेण मधुमेहेन च संख्याधिक्यप्रसङ्गनिरासायावधारणार्थमाह—विंशतिरेव मेहा इति ॥ ४ ॥ पूर्वरूपमाह—दन्तादीनामित्यादि । आदिशब्देन नयनतालुकर्णादीनां ग्रहणम् । यदुक्तं सुश्रुते—"तालुगलजिह्वादन्तेषु मलोत्पत्तिः" इति । अत्र च मलभूयस्त्वं मेदोदोषात् । चिक्कणता देहे मेदःकफदुष्टेः। अत्र चकारात् सुश्रुतोक्तकेशजटिलीभावनखातिवृद्धी बोध्ये । एतच्च व्याधिविशेषनियतमेव, येनान्यत्र विद्यमानाऽपि कफमेदोदुष्टिः नैवं कर्तुं क्षमा ॥ ५ ॥ सामान्यलक्षणमाह—सामान्यमित्यादि । प्रभूतेत्यादि । प्रभूतमूत्रत्वं दूष्यद्रवधातु-

आतङ्कदर्पणव्याख्या ।

रूपस्यौजसोऽर्द्धांजलिः परिमाणम्" इति । न त्वष्टबिंदुकम्, तस्य अंशेन नियतं मरणमिति । कफादीनां संसर्गस्यानंत्येन तथा सर्वमेहावस्था विशेषेण मधुमेहेन संख्याधिक्यप्रसंगनिरासायावधारणमाह—विंशतिरेव मेहा इति । तंत्रांतरेपि दूष्यसंग्रह उक्तः—"वसामांसशरीरस्य क्लेदः शुक्रं सशोणितम्। मेदोमज्जालसीकौजः प्रमेहे दूष्यसंग्रहः" इति ॥ ४ ॥ पूर्वरूपमाह—दंतादीनामिति । आदिशब्देन तात्वादीनां ग्रहणम् । यदुक्तं सुश्रुते—"तालुगलजिह्वादंतेषु मलोत्पत्तिः" इति । अत्र मलभूयस्त्वं मेदोदोषात् । हस्तपादयोः संतापः, चिक्कणता देहे, मेदःकफदुष्टेः स्वाद्वास्यं मधुरास्यता, चकारात् सुश्रुतोक्तकेशजटिलीभावनखवृद्धी, एतच्च व्याधिमहिम्ना बोद्धव्यम् । अन्यथा कफमेदोदुष्टिरेवं कर्तुं न क्षमा ॥ ५ ॥ सामान्यलक्षणमाह—सामान्यमिति । प्रभूतमूत्रं दूष्यद्रवधातुसम्बन्धात्, आविलमूत्रत्वं दोषदूष्यसंसर्गात् । ननु, कथं कफेन दश, पित्तेन षट् इत्यादिव्यवस्था यतः कारणभेदात् कार्यभेद इत्याशंक्याह—दोषेति । दोषदूष्ययोरविशेषेपि तत्संयोगविशेषतः, यो दोषदूष्याणामुत्कर्षापकर्षकृतात् संयोगभेदात् मेहेषु भेदो भवति ॥ दश षट् चत्वार इत्या-

**मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ॥**
**अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ॥ ७ ॥**

मधुकोशव्याख्या ।

संबन्धात्। आविलत्वं दोषदूष्यसंसर्गात्। ननु कथं कफेन दश, पित्तेन षडित्यादिव्यवस्था? यतः कारणभेदात् कार्यभेद इत्याशंक्याह—दोषदूष्याविशेषेऽपि तत् संयोगविशेषत इति। तेषां दोषदूष्याणामुत्कर्षापकर्षकृतात् संयोगभेदाद्भेदो मेहेषु भवति। यथा पञ्चानां वर्णानां श्वेतकृष्णपीतलोहितश्यावानां संयोगभेदादनेकपिङ्गलपाटलादिभेदः। सुश्रुतेऽप्युक्तं—"यथा पञ्चानां वर्णानामुत्कर्षापकर्षकृतेन संयोगविशेषेण कपिलादिनानावर्णोत्पत्तिरेवं दोषादिसंसर्गान्मेहानां नानात्वम्" इति। संयोगभेदप्रतीतिः कुत इत्यत आह-मूत्रेत्यादि। मूत्रवर्णादिभेदं दृष्ट्वा कारणानां समानानां भेदः कल्पनीयः, यथा—मृदादिकारणकलापस्याभेदेऽपि कुम्भकारादिसंयोगभेदादुदञ्चनादिप्रपञ्चभेदः। ननु, उदञ्चनादौ कुम्भकारादिप्रयत्नभेदात् संयोगभेदः, अत्र तु कः संयोगभेदहेतुः? उच्यते, तत्तदाहारादिकमदृष्टं च भवतीत्यदोषः ॥ ६ ॥ अत्र कफस्य श्वेतशीतमूर्तपिच्छिलाच्छस्निग्धगुरुमधुरसान्द्रप्रसादमन्देषु गुणेषु मध्ये कुत्रचित् किंचिद् गुणप्रकर्षात्, उदकमेहादयो दश दृश्यन्ते इत्याह—अच्छं बहु सितं शीतमित्यादि। सान्द्रप्रसादस्तु एक एव गुणो गणनीयः, सान्द्रमेहव्यपदेशस्त्वेकदेशेन भविष्यतीति। एतैश्च श्वेतादिभिर्गुणैर्व्यस्तैः समस्तैश्च योगात् दश मेहाः न तु यथाक्रमं, 'येन गुणेनैकेनानेकेन वा भूयस्तरमुपसृज्यते तत्समाख्यं गौणं नामविशेषं प्राप्नोति' इति चरकवचनात्। ननु, यथा दशभिर्गुणैर्दश मेहान् करोति, तथा संसर्गविकल्पान्तरेणापरानपि कुतो न करोतीति नाशंकनीयम्, भावस्वभावस्यापर्यनुयोज्यत्वात्, अदृष्टकल्पनायाश्चानर्हत्वात्। तत्र श्वेताच्छशीतैर्गुणैरुदकमेहः, मधुरशीता-

आतंकदर्पणव्याख्या ।

दिका दोषा वातादयः, दूष्या मेदोमज्जादिकाः, यथा पंचानां श्वेतपीतकृष्णलोहितश्यामवर्णानां संयोगभेदात् अनेकपिंगलादिभेदो जायते। यदुक्तं सुश्रुते—"यथा पंचानां वर्णानामुत्कर्षापकर्षकृतेन संयोगविशेषेण कपिलादिनानावर्णोत्पत्तिरेवं दोषदूष्यसंयोगान्मेहानां नानात्वमिति। "मूत्रवर्णादिभेदेन मूत्रवर्णादिभेदं दृष्ट्वा कारणानां समानानां भेदः कल्पनीयः। यथा मृत्पात्राणां मृदादिकारणकलापस्याभेदेऽपि कुंभकारादिसंयोगात् घटस्थाल्यादिप्रपंचभेदः ॥ ६ ॥ तत्र कफस्य श्वेतशीतमृदुपिच्छिलस्निग्धगुरुमधुरसांद्रप्रसादमंदेषु गुणेषु मध्ये क्वचित् किंचिद्गुणप्रकर्षात् उदकमेहादयो दश स्युस्तान् कफजानाह--तत्रादावुदकमेहमाह--अच्छमिति। आविलं घनं येन

मेहत्युदकमेहेन किंचिदाविलपिच्छिलम् ॥
इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥ ८ ॥
सान्द्रीभवेत्पर्युषितं सान्द्रमेहेन मेहति ॥
सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ॥ ९ ॥
संहृष्टरोमा पिष्टेन पिष्टवद्बहुलं सितम् ॥
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥१० ॥
मूर्ताणून्सिकतामेही सिकतारूपिणो मलान् ॥
शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ ११ ॥

---

मधुकोशव्याख्या ।

भ्यामिक्षुमेहः, सान्द्रपिच्छिलाभ्यां सान्द्रमेहः, अच्छेन पित्तानुरागिणा सुरामेहः, शुक्लेन पिष्टमेहः । अत्र पिष्टवदित्यालेपनपिष्टवत् । श्वेतस्निग्धाभ्यां शुक्रमेहः । अत्र शुक्राभमिति सर्वमेव मूत्रं शुक्रतुल्यं, शुक्रमिश्रं वेति शुक्रमिश्रम्, अवान्तरशुक्रामिश्रत्वे तु कफजस्याप्यसाध्यत्वं स्यादिति । वाप्यचन्द्रस्तु शुक्रस्य मूत्रेण गुणकृतं साहश्यं शुक्रमिश्रं वेति च शुक्रगुणानां संयुक्तसमवायात् मूत्रे दर्शनमित्याह । चरके तु शुक्रमित्यनेन शुक्रमिश्रमिति बोध्यम् । सान्द्रमूर्ताभ्यां सिकतामेहः, अत्र मूर्ताणूनिति कठिनानल्पान्; मलानिति बहुवचनं दोषाणामवयवबहुत्वात्, 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति वाप्यचन्द्रः । मलोऽत्र प्रकरणात् कफः । गुरुमधुरशीतैः शीतमेहः । मन्दमूर्ताभ्यां शनैर्मेहः । पिच्छिलेन लालामेहः । चरके सुरामेहस्थाने सान्द्रप्रसादमेहः पठितः, तथा पिष्टमेहः शुक्लमेहशब्देन । तेनैव शीतमेहलालामेहौ पठितौ पित्तजश्च कालमेहः । सुश्रुतस्तु चरकोक्तशीतमेहलालामेहयोः

आतङ्कदर्पणव्याख्या ।

गुणेनैकेन भूयस्तरमुपसृज्यते तदाख्यां लभते, शेषं सुगमम् ॥ इक्षुमेहमाह--इक्षोरिति । सुगमम् ॥ ७ ॥ ८ ॥ सांद्रमेहमाह--सांद्रो भवेदिति । पर्युषितं रात्रौ पात्रे स्थापितम् । सुरामेहमाह--उपरि अच्छं अधो घनम् ॥ ९ ॥ पिष्टमेहमाह--संहृष्टेति । तंडुलादिकृतालेपेन पिष्टवत् संहृष्टरोमा रोमांचितशरीरः, पिष्टमित्यनेन श्वेतत्वं श्लेष्मणः श्वेतत्वात् । शुक्रमेहमाह--शुक्राभमिति । शुक्रेण मिश्रितं शुक्रमिश्रितं शुक्राभमिति शुक्रसदृशं, न तु वास्तवं शुक्रम्, तस्यासाध्यत्वप्रसंगः ॥ ॥ १० ॥ सिकतामेहमाह--मूर्ताणूनिति । कठिनानल्पान् मलानिति बहुवचनम्, दोषावयवबहुत्वादिति वाप्यचंद्रः । मलोत्र प्रकारांतरकफः, सिकता वालुका । शीतमेहमाह--शीतमेहीति । अति-

शनैःशनैः शनैर्मेही मन्दंमन्दं प्रमेहति ॥
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ १२ ॥
गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ॥
नीलमेहेन नीलाभं कालमेही मसीनिभम् ॥ १३ ॥
हारिद्रमेही कटुकं हरिद्रासन्निभं दहत् ॥
विस्रं माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ॥ १४ ॥
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहतः ॥
वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः ॥ १५ ॥

मधुकोशव्याख्या ।

स्थाने फेनमेहलवणमेहौ, कालमेहं चाम्लमेहं पठितवान् । नामभेदश्चात्र नास्त्येव, परस्परलक्षणसंवादाभावात्, स्मृतिद्वैधवत् सर्वं प्रमाणम् ॥ ७-१२ ॥ पित्तात्तु षड्भिः पित्तगुणैः क्षारनीलकालपीतलोहितमिश्रैर्यथाक्रमं क्षारमेहादयः षट्, तान् गन्धवर्णरसस्पर्शैरित्यादिना दर्शयति—गन्धेत्यादि । नीलाभमिति चाषपक्षप्रभम्, चाषः 'स्वर्णचूड' इति लोके ख्यातः, क्वचित् 'टाकुमना चासः' इति गदाधरः, तत्पक्षश्च स्निग्धनीलो भवति । दहदिति मूत्रविशेषणम् । दहन्निति पाठान्तरे दाहमनुभवन् पुरुषः ॥ १३ ॥ १४ ॥ वातेन यथाक्रमं वसामज्जौजोलसीकाभिर्यथाक्रमं वसामेहादयः । तानाह—वसामेही वसामिश्रमित्यादि । अयं वसामेहः सुश्रुते सर्पिर्मे-

आतङ्कदर्पणव्याख्या ।

शीतलम् ॥ ११ ॥ शनैर्मेहमाह—मंदशब्देन श्लेष्मैवोच्यते, मधुरत्वान्मूत्रं मंदेन मूत्रेण शनैः प्रमेहति । लालाप्रमेहमाह—लालेति । एवं दश श्लेष्मजाः, एते दोषदूष्यसंयोगगुणात् विंशति-संख्यां लभते । उक्तं च तंत्रांतरे—"शीताच्छशीतिरुदकप्रमेहः स्यादिक्षुवालीमधुराच्छशीतात् । पित्तोत्कटः स्वच्छगुणात्सुराख्यो मूत्रेण युक्तः सिकताप्रमेहः ॥ मंदेन मूत्रेण शनैः प्रमेहो गुरोर्विद-ग्धाल्लवणप्रमेहः । पिष्टप्रमेहः खलु शुक्रभागात्तमस्तसांद्रेण तु सांद्रमेहः ॥ स्निग्धेन शुक्रेण च शुक्रमेहः स्यात्फेनमेहो गुरुशुक्रयोगात् । इत्येभिरंशैः कफदोषजातैर्नृणां प्रमेहा दश संभ-वंति ॥ औत्कण्ठ्यतोयं व्यपदेश एषु संसर्गभावो गुणदोषदूष्यात् । पित्तान्नीलहरिद्राम्लक्षारमांजि-ष्ठशोणितैः । सर्पिर्मेहं मरुत्कुर्याद्युक्तश्च लवणेन हि ॥ मेदोयुक्तो वसायुक्तो वसामेहकरस्तु सः । क्षौद्रमेहे रौक्षगुणाद्विष्टंभो हस्तिमेहतः" इति॥१२॥ पैत्तिकानाह—तत्र क्षारप्रमेहमाह—गंधेति । गंधा-दिभिः क्षारतोयवत्, क्षारमेहेन । नीलमेहमाह—नीलेति । नीलाभं चाषपक्षप्रतिमम्, चाषः पक्षि-विशेषः, सुवर्णचूड इति लोके॥ कालमेहमाह—कालेति । सुगमम् ॥ १३ ॥ हरिद्रामेहमाह—हारि-द्रेति । दहदिति मूत्रविशेषणं दहन्निति पाठांतरे दाहमनुभवन्पुरुष इति शेषः ॥ मांजिष्ठमेह-माह—विस्रं विस्रगंधि ॥ १४ ॥ रक्तमेहमाह—विस्रमिति । सुगमम् । एवं षट् पैत्तिकाः सर्वेषां मूत्र

मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ॥
कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद्बुधः ॥ १६ ॥
हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्जितम् ॥
सलसीकं विबद्धं च हस्तिमेही प्रमेहति ॥ १७ ॥
अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः ॥
उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ १८ ॥
वस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ॥
दाहस्तृष्णाम्लिका मूर्च्छा विड्भेदः पित्तजन्मनाम् ॥ १९ ॥
वातजानामुदावर्तः कम्पहृद्ग्रहलोलताः ॥
शूलमुन्निद्रता शोपः कासः श्वासश्च जायते ॥ २० ॥

---

मधुकोशव्याख्या ।

हनाम्ना, क्षौद्रमेहश्चरके मधुमेहनाम्ना पठितः ॥ १५-१७ ॥ इदानीं कफजादिमेहानां कृच्छ्रसाध्यत्वमसाध्यत्वं च ज्ञापयितुं भेदेनोपद्रवानाह—अविपाकोऽरुचिरित्यादि । कफजे कास आर्द्रः,वातजे शुष्कः । तोदः संसर्गिवातजन्यः,मेहानां त्रिदोषजन्यत्वात् । मुष्कावदरणं पाकेन । अम्लिका अम्लोद्गारः । लोलता सर्वरसभक्षणेच्छा, इयं तु प्रभावात् धातुक्षयाद्वा भवति, यथा वातग्रहण्यां गृद्धिः सर्वरसानामित्युक्तम् ॥ १८-२० ॥

आतङ्कदर्पणव्याख्या ।

योऽयम्, चतुर्णां वातजानां लक्षणम् ॥ वसामेहमाह—वसा मांसस्नेहः, वसामिश्रं वसामिलितम्, वसाभं वसातुल्यं, मुहुर्मूत्रयेत् ॥ १५ ॥ मज्जमेहमाह—मज्जाभमिति । सुश्रुतेऽयं सर्पिर्मेहनाम्ना पठितः, शेषं पूर्ववत् व्याख्येयम् ॥ क्षौद्रमेहमाह—कपायमिति । सुगमम् ॥ १६ ॥ हस्तिमेहमाह—हस्तीति । अजस्रमनवरतम्, वेगविवर्जितं वेगरहितम्, सलसीकं लसीकया सह विबद्धं पिंडीभूतमिव ॥ १७ ॥ इदानीमुपद्रवानाह—अविपाक इति । कफजे कास आर्द्रः, वातजे शुष्कः, सपीनसः प्रतिश्याययुक्तः, एते कफजा उपद्रवाः ॥ १८ ॥ पित्तजानामुपद्रवानाह—वस्तीति । वस्तिः मूत्राशयः, मेहनं मेढ्रम्, शूलं तोदः संसर्गिवातजन्यः, मेहानां त्रिदोपजन्यत्वात्, मुष्कावदरणं पाकेन, अम्लिका अम्लोद्गारः, विड्भेदः भिन्नपुरीपता ॥ १९ ॥ वातजानामुपद्रवानाह—वातजानामिति । लोलता: सर्वरसभक्षणेच्छा अयं च प्रभावो रोगस्य, अथवा धातुक्षयाद्भवति, यथा वातग्रहण्यां

---

१ एतच्च—“वस्तिमेहनयोः शूलम्” इति ।

यथोक्तोपद्रवारिष्टमतिप्रस्रुतमेव च ॥
पिडकापीडितं गाढः प्रमेहो हन्ति मानवम् ॥ २१ ॥
जातः प्रमेही मधुमेहिनो वा
न साध्य उक्तः स हि बीजदोषात् ॥
ये चापि केचित्कुलजा विकारा
भवन्ति तांस्तान्प्रवदन्त्यसाध्यान् ॥ २२ ॥

---

मधुकोशव्याख्या।

असाध्यतामाह—यथोक्तोपद्रवारिष्टमित्यादि । उक्तैरविपाकादिभिरन्यैश्चसुश्रुताद्युक्तै-रुपद्रवैः; तद्यथा कफजे आलस्यास्योपदेहशैथिल्यकफप्रसेकमक्षिकोपसर्पणादिकम् । पित्तजे पाण्डुरोगादिकम् । अतिप्रस्रुतमिति अतिशयं धातुमूत्रस्रावयुक्तम् । पिडिकापीडितमिति शराविकादिपिडकापीडितम्। गाढः कालप्रकर्षात्। यद्यपि पिडका अप्युपद्रवत्वेनाभिमताः; यदुक्तं चरके—"उपद्रवास्तु खलु प्रमेहिणां तृष्णा-तीसारज्वरदाहदौर्बल्यारोचकाविपाकाः पूतिमांसपिडकालजीविद्रध्यादयः" इति । तथापि पिडकानां पृथगुत्पादसूचनार्थं पृथक्करणम्। उक्तं च चरके—"विना प्रमेह-मप्येता जायन्ते दुष्टमेदसः" इति । अन्यदपि असाध्यलक्षणं बोद्धव्यम्। यदाह चरकः—"सपूर्वरूपाः कफपित्तमेहाः क्रमेण ये वातकृताश्च मेहाः । साध्या न ते पित्तकृतास्तु याप्याः साध्यास्तु मेदो यदि न प्रदुष्टम्" इति । अस्यार्थः—ये कफजाः साध्यास्ते सपूर्वरूपाः सन्तोऽसाध्याः, पित्तकृतास्तु याप्या ये ते सपूर्वरूपा एव असाध्याः प्रत्याख्येयाः, सर्वरोगाणामेव यद्यपि पूर्वरूपानुवृत्तौ असाध्यत्वमुक्तं तथाप्यत्रासकलपूर्वरूपान्वये असाध्यत्वम्, अन्यत्र तु सकल-पूर्वरूपान्वये सतीति विशेषः। क्रमेणेति स्वनिदानक्रमेण । तेन निजहेत्वादिकृता ये वातजाश्चत्वारो मेहास्ते पूर्वरूपरहिता अपि नहि साध्याः, ये तु पश्चात् धात्वपकर्षणाद्वातानुबन्धेन वातजास्ते साध्याः याप्या वा । अत एवोक्तं—"या वातमेहान्प्रति पूर्वमुक्ता वातोल्बणानां विहिता क्रिया सा"—इत्यादि ॥ २१ ॥ असाध्यतायाः प्रकारान्तरमाह—जात इत्यादि । श्लेष्ममेदसोरतिदुष्टया मूत्रमेदः-

आतङ्कदर्पणव्याख्या।

गृद्धिः सर्वरसानामित्युक्तम्, शूलं वस्तिमेहनयोरेव कासोऽत्र शुष्कः ॥ २० ॥ असाध्यतामाह-यथेति । उक्तोपद्रवैरविपाकादिभिरन्यैश्च सुश्रुतोक्तम्—"आलस्यास्योपदेहशैथिल्यकफप्रसेकमक्षिको-पसर्पणादिभिर्युक्तमतिप्रस्रुतमतिशयं धातुमूत्रस्रावयुक्तं पिडकापीडितं शराविकादिपिडकापीडितं गाढकालप्रकर्षात्" ॥ २१ ॥ प्रकारान्तरेणासाध्यत्वमाह—जात इति । मधुमेहिनो जातो जनितो

मधुकोशव्याख्या ।

श्लेष्मणामतिमाधुर्यात् मधुमेहिनो जातो यः प्रमेही स चाप्यसाध्यो भवतीति । बीजदोषादिति प्रमेहारम्भकदोषदुष्टबीजजातप्रमेहित्वात् । मधुमेहशब्देन चात्र मेहमात्रमुच्यते, यदि तु वातिक उपेक्षितो वा मेहो मधुमेह उच्यते, तदा चेतरप्रमेहयुक्तमातृपितृजनितप्रमेहिणां नासाध्यत्वमुक्तं स्यात्; किंच मधुमेहिना जनितस्य मधुमेहित्वमेव कारणानुरूपतया युक्तम्, ततश्च मधुप्रमेही मधुमेहिना वा जातो न साध्य इति वक्तुमुचितम्; तस्यासाध्यत्वमपि न वक्तव्यं मधुमेहस्यासाध्यत्वादेव । अन्यत्रापि मधुमेहशब्देन मेहमात्रमुक्तम् । यथा—"गुल्मी च मधुमेही च राजयक्ष्मी च यो नरः । अचिकित्स्या भवन्त्येते बलमांसपरिक्षयात्" इति । यदि ह्यत्र मधुमेहोऽभीष्टः स्यात्तदा बलमांसपरिक्षयादिति न कृतं स्यात्, तस्य स्वरूपत एवासाध्यत्वात् । तथा कियन्तःशिरसीयाध्याये "उपेक्षयास्य जायन्ते पिडका मधुमेहिकाः" इत्यादिना या मधुमेहसंबन्धित्वेनोक्तास्ता एव "प्रमेहिणां याः पिडका मयोक्ताः" इत्यन्तेन च चिकित्सास्थाने प्रमेहिमात्रसंबन्धितया अनूद्य चिकित्सायां संयोजिताः । तस्माद्भाविनीं मधुमेहतामाश्रित्य सर्व एव मेहा मधुमेहशब्दवाच्याः । उक्तं हि सुश्रुते—"मधुरं यच्च मेहेषु प्रायो मध्विव मेहति । सर्वेऽपि मधुमेहाख्या माधुर्याच्च तनोरतः" इति । गदाधरेण तु पिडकासंबन्धेनैव मधुमेहत्वमुक्तम्, यतश्चरके कियन्तःशिरसीयाध्याये मधुमेहमभिधाय पिडका उक्ता इति । तन्न मनोहरम्, तत्र मधुमेहशब्देन प्रमेहमात्राभिधानात् । यदि तु मधुमेह एवाभीष्टः स्यात्, तदा 'उपेक्षयाऽस्य जायन्ते' इति उपेक्षणाभिधानमनुपपन्नं स्यात्, पिडकानां च मधुमेहभवानां चिकित्सोपदेशो व्यर्थः स्यादिति । कुलजमेहस्यासाध्यताप्रसङ्गेनापरेषामपि कुलजानामसाध्यत्वमाह—ये चापीत्यादि । केचिदिति कुष्ठादयः । कुलजा इति पितृपितामहादिसंभूताः । एतेन प्रमेहिपितृपितामहमातामहस्यापि प्रमेहमसाध्यं

आतङ्कदर्पणव्याख्या ।

यः पुरुषः प्रमेही, स चासाध्यो भवति, बीजदोषादिति मेहारंभकदोषदुष्टबीजजातमधुमेहित्वात्, मधुमेहशब्देन चात्र मेहमात्रमुच्यते । यदि तु वातिक उपेक्षितो वा मेहो मधुमेह उच्यते, तदा इतरमेहयुक्तमातापितृजनितप्रमेहिणां नासाध्यत्वमुक्तं स्यात् ॥ मधुमेहिजनितस्य मधुमेहित्वमेव करणानुरूपतया युक्तम्, ततश्च मधुप्रमेही मधुमेहिना वा जातो न साध्य इति वक्तुमुचितं तस्यासाध्यत्वमपि न वक्तव्यम्, मधुमेहस्यासाध्यत्वात् । अन्यत्रापि मधुमेहशब्देन मेहमात्रमुक्तम् । तथा च "कुष्टी च मधुमेही च राजयक्ष्मी च यो नरः । अचिकित्स्या भवंत्येव बलमांसपरिक्षयात्"इति । यद्यत्र मधुमेहोऽभीष्टः स्यात्, तदा बलमांसपरिक्षयादिति न कृतं स्यात् । तस्य स्वरूपत एवासाध्यत्वात् । तथा च सुश्रुते—"मधुरं यच्च मेहेषु

सर्वे एव प्रमेहास्तु कालेनाप्रतिकारिणः ॥
मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि ॥ २३ ॥
मधुमेहे मधुसमं जायते स किल द्विधा ॥
क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथ वा ॥ २४ ॥

---

मधुकोशव्याख्या।

दर्शयति। ननु यस्य पितामहः प्रमेही तस्य पितापि प्रमेही, प्रमेहिजातत्वात्; तथाच सति "जातः प्रमेही मधुमेहिनो वा न साध्य उक्तः स हि बीजदोषात्" इत्यनेनैव गतार्थम्। नैवं. न हि प्रमेहिणो जात इत्येतावता उत्पन्नमात्र एव प्रमेही भवति, किं तर्हि कालवशेन कुष्ठेरभिव्यक्तवत्; यथा–कुष्ठिजातस्य कुष्ठवत्; एतेन यदा अनतिदुष्टबीजेन प्रमेहिजातेन पित्रा जन्यते पुरुषः प्रमेही सोऽप्यसाध्य इति। कुलजा इत्यनेनैव मेहस्याप्यसाध्यतायां लब्धायां पुनस्तद्वचनं [illegible] सन्तानानुबन्धित्वप्रदर्शनार्थम्। उक्तं च–"प्रमेहोऽनुषङ्गिनाम्" इति ॥ २२ ॥ उपेक्षया हि पित्तकफजानामपि मधुमेहित्वं प्रदर्शयितुमाह–सर्व एवेत्यादि। धातुक्षयावरणाभ्यां कुपितवातेन मधुमेहसंभवमाह–मधुमेह इत्यादि। मधुसममिति मूत्रमिति शेषः। स इति मधुमेहः। सावरणलिङ्गमाह आवृत इत्यादि। आवृत इति आवृतवातकृतः। दोषलिङ्गानीति येन पित्तादिना आवृतस्तस्य च लिङ्गानि दर्शयन्। अनिमित्तम् अकस्मात्। क्षीणः क्षणात् क्षणात्पूर्ण इति आवरणेन पुनः पूर्णो भवन् कृच्छ्रसाध्यो भवति तथाच चरकः–"समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः। दर्शयत्याकृतिं गत्वा क्षयमाप्याय्यते पुनः" इति। धातुक्षयकुपितवातजस्य तु केवलवातजमेव लिङ्गम्। गदाधरस्त्वाह–मधुमेहः सावरणवायुनैव क्रियते। यदाह चरकः–

आतङ्कदर्पणव्याख्या।

प्रायो मध्विव मेहति। सर्वेपि मधुमेहाख्या माधुर्याच्च तनोरतः" इति। ये चापि केचित्कुलजा इति केचिदिति पितृपितामहादिसंभूताः कुष्टादयः ॥ २२ ॥ उपेक्षया पित्तकफजानामपि मधुमेहित्वं दर्शयन्नाह–सर्वे इति। सर्व एव प्रमेहाः अप्रतिकारिणः प्रतीकारमकुर्वतः पुंसः कालेन मधुमेहत्वमायांति, तदा असाध्या भवंति ॥ २३ ॥ धातुक्षयावरणाभ्यां कुपितवातेन मधुसंभवमाह–मधुसममिति। मूत्रमितिशेषः। स च द्विधा भवति, एको धातुक्षयात् कुपितवायौ धातुक्षयकुपितवातजस्य तु मधुमेहस्य केवलवातमेहलिंगम्। यदुक्तं–"कृत्स्नं शरीरं निष्पीड्य मेहो मज्जवसायुतः। अधःप्रक्रमते वायुस्तेनासाध्यास्तु वातजाः॥" अपरस्तु दोषैरावृतपथे। गदाधरस्तु–मधुमेहः सावरणेन वायुना क्रियते। यदुक्तं चरके–"तैरावृतगतिर्वायुरोजश्चादाय गच्छति।

आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन् ॥
क्षणात्क्षीणः क्षणात्पूर्णो भजते कृच्छ्रसाध्यताम् ॥ २५ ॥
मधुरं यच्च मेहेषु प्रायो मध्विव मेहति ॥
सर्वेऽपि मधुमेहाख्या माधुर्याच्च तनोरतः ॥ २६ ॥
शराविका कच्छपिका जालिनी विनताऽलजी
मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ २७ ॥

---

मधुकोशव्याख्या ।

" तैरावृतगतिर्वायुरोज आदाय गच्छति । यदा वस्ति तदा कृच्छ्रो मधुमेहः प्रवर्तते" इति । केवलवातजेषु तु कषायादिवमनाद्यतियोगादिकृतेषु धातुक्षयजेषु वायोरावरणं नास्तीति भेदः । मधुमेहशब्दप्रवृत्तौ निमित्तमाह—मधुरं यच्च मेहेष्वित्यादि ॥ २३–२६ ॥ प्रमेहोपेक्षया पिडकासंभवं दर्शयितुमाह—शराविकेत्यादि । इह दशपिडकासु विनतायाः पाठो भोजविरुद्धः, भोजे हि नव पिडकाः; तद्यथा—"शराविका सर्षपिका कूर्मिका जालिनी तथा । कुलत्थिकाऽलजी पुत्री विदारी विद्रधी तथा ॥ नवैताः पिडका ज्ञेयाः" इत्यादि । कुलत्थिका भोजे मसूरिका ज्ञेयाः किंतु भोजस्यैव न्यूनतेति वक्तुं सुकरं सुश्रुते सर्वत्र चरके च विनताया दर्शनात् । चरके तु सप्तपिडकाः । तद्यथा—"शराविका कच्छपिका जालिनी सर्षपी तथा । अलजी विनताख्या च विद्रधी चेति सप्तमी" इति । तत्र प्रायोभावात् सप्तानामभिधानम् । यतः तेनैव कियन्तःशिरसीये "तथान्याः पिडकाः सन्ति" इत्यादिना अधिकपिडकासंभवः सूचितः । प्रमेहोपेक्षयेत्यभिधानं मधुमेहेन प्रमेहमात्रेण च पिडकासंभवं दर्शयति ।

आतङ्कदर्पणव्याख्या ।

यदा वस्ति तदा कृच्छ्रो मधुमेहः प्रवर्तते ॥" । इति । केवलवातजेषु तु कषायादिवमनाद्यतियोगाद्धातुक्षये वायोरावरणं नास्तीति भेदः ॥ २४ ॥ सावरणलिंगमाह—आवृत इति । यन पित्तादिना दोषेणावृतश्च लिंगं लक्षणं दर्शयन्, अनिमित्तमकस्मात् क्षीणः, क्षणात् पुनः आवरणे सति पूर्णो भवेत्, स कृच्छ्रसाध्यो भवति । उक्तं चरके—"समारुतस्य पित्तस्य कफस्य च मुहुर्मुहुः । दर्शयत्याकृतिं गत्वा क्षयमापाद्यते पुनः ॥" इति ॥ २५ ॥ मधुमेहशब्दप्रवृत्तौ निमित्तमाह—मधुरमिति । शरीरस्य माधुर्य्यादतः सर्व एव प्रमेहा मिधुमेहाख्यां लभंते । शेषं सुगमम् ॥ २६ ॥ प्रमेहोपेक्षया पिडकासंभवं दर्शयितुमाह—शराविकेति । एतैः स्वनामभिः प्रसिद्धाः । प्रमेहोपेक्षया अप्रतिक्रियमाणेषु कालप्रकर्षादित्यर्थः । प्रमेहोपेक्षयेत्यभिधानं मधुमेहेन

विद्रधिश्चेति पिडकाः प्रमेहोपेक्षया दश ॥
सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ॥ २८ ॥
अन्तोन्नता तु तद्रूपा निम्नमध्या शराविका ॥
गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी ॥ २९ ॥
सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥
जालिनी तीव्रदाहा तु मांसजालसमावृता ॥ ३० ॥
अवगाढरुजाक्लेदा पृष्ठे वाऽप्युदरेऽपि वा ॥
महती पिडका नीला विनता नाम सा स्मृता ॥ ३१ ॥
महत्यल्पचिता ज्ञेया पिडका चापि पुत्रिणी ॥
मसूराकृतिसंस्थाना विज्ञेया तु मसूरिका ॥ ३२ ॥
रक्ता सिता स्फोटचिता दारुणा त्वलजी भवेत् ॥
विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥ ३३ ॥

---

मधुकोशव्याख्या ।

अत एव "विना प्रमेहमप्येताः" इत्यत्र प्रमेहमात्रग्रहणं कृतम् । धामस्विति स्थानेषु ॥ २७ ॥ २८ ॥ सर्वासामाकृतिमाह-अन्तोन्नतेत्यादि । तद्रूपेति शरावरूपा । अल्पचिता अल्पपिडकान्तराचिता । विद्रधेर्लक्षणैर्युक्तेत्यभिधानेन विद्रधेरस्या भेदो

आतंकदर्पणव्याख्या ।

प्रमेहमात्रेण च पिडकासंभवं दर्शयति । धामसु स्थानेषु, अत एव 'विना प्रमेहमप्येता' इत्यादि-संधिमर्मसु संध्याश्रितेषु मर्मसु, अन्ये संधौ मर्मसु चेति व्याख्यानयंति ॥ २७ ॥ २८ ॥ शरा-विकालक्षणमाह—अंतोन्नतेति । अंते उन्नता मध्ये निम्ना तद्रूपा शरावरूपा ॥ २९ ॥ कच्छपिका-माह—सदाहेति । दाहयुक्ता कूर्माऽऽकारा ॥ जालिनीमाह--जालिनीति । अतिशयदाहयुक्ता मांसजालैर्व्यावृतेव, अस्या लक्षणं तंत्रांतरे—"परस्पराभिसंबंधात्पिडका चैकदेशजा । पित्तोत्कटा दाह-वती भृशरुग्जालिनी मता" ॥ ३० ॥ विनतामाह--अवगाढेति । अवगाढरुजा क्लेदा, अंतर्निविष्टवेदना क्लेदा पृष्टे वा जठरे वा जायते । महती स्थूला, नीला नीलवर्णा ॥ ३१ ॥ अल्पचितेति । अल्पपिडकांतरचिता सा पुत्रिणी ज्ञेया । विदारिका पिडका विदारीकंदवद्वृत्ता

**विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा ॥**
**ये यन्मयाः स्मृता मेहास्तेषामेतास्तु तन्मयाः ॥ ३४ ॥**
**विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ॥**
**तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहः ॥ ३५ ॥**

---

मधुकोशव्याख्या।

बोध्यः ॥ २९.--३३ ॥ पिडकानामारम्भकारणमाह--ये यन्मया इत्यादि । तन्मया इति निर्देशः क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति ङीपं बाधित्वा टापा साधनीयः । एतद्दोषं मत्वा कश्चित् 'तत्कृताः' इति पाठान्तरं कृतम् । अयमत्र पिण्डार्थः- यो यद्दोषोल्वणो मेहस्तद्दोषोल्वणैनेव पिडका भवति । ननु जालिन्यां तीव्रदाहः पठितः, न च पित्तकृतः, भोजेऽपि जालिनी पित्तकृतैव पठिता, यथा--"परस्पराभिसंबन्धा पिडका चैकदेशजा । पित्तोत्कटा दाहवती भृशरुग् जालिनी मता ॥" इति । तत्कथं जालिन्यां पित्तजत्वनियमात् ये यन्मया इत्यादिग्रन्थार्थसंगतिः? नवम्, प्रचुरपिडकानां तन्मयत्वेन बाहुल्येनाभिधानम्; यथा--छत्रिणो गच्छन्तीति गद्याथवः; किंवा स्वमहिम्ना जालिनी पित्तप्रधाना भवति, श्लेष्मवातजमेहभवत्वेन श्लेष्मवातप्रधाना च; तेन दोषत्रयप्रधानत्वात् सर्वदा सा भवति । अन्यस्त्वाह- तीव्रदाहत्वं पित्तोत्कटत्वं च पैत्तिकमेहजायां जालिन्यामवगन्तव्यम्, अन्यमेहजा तु अन्यदोषोत्कटा निर्दाहा च। अत एव चरके जालिनी कफोल्बणा निर्दाहा एव पठिता । तद्यथा--"शराविका कच्छपिका जालिनी चेति दुःसहा । जायन्ते ता ह्यतिबलाः प्रभूतश्लेष्ममेदसाम् ॥ स्तब्धा शिराजालवती स्निग्धस्रावा महाश्रया। रुजानिस्तोदबहुला सूक्ष्मच्छिद्रा च जालिनी" इति। न चातिप्रसक्तिः, उक्तं हि चरके समर्थ्यते, अस्मिंश्च समाधाने ये यन्मया इत्यादि न व्याहन्यते । चरकभोजवचनयोश्चाविरोधार्थं यत्नान्तरं मृग्यम् । कार्तिकस्त्वाह--पाककाले पित्तोत्कटत्वं "तस्माद्धि सर्वे परिपाककाले पचन्ति शोथास्त्रिभिरेव दोषैः" इति वचनात्; एतत्तु सर्वत्रावि-

आतङ्कदर्पणव्याख्या ।

परिवर्त्तुला, कठिना अश्मवत्। विद्रधेर्लक्षणैर्युक्तेत्यभिधानेन विद्रधेरस्या अभेदो बोद्धव्यः ॥ ३२ ॥ ॥ ३३ ॥ पिडकानामारंभकारणमाह--य इति । ये मेहा यन्मया यद्दोषारब्धाः, तेषां मेहानामेताः पिडकास्तन्मयास्तद्दोषमया वाच्याः । श्लेष्मजेषु श्लेष्मजाः, पित्तजेषु पित्तजाः, वातजेषु वातजाः, कदाचित्प्रमेहान् विनापि वातादिदुष्टमेदसः पुरुषस्य जायंते, एतास्तावन्न जायंते, यावद्वस्तु-

**गुदे हृदि शिरस्यंसे पृष्ठे मर्मसु चोत्थिताः ॥**
**सोपद्रवा दुर्बलाग्नेः पिडकाः परिवर्जयेत् ॥ ३६ ॥**

**इति श्रीमाधवकरविरचिते माधवनिदाने प्रमेहप्रमेहपिडका-निदानं समाप्तम् ॥ ३३ ॥**

---

मधुकोशव्याख्या ।

शेषान्नाद्रियन्ते॥३४॥३५॥असाध्यपिडकालक्षणमाह—गुदे हृदीत्यादि। सोपद्रवा इति उपद्रवाश्च तृट्कासादयः।यथाह चरकः—"तृट्कासमांससंकोचमोहहिक्कामदज्वराः। विसर्पमर्मसंरोधाः पिडकानामुपद्रवाः" इति। पिडकास्तु प्रायेणाधःकाय एव, दोषदूष्याणामधःप्रसरणात्, वसामलानां च दौर्बल्यात्, नोर्ध्वमुत्तिष्ठन्ति दोषा इति वचनाच्च। केचिदाहुः—स्त्रीणां प्रमेहो न भवतीति। तथाच तन्त्रान्तरे—"रजःप्रसेकान्नारीणां मासिमासि विशुध्यति। सर्वं शरीरं दोषाश्च न प्रमेहन्त्यतः स्त्रियः" इति। किंतु स्त्रीषु प्रमेहदर्शनात् एतद्धेतुबलादन्यरोगासंभवत्वाच्च एतत् प्रायोवादमाश्रित्य उक्तम्। मेहनिवृत्तिलक्षणं च सुश्रुते पठितम्। तद्यथा—"प्रमेहिणो यदा मूत्रमनाविलमपिच्छिलम्। विशदं तिक्तकटुकं तदारोग्यं प्रचक्षते" इति॥ ३६ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां प्रमेहप्रमेहपिडकानिदानं समाप्तम् ॥ ३३ ॥

आतङ्कदर्पणव्याख्या ।

परिग्रहो वास्त्वधिष्ठानं न भवति॥३४॥३५॥ पिडकानामसाध्यलक्षणमाह--गुद इति। अंसे बाहुमूले, मर्मसु शारीरोक्तेषु,सोपद्रवाः उपद्रवाश्च तृट्कासादयश्चरकोक्ताः। यदुक्तं "तृट्कासमांससंकोचमोहहिक्कामदज्वराः। विसर्पमर्मसंरोधाः पिडकानामुपद्रवाः" इति। पिडकास्तु प्रायेणाधःकाय एव भवंति। दोषदूष्याणामधःप्रक्रमणात् वसामलानां च दौर्बल्यात्। नोर्ध्वमुत्तिष्ठंति दोष इति वचनात्॥ केचिदाहुः—'स्त्रीणां प्रमेहो न भवति' इति। यदुक्तं तंत्रांतरे—"रजःप्रसेकान्नारीणां मासिमासि विशुद्ध्यति। कृत्स्नं शरीरं दोषाश्च न प्रमेहंत्यतः स्त्रियः" इति। किंतु स्त्रीषु प्रमेहहेतुदर्शनादेतद्धेतुनान्यरोगासंभवाच्चैतत्प्रायोवादमाश्रित्योक्तम्। प्रमेहनिवृत्तिलिंगं च सुश्रुते पठितं, तद्यथा—"प्रमेहिणां यदा मूत्रमनाविलमपिच्छिलम्। विशदं कटु तिक्तं च तदारोग्यं प्रचक्षते" इति। मेहरक्तपित्तयोर्व्यक्तिमाचष्टे वाग्भटः—"हारिद्रवर्णं रक्तं वा मेहप्राग्रूपवर्जितम्। यो मूत्रयेन्नतंमेहं रक्तपित्तं तु तद्विदुः" इति॥ ३६ ॥ इत्यातंकदर्पणे निदानव्याख्यायां प्रमेहप्रमेहपिडकानिदानं समाप्तम् ॥ ३३ ॥

---

१ एतच्च—"यावद्वास्तुपरिग्रहः" इति पाठाभिप्रायेण ।

# अथ मेदोनिदानम् ३४.

अव्यायामदिवास्वप्नश्लेष्मलाहारसेविनः ॥
मधुरोऽन्नरसः प्रायः स्नेहान्मेदः प्रवर्धयेत् ॥ १ ॥
मेदसावृतमार्गत्वात्पुष्यन्त्यन्ये न धातवः ॥
मेदस्तु चीयते तस्मादशक्तः सर्वकर्मसु ॥ २ ॥

मधुकोशव्याख्या ।

'विना प्रमेहमप्येता जायन्ते दुष्टमेदसः' इत्यत्र मेदःसंकीर्तनात् मेदोदुष्टेरभिधानम्, मेदोदुष्ट्या च स्थौल्यम् । मधुरोऽन्नरस इति मधुरप्राय आम इवान्नरसः संभवन् स्नेहान्मेदो जनयति । सुश्रुतेऽप्युक्तम्—"आम इवान्नरसो मधुरतरश्च भवति" इत्यादि । ननु, मेदस्विनस्तीक्ष्णाग्नित्वात् कथमाम इवान्नरसो भवति ? यदुक्तं चरकेण—"चरन् सन्धुक्षयत्यग्निम्" इति । अग्नौ च मन्दे आमोत्पादः, यदाह—"आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः । आद्य आहारधातुर्यः स आम इति कीर्तितः" इति । उच्यते, श्लेष्मलाहाराध्यशनशीलत्वेन कदाचित् कालव्यतिक्रमभोजनेन च बहुविकारकरणाग्निव्यापत्तेरन्नरसस्यामतुल्यता. अथवा मधुरतरान्नरसोपलिप्तेऽन्नवहस्रोतसि सर्व एवान्नरसो मधुरतरो निष्पद्यते । यथा पित्तयुक्तेऽन्नवहस्रोतसि मधुररसस्यापि विदाहः । यदुक्तं—"स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति । विदाहिभुक्तमन्यद्वा तस्याप्यन्नं विदह्यते" इति । स चामतुल्यत्वादाम इत्युच्यते ॥ १ ॥ अशक्तः सर्वकर्मस्विति

आतङ्कदर्पणव्याख्या ।

"विनाप्रमेहमप्येता जायंते दुष्टमेदसः" इतिकीर्तनात् पिडकानंतरं मेदोनिदानमाह—तस्योत्पत्तौ हेतुमाह—अव्यायामेति । अव्यायामादिसेविनः पुरुषस्य प्रायो बाहुल्येन आम इव मधुरोऽन्नरसः संभवन् स्नेहान्मेदो जनयति । उक्तं च सुश्रुते—"आम इवान्नरसो मधुरतरश्च भवति" ॥ ननु मेदस्विनस्तीक्ष्णाग्नित्वात्कथमाम इवान्नरसो भवति । यदुक्तं चरके—"चरन्संधुक्षयत्यग्निमाहारं शोषयत्यपि ।" अग्नौ च मंदे आमोत्पादः । यदाह—"आमाशयस्थः कायाग्नेर्दौर्बल्यादविपाचितः । आद्य आहारधातुर्यः स आम इति कीर्तितः ॥" इति । उच्यते,—श्लेष्मलाहाराध्यशनशीलत्वेन कदाचित्कालव्यतिक्रमभोजनेन च तस्य महाविकारोदयः 'विकारांश्चाप्नुते घोरान्कांश्चित्कालव्यतिक्रमात्' इति । अथवा मधुरतरान्नरसोपलिप्तेऽन्नवहे स्रोतसि सर्व एवान्नरसो मधुरतरो निष्पद्यते । यथा पित्तयुक्तान्नवहे स्रोतसि मधुरस्यापि विदाहः । यदुक्तं—"स्रोतस्यन्नवहे पित्तं पक्तौ वा यस्य तिष्ठति । विदाहि भुक्तमन्यद्वा तस्याप्यन्नं विदह्यते ॥" इति । स चामतुल्यत्वादाम इत्युच्यते ॥ १ ॥ तस्यातिवृद्धां शक्तिमाह—मेदसेति । अन्ये धातवो रसादयः शुक्रांताः न पुष्यंति,

क्षुद्रश्वासतृषामोहस्वप्नक्रथनसादनैः ॥
युक्तः क्षुत्स्वेददुर्गन्धैरल्पप्राणोऽल्पमैथुनः ॥ ३ ॥
मेदस्तु सर्वभूतानामुदरेष्वस्थिषु स्थितम् ॥
अत एवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥ ४ ॥
मेदसावृतमार्गत्वाद्वायुः कोष्ठे विशेषतः ॥
चरन्सन्धुक्षयत्यग्निमाहारं शोषयत्यपि ॥ ५ ॥
तस्मात्स शीघ्रं जरयत्याहारमभिकांक्षति ॥
विकारांश्चाप्नुते घोरान्कांश्चित्कालव्यतिक्रमात् ॥ ६ ॥
एतावुपद्रवकरौ विशेषादग्निमारुतौ ॥
एतौ तु दहतः स्थूलं वनदावो वनं यथा ॥ ७ ॥

---

मधुकोशव्याख्या ।

मेदसः सौकुमार्यात् ॥ २ ॥ क्षुद्रश्वासः 'रूक्षायासोद्भव' इत्यादिनाभिहितः क्रथनमकस्मादुच्छ्वासावरोधः ॥ ३ ॥ ४ ॥ चरन् सन्धुक्षयत्यग्निमिति मेदोरुद्धमार्गत्वात् कुम्भकारपवनन्यायेनान्तर्बलवाननतिवृद्धो वायुरग्निं दीपयति । अतिवृद्धस्तु वायुरग्निवैषम्यजनकः ॥ ५ ॥ विकारांश्चाप्नुते घोरानिति वातविकाराणामन्यतमान्, कालव्यतिक्रमात् भोजनकालव्यतिक्रमात् । विकारान् दारुणानिति प्रमेहपिडकाज्वरभगन्दरविद्रधिवातरोगाणामन्यतमान् । अयथोपचयोत्साह इति अयथावन्मांसोप-

आतंकदर्पणव्याख्या ।

मेदश्चीयते वृद्धिं गच्छति ॥ २ ॥ तस्यापि प्रवृद्धस्योपद्रवानाह—क्षुद्रेति । श्वासनिदानोक्तः क्षुद्रश्वासः, स्वप्नः निद्रा, क्रथनम् अकस्मात् श्वासावरोधः, अन्ये--क्रथनं तस्य कंठे घुर्घुररवः, सादनं शरीरस्य, क्षुत् छिक्का, अल्पप्राणो हीनबलः, अल्पमैथुनः शुक्रस्यावृद्धित्वात् ॥ ३ ॥ तस्य स्थानसंश्रयमाह--मेदसेति । सुगमम् ॥ तस्यातिवृद्धस्य वह्न्यनिलतामाह--मेदसेति । मेदोरुद्धमार्गत्वात् योगशास्त्रे कुंभककर्मकृत्पवनन्यायेनांतर्बलवानतिप्रवृद्धो वायुर्विशेषादग्निं दीपयति, दीप्ताग्नित्वादाहारमभिलषति । अतिप्रवृद्धस्तु वायुरग्निवैषम्यकृत् स्यात् ॥ ४ ॥ ५ ॥ कांश्चिद्विकारान् । वातविकाराणामन्यतमान्, घोरान् दारुणान्, कालव्यतिक्रमादिति । भोजनकालव्यतिक्रमात्, प्रमेहपिडकाज्वरभगंदरविद्रधिवातरोगाणामन्यतमान् । कोष्ठांतारुद्धमार्गत्वात्प्रवृद्धौ विनाशाय भवत इत्यत आह--एताविति । विशेषात्प्रवृद्धावेतौ रोगोत्पादकौ भवतः । एतौ हि स्थूलं

मेदस्यतीव संवृद्धे सहसैवानिलादयः ॥
विकारान्दारुणान्कृत्वा नाशयन्त्याशु जीवितम् ॥ ८ ॥
मेदोमांसातिवृद्धत्वाच्चलस्फिगुदरस्तनः ॥
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥ ९ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने मेदोनिदानं समाप्तम् ॥ ३४ ॥

---

## अथोदरनिदानम् ३५.

रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि च ॥
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसंचयात् ॥ १ ॥

---

मधुकोशव्याख्या ।

चय उत्साहश्च यस्य स तथा ॥ ६-९ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां मेदोनिदानं समाप्तम् ॥ ३४ ॥

उदरोत्सेधसाधर्म्यादुदरनिदानम् । उदरस्य विशेषेण वह्निदुष्टिजन्यत्वमाह—रोगाः सर्वेऽपि मन्देऽग्नावित्यादि । अग्निमान्द्यं च दोषत्रयजनकम् । यदुक्तं—"तेषामग्निबले हीने कुप्यन्ति पवनादयः" इति । मलिनैरिति अत्यर्थदोषजनकैर्विरुद्धाद्यशनादिभिः। मलसंचयादिति मला दोषाः पुरीषादयश्च तेषामतिवृद्धत्वात् । तन्त्रान्तरं च—"अतिसंचितदोषाणां पापं कर्म च कुर्वताम् । उदराण्युपजायन्ते मन्दाग्नीनां विशे-

आतंकदर्पणव्याख्या ।

नरं नाशयतः, यथा दावाग्निर्वनम् ॥ ६ ॥ ७ ॥ पुनरतिप्रवृद्धस्य मेदसो विशेषहेतुमाह—मेदसीति । विकारान् पूर्वोक्तानेव ॥ ८ ॥ स्थूललक्षणमाह—स्फिक् ऊर्वोरुपरितनो भागः, अयथावन्मांसोपचय उत्साहश्च यस्य स तथा ॥९॥ इत्यातंकदर्पणे निदानव्याख्यायां मेदोनिदानम्॥३४॥

उदरोत्सेधसाधर्म्यादुदरनिदानम् । उदरस्य विशेषेण वह्निजन्यदुष्टित्वमाह—रोगा इति । अत्रोदरस्थो रोगोप्युदरशब्देनोच्यते । उक्तं च "तत्स्थ्यतद्धर्मताभ्यां च तत्समीपतयाऽपि च । तत्साहचर्याच्छब्दानां वृत्तिरेषा चतुर्विधा॥" इति । अग्निमांद्यं दोषत्रयजनकम् । यदुक्तम्—"तेषामग्निबले हीने कुप्यंति पवनादयः" इति ॥ मलिनैरिति । अजीर्णाद् अत्यर्थदोषजनकैर्विरुद्धाद्यशनादिभिः ॥ मलसंचयादिति । मला दोषाः पुरीषादयश्च, तेषामतिवृद्धत्वात् । उक्तं च तंत्रांतरे—"अतिसंचितदोषाणां पापकर्म च कुर्वताम् । उदराण्युपजायंते मंदाग्नीनां विशेषतः ॥" यद्यप्यत्र मंदाग्नित्वमलिनान्नत्वयोः प्रत्येकमपि दोषत्रयजनकत्वमस्ति, तथाप्यत्रोभयहेतुजनकत्वेन दुष्टिप्रकर्षः

रुद्ध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि संचिताः ॥
प्राणाग्न्यपानान्संदूष्य जनयन्त्युदरं नृणाम् ॥ २ ॥
आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता ॥
शोथः सदनमङ्गानां सङ्गो वातपुरीषयोः ॥ ३ ॥

मधुकोशव्याख्या ।

पतः" इति । यद्यपि मन्दाग्नित्वमलिनान्नत्वयोः प्रत्येकमपि दोषत्रयजनकत्वमस्ति तथाप्यत्रोभयहेतुजनकत्वेन दोषदुष्टिप्रकर्षः ख्याप्यते, अत एव दुष्टिप्रकर्षख्यापनार्थं मलसंचयादित्यत्र संपूर्वं कृतवान् ॥ १ ॥ संप्राप्तिमाह--रुद्ध्वेत्यादि । स्वेदाम्बुवाहीनीति स्वेदवहानि अम्बुवहानि च । अनयोश्च भेदः, 'उदकवहानां स्रोतसां तालुमूलं क्लोम च, स्वेदवहानां मेदो मूलं लोमकूपाश्च' इत्यनेनोक्तो ज्ञेयः । स्रोतोरोधश्चात्र बहिरेव न पुनरन्तः । यदुक्तं चरके--"स्वेदस्तु बाह्येषु स्रोतःसु प्रतिहतगतिस्तिर्यगवतिष्ठमानस्तदेवोदकमाप्याययति" इति । अत एवोदरपूर्णता अन्नरसेन । प्राणाग्नीति । पुनरग्निदूषणाभिधानेन मन्दस्याप्यग्नेः पुनर्दोषकृतम्, सुतरां मान्द्यं बोधयति । दोषसंचयगतेनापि वायुना प्राणापानयोर्दूषणं न विरुद्धम्, यतो वायुना वाय्वन्तरदुष्टिः क्रियत एव । सुश्रुत तु पूर्वरूपमस्योक्तम्, तद्यथा--"तत्पूर्वरूपं बलवर्णकांक्षावलीविनाशो जठरे हि राज्यः । जीर्णापरिज्ञानविदाहवत्यो वस्तौ रुजः पादगतश्च शोथः" इति ॥ ॥ २ ॥ उदराणां सामान्यरूपमाह--आध्मानमित्यादि । दुर्बलाग्नितेति । मन्दोऽग्निर्यद्यप्यत्र हेतुस्तथाप्यग्नेरतिशयदौर्बल्यं लिङ्गत्वेन ज्ञेयम् । उदराण्यष्टाविति यकृद्दाल्युद-

आतङ्कदर्पणव्याख्या ।

ख्याप्यते ॥ १ ॥ तस्याः संप्राप्तिमाह--रुद्ध्वेति । दोषाः स्वेदांबुवाहीनि स्रोतांसि रुद्ध्वा प्राणाग्न्यपानान् संदूष्य उदरमुत्पादयंति । स्वेदवाहीनि उदकवाहीनी, अनयोश्च भेदः--उदकवहानां स्रोतसां तालुमूलं क्लोम च, स्वेदवहानां मेदोमूलं रोमकूपाश्चेत्यनेन प्रोक्तो ज्ञेयः । स्रोतोनिरोधश्च बहिरेव न पुनरंतः । यदुक्तं चरके--"स्वेदश्च बाह्येषु मार्गेष्वभिहतगतिस्तिर्यगवतिष्ठमानस्तदेवोदकमाप्यायति" इति । अत एवोदरपूर्णतान्नरसेन ॥ प्राणाऽग्नीति । प्राणो वायुः, अग्निश्च, अपानो वायुः, एतान् पुनरग्निं संदूष्येत्यभिधानेन मन्दस्याग्नेः पुनर्दोषकृतं सुतरां मांद्यं बोधयति । दोषसंचयगतेनापि वायुना प्राणापानयोर्दूषणं न विरुद्धम् । यतो दुष्टेन वायुनाऽद्दुष्टस्यांतर्वायोर्दुष्टिः क्रियत एव । अस्य तु पूर्वरूपं सुश्रुते पठितम्, तद्यथा--"तत्पूर्वरूपं बलवर्णकांक्षावलीविनाशो जठरे त्र राज्यः । जीर्णापरिज्ञानविदाहवत्यो वस्तौ रुजः पादगतश्च शोथः" ॥ २ ॥ सर्वेषामुदराणां सामान्यलक्षणमाह--आध्मानमिति । मंदाग्निर्यद्यप्यत्र हेतुः, तथा-

दाहस्तन्द्रा च सर्वेषु जठरेषु भवन्ति हि ॥
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥ ४ ॥
संभवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ॥
तत्र वातोदरे शोथः पाणिपान्नाभिकुक्षिषु ॥ ५ ॥
कुक्षिपार्श्वोदरकटीपृष्ठरुक्पर्वभेदनम् ॥
शुष्ककासोऽङ्गमर्दोऽधोगुरुता मलसंग्रहः ॥ ६ ॥
श्यावारुणत्वगादित्वमकस्माद्वृद्धिह्रासवत् ॥
सतोदभेदमुदरं तनुकृष्णशिराततम् ॥ ७ ॥
आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ॥
वायुश्चात्र सरुक्शब्दो विचरेत्सर्वतो गतिः ॥ ८ ॥

मधुकोशव्याख्या ।

रस्य प्लीहोदरेण सार्धं समानचिकित्स्यतया तथोत्पत्तिविशिष्टदकोदरात् क्रमेण भूतद-कोदरस्यापि समानलिङ्गचिकित्सितत्वेनाभिन्नत्वात्, अष्टावेवोदराणि भवन्ति । प्लीहोदरादीनि च यद्यपि चत्वारि दोषजानि, तथापि हेतुलिङ्गचिकित्साभेदात् पृथ-गुक्तानि ॥ वातोदरलक्षणमाह--तत्रेत्यादि ॥ ३-६ ॥ अकस्माद्वृद्धिह्रासवदिति अनियतवृद्धिह्रासयुक्तमुदरम् । आध्मातदृतिवदिति वातपूर्णचर्मपुटवदिति ॥ ७॥८ ॥

आतङ्कदर्पणव्याख्या ।

ध्यमरतिशयदौर्बल्यं लिंगत्वेन ज्ञेयम् । सदनं सादः । वातपुरीषयोः संग इति, अप्रवृत्तिः ॥ ३ ॥ तेषां संख्यामाह--पृथगिति । वातपित्तकफैस्त्रयः, त्रिभिरेकः, प्लीह्ना बद्धेन क्षतेन उदकेन, एवमष्टावेवोदराणि । यकृद्दाल्युदरस्य प्लीहोदरेण सह समानचिकित्सिततया समानलिंगत्वेनाभि-न्नत्वादष्टावेवोदराणि भवंति । ननु यकृद्दाल्युदरं पृथक्, प्लीहोदरादीनि च यद्यपि चत्वारि दोष-जानि, तथापि हेतुलिंगचिकित्साभेदात् पृथगुक्तानि तेषां लिंगानि पृथक् शृणु । तत्र वातोदर-लक्षणमाह--तत्रेति । हस्तपादादिषु श्वयथुः ॥४॥५॥ कुक्ष्यादिषु च पीडा, उदरस्य वामदक्षिणभागे कुक्षिः, पर्वभेदनं संधिस्फुटनम् । अधो नाभेरधः पक्काशये गुरुता, मलसंग्रहः पुरीषस्याप्रवृत्तिः॥६॥ त्वगादिषु श्यावारुणत्वम्, आदिशब्देन नखनेत्रग्रहणम् अकस्माद्वृत्तिह्रासवदिति। दृतिश्चर्मखल्ली, हस्ता-हतवातपूर्णदृतिवत् शब्दं करोति, उदरमिति शेषः ॥७॥ सर्वतोगतिः सर्वकोष्ठगतो वायुः सरुक्-

१ अयमेवमेव पाठमूरीकरोति ।

पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता ॥
भ्रमोऽतीसारः पीतत्वं त्वगादावुदरं हरित् ॥ ९ ॥
पीतताम्रशिरानद्धं सस्वेदं सोष्म दह्यते ॥
धूमायते मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ १० ॥
श्लेष्मोदरेऽङ्गसदनं स्वापश्वयथुगौरवम् ॥
निद्रोत्क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता ॥ ११ ॥
उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत् ॥
चिराभिवृद्धं कठिनं शीतस्पर्शं गुरु स्थिरम् ॥ १२ ॥
स्त्रियोऽन्नपानं नखलोममूत्रविडार्तवैर्युक्तमसाधुवृत्ताः ॥
यस्मै प्रयच्छन्त्यरयो गरांश्च दुष्टाम्बुदूषीविषसेवनाद्वा ॥१३॥

मधुकोशव्याख्या ।

पैत्तिकमाह--पित्तेत्यादि । दह्यत इति उदरमात्रं दह्यते । दाहस्तु सकलदेहस्यैव बोद्धव्यः । धूमायते धूम इवोर्ध्वमेति । क्षिप्रपाकमिति क्षिप्रपाकाज्जलोदरतां यातीत्यर्थः । प्रदूयते व्यथते ॥ ९-१२ ॥ सन्निपातोदरमाह--स्त्रिय इत्यादि । स्त्रीग्रहणमविवेकिसन्निहितजनोपलक्षणम् । गरं संयोगजं विषम् । दुष्टमम्बु सगरप्राणितृणपर्णादिकोथयुतम्, विषमेवाग्न्याद्युपहतम्, मन्दप्रभावं वा दूषीविषमुच्यते । यदुक्तं-- "जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा । स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति" इति । तेनाशु रक्तमिति विषस्याग्नेयत्वेन रक्तदुष्टिः । कुपिताश्च दोषा इति स्वभावात्, दोषत्रयप्रकोपकं विषं भवति । तत् शीतवातादिषु कुप्यतीति, दूषीविषस्य तत्रैव कोपात् । मूर्च्छाते विषयोगात् । प्रसक्तं निरन्तरम् ।

आतङ्कदर्पणव्याख्या ।

शब्दो भवति ॥८॥ पैत्तिकमाह--पित्तोदर इति। तिक्तास्यता तिक्तमुखत्वम्, कटुद्रावस्याभिधानात् ॥ भ्रमोऽत्र शंखादौ पीतज्ञानमिति, हरित् शाकवर्णम् ॥ ९ ॥ दह्यत इति । उदरमेव दह्यते, दाहस्तत्र सकलदेहस्यैव बोद्धव्यः । धूमायते धूममिवोर्द्ध्वमेति क्षिप्रं पाकाज्जलोदरतां यातीत्यर्थः ॥ प्रदूयते व्यथते ॥ १० ॥ श्लैष्मिकमाह--श्लेष्मेति । अङ्गसदनमंगमादः, स्वापः अंगानामेव, अन्ये आसीनप्रचलायतम् । गौरवमंगानाम् । निद्राबाहुल्यम्, उत्क्लेशो ह्रल्लासः॥११॥स्तिमितं निश्चलम्, शुक्लशिरानद्धम्, चिराभिवृद्धिरिति, चिरपाक इत्यर्थः । गुरु गौरवयुक्तम्, स्थिरं गुडगुडाशब्दरहितम् ॥ १२ ॥ सान्निपातिकमाह--स्त्रिय इति । स्त्रीग्रहणमविवेकिजनोपलक्षणं, स्त्रियो नखरोमादिभिर्युक्तं यस्मै अन्नपानम् प्रयच्छन्ति, असाधुवृत्ताः सौभाग्यमिच्छन्त्यः कार्याकार्यविचारवि-

१ एतच्च--"चिराभिवृद्धिः कठिनम्" इतिपाठाभिप्रायेण ।

तेनाशु रक्तं कुपिताश्च दोषाः कुर्युः सुघोरं जठरं त्रिलिङ्गम् ॥
तच्छीतवाते भृशदुर्दिने च विशेषतः कुप्यति दह्यते च॥१४॥
स चातुरो मुह्यति हि प्रसक्तं पाण्डुः कृशः शुष्यति तृष्णया च ॥
दूष्योदरं कीर्तितमेतदेव प्लीहोदरं कीर्तयतो निबोध ॥ १५ ॥
विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक् कफश्च ॥
प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ प्लीहोत्थमेतज्जठरं वदन्ति ॥ १६ ॥
तद्वामपार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र ॥
मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः ॥
सव्यान्यपार्श्वे यकृति प्रवृद्धे ज्ञेयं यकृद्दाल्युदरं तदेव ॥ १७ ॥

मधुकोशव्याख्या ।

दूष्योदरं कीर्तितमेतदेवेति, एतदेव सान्निपातोदरं दूष्योदरं कीर्तितं न पुनराधिकमित्यर्थः । रक्तं दूष्यं दूषयित्वा भवतीति दूष्योदरम् किंवा परस्परं दूषयन्तीति दोषा एव दूष्यास्तैः कृतमुदरमिति ॥ १३–१५ ॥ प्लीहोदरमाह–प्लीहेत्यादि । असृक्कफश्चेत्यसृग्दुष्ट्यैव तत्तुल्यकारणतया पित्तदुष्टिरप्युच्यते, विदाहिना रक्तं पित्तं च दूष्यते; अत एव पश्चात् वक्ष्यति–'कफपित्तलिङ्गैरुपद्रुतः' इति । अत्र पित्तस्य लिङ्गं मन्दज्वरः, कफस्य लिङ्गं मन्दाग्नित्वमिति गदाधरः प्लीहोदर एव यकृद्दाल्युदरस्यावरोधं दर्शयन्नाह–सव्यान्यपार्श्व इत्यादि । सव्यान्यपार्श्वे दक्षिणपार्श्वे । तदेवेति

आतङ्कदर्पणव्याख्या ।

मुखाः, आर्त्तवं रजः, शत्रवो वा यस्मै गरं संयोगजं विषम्, दुष्टमंबु सविषमनुष्यतृणपर्णादिकोथयुक्तम्, दूषीविषं विषमेव वाय्वग्न्याद्युपहतं, यदल्पप्रभावं, विषपीतस्य वा विण्मूत्रं, तद् दूषीविषमुच्यते, दुष्टांबुदूषीविषयोः सेवनाद्वा ॥ १३ ॥ तेनाशु रक्तं दुष्टं भवति, विषस्याग्नेयत्वेन रक्तस्य दुष्टिः ॥ कुपिताश्च दोषा इति स्वभावात्, दोषत्रयप्रकोपकं विषं भवति, सुघोरं भृशं कष्टकारि जठरमित्युदरविकारम्, तच्छीतवातादिषु कुप्यति कोपं गच्छति, दूषीविषस्य तत्रैव कोपात् । दह्यते संतप्यते ॥ १४ ॥ मूर्च्छति[१] विषयोगात्, प्रसक्तं निरंतरम्, दूष्योदरं कीर्त्तितमेतदेवेति । एतदेव सान्निपातोदरं कीर्तितं, न पुनरधिकमित्यर्थः । रक्तं दूष्यं दूषयित्वा भवतीति दूष्योदरम्, अथ वा–परस्परं दूषयंति दोषा एव दूष्यास्तैः कृतमुदरं दूष्योदरम् ॥ प्लीहोदरमाह–अभिष्यंदि दोषधातुमलस्रोतसां क्लेदप्रातिजननम् । असृक्कफश्चेति । असृक्कफजैव तुल्यकारणतया पित्तदुष्टिरुच्यते । विदाहिना रक्तं पित्तं च दूष्यति । अत एव वक्ष्यति–'कफपित्तलिंगैरुपद्रुतः' इति । तत्र पित्तस्य लिंगं मंदो ज्वरः, कफस्य लिंगं मंदाग्नित्वमिति गदाधरः । प्लीहोदर एव यकृद्दाल्युदरस्यावरोधं दर्शयन्नाह–सव्येति । सव्यान्यपार्श्वे दक्षिणे, तदेवेति तादृशमेव, तेन प्लीहोदरेण

१ "मुह्यति" इत्यत्र "मूर्च्छति" इतिपाठाभिप्रायेण ।

उदावर्तरुजानाहैर्मोहतृड्दहनज्वरैः ॥
गौरवारुचिकाठिन्यैर्विद्यात्तत्र मलान्क्रमात् ॥ १८ ॥
यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वा पिहितं यथावत् ॥
संचीयते तस्य मलः सदोषः शनैःशनैः संकरवच्च नाड्याम् १९
निरुध्यते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम् ॥
हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति ॥२० ॥
शल्यं तथाऽन्नोपहितं यदन्त्रं भुक्तं भिनत्त्यागतमन्यथा वा ॥
तस्मात्स्रुतोऽन्त्रात्सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूयः॥२१॥

मधुकोशव्याख्या ।

तादृशमेव । प्लीहोदरसममेव न विलक्षणमित्यर्थः । यकृद्दालयति दोषैर्भेदयतीति यकृद्दाल्युदरम् ॥ १६॥१७ ॥ तत्र दोषसंबन्धमाह—उदावर्त इत्यादि । उदावर्तरुजानाहैर्वातम्, मोहतृड्दहनज्वरैः पित्तम्, गौरवारुचिकाठिन्यैः कफं जानीयात्॥१८॥ बद्धगुदमाह—यस्यान्त्रमन्नैरित्यादि । उपलेपिभिः पिच्छिलैरन्नैः शाकशाल्लुकादिभिः । पिहितं विबद्धम् । यथावदिति यथार्हम् । मलः पुरीषः,सदोष इति दोषत्रयसहितः । नाड्यामित्यन्त्रनाड्याम् । संकरवदिति संमार्जनीक्षिप्यमाणतृणाद्यवकरो यथा चीयते क्रमेण तथेत्यर्थः । बद्धगुदमिति गुदोपरि अन्त्रस्य बद्धत्वात् बद्धगुदम् । यदुक्तं चरके—"पक्ष्मबालैः सहान्नेन भुक्तैर्बद्धायने गुदे" इति । पुरीषायतनस्य बद्धत्वात् हृन्नाभिमध्येऽन्नपाकस्थाने वृद्धिः । गुदमात्रनिरोधे तु मलदोषैर्गुदादूर्ध्वमेवोदरवृद्धिः स्यात् ॥ १९ ॥ २० ॥ क्षतोदरमाह—शल्यं तथान्नोपहितमित्यादि । शल्यं

आतङ्कदर्पणव्याख्या ।

सममेव, न विलक्षणमित्यर्थः । यकृद्दालयति, दोषैर्भेदयतीति यकृद्दाल्युदरम् ॥ १५–१७ ॥ तत्र दोषसंबंधमाह—उदावर्तेति । तत्र प्लीहोदरयकृद्दाल्युदरयोः पृथग्लक्षणलक्षितान् मलान् वातादीन् क्रमेणोदावर्त्तादिभिर्लिंगैर्विद्यात् । तत्र उदावर्तरुजानाहैर्वातम्, मोहतृड्दहनज्वरैः पित्तम्, गौरवारुचिकाठिन्यैः कफं जानीयात् ॥ १८ ॥ बद्धगुदमाह—यस्येति । यस्य पुंसः अंत्रमुपलेपिभिः पिच्छिलैः अन्नैः शाकादिभिर्वा, यथावदिति यथार्हं पिहितं बद्धं भवति । अत्र बांत्रे मलः पुरीषः, सदोषः दोषत्रयसहितः शनैःशनैः संचीयते संमार्जनीक्षिप्यमाणतृणाद्यवकरो यथा वृद्धिं नीयते क्रमेण तथैवेत्यर्थः ॥१९ ॥ तस्य गुदे पुरीषं निरुध्यते कृच्छ्राच्चाल्पमल्पं निरेति निःसरति । बद्धगुदमिति । गुदोपरि अंत्रस्य बद्धत्वाद्बद्धगुदम् । यदुक्तं चरके—"पक्ष्मबालैः सहान्नेन भुक्तैर्बद्धायने गुदे" इति । पुरीषायतनस्य रुद्धत्वाद्धृन्नाभिमध्य इति । अन्नपाकस्थाने वृद्धिः, गुदमात्रनिरोधे तु मलदोषैर्गुदादूर्ध्वमेवोदरे वृद्धिः स्यात् ॥ २० ॥ क्षतोदरमाह—शल्यमिति । शल्यं कंटकशर्करास्थिकाष्ठादि-

नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यते दाल्यति चातिमात्रम् ॥
एतत्परिस्राव्युदरं प्रदिष्टं दकोदरं कीर्तयतो निबोध ॥ २२ ॥
यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढः ॥
पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दूष्यन्ति हि तद्वहानि॥२३॥

मधुकोशव्याख्या ।

कण्टकशर्करादि । अन्नोपहितमन्नयुक्तम् । भुक्तम् आगतमिति अर्थतः पाकाशयात्, विलोमेनागतमन्त्रं भिनत्ति, ऋज्वागतं हि शल्यमपि नान्त्रभेदकम् । अन्यथा वेति जृम्भणात्यशनाभ्यामन्त्रं भिद्यते । यदुक्तं चरके-"शर्करातृणलोष्टास्थिकण्टकैरन्नसंयुतैः । भिद्येतान्त्रं यदा भुक्तैर्जृम्भयाऽत्यशनेन वा" इति । स्रुत इति गलितः । 'स्रावः स्रवेद्धि गुदतस्तु भूयः' इति, भूयो बहु यथा भवति तथाऽन्त्रात् स्रुतः । दोषजेषु पुनरुपस्नेहन्यायेनाल्प एव स्रावो भूयः पुनः पुनः गुदतश्च स्रवेत् । तुशब्दश्चार्थे, भूयः शब्दोऽत्रावर्तनीयः । तेनोक्ता व्याख्या साध्वी भवति । ननु, भिन्नान्त्रात् तिर्यगत्र स्रावनिर्गमः; तत्कथं स्रावः स्रवेद्ध गुदतस्तु भूय इत्युपपद्यते? नैवम्, सच्छिद्रान्त्रमार्गेण बहिर्गतस्यातिवृद्धस्य पुनरागमनात्, उपस्नेहन्यायाद्वा गुदतः स्राव उपपन्न एव । चरकेऽप्युक्तं-"पूरयन्गुदमन्त्रं च जनयत्युदरं नृणाम्" इति । तेन स्रावेण द्रवस्य निम्नगत्वान्नाभेरधो जठरं वृद्धिमेति; एतच्छिद्रोदरं जलोदरमिति भण्यते इति गदाधरः । यतश्चरकेणोक्तं-"तदधो नाभेः प्रायोऽभिनिर्वर्तमानं जलोदरं स्यात्" इति । तदन्ये नानुमन्यन्ते. यतश्छिद्रोदरं शीघ्रं जलोदरतां यातीत्यभिप्रायेण चरकेणोक्तम्, अन्यथा दकोदरं पृथङ्न स्यात् ॥ २१ ॥ २२ ॥ उत्पत्तिविशिष्टं दकोदरमाह— यः स्नेहपीत इत्यादि । स्नेहपीत इति कर्तरि क्तः, तेन स्नेहं पीतवानित्यर्थः । दूष्य-

आतङ्कदर्पणव्याख्या ।

कम् । अन्नोपहितमन्नयुक्तं, भुक्तमागतमित्यर्थतः, पक्वाशयात्,विलोमेन निर्गतमंत्रं भिनत्ति विदारयति । ऋज्वागतं शल्यमपि नांत्रभेदकम् । अन्यथा वेति जृंभणेनात्यशितस्यांत्रं भिद्यते । यदुक्तं चरके-"शर्करातृणलोष्टास्थिकंटकैरन्नसंयुतैः । भिद्यतेंत्रं यदा भुक्तैर्जृंभयाऽत्यशनेन च"इति, स्रुत इति गलितः, स्रावः स्रवेद्धि गुदतस्तु भूय इति । भूयो बहु यथा भवति तथांत्रात् स्रुत इति, ननु, भिन्नांत्रात् तिर्यगत्र स्रावो युक्तः,तत्कथं स्रावः स्रवेद्धि गुदतस्तु भूय इत्युपपद्यते ? नैवं,सच्छिद्रांत्रमार्गेण स्रावस्य निर्गमत्वाद्बहिष्कृतस्यातिवृद्धस्य पुनर्गमनादुपस्नेहन्यायाद्वा गुदतः स्राव उपपद्यत एव । चरकेप्युक्तं-"पूरयन् गुदमंत्रं च जनयत्युदरं नृणाम्." इति । तेन स्रावेण द्रवस्य निम्नगत्वान्नाभेरधो जठरं वृद्धिमेति, निस्तुद्यते शूलेन दाल्यत इव, एतत् परिस्राव्युदरमन्ये । एतस्यैव छिद्रोदरमाहुः ॥ २१ ॥ २२ ॥ दकोदरमाह—दकोदरमिति स्नेहपीत इति । कर्त्तरि क्तः । तेन स्नेह-

स्नेहोपलिप्तेष्वथवापि तेषु दकोदरं पूर्ववदभ्युपैति ॥
स्निग्धं महत्तत्परिवृत्तनाभिसमाततं पूर्णमिवाम्बुना च ॥
यथा दृतिः क्षुभ्यति कम्पते च ॥
शब्दायते चापि दकोदरं तत् ॥ २३ ॥
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ॥
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥ २६ ॥

---

मधुकोशव्याख्या ।

न्तीति स्वकर्मसु दुष्टानि भवन्तीति । तद्वहानि उदकवहानि । तेष्विति उदकवहस्रोतःसु । पूर्ववदिति यथा पूर्वमुक्तम् । अन्नरस उपस्नेहन्यायेन बहिर्निःसृत्योदरं जनयतीत्यर्थ इति जेज्जटः । गदाधरस्त्वाह—क्षतान्त्रोदरे यथा अधोनाभेरुदराभिवृद्धिर्गुदस्रावश्च तथा जलोदरेऽपि भवतीति । ननु, सर्वेषामेव उपस्नेहन्यायेन बहिर्निःसृतान्नरसमूलत्वात् कथमनुदकत्वम्? नैवम्, तेषु हि प्रथमतो नातिमन्दत्वादग्नेरन्नरसस्याल्पत्वाच्चानुदकत्वम्, अल्पत्वेन तद्व्यपदेशात्; अत्र तु प्रागेव भूरिजलोत्पत्तिरिति विशेषः । समाततं वेदनया विस्तार्यमाणमिवोदरं भवति । यथा दृतिः क्षुभ्यतीति दृतिरिव जलपूर्णा क्षुभ्यतीति अन्तर्जलचलनमिव धत्ते । शब्दायते गुडगुडायते ॥ २३ ॥ २४ ॥ उदररोगस्य साध्यत्वादिलक्षणमाह—जन्मनैवेत्यादि । जन्मनैवोदरमिति उत्पन्नमात्रेणैव । अजातोदकस्योदरस्य लक्षणं चरकेऽवगन्तव्यम्, तद्यथा—"अशोथमरुणाभासं सशब्दं नातिभारिकम् । सदा गुडगुडायन्तं शिराजालगवाक्षितम् ॥ नाभिं विष्टभ्य पायौ तु वेगं कृत्वा प्रणश्यति । हृद्वङ्क्षणकटीनाभिगुदप्रत्ये-

आतङ्कदर्पणव्याख्या ।

पीतवानित्यर्थः, तस्य तद्वहानि स्रोतांसि दूष्यंतीति स्वकर्मण्यसमर्थानि भवंतीति । तद्वहानीति उदकवहानि अथवा स्नेहोपलिप्तेषु तेष्वेव उदकवहस्रोतस्सु, पूर्ववदिति क्षतांत्रोदरे यथा नाभेरधः उदराभिवृद्धिः, गुदस्रावस्तथा जलोदरे भवतीति । ननु सर्वेषामेव बहिर्निःसृतान्नरसमूलत्वात्कथमनुदकत्वम्, ? उच्यते, तेषु हि प्रथमतो नातिमंदत्वादग्नेरन्नरसस्याल्पत्वाच्चानुदकत्वम्, स्वल्पत्वेनाव्यपदेशात्, अत्र तु प्रागेव जलं भवतीति विशेषः । तदुदरं स्निग्धं भवति, तथा महत्, तथा परिवृत्तनाभि उच्छलितनाभि समाततं वेदनया विस्तीर्णमिवोदरं भवति । यथा दृतिः क्षुभ्यतीति दृतिरिव जलपूर्णा क्षुभ्यतीति, अंतर्जलचालनमिव धत्ते, कंपते वेति कंपनमतिशयेन चलनं, शब्दायते गुडगुडायते ॥ २३ ॥ २४ ॥ उदरस्यासाध्यत्वमाह—जन्मनेति । उत्पत्तिमात्रेणैव कष्टसाध्यं तत् उदरं बलिनः पुरुषस्य अजातांबु अजातोदकं सत् यत्नतः साध्यं

पक्षाद्बद्धगुदं तूर्ध्वं सर्वं जातोदकं तथा ॥
प्रायो भवत्यभावाय छिद्रान्त्रं चोदरं नृणाम् ॥ २६ ॥
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ॥
बलशोणितमांसाग्निपरिक्षीणं च वर्जयेत् ॥ २७ ॥
पार्श्वभङ्गान्नविद्वेषशोथातीसारपीडितम् ॥
विरिक्तं चाप्युदरिणं पूयमाणं विवर्जयेत् ॥ २८ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने उदरनिदानं समाप्तम् ॥ ३५ ॥

---

मधुकोशव्याख्या ।

कशूलिनः ॥ कर्कशं सृजतो वातं नातिमन्दे च पावके । लालया विरसे चास्ये मूत्रेऽल्पे संहते विशि ॥ अजातोदकमित्येतैर्युक्तं विज्ञाय लक्षणैः" इति । अत्र कर्कशमिति वेगवन्तम् । जातोदकलक्षणं च चरके यथा—"कुक्षेरतिमात्रं वृद्धिः शिरान्तर्धानगमनम्, उदकपूर्णदृतिसमानक्षोभस्पर्शनं च भवति" इति । पक्षादित्यादि । बद्धगुदमुदरं पक्षादूर्ध्वं विनाशाय भवतीति । जातोदकं पक्षात् । प्रायोग्रहणेन कदाचित् पक्षादूर्ध्वमपि न विनाशाय, तथा शल्यशस्त्राभिमतया चिकित्सया कदाचिज्जातोदकं छिद्रान्त्रं बद्धगुदं च सिध्यतीति दर्शयति । जातोदकं छिद्रान्त्रं च विनाशाय पक्षादूर्ध्वमिति संबन्ध इति केचित् ॥ २५ ॥ २६ ॥ साध्यतयाभिहितानामप्यवस्थाविशेषेणासाध्यतामाह—शूनाक्षमित्यादि । उदरिणमिति शेषः । कुटिलोपस्थमिति वक्रमेहनम् । उपक्लिन्नतनुत्वचमिति । उपक्लिन्ना तन्वी त्वक् यस्य तम् । अग्निपरिक्षीणमिति अग्निक्षयश्च यद्यप्युदरे पूर्वमेव भवति तथाप्यत्र विशेषेणाग्निक्षयो लक्षणान्तरयुक्तश्चासाध्यतालिङ्गं संभवतीति ज्ञेयम् ॥ २७ ॥ २८ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायामुदरानिदानं समाप्तम् ॥ ३९ ॥

आतङ्कदर्पणव्याख्या ।

कृच्छ्रत्वादिति ॥ २५ ॥ उदराणां विशेषेणासाध्यत्वमाह—पक्षादिति । बद्धगुदमुदरं पक्षादूर्ध्वं विनाशाय भवति । जातोदकं पक्षात् जातोदकं लक्षणं चरके—कुक्षेरतिमात्रं वृद्धिः शिरांतर्द्धानमुदकपूर्ण सक्षोभस्पर्शनं भवतीति । प्रायोग्रहणेन कदाचित्पक्षादूर्ध्वमपि छिद्रांत्रं बद्धगुदं च सिद्ध्यति इति ॥ २६ ॥ पुनरप्यसाध्यमाह—शूनेति । अत्रोदरेणेति शेषः, कुटिलोपस्थं कुटिलमेहनम्, उपक्लिन्नतनुत्वचमिति उपक्लिन्ना तन्वी त्वग्यस्य तम् । तथाऽग्निपरिक्षीणमग्निक्षयश्चाप्युदरे पूर्वमेव भवति तथाप्यत्र विशेषेणाग्निक्षयोपलक्षणांतरयुक्तमसाध्यतालिंगं भवतीति ज्ञेयम्॥२७॥ पुनरप्यसाध्यलक्षणमाह—पार्श्वेति । भग्नपार्श्वे विरिक्तमपि पूर्यमाणोदरमित्यर्थः ॥ २८ ॥ इत्यातंकदर्पणे निदानव्याख्यायामुदरनिदानम् ॥ ३९ ॥

# अथ शोथनिदानम् ३६.

**रक्तपित्तकफान्वायुर्दुष्टो दुष्टान्बहिःशिराः ॥**
**नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम् ॥ १ ॥**
**उत्सेधं संहतं शोथं तमाहुर्निचयादतः ॥**
**सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ॥ २ ॥**

---

मधुकोशव्याख्या ।

उदरे शोथस्योपद्रवत्वेनोक्तत्वात्तदनन्तरं शोथनिदानम् । तस्य संप्राप्तिमाह—रक्तपित्तकफानित्यादि । रक्तपित्तकफान् स्वहेतुभिः स्वातन्त्र्येण दुष्टान् कुपितान् दुष्टः स्वहेतुकुपितो वायुर्बहिःशिरा बाह्या अगम्भीराः शिरा नीत्वा गमयित्वा तैः रक्तपित्तकफैः रुद्धगतिरावृतमार्गो वायुरुत्सेधमुच्छ्रायं कुर्यादिति योजना । बहिःशिराशब्देनात्रागम्भीरतयोक्तानां स्रोतसामपि ग्रहणम् । त्वङ्मांससंश्रयमित्यनेन व्रणशोथाद्भेदं दर्शयति, अष्टसु व्रणवास्तुषु व्रणशोथस्य संभवात् । यदुक्तं सुश्रुतेन—"त्वङ्मांसशिरास्नाय्वस्थिसन्धिकोष्ठमर्माणीत्यष्टौ व्रणवास्तूनि भवन्ति" इति । संहतं संहतात्मकम् । कुतः संहतात्मकमित्यत आह—निचयादत इति । अतोऽस्मात् पूर्वोक्तात् रक्तसहितदोषत्रयसमुदायात्, एतेन रक्तसहितत्रिदोषजन्यत्वमस्योक्तं भवति । सर्वमित्यादि । सर्वमिति पूर्वेण संबध्यते, सर्वमुत्सेधं शोथमाहुरित्यर्थः । हेतुविशेषैरिति दोषत्रयाभिघातप्रभृतिभिः कारणभेदैर्यो रूपभेदस्तस्मात् सर्वं नवात्मकमाहुरिति पूर्वक्रियया संबन्धः । सर्वहेतुविशेषैरिति

आतङ्कदर्पणव्याख्या ।

उदरे शोथस्य उपद्रवत्वेन तदनंतरं शोथनिदानम् । अस्य संप्राप्तिमाह—रक्तेति । स्वहेतुभिः स्वातंत्र्येण दुष्टान् कुपितान् रक्तपित्तकफान् स्वहेतुदुष्टः कुपितो वायुर्बहिःशिराः बाह्या अगंभीराः शिराः नीत्वा गमयित्वा तैः रक्तपित्तकफैः रुद्धगतिरावृतमार्गो वायुरुत्सेधमुच्छ्रायं कुर्यादिति योजना । बहिःशिराशब्देन अगंभीरतया उत्तानस्रोतसामपि ग्रहणम् । त्वङ्मांससंश्रयमित्यनेन व्रणशोथात् भेदं दर्शयति, पाठतो व्रणस्य वास्तून्यष्टौ शोथस्य त्वङ्मांसे इति भेदः—तदुक्तम् "त्वङ्मांसशिरास्नाय्वस्थिसंधिकोष्ठमर्माणीत्यष्टौ व्रणवास्तूनि भवंति" इति । अष्टसु व्रणवास्तुषु व्रणशोथस्य सम्भवात् ॥ १ ॥ संहतं संहतात्मकम्, कुतः संहतात्मकमित्याह निचयात्, अतः पूर्वोक्तात् रक्तसहितदोषत्रयसमुदायात् । एतेन दोषत्रयजन्यत्वमस्योक्तम् । तस्य संख्यामाह—सर्वमिति । पूर्वेण संबध्यते, सर्वमुत्सेधं शोफमित्याहुरित्यर्थः । हेतुविशेषैर्दोषत्रयाभिघातप्रभृतकारणभेदैर्यो रूपभेदः तस्मान्नवात्मकमाहुरिति पूर्वक्रियया संबंधः, सर्वहेतुविशेषैरिति पाठां-

दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ॥
तत्पूर्वरूपं दवथुः शिरायामोऽङ्गगौरवम् ॥ ३ ॥
शुद्ध्यामयाभुक्तकृशाबलानां क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ॥
दध्याममृच्छाकविरोधिदुष्टगरोपसृष्टान्ननिषेवणं च ॥ ४ ॥
अर्शांस्यचेष्टा न च देहशुद्धिर्मर्मोपघातो विषमा प्रसूतिः ॥
मिथ्योपचारः प्रतिकर्मणां च निजस्य हेतुः श्वयथोः प्रदिष्टः ॥५॥
सगौरवं स्यादनवस्थितत्वं सोत्सेधमूष्माथ शिरातनुत्वम् ॥
सलोमहर्षश्च विवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम्॥ ६ ॥

मधुकोशव्याख्या ।

पाठान्तरे सर्वेषां हेतुविशेषरित्यर्थः ॥ १ ॥ २ ॥ द्वयैरिति द्वन्द्वैः, सर्वैस्त्रिभिः पूर्वरूपमाह— तदित्यादि । दवथुरुपतापः । शिरायामः शिराप्रसरणवत् पीडा ॥ ३ ॥ पूर्वरूपानन्तरं कामचारान्निदानमाह—शुद्ध्यामयेत्यादि । शुद्धिर्वमनविरेचनादिः, आमया ज्वरादयः; अभुक्तमभोजनं विगुणं च भोजनम्, तैः कृशानामबलानां च क्षारादिसेवा निजस्य श्वयथोर्हेतुः । दध्यादयः स्वतन्त्रा एव हेतवः, आममपक्वम्, दुष्टं दोषजनकम्, मण्डन्कनवोदकादि, गरं संयोगजं विषम् । अचेष्टा निष्क्रियत्वम् । न च देहशुद्धिरिति शोधनार्हेऽपि दोषे देहाशुद्धिः । मर्मोपघात इह दोषकृत एव ज्ञेयः बाह्यहेतुजस्तु मर्मोपघात आगन्तुशोथहेतुरेव । विषमा प्रसूतिरामगर्भपतनादिका । मिथ्योपचारोऽसम्यक्करणमसम्यगुपचारः । प्रतिकर्मणां वमनादीनाम् ॥ ४ ॥ ५ ॥ सामान्यलिङ्गमाह—सगौरवमिति । अनवस्थितत्वविशेषणं तथा सोत्सेधमिति च॥६॥

आतङ्कदर्पणव्याख्या ।

तरे सर्वेषां शोथानां हेतुविशेषैरित्यर्थः ॥ २ ॥ दोषैरिति । पृथक् त्रिभिर्दोषैस्त्रयः, मिलितैरेक—द्वयैस्त्रयः, अभिघातेनैकः, विषेण चैकः ॥ पूर्वरूपमाह—तदिति । दवथुश्चक्षुरादिषु तीव्रदाहः, यदुक्तं चरके—"दवथुश्चक्षुरादिभ्यस्तीव्ररूष्मा प्रवर्तते" । शिरायामः शिराप्रसारणवत् पीडा ॥ ३ ॥ अथ कारणमाह—शुद्धीति । शुद्धिर्वमनादिः, आमया ज्वरादयः, अभुक्तमभोजनमेतैर्ये कृशास्तथा अबलाश्च, तेषां क्षीरादिसेवनं निजस्य श्वयथोः कारणं दध्यादिषु स्वतंत्रमेव. कारणम्, आममपक्वं, दुष्टं दोषजनकं मंडकनवोदकादि, गरं संयोगजं विषम् ॥ ४ ॥ अचेष्टा निष्क्रियत्वम्, न च देहशुद्धिरिति शोधनार्हेपि दोषे तत्र देहाशुद्धिः । मर्मोपघात इह दोषकृत एव ज्ञेयः, बाह्यहेतुजश्च मर्मोपघात आगंतुशोफहेतुरेव विषमा प्रसूतिरिति, आमगर्भपतनादिका प्रतिकर्मणां वमनादीनां मिथ्योपचारः असम्यगुपचारः॥५॥तस्य सामान्यलक्षणमाह—सगौरवमिति ।

१ एतच्च क्षीराम्लेतिपाठाभिप्रायेण ।

**चलस्तनुत्वक् परुषोऽरुणोऽसितः सुषुप्तिहर्षार्तियुतोऽनिमित्ततः ॥**
**प्रशाम्यति प्रोन्नमति प्रपीडितो दिवाबली च श्वयथुः समीरणात् ॥७॥**
**मृदुः सगन्धोऽसितपीतरागवान्भ्रमज्वरस्वेदतृषामदान्वितः ॥**
**य उष्यते स्पर्शरुगक्षिरागकृत् स पित्तशोथो भृशदाहपाकवान् ॥८॥**
**गुरुः स्थिरः पांडुररोचकान्वितः प्रसेकनिद्रावमिवह्निमान्द्यकृत् ॥**
**स कृच्छ्रजन्मप्रशमो निपीडितो नचोन्नमेद्रात्रिबली कफात्मकः ९॥**

---

मधुकोशव्याख्या ।

वातशोथलिङ्गमाह—चल इत्यादि । तनुत्वक् अबहुलत्वक् । असितः कृष्णः. सुषुप्तिः स्पर्शाज्ञता, हर्षो झिणिझिणिवद्वेदना, किंवा रोमहर्षः । अनिमित्ततः प्रशाम्यतीति वायोश्चलत्वेन कदाचित् निमित्तं विनापि लीनो भवति; निमित्तत इति पाठे स्नेहोष्णमर्दनादेर्निमित्ततः प्रशाम्यति उपशयं प्राप्नोतीति, उपशयार्थमेतदुक्तम् । प्रोन्नमति प्रपीडित इति प्रपीडितः सन्नन्तरमुन्नतीत्यर्थः । दिवाबलीति दिवा बलवान्, न त्वबली । स्नेहोष्णमर्दनाद्यैश्च प्रशाम्येत्. स च वातिकः, "यश्चाप्यरुणवर्णाभः शोथो नक्तं प्रणश्यति" इति चरकवचनात् ॥ ७ ॥ पैत्तिकमाह—मृदुरित्यादि । उष्यते इति दह्यते ॥ ८ ॥ कफजमाह—गुरुरित्यादि । अरोचकान्वित इति । अरोचकव्याधिसहचारी । कृच्छ्रजन्मप्रशम इति चिरोत्पत्तिविनाशः । रात्रिबलीति रात्रौ स्रोतोऽवरोधजेन देहक्लेदेनाचेष्टया च कफस्य वृद्धत्वात्, तज्जः शोथो बलवान् भवति । दिवा तु स्फुटस्रोतसि शरीरे सचेष्टे च न कफो बली भवति,

आतङ्कदर्पणव्याख्या ।

ऊष्मसंतापयुक्तं शिराकुलत्वं नासानलाभात् ॥ ६ ॥ अथ वातशोथलक्षणमाह—चल इति । चलः स्थानात् स्थानांतरगतिः, तनुत्वक् अबहलत्वक्, परुषः कर्कशः, अरुणः रक्तवर्णः, असितः कृष्णः, सुषुप्तिः स्पर्शाज्ञानम्, हर्षो लोमहर्षः, अतिरतिः, अनिमित्ततः प्रशाम्यतीति वायोश्चलत्वेन च कदाचिन्निमित्तं विनापि विलीनो भवति, प्रोन्नमति प्रपीडित इति प्रपीडितः, सन्ननंतरमुन्नमतीत्यर्थः । दिवाबली दिवाबलवान्, यदुक्तं चरके—"यश्चाप्यरुणवर्णाभः शोफो नक्तं प्रशाम्यति" इति ॥ ७ ॥ पैत्तिकमाह—मृदुरिति । मृदुस्पर्शः, गंधयुक्तः, अक्ष्णो रोगकृत्, अतिशयदाहपाकवान् ॥ ८ ॥ कफजमाह—गुरुरिति । स्थिरः अचलः, प्रसेको लालास्रावः, स कृच्छ्रजन्मप्रशम इति रात्रौ स्रोतोवरोधजेन देहक्लेदेन चेष्टया च कफस्य वृद्ध्या तज्जः शोथो बलवान् भवति । दिवा स्फुटस्रोतसि शरीरे चेष्टायुक्ते च कफो न बली वायुस्तेन बली

निदानाकृतिसंसर्गाच्छ्वयथुः स्याद्विदोषजः ॥
सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रलक्षणः ॥ १० ॥
अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः ॥
हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः ॥ ११ ॥
रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान् ॥
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ॥ १२ ॥
विषजः सविषप्राणिपरिसर्पणमूत्रणात् ॥
दष्ट्रादन्तनखाघातादविषप्राणिनामपि ॥ १३ ॥

---

मधुकोशव्याख्या ।

किं तर्हि ? वायुस्तेन तज्जः शोथो द्विबली भवति ॥ ९ ॥ व्यामिश्रौषधविधानार्थं क्वापि क्वापि प्रकृतिसमसमवेता अपि शिष्यहितैषितया द्वन्द्वसन्निपाता अतिदेशेन पठ्यन्ते, ये तु विकृतिविषमसमवेतास्तान् कण्ठरवेण पठति । अतो अतिदेशेन द्वन्द्वत्रयसन्निपातानाह—निदानाकृतिसंसर्गादित्यादि । व्यामिश्रलक्षण इति मिलितवातादित्रयलिङ्गः । अनेनैव सर्वाकृतिरित्यस्यार्थे सिद्धे तदभिधानं वातादिप्रत्येकं कृत्स्नलिङ्गनियमार्थम् ॥ १० ॥ अभिघातजं श्वयथुमाह—अभिघातेनेत्यादि । अभिघातेन यः शोथः स शस्त्रादिभिर्भवति । हिमानिलोदध्यनिलैरिति हिमानिलैरुदध्यनिलैः, उदधिः समुद्रः । भल्लातकपिकच्छुजै रसैः शूकैरिति भल्लातकरसैः कपिकच्छ्वा शूकैश्च । कपिकच्छुः शूकशिम्बी ॥ ११ ॥ १२ ॥ विषजमाह—विषजः सविषप्राणीत्यादि । सविषप्राणिनः सर्पादयस्तेषां परिसर्पणं भ्रमणं तस्मात्, सविषप्राणिनां मूत्रणाच्च । दंष्ट्रादन्तेति दंष्ट्रा कुटिला 'दाढ' इति ख्याता; तद्विपरीतश्च दन्तो, गोव-

आतङ्कदर्पणव्याख्या ।

तज्जः शोथो द्विबली भवति ॥ ९ ॥ द्वंद्वजत्रयसन्निपातजमाह—निदानेति । द्विदोषयोर्निदानलक्षणसंसर्गयोः द्विदोषजा ज्ञेयाः । सन्निपातात् सर्वाकृतिः, व्यामिश्रलक्षणः मिलितवातादित्रयलिंगः ॥ १० ॥ अभिघातजशोथमाह—अभिघातेनेति । श्वयथुः सशस्त्रादिभिः कृतो भवति । हिमानिलः शीतवायुः, उदध्यनिलः समुद्रवातः, भल्लातकरसैः कपिकच्छुशूकैः कपिकच्छुः शूकशिंबी, एतेषां स्पर्शात् प्रसरणशीलः, भृशोष्मा अतिशय संतापकृत्, पित्तश्वयथुलक्षणः ॥ ११ ॥ १२ ॥ विषे शोथलक्षणमाह—विषज इति । सविषप्राणिनः सविषा ये जंतवः शतपदीलूतादयः, तेषां शरीरोपरि सर्पणं च द्वयमपि श्वयथोर्हेतुः । दंष्ट्रदंतेति । दंष्ट्रा कुटिलाकारा, दाढ इति लोके, दंता अग्रेभवाः, अन्ये दंष्ट्रिदंतनखेति पठंति, तत्र दंष्ट्रिणो व्याघ्रा-

विण्मूत्रशुक्रोपहतमलवद्वस्त्रसंकरात् ॥
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ १४ ॥
मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः ॥
दोषाः श्वयथुमूर्ध्वं हि कुर्वन्त्यामाशयस्थिताः ॥ १५ ॥
पक्वाशयस्था मध्ये तु वर्चःस्थानगतास्त्वधः ॥
कृत्स्नदेहमनुप्राप्ताः कुर्युः सर्वसरं तथा ॥ १६ ॥
यो मध्यदेशे श्वयथुः स कष्टः सर्वगश्च यः ॥
अर्धाङ्गे रिष्टभूतः स्याद्यश्चोर्ध्वं परिसर्पति ॥ १७ ॥

मधुकोशव्याख्या ।

लीवर्दन्यायात् । विण्मूत्रशुक्रोपहतमलवद्वस्त्रसंकरादिति सविषप्राणिनां विण्मूत्राद्युपहतं मलवच्च वस्त्रं यत्तस्य संस्पर्शात् । अवलम्बी अधोगमनशीलः । शीघ्रः शीघ्रोत्पत्तिः। अयं चागन्तुरपि विशिष्टलिङ्गचिकित्सोपयोगात् पृथक् पठितः ॥ १३ ॥ १४ ॥ यत्रस्था दोषा यत्र देशे शोथं कुर्वन्ति तमाह—दोषाः श्वयथुमूर्ध्वमित्यादि । ऊर्ध्वमिति उरःप्रभृत्यूर्ध्वदेहे । मध्य इति उरःपक्वाशयमध्ये । अध इति पक्वाशयादधः । सर्वसरं सर्वशरीरसरणशीलम् ॥ १५ ॥ १६ ॥ अतः परं कृच्छ्रादिभेदमाह—यो मध्यदेश इत्यादि । मध्यदेहगस्य कष्टत्वं तद्देशगशोथप्रभावात् । सर्वग इति सर्वदेहगामी । सर्वज इति पाठान्तरे सर्वजः सान्निपातिकः । रिष्टभूत इति रिष्टतुल्यः, भूतशब्द उपमाने; यथा—मातृभूतः पितृभूत इति । व्याधेरेवात्र रिष्टभूतत्वं तस्य च निमित्तकृतत्वात् भूतशब्द उपात्त इति कार्तिकः । अन्ये तु भूतशब्दं स्वरूपवचनमाहुः । यश्चोर्ध्वं परिसर्पतीति पुरुषविषयमेतत् । चकारात् स्त्रियाश्च उपरिजो योऽधो

आतङ्कदर्पणव्याख्या ।

दयः, नखाः प्रसिद्धाः, अविषप्राणिनां मनुष्यादीनामप्यभिघातः शोथहेतुः ॥ १३ ॥ विण्मूत्रेति । सविषप्राणिनां विण्मूत्राद्युपहतंमलवद्वस्त्रस्य संस्पर्शात्, अन्ये मलवद्वस्तु इति पठंति, तत्र सविषप्राणिनां विण्मूत्रशुक्रोपहतत्वेनैतद्यन्मलवद्वस्त्रं तस्य संपर्कादित्यर्थः । सविषा ये वृक्षास्तेषां योऽनिलः,तस्य स्पर्शादपि गरकृत्रिमविषं तस्यावचूर्णनात्, तस्य शरीरस्पर्शादित्यर्थः ॥ १४ ॥ मृदुःस्पर्शः, चलः स्थानांतरगतिः, अवलंबी अधोगमनशीलः, शीघ्रः शीघ्रोत्पत्तिः॥ यस्मिन् देशे दोषाः शोफं कुर्वंति तमाह—दोषा इति। ऊर्ध्वमिति उरःप्रभृत्यूर्द्ध्वदेहे ॥ १५ ॥ मध्य इति उरःपक्वाशयमध्ये, अध इति पक्वाशयादधो वर्चःस्थानं पुरीषाशयः, सर्वशरीरसरणशीलम् ॥ १६ ॥ अतः स्थानाश्रयत्वे कृच्छ्रादिभेदमाह—य इति । मध्यगश्वयथोः कष्टसाध्यत्वं तद्देशप्रभवात्, सर्वग इति

श्वासः पिपासा छर्दिश्च दौर्बल्यं ज्वर एव च ॥
यस्य चान्ने रुचिर्नास्ति श्वयथुं तं विवर्जयेत् ॥ १८ ॥
अनन्योपद्रवकृतः शोथः पादसमुत्थितः ॥
पुरुषं हन्ति नारीं च मुखजो गुह्यजो द्वयम् ॥
नवोऽनुपद्रवः शोथः साध्योऽसाध्यः पुरेरितः ॥ १९ ॥

---

मधुकोशव्याख्या ।

याति स गृह्यते, तथा गुह्यजो यः सर्वगः । वचनं हि-"यस्तु पादाभिनिर्वृत्तः शोथः सर्वाङ्गगो भवेत् । पुरुषं हन्ति नारीं च मुखजो गुह्यजो द्वयम्" इति । अनन्योपद्रवकृत इति । अन्यस्य उपद्रवा अन्योपद्रवास्तद्विपरीता अनन्योपद्रवाः, एतेनायमर्थः- शोथस्यैव ये उपद्रवास्तैः कृतः, ते च-"श्वासः पिपासा दौर्बल्यं ज्वरश्छर्दिररोचकः । हिक्कातीसारकासाश्च शोथिनं क्षपयन्ति हि" इति सुश्रुतोक्ताः । चरकेऽप्युक्तं - "छर्दिस्तृष्णारुचिः श्वासो ज्वरोऽतीसार एव च । सप्तकोऽयं सदौर्बल्यः शोथोपद्रवसंग्रहः" इति। अथवा अन्यमुपद्रवं करोतीति अन्योपद्रवकृन्निदानम्, नान्योपद्रवकृदनन्योपद्रवकृत्; ततः स्वनिदानाज्जात इति शेषः, तेन शोथजनकनिदानादेव उत्पन्न इत्यर्थः । पाण्डुरोगादौ तु यः शोथः पादसमुत्थितः सोऽन्योपद्रवकृतो निदानान्तराज्जातः साध्य एव । आननोपद्रवगत इति पाठान्तरं अयमर्थः-पादयोरुत्थितः पूर्वं पश्चादाननम् । उपद्रवेण प्रसरेण उपद्रवत्वेन वा गतः । तथाच तन्त्रान्तरं-"पादप्रवृत्तश्वयथुर्नृणां यः प्राप्नुयान्मुखम् । स्त्रीणां वक्त्रादधो याति वस्तिजश्च न सिध्यति" इति । क्षीरपाणिनाप्युक्तम्-"ऊर्ध्वगामी नरं पद्भ्यामधोगामी मुखात्स्त्रियम् ।

आतङ्कदर्पणव्याख्या ।

सर्वदेहगामी, सर्वज इति पाठांतरे तत्र सान्निपातिकः, रिष्टभूत इति रिष्टतुल्यभूतशब्दो ह्युपमाने यथा मातृभूतः पितृभूत इति ॥ यश्चोर्ध्वं परिसर्पतीति पुरुषविषयमेतत्, चकारात् स्त्रियाश्चोपरिजो योऽधो याति स गृह्यते,तथा गुह्यजो यः स सर्वगः ॥ १७ ॥ उपद्रवविशेषस्यासाध्यत्वमाह-श्वास इति । यस्यैतानि संति श्वयथौ सति, तं परिवर्जयेत् ॥ १८ ॥ स्थानभेदेनासाध्यत्वमाह-अनन्येति । न अन्योपद्रवाः अनन्योपद्रवाः शोफस्योपद्रवास्तैः कृताः, ते च सुश्रुतोक्ताः-"श्वासः पिपासा दौर्बल्यं ज्वरश्छर्दिररोचकः । हिक्कातीसारकासाश्च शोथिनं क्षपयंति हि ।" चरकेप्युक्तम्-"च्छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरोतीसार एव च । सप्तकोयं सदौर्बल्यं शोथोपद्रवसंग्रहः ॥"इति । अथवा अन्यमुपद्रवं करोतीति अन्योपद्रवकृत् निदानं न अन्योपद्रवकृत् अनन्योपद्रवकृत्, ततो निदानाज्जात इत्यनेन शोफजनकनिदानादेवोत्पन्न इत्यर्थः । पांडुरोगादौ तु यः शोफः सोऽन्योपद्रवकृतो निदानाज्जातः साध्य एव पादसमुत्थितः पुरुषं हन्ति, नारीं तु मुखजो हंति, गुह्यजो वस्तिसंजातः, सर्पन् द्वय-

**विवर्जयेत्कुक्षिमुदराश्रितं च तथा गले मर्मणि संश्रितं च ॥**
**स्थूलःखरश्चापि भवेद्विवर्ज्यो यश्चापि बालस्थविराबलानाम्॥२०॥**
**इति श्रीमाधवकरविरचिते माधवनिदाने शोथनिदानं समाप्तम् ॥ ३६ ॥**

---

# अथ वृद्धिनिदानम् ३७.

**क्रुद्धोऽनूर्ध्वगतिर्वायुः शोथशूलकरश्चरन् ॥**
**मुष्कौ वङ्क्षणतः प्राप्य फलकोषाभिवाहिनीः ॥ १ ॥**

---

मधुकोशव्याख्या ।

उभयं वस्तिसंजातः शोथो हन्ति न संशयः" इति । गुह्यज इति वस्तिजातः । द्वयमिति नरं नारीं च । असाध्यः पूर्वैरित इति अर्धाङ्गे रिष्टभूत इत्यादिना ॥ १७–२० ॥
इति श्रीकण्ठदत्तविरचितायां मधुकोशव्याख्यायां शोथनिदानं समाप्तम् ॥ ३६ ॥

शोथ वसामान्यात् शोथानन्तरं वृद्धिरभिधीयते । वृद्धेः संप्राप्तिमाह—क्रुद्धोऽनूर्ध्वगतिर्वायुरित्यादि । अनूर्ध्वगतिरधोगतिर्वायुः मुष्कौ प्राप्य चरन् गच्छन् । वंक्षणतो मेढ्रजंघासन्धेः सकाशात्, फलकोषाभिवाहिनीरिति फलं च कोषश्च फलकोषौ अथवा फलयोः कोषौ, तद्वहा धमनीश्च प्रपीड्य संदूष्य वृद्धिं करोति । फलकोषयोरिति द्विवचनमुपलक्षणम्; तेनैककोषेऽपि दृश्यमाना वृद्धिः संगता । स वृद्धिरिति, "क्तिच्क्तौ च संज्ञायाम्"—इत्यनेन क्तिजन्तो वृद्धिशब्दः पुँल्लिङ्गः, क्तिन्नन्तस्तु स्त्रीलिङ्गः । वृद्धिः कुरण्डोऽभिधीयते । संख्येयनिर्देशादेव संख्यायां लब्धायां सप्तधेति वचनं न्यूनाधिकसंख्यानिरासार्थम्, तेन द्वन्द्वजादिवृद्धेरधिकाया निरासः । असंभवस्तु तस्या व्याधिस्वभावात् । मूत्रान्त्रवृद्ध्योर्वातवृद्ध्यन्तर्भावात् न्यूनसंख्यानिरा-

आतङ्कदर्पणव्याख्या ।

मिति नरं नारीं च । यदुक्तं तंत्रांते—"पादप्रवृत्तः श्वयथुर्नृणां यः प्राप्नुयान्मुखम् । वक्त्रादथस्ताद्यो याति वस्तिर्यश्च न सिद्ध्यति ।" क्षीरपाणिनाप्युक्तम्—"ऊर्ध्वगामी नरं पद्भ्यामधोगामी मुखात्स्त्रियम् । उभयोर्वस्तिसंजातः शोथो हंति न संशयः" । साध्यासाध्यलक्षणमाह—नव इति । नवो नवोत्थानः, उपद्रवरहितः, उपद्रवाः पूर्वोक्ताः श्वासादयः, तैर्मुक्तः स साध्यः, असाध्यः पूर्वैरित ऊर्ध्वांगे इति भूतः ॥१९॥२०॥ इत्यातंकदर्पणे निदानव्याख्यायां शोथनिदानम् ॥३६॥

शोथाधिकारात् वृद्धिरभिधीयते । वृद्धेः संप्राप्तिमाह—क्रुद्ध इति । अनूर्ध्वगतिर्वायुः अधोगतिर्वातो मुष्कौ प्राप्य चरन् गच्छन् वंक्षतो मेढ्रजंघासन्धेः सकाशात् । फलकोषाभिवाहिनीरिति, फलं च कोशश्च फलकोशौ; अथ वा फलयोः कोशौ फलकोशौ, तद्वहा धमनीः प्रपीड्य संदूष्य वृद्धिं करोति, फलकोषयोरिति द्विवचनमुपलक्षणं, तेनैकफलकोषेपि दृश्यमाना वृद्धिः संमता ।

प्रपीड्य धमनीर्वृद्धिं करोति फलकोषयोः ॥
दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः ॥ २ ॥
मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम् ॥
वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ॥ ३ ॥
पक्वोदुम्बरसंकाशः पित्ताद्दाहोष्मपाकवान् ॥
कफाच्छीतो गुरुः स्निग्धः कण्डूमान्कठिनोऽल्परुक् ॥ ४ ॥
कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गश्च रक्तजः ॥
कफवन्मेदसा वृद्धिर्मृदुस्तालफलोपमः ॥ ५ ॥

मधुकोशव्याख्या ।

सार्थम्, अनयोर्वातजत्वेऽपि निमित्तचिकित्साभेदात् पृथगभिधानं, निमित्तभेदनिबन्धन एव व्याधिभेदः । यदुक्तं—"दोषदूष्यसंसर्गादायतनविशेषात् निमित्ततश्चैषां व्याधीनां भेदः" इति । अत आह—मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलमिति ॥ ॥ १ ॥ २ ॥ वातजादीनां मूत्रजान्तानां वृद्धीनां क्रमेण लक्षणान्याह—वातेत्यादि । अहेतुरुगिति अनिमित्ततो दाहादिरुक् । रक्तजे 'कृष्णस्फोटावृत' इति पित्तजवृद्धिलिङ्गादधिकं; तेन हेतुलिङ्गचिकित्साभेदाद्रक्तजवृद्धिः पृथग् गण्यते । मेदोजे ताल फलोपम इति पक्वतालफलमिव नीलवर्तुलः । मूत्रजे मूत्रकृच्छ्रमिति मूत्रकृच्छ्रवत्

आतङ्कदर्पणव्याख्या ।

वृद्धिः, कुरंड इति लोके । वृद्धेः संख्यामाह—दोषेति । दोषत्रयैस्त्रयः, रक्तेनैकः, मेदसा चैकः, मूत्रेणैकः, एवं सप्तसंख्ययैव निर्देशादेव संख्यायां लब्धायां पुनः सप्तधेति वचनं न्यूनाधिकसंख्यानिरासार्थं, द्वंद्वजाया अपि वृद्धेर्निरासः । द्वंद्वजायास्त्वसंभवो व्याधिस्वभावात्, मूत्रांत्रवृद्धयोर्वातवृद्ध्यंतर्भावात् न्यूनसंख्यानिरासः, अनयोर्वातजत्वेपि निदानचिकित्साभेदात् पृथगभिधानं, निदानभेदनिबंधन एव व्याधिभेदः । उक्तश्च—दोषदूष्यसंसर्गादायतनविशेषान्निमित्ततश्चैषां व्याधीनां भेद इति । अत एव मूत्रांत्रजावपि वातात्, तत्र हेतुभेदत एव भेदः, केवल इति । वृद्धिशब्दः पुल्लिंगो वा ॥ २ ॥ वातजमाह—वातेति । दृतिश्चर्मखल्लिः, अनिमित्ततो भेदतोदादिरुक् ॥ ३ ॥ पित्तजमाह—पक्वेति । पक्वोदुंबरसंकाशः पक्वोदुंबरफलाभः, तथा दाहादियुक्तः ॥ कफवृद्धिमाह—कफादिति । कफाद् वृद्धिः शीतः शीतस्पर्शः, तथा गुरुः स्निग्धः कंडूमान्, कठिनोऽश्मवत्, अल्परुक् मन्दवेदनः ॥ ४ ॥ रक्तजमाह—रक्तजो वृद्धिः, कृष्णस्फोटैश्चितः पित्तवृद्धिलिंगैश्च पक्वोदुंबरसंकाशादिभिर्युतो भवेत् । अत्र तु कृष्णस्फोटावृत इति पित्तवृद्धिलिंगादधिकं, तेन हेतुभेदचिकित्साभेदाद्रक्तजो वृद्धिः पृथग्गण्यते । मेदोजमाह—कफवत्कफवृद्धिलक्षणं तालफ-

मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः ॥
अम्भोभिः पूर्णदृतिवत्क्षोभं याति सरुङ् मृदुः ॥ ६ ॥
मूत्रकृच्छ्रमधः स्याच्च चालयन्फलकोषयोः ॥
वातकोपिभिराहारैः शीततोयावगाहनैः ॥ ७ ॥
धारणेरणभाराध्वविषमाङ्गप्रवर्तनैः ॥
क्षोभणैः क्षोभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा ॥ ८ ॥
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ॥
कुर्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥ ९ ॥

---

मधुकोशव्याख्या।

वेदना। चालयन् फलकोषयोरिति फलकोषयोश्चालयन् चलो भवन्नितस्ततो गच्छन् सोऽधः स्यात्। चालयन्निति स्वार्थिको णिच् ॥ ३-६ ॥ अन्त्रवृद्धिमाह—वातकोपिभिरित्यादि। धारणं वेगस्योपस्थितस्य, ईरणमप्राप्तस्य। क्षोभणैः क्षुभितोऽन्यैरिति बलवद्विग्रहधनुराकर्षणादिभिः। क्षुद्रान्त्रावयवमिति स्थूलान्त्रव्युदासार्थम्। विगुणीकृत्येति संकुचीकृत्य। द्विगुणीकृत्येति पाठान्तरे संकोचेन द्विगुणीकृत्य। स्वनिवेशात् स्वस्थानात्। तदा वङ्क्षणसन्धिस्थः सन् वङ्क्षणसन्धौ ग्रन्थिरूपं साध्यं श्वयथुं करोति, तत्र ग्रन्थिरूपेण स्थित्वा कालान्तरेण फलकोषं गच्छतीति। तां मुष्कवृद्धिमाध्मानरुक्स्तम्भवतीम्, उपेक्ष्यमाणस्य अभिवर्धितः पुरुषस्य। अत्र भोजः—"अन्त्रं द्विगुणमादाय जन्तोर्नयति वङ्क्षणम्। वङ्क्षणात्तज्जायुक्तं फल-

आतङ्कदर्पणव्याख्या।

कोपम इति पक्वतालवन्नीलवर्तुलः ॥ ५ ॥ मूत्रजमाह—मूत्रेति। मूत्रधारणशीलस्य मूत्रजो भवति, गच्छतः पुंसः जलपूर्णदृतिवत् क्षोभं याति पूरितो भवति, सरुक् सव्यथः, मृदुः मृदुस्पर्शः॥ ६ ॥ मूत्रकृच्छ्रमिति। मूत्रकृच्छ्रवेदनः, फलकोशयोरिति फलकोशयोश्चालयन् चलो भवन्नितस्ततो गच्छन् सोऽधः स्यात्। चालयन्निति स्वार्थिको णिच् "वलयं फलकोशयोः" इति पाठे फलकोशयोरधस्ताद्वलयं कंकणं स्यात् ॥ अंत्रवृद्धिमाह—वातेति। वातकोपिभिराहारै रूक्षतिक्तकषायादिभिरासेवितैस्तथाशीततोयावगाहनैस्तथा धारणेरणभारादिभिरन्यैश्च क्षोभणैः क्षोभितः कुपितः पवनो वायुर्यदा यस्मिन् काले क्षुद्रांत्रावयवं मूत्रशकृद्वात्रैकदेशं स्वनिवेशात् स्वस्थानात्, द्विगुणीकृत्याऽधो नयेदिति पिंडार्थः। धारणमुपस्थितवेगस्य इति, ईरणमप्राप्तवेगस्य क्षोभणैः पूर्वोक्तैः, अन्यैरिति बलवद्विग्रहैः धनुराकर्षणादिभिः, विषमांगप्रवर्त्तनैः विषमत्वेन शरीरमोटनैः, अन्ये विगुणीकृत्येति पठंति। पवनो वंक्षणसंधिस्थः सन्, वंक्षणसंधौ ग्रंथिरूपमसाध्यं श्वयथुं

उपेक्ष्यमाणस्य च मुष्कवृद्धिमाध्मानरुक्स्तम्भवतीं स वायुः॥
पीडितोऽन्तःस्वनवान्प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तः॥१०॥
यस्यान्त्रावयवाश्लेषान्मुष्कयोर्वातसम्भवात् ॥
अन्त्रवृद्धिरसाध्योऽयं वातवृद्धिसमाकृतिः ॥ ११ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने वृद्धिनिदानं समाप्तम् ॥ ३७ ॥

## अथ गलगण्डगण्डमालापचीग्रन्थ्यर्बुदनिदानम् ३८.

निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले ॥
महान्वा यदि वा ह्रस्वो गलगण्डं तमादिशेत् ॥ १ ॥

---

मधुकोशव्याख्या ।

कोषं प्रपद्यते" इति । प्रध्मापयन्निति उच्छूनयन् । असाध्योऽयमिति कथ यतोऽस्य चिकित्साऽभिहिता । नैवम्, अप्राप्तफलकोषायामयं चिकित्साविधिः । प्राप्तफलकोषा त्वसाध्या । याप्यायां वा तस्यां चिकित्साविधिः । यदुक्तं भोजे-"याप्यां तामन्त्रजां विदुः" इति । ब्रध्ननिदानं तु तन्त्रान्तरे पठ्यते तद्यथा-"अत्यभिष्यन्दिगुर्वन्नसेवनान्निचयं गतः । करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु ॥ ज्वरशूलाङ्गमादाढ्यं तं ब्रध्नमिति निर्दिशेत्" इति ॥ ७-११ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां वृद्धिनिदानं समाप्तम् ॥ ३७ ॥

वृद्धियुक्तमुष्कसमानलिङ्गत्वात्तदनन्तरं गलगण्डनिदानम् । तस्य सामान्यलिङ्गमाह-निबद्धः श्वयथुरित्यादि । निबद्धोऽनुबन्धवान् । मुष्कवदण्डवत् । भोजे-

आतङ्कदर्पणव्याख्या ।

करोति । तत्र ग्रंथिरूपेण स्थित्वा कालांतरेण फलकोशं गच्छति॥ ७ ॥ ८ ॥ ९ ॥ तां मुष्कवृद्धिमाध्मानरुक्स्तंभवतीं तदोपेक्षमाणस्या चिकित्सतः पुरुषस्य यदाह । भोजः-"अंत्रं द्विगुणमादाय जंतोर्नयति वंक्षणम् । वंक्षणात्तद्गुजायुक्तं फलकोशं प्रपद्यते" इति । स च श्वयथुः करेण पीडितः सशब्दं प्रयाति, मुक्तः सन्नाध्मापयन् पूरयन् पुनरायाति ॥ असाध्यमाह-यस्येति । आश्लेषात् संयोगात्, वातसंचयात् मुष्कयोरंत्रवृद्धिर्भवति । अयमसाध्यः, कथं तर्हि चिकित्सा ? अप्राप्तफलकोशायोश्चिकित्साविधिः, प्राप्तफलकोषा त्वसाध्या । याप्यायां चिकित्साविधिः यदुक्तं भोजे-'याप्यां तामंत्रजां विदुः' इति । ब्रध्ननिदानं तु तंत्रांतरे पठ्यते तद्यथा-"अत्यभिष्यन्दिगुर्वन्नसेवनान्निचयं गतः । करोति ग्रंथिवच्छोथं दोषो वंक्षणसंधिषु । ज्वरशूलाग्निसादाढ्यं तं ब्रध्नमिति निर्दिशेत्"॥१०॥११॥इत्यातंकदर्पणे निदानव्याख्यायां वृद्धिनिदानम् ३७

वृद्धियुक्तमुष्कसाधर्म्यात्तदनंतरं गलगंडनिदानम् । तस्य सामान्यलिंगमाह-निबद्ध इति । निबद्धोऽनुबंधवान्, मुष्कवत् अण्डवत् । यदुक्तं भोजेन-"महान्तं शोथमल्पं वा हनुमन्यागला-

वातः कफश्चापि गले प्रदुष्टो मन्ये च संश्रित्य तथैव मेदः ॥
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः॥२॥
तोदान्वितः कृष्णशिरावनद्धः श्यावोऽरुणो वा पवनात्मकस्तु ॥
पारुष्ययुक्तश्चिरवृद्ध्यपाको यदृच्छया पाकमियात्कदाचित्॥ ३ ॥
वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोषः ॥
स्थिरः सवर्णो गुरुरुग्रकण्डूः शीतो महांश्चापि कफात्मकस्तु॥ ४ ॥

---

मधुकोशव्याख्या।

ऽप्युक्तं—"महान्तं ग्रंथिमल्पं वा हनुमन्यागलाश्रयम् । लम्बन्तं मुष्कवद्दृष्ट्वा गलगण्डं विनिर्दिशेत्" इति ॥ १ ॥ तस्य संप्राप्तिमाह—वात इत्यादि । वातकफमेदांसि पृथक् गलगण्डकारणानि । तेन त्रय एव गलगण्डाः । पैत्तिकस्तु न भवत्येव, व्याधिस्वभावात्; चातुर्थकज्वरवत् । चातुर्थके हि वचनं—"चातुर्थको दर्शयति प्रभावं द्विविधं ज्वरः । जंघाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसंभवः" इति । क्रमश इत्यनेन शनैरेव वर्धनं दर्शयति । स्वलिङ्गैः समन्वितमिति निबद्धः श्वयथुरित्यादिना उक्तगलगण्डलिङ्गैरन्वितम् ॥ २ ॥ वातजमाह—तोदान्वित इत्यादि । चिरवृद्धिरिति विकारप्रभावात् वातजोऽपि चिरेण वर्धते । यदृच्छया पाकमियादिति कारणाप्रतिनियमेन कदाचित् पाकं याति । कारणाप्रतिनियमश्च बाह्योऽभिप्रेतः । आभ्यन्तरस्तु पाककारणं पित्तं रक्तं च नियतमेव । कदाचिदिति न सर्वकालम् । "यदृच्छया चैव भवेत्कदाचित्—" इति पाठान्तरे पाक इति शेषः ॥ ३ ॥ श्लेष्मजमाह—स्थिर इत्यादि । सवर्ण इति प्रकृतिसमवर्णः ॥४॥

आतंकदर्पणव्याख्या।

श्रयम् । लंबंतं मुष्कवद्दृष्ट्वा गलगंडं विनिर्दिशेत्" ॥ १ ॥ तस्य संप्राप्तिमाह—वात इति । वातकफमेदांसि पृथग्गलगंडकारणानि तेन त्रय एव गलगंडाः॥ २ ॥ पैत्तिकस्तु न भवत्येव, व्याधिस्वभावात् । मन्ये उभे कंठसंधी क्रमश इति । शनैर्वृद्धिर्दर्शिता । स्वलिंगैः समन्वितमिति वातकफमेदोलक्षणैः वातिकमाह—तोदान्वित इति । तोदः पीडाविशेषः, कृष्णशिरावृतः, पारुष्ययुक्तः स्पर्शनकर्कशः । चिरवृद्धिरिति व्याधिप्रभावात् वातजोपि चिरेण वर्द्धते । कारणाप्रतिनियमेन कदाचित् पाकं गच्छति । कारणाप्रतिनियमश्च बाह्योभिमतः, आभ्यंतरश्च, पाककारणं पित्तं रक्तं च नियतमेव । कदाचिदिति सर्वकालम् । 'यदृच्छया चैष भवेत्' इति पाठांतरम् । तत्र पाक इति शेषः ॥ ३ ॥ श्लैष्मिकमाह—स्थिर इति । स्थिरो निश्चलः, सवर्णप्रकृतिः सम-

चिराभिवृद्धिं भजते चिराद्वा प्रपच्यते मन्दरुजः कदाचित् ॥
माधुर्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रलेपः ॥ ५ ॥
स्निग्धो गुरुः पाण्डुरनिष्टगन्धो मेदोभवः कण्डुयुतोऽल्परुक् च ॥
प्रलम्बतेऽलाबुवदल्पमूलो देहानुरूपक्षयवृद्धियुक्तः ॥ ६ ॥
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेऽनुशब्दं कुरुते च नित्यम् ॥
कृच्छ्राच्छ्वसन्तं मृदुसर्वगात्रं संवत्सरातीतमरोचकार्तम् ॥ ७ ॥
क्षीणं च वैद्यो गलगण्डयुक्तं भिन्नस्वरं चापि विवर्जयेच्च ॥
कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवंक्षणेषु ॥ ८ ॥

---

मधुकोशव्याख्या ।

॥ ५ ॥ मेदोजमाह—स्निग्ध इत्यादि । देहानुरूपक्षयवृद्धियुक्त इति देहक्षये क्षयं देहवृद्धौ च वृद्धिं यातीत्यर्थः ॥ ६ ॥ गलेऽनुशब्दमिति अनुनादं करोति । "गले तु शब्दम्" इति पाठान्तरं सुगमम् ॥ असाध्यतामाह—कृच्छ्रेति कृच्छ्राच्छ्वसन्तं दुःखेन श्वासविमोक्षकारिणम् ॥ ७ ॥ भिन्नस्वरं स्वरभेदवन्तम् । स्थानतुल्यतया गण्डमालामिहैवाह—कर्कन्धुकोलामलकप्रमाणैरित्यादि । कर्कन्धुः शृगालकोलिः, कोलं बृहद्बदरम् । मेदःकफाभ्यामिति मेदो दूष्यम्, कफो दोषोऽत्रारम्भकः । मेदःकफौ प्राधान्येनोक्तौ तेन वातपित्तसंबन्धोऽप्यत्र द्रष्टव्यः । यदाह भोजः—"वातपित्तकफा वृद्धा मेदश्चापि समाचितम् । जङ्घयोः कण्डरां प्राप्य मत्स्याण्डसदृशान्बहून् ॥ कुर्वन्ति ग्रथितांस्तेभ्य पुनः प्रकुपितोऽनिलः । तान्दोषानूर्ध्वगो वक्षः कक्षमन्यागलाश्रितः ॥ नानाप्रकारान्कुरुते ग्रन्थीन्सा त्वपची मता । अपचीकण्ठमन्यासु कक्षवङ्क्षणसन्धिषु ॥ गण्डमालां विजानीयादपचीतुल्यलक्षणाम्" इति । स्याद्गण्डमालेति

आतङ्कदर्पणव्याख्या ।

वर्णः, महान् स्थूलः ॥ ४ ॥ मंदरुज इति, कदाचिद्यदा प्रपच्यते तदा मंदरुज एव प्रपच्यते, पाककाले पीडा न भवतीत्यर्थः ॥ प्रलेप इति । श्लेष्मणा लिप्त इव ॥ ५ ॥ मेदोजमाह—स्निग्ध इति । अनिष्टगंधी, अलाबुवत् तुंबीफलवद्, अल्पमूलस्तनुमूलः । देहानुरूपक्षयवृद्धिः—देहक्षये क्षयं कार्श्यम्, देहवृद्धौ वृद्धिम्, यातीत्यर्थः ॥ ६ ॥ गलेऽनुशब्दमिति । अनुनादं प्रतिशब्दं करोति "गलेन शब्दम्" इति पाठांतरं सुगमम् ॥ असाध्यमाह—कृच्छ्राच्छ्वसंतमिति । दुःखेन श्वासविमोक्षकारकम्, मृदुसर्वगात्रं शिथिलसर्वगात्रम्, अतिक्रांतवत्सरम् ॥ ७ ॥ भिन्नस्वरं स्वरभेदवंतम् । स्थानतुल्यतया गलगंडमालामिहैवाह—कर्कन्ध्विति । कर्कंधुर्लघुबदरम्, कोलं बृहद्बदरम्, अंसौ बाहुमूले, मन्या शिरोधिः, वंक्षणं जानूरुसंधिः । मेदःकफाभ्यामिति । मेदो दूष्यम्, कफो दोषोऽत्रा-

**मेदःकफाभ्यां चिरमन्दपाकैः स्याद्गण्डमाला बहुभिश्च गण्डैः ॥**
**ते ग्रन्थयः केचिदवाप्तपाकाः स्रवन्ति नश्यन्ति भवन्ति चान्ये ॥ ९ ॥**
**कालानुबन्धं चिरमादधाति सैवापचीति प्रवदन्ति तज्ज्ञाः ॥**
**साध्याः स्मृताः पीनसपार्श्वशूलकासज्वरच्छर्दियुतास्त्वसाध्याः १०**

मधुकोशव्याख्या ।

मालातुल्यगण्डयोगात् गण्डमाला । गलमात्र एव गण्डमाला चरके पठिता । यथा—"मेदःकफाच्छोणितसंचयोत्थो गलस्य मध्ये गलगण्ड एकः । स्याद्गण्डमाला बहुभिश्च गण्डैः" इति ॥ ८ ॥ गण्डमालातुल्यतया अपचीमाह—ते ग्रन्थय इत्यादि । त इति, गण्डमालारम्भकदोषदूष्यकृता ये ग्रन्थयः त एवेत्यर्थः । कालानुबन्धं चिरमिति चिरकालानुबन्धम् । सैवापचीति तादृशी अमालारूपा अपची भण्यते । सैवापचीति इति शब्देनाभिहितत्वात् प्रवदन्तीति क्रियायोगेऽपि न द्वितीया । अपचीनिरुक्तिश्चापरापरोपचीयमानतया । अत एव "चयप्रकर्षादपचीं वदन्ति" इति सुश्रुतः । चयप्रकर्षश्चापरापरभवनेनैव, साधुत्वं च नैरुक्तेन विधिना । यदुक्तम्—"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्" इति अत एवोक्तं नश्यन्ति भवन्ति चान्य इति । साध्याः स्मृता इति छेदः । पीनसादिभिरुपद्रवैरसाध्याः ॥ ९ ॥ १० ॥

आतङ्कदर्पणव्याख्या ।

रंभकः, मेदःकफौ च प्राधान्येनोक्तौ, तेन वातपित्तसंचयोऽप्येवं द्रष्टव्यः । यदाह भोजः—"वातपित्तकफा वृद्धा मेदश्चापि समाचितम् । जंघयोः कंडराः प्राप्य मन्स्यांडसदृशान्बहून् ॥ कुर्वंति ग्रंथिनांस्तेभ्यः पुनः प्रकुपितोऽनिलः । तान्दोषानूर्ध्वगो वक्षःकक्षमन्यागलाश्रितः ॥ नानाप्रकारान्कुरुते ग्रंथीन्सा त्वपची मता । व्यामिश्रदोषसंजाता कृच्छ्रसाध्या प्रकीर्तिता ॥ तासां वातोत्तरा रूक्षा वातवेदनयान्विता । क्षिप्रपाकसमुत्थाना दाहयुक्ता च पैत्तिकी ॥ गूढपाका च कठिना कफा स्निग्धाल्परुक्करा । मेदोविकारा श्लैष्मिकी च विशेषादतिमार्दवा ॥ अपचीं कंठमन्यासु कक्षवंक्षणसंधिषु । तां तु मालाकृतिसमां कंठहृदंतसंधिषु ॥ कंठमालां विजानीयादपचीतुल्यलक्षणात् ॥" इति ॥ स्याद्गंडमालेति । मालातुल्यगंडाश्रया गंडमाला । गलमात्र एव चरके गंडमाला पठिता, यथा—"मेदःकफाच्छोणितसंचयोत्थो गलस्य मन्ये गलगंड एकः । स्याद्गंडमाला बहुभिश्च गंडैः" इति ॥ गंडमालातुल्यतयापचीमाह—त इति । गंडमालारंभकदोषदूष्यकृता ये ग्रंथयस्त एवेत्यर्थः । अवाप्तपाकाः लब्धपाकाः, कालानुबंधमिति । चिरकालसंबंधम् ॥ सैवापचीति । तादृशी आमलकरूपा अपची भण्यते ॥ सैवापचीति—इतिशब्देनाभिहितत्वात्प्रवदंतीति क्रियायोगेऽपि न द्वितीया । तस्य साध्यत्वमाह—साध्येति । साध्याः स्मृता इति पूर्वग्रंथेन संबंधः, 'स्रवंति नश्यंति भवंति चान्ये' इत्यत्र-

**वातादयो मांसमसृक्प्रदुष्टाः संदूष्य मेदश्च तथा शिराश्च ॥**
**वृत्तोन्नतं विग्रथितं च शोथं कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥११॥**
**आयम्यते वृश्च्यति तुद्यते च प्रत्यस्यते मथ्यति भिद्यते च ॥**
**कृष्णो मृदुर्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम् ॥१२॥**

---

मधुकोशव्याख्या ।

अयं तु ग्रन्थिः चरके गण्डमालायामस्ति; संग्रहकारेण तु गण्डमालया सह तुल्यत्वादपच्याः, अपच्यामेव ग्रन्थिः पठितः । अनन्तरमपचीगुडकतुल्यतया ग्रन्थिमाह–वातादय इत्यादि । वातपित्तकफाः प्रत्येकं दुष्टाः; दुष्टिश्चात्र वृद्धिरेव न क्षयः; क्षीणानां विकारकरणाक्षमत्वात् । यद्येवं तर्हि कथं वातादिक्षये मन्दचेष्टादयः ? उच्यते, तत्क्षये विरोधिदोषकोपात्; यथा–मधुरस्निग्धादिभिर्वाते क्षीणे तत्समानत्वात् श्लेष्मा प्रकुप्यति । वचनं हि–"वृद्धिश्चापि विरोधिनाम्" इति । संदूष्य मेदश्च मांसमसृक् शिराश्चेत्यनेन मेदोजःकफसंबन्धाद्यो भवति तथा शिराजोऽपि वायुना शिरादुष्ट्या यो जन्यते स उच्यते । एवं पञ्चग्रन्थयः । तथेति संदूष्य मांसमसृगिति । अत्रासृजः क्रमोल्लंघनेन पाठोऽप्राधान्यप्रतिपादनार्थः, विसर्पे तु शोणितमेव प्रधानम् । अत एव क्वचित् चकारमप्राधान्यसूचकं निवेश्य 'असृक् च' इति पाठः। चरके तु ग्रन्थिः वातकफज एव ग्रन्थिविसर्पशब्देनोक्तः । वृत्तोन्नतमिति वृत्तं वर्तुलम्, उन्नतम् उच्छूनम् । विग्रथितं कठिनं कक्खटं वा; विग्रथितत्वादेव ग्रन्थिरिति संज्ञा ॥ ११ ॥ अनिलग्रन्थिमाह--आयम्यत इत्यादि । आयम्यते आकृष्य दीर्घीक्रियते । वृश्च्यतीति छिनत्तीव, अत्र दिवादेराकृतिगणत्वात् श्यन्प्रत्ययः । प्रत्यस्यते क्षिप्यते, मथ्यति आलोडयतीव, अत्रापि पूर्ववत् समाधानम् । भिद्यते विदीर्यत

आतङ्कदर्पणव्याख्या ।

द्विपीनसादिभिरुपद्रवैर्युता असाध्याः ॥ ८–१० ॥ अपचीगंडकरूपतया ग्रंथिकामाह–वातादय इति । वातादयो वातपित्तकफाः, प्रत्येकं दुष्टाः मांसमसृक् संदूष्य शोफं कुर्वतीति संबंधः । एतेन त्रयो ग्रंथय उक्ताः, दुष्टिश्चात्र वृद्धिरेव, न क्षयः, क्षीणानां विकारकारणाक्षमत्वात्, संदूष्य मेदश्च तथा शिराश्चेत्यनेन मेदोजः शिराजश्चैवं द्वौ संदूष्य मांसमसृगित्यत्रासृजःक्रमोल्लंघनेन पाठोऽप्राधान्यप्रतिपादनार्थं वृत्तं वर्तुलम्, उन्नतम् उच्छूनम् । विग्रथितं विच्छिद्य ग्रथितम्, अतो विग्रथितत्वादेव ग्रंथिसंज्ञा ॥ ११ ॥ वातिकमाह–आयम्यत इति । आकृष्य दीर्घीक्रियत इव-वृश्च्यति छिनत्तीव, तुद्यते शूलेनेव, प्रत्यस्यते क्षिप्यते, मथ्यति आलोडयतीव, भिद्यते विदार्यत

**दन्दह्यते धूप्यति चूष्यते च पापच्यते प्रज्वलतीव चापि ॥**
**रक्तः सपीतोऽप्यथवापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम्॥१३॥**
**शीतोऽविवर्णोऽल्परुजोऽतिकण्डुः पाषाणवत्संहननोपपन्नः ॥**
**चिराभिवृद्धश्च कफप्रकोपाद्भिन्नः स्रवेच्छुक्लघनं च पूयम् ॥ १४ ॥**
**शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महान्कण्डुयुतोऽरुजश्च ॥**
**मेदःकृतो गच्छति चात्र भिन्ने पिण्याकसर्पिःप्रतिमं तु मेदः॥१५॥**

मधुकोशव्याख्या ।

इव। अस्रं स्रावम् ॥ १२ ॥ पित्तग्रन्थिमाह--दन्दह्यत इत्यादि। दन्दह्यते अत्यर्थं दह्यते अग्निनेव। पापच्यते भृशं पच्यत इव क्षारेण, किंवा उत्क्वथ्यत इव। प्रज्वलतीव ज्वलन् भस्मीभवतीव ॥१३॥ कफग्रन्थिमाह--शीत इत्यादि। अविवर्णः प्रकृतिवर्णः ईषद्विवर्ण इति कश्चित्। पाषाणवत् संहननोपपन्न इति पाषाणवत् कठिन इत्यर्थः; किंवा पाषाणवत् भवति। संहननोपपन्न इति संहतान्वितो महानित्यर्थः ॥ १४ ॥ मेदोजग्रन्थिमाह--शरीरेत्यादि। शरीरवृद्धिक्षयवृद्धिहानिरिति शरीरवृद्धिक्षयाभ्यां यथाक्रम वृद्धिहानी यस्य स तथा। मेदोजेष्वेवं युक्तिः, धातुस्वभावात् चिरस्थायित्वाद्वा। गच्छति चात्र भिन्ने पिण्याकसर्पिःप्रतिमं तु मेद इति भिन्ने सति पिण्याकस्तिलकल्कः, सर्पिरत्र स्त्यानं तत्सदृशं मेदः स्रवति। भोजेन तु मेदोग्रन्थेः संप्राप्तिः पठ्यते। यथा--"मेदो वायुर्यदा मांसे निक्षिपेदथवा त्वचि। तत्र मेदोभवग्रन्थिः श्यावो भवति पाण्डुरः ॥ कृशः कृशे महान्स्थूले ग्रन्थिर्भिन्नश्च

आतङ्कदर्पणव्याख्या ।

इव ॥ १२ ॥ पैत्तिकमाह--अग्निना अत्यर्थं दह्यत इव, धूप्यति धूमायत इव, चूष्यते शृंगेणेव, पापच्यते भृशं पच्यत इव क्षारेण, किंच उत्क्वथ्यत इव। ज्वलतीव ज्वलनेनेव भस्मीभवति, वर्णेन रक्तः, अथ वा पीतः, भिन्नः सन्, अतीवातिशयेन दुष्टं रक्तं स्रवति ॥ १३ ॥ श्लैष्मिकमाह--शीत इति। अविवर्णः प्रकृतिवर्णः, पाषाणवत् संघातान्वितो महानित्यर्थः। भिन्नः सन् शुक्लं घनं पूयं स्रवेच ॥ १४ ॥ मेदोजमाह--शरीरवृद्धिक्षयाभ्यां यथाक्रमं वृद्धिहानी यस्य स तथा भिन्ने सति पिण्याकसर्पिःसदृशं मेदो गच्छति स्रवतीत्यर्थः। पिण्याकस्तिलकल्कः, सर्पिरत्र स्त्यानम्, तत्सदृशं मेदो गच्छति। उक्तं च भोजे--"मेदो वायुर्यदा मांसे निक्षिपेदथ वा त्वचि। तत्र मेदोभवो ग्रंथि श्यावो भवति पांडुरः ॥ कृशः कृशे महान्स्थूले ग्रंथिश्छिन्नश्च

१ 'धूप्यति वृश्च्यते' इत्यत्र 'चूष्यते' इतिपाठाभिप्रायेण।
२ एतच्च--"भिन्नः स्रवेदुष्टमतीव चास्रम्" इतिपाठाभिप्रायेण।

व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुस्तु शिराप्रतानम् ॥
संकुच्य संपिण्ड्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम् १६
ग्रन्थिः शिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात्सरुजश्चलश्च ॥
स चारुजश्चाप्यचलो महांश्च मर्मोत्थितश्चापि विवर्जनीयः॥१७॥
गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमसृक्प्रदूष्य ॥
वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम् ॥
कुर्वन्ति मांसोच्छ्रयमत्यगाधं तदर्बुदं शास्त्रविदो वदन्ति ॥१८॥

मधुकोशव्याख्या ।

पीडितः । तिलकल्कनिभः स्रावो घृतवच्चास्य जायते" इति ॥ १५ ॥ शिराजग्रन्थेः संप्राप्तिमाह—व्यायामजातैरित्यादि । संकुच्येति अन्तर्भावितो ण्यर्थस्तेन संकोच्येत्यर्थः । संपिण्ड्येति संहतीकृत्य । उन्नतमाशु वृत्तमिति अस्य सामान्यलक्षणेनैव सिद्धे पुनरुक्तिरतिशयार्थम् । स च शिराजो ग्रन्थिर्यदि सरुजश्चलश्च स्यात्तदा कृच्छ्रसाध्यः । स चारुजश्चापीत्यादिना न साध्यः । स च इति चकारेणारुजत्वादिधर्मयोगादपरेऽपि ग्रन्थयोऽसाध्या इति सूचयति । यदुक्तं भोजे—"पञ्चैतानरुजो ग्रन्थीन्मर्मजानचलांस्त्यजेत् । कपोलगलमन्यासु दुश्चिकित्स्याश्च सन्धिषु" इति । अन्ये तु मांसासृग्भ्यां षष्ठं ग्रन्थिं वदन्त एवं पठन्ति—"मांसासृजं चार्बुदलक्षणेन तुल्यं हि दृष्टं त्वथ लक्षणज्ञैः" इति । किन्त्वनार्षोऽयं पाठो भोजादिसमानतन्त्रेष्वदृष्टत्वात् ॥ १६॥१७ ॥ मांसशोणितदूष्यसाम्यादर्बुदाभिधानम् । तस्य संप्राप्तिमाह—गात्रप्रदेशे क्वचिदित्यादि । क्वचिदेवेत्यनेनानियतदेशे, न पुनरपचीवन्नियतदेशे । संमू-

आतङ्कदर्पणव्याख्या ।

पीडितः । तिलकल्कनिभः स्रावो घृतवच्चास्य जायते" इति ॥ १५ ॥ शिराजग्रंथेः संप्राप्तिमाह—व्यायामेति । तैस्तैरिति बलवद्विग्रहादिभिः, शिराप्रतानं शिराभ्यो निर्गतं सूक्ष्मशिराजालम् । संकुच्येति अंतर्भावितोऽत्र ण्यर्थः, तेन संकोच्येत्यर्थः । संपीड्य संहतीकृत्य, उन्नतमुच्चम्, वृत्तं वर्तुलम् ॥१६॥स तु शिराजो ग्रंथिः यदि सरुजश्चलः स्यात्तदा कृच्छ्रसाध्यः । तस्यासाध्यत्वमाह—स इति । चकारेणारुजादिधर्मयोगाद् अपरेऽपि ग्रंथयः असाध्या इति सूचयंति । यदुक्तं भोजेन—"पंचैतानरुजो ग्रंथीन्मर्मजांश्च चलांस्त्यजेत् । कपोलगलमन्यासु दुश्चिकित्स्याश्च संधिषु" इति ॥ १७ ॥ अथार्बुदान्याह । तस्य संप्राप्तिमाह—गात्रेति ॥ क्वचिदेवेति अनियतदेशे न पुनरपचीवत्, नियतप्रदेशे । संमूर्छिता इति पाठांतरे तत्र वृद्धाः । मांसमसृक् प्रदूष्येति सर्वार्बुदेषु साधारणं दूष्यम्, मांसा-

**वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा वा ॥**
**तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि तदा भवन्ति॥१९॥**
**दोषः प्रदुष्टो रुधिरं शिराश्च संकुच्य संपिण्डय ततस्त्वपाकम् ॥**
**सास्रावमुन्नह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशुवृद्धम् ॥ २० ॥**
**करोत्यजस्रं रुधिरप्रवृत्तिमसाध्यमेतद्रुधिरात्मकं तु ॥**
**रक्तक्षयोपद्रवपीडितत्वात्पाण्डुर्भवेदर्बुदपीडितस्तु ॥ २१ ॥**

---

मधुकोशव्याख्या ।

च्छिता इति पाठान्तरं संमूर्छिता वृद्धाः. दुष्टसंसृष्टा इति कार्तिकः । मांसमसृक् प्रदूष्येति सर्वार्बुदसाधारणं दूष्यम्. मांसार्बुदमेदोऽर्बुदयोस्तु विशेषेण मांसदुष्टिः, मांसार्बुदमेदोऽर्बुदयोरपि तद्रूपको दोषोऽस्ति । तेन तत्रापि दोषकर्तृतया संप्राप्तिरियं भवति । मांसोच्छ्रयमिति मांसोच्छ्रयतया प्रतीयमानम् । मेदोजेऽपि मांसमुन्नतं भवति । अत्यगाधमिति दूरानुप्रविष्टम्; अत एवानल्पमूलमित्युक्तम् । वातादिभिस्त-दर्बुदं जायते; तेन षडर्बुदानि भवन्ति । ग्रन्थेः समानानीति वातपित्तकफमेदोजग्र-न्थिभिर्वातपित्तकफमेदोऽर्बुदानां लक्षणानि समानानि; शोणितजमांसजयोस्तु लक्षणं पृथक् वक्ष्यति ॥ १८ ॥ १९ ॥ रक्तार्बुदमाह—दोषः प्रदुष्ट इत्यादि । संकुच्येति अन्तर्भावितोऽत्र ण्यर्थः । आपाकमीषत्पाकं तेन सास्रावमित्युपपन्नं भवति । दोष उन्नह्यति उच्छ्रितो भवति । सास्रावमीषत्स्रावम् । मांसपिण्डमाशु वृद्धं शीघ्रवर्धनम्, मांसांकुरैराचितं करोति, तथा अजस्रं रुधिरप्रवृत्तिमपि करोति, रुधिरं चात्राधिष्ठान-पूर्वभूतशिरागतं प्रवर्तते न तु पाकात्, ईषदेव स्रावस्य क्लेदरूपस्योक्तत्वात् । किंवा उन्नह्यतीत्यन्तर्भावितण्यर्थः, तेन मांसपिण्डमुन्नह्यति उन्नतं करोति । दोषाः प्रदुष्टा

आतङ्कदर्पणव्याख्या ।

र्बुदमेदोऽर्बुदयोश्च विशेषेण मांसमेदोदुष्टिः, वृत्तं वर्तुलम्, मृदुं मृदुस्पर्शम्, मांसमेदआश्रयत्वात्[1] । अत्यगाधं दूरानुप्रविष्टम्, अत एवानल्पमूलमित्युक्तम् ॥ तस्य संख्यामाह—वातेनेति । वातादि-भिस्तदर्बुदं जायते भवति, तेन षट् अर्बुदानि भवन्ति, ग्रंथेः समानानीति वातपित्तकफमेदो-जग्रंथिभिर्वातपित्तकफमेदोजार्बुदानां लक्षणानि समानानि । शोणितजमांसजयोस्तल्लक्षणं पृथग्वक्ष्यते ॥ १८ ॥ १९ ॥ रक्तार्बुदमाह-दोष इति । संकुच्येति अंतर्भावितोऽत्र ण्यर्थः । अपाकमिति ईषत्पाकं तेन सास्रावमित्युपपन्नं भवति ,दोषः प्रदुष्टः उन्नह्यति उच्छ्रितो भवति । अजस्रं रुधि-रप्रवृत्तिमतिरुधिरं चाधिष्ठानभूतं प्रवर्तते, न तु पाकात्, ईषदेव स्रावस्य क्लेदरूपकस्योक्तत्वात् ।

---

१ एतच्च-"वृत्तं मृदुं मन्दरुजम्" इतिपाठाभिप्रायेण ।

**मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टं जनयेद्धि शोथम् ॥**
**अवेदनं स्निग्धमनन्यवर्णमपाकमश्मोपममप्रचाल्यम् ॥ २२ ॥**
**प्रदुष्टमांसस्य नरस्य गाढमेतद्भवेन्मांसपरायणस्य ॥**
**मांसार्बुदं त्वेतदसाध्यमुक्तं साध्येष्वपीमानि तु वर्जयेच्च ॥ २३ ॥**
**सम्प्रस्रुतं मर्मणि यच्च जातं स्रोतःसु वा यच्च भवेदचाल्यम् ॥**
**यज्जायतेऽन्यत्खलु पूर्वजाते ज्ञेयं तदध्यर्बुदमर्बुदज्ञैः ॥ २४ ॥**

---

मधुकोशव्याख्या ।

इति वा पाठपक्षे सास्रावमुन्नह्यतीति पाठः । उन्नह्य उन्नाह्य । अन्तर्भावितण्यर्थत्वात् । हि पादपूरणे ॥ २० ॥ २१ ॥ मांसजन्यसंप्राप्तिमाह—मुष्टिप्रहारादिभिरित्यादि । अश्मोपमं पाषाणवत् कठिनम् । अप्रचाल्यं स्थिरम् । यद्यपि रक्तमांसार्बुदेऽप्यतिरक्तमांसयोर्हेतुत्वेनोक्तिस्तथापि रक्तजे पित्तम्, मांसजे वायुरारम्भकः, एवमपि ताभ्यां घृतदुग्धन्यायेन व्यपदेशः । मांसपरायणस्य मांसाशनशीलस्य । तस्य चातिमात्रं मांसवृद्धिः, मांसं 'मांसेन वर्धते' इत्यभिधानात् ॥ साध्येष्वप्यसाध्यप्रकारानाह—साध्येष्वपीत्यादि । संप्रस्रुतं स्रावयुक्तं, स्रावश्चात्रापाकित्वेऽपि त्वगवदरणात् मनागवगन्तव्यः । स्रोतःसु नासादिषु । अचाल्यं स्थिरम् ॥ २२॥२३ ॥ अध्यर्बुदमाह—यज्जायत इत्यादिना । अधिकमर्बुदम् अध्यर्बुदम्, एतद्द्विरर्बुदमेव । यद्द्वन्द्वजातं युगपत् क्रमाद्वेति द्वन्द्वजातं युग्मेन जातं, युगपदेकदा क्रमेण वा, तद्द्विरर्बुदं न साध्यम् । तथाच भोजः—"अर्बुदे त्वर्बुदं जातं द्वन्द्वजं चानुजं च यत् । द्विरर्बुदमिति ज्ञेयं तच्चा-

आतङ्कदर्पणव्याख्या ।

सुश्रुतोक्तेः रक्तक्षयोपद्रवैः पांडुः स्यात् ॥ २० ॥ २१ ॥ मांसजस्य संप्राप्तिमाह—मुष्टीति । मुष्टिप्रहारादिभिरर्दितेंगप्रदेशे, अनन्यवर्णम्, अपाकं पाकरहितम्, अश्मोपमं पाषाणवत्कठिनम् । अप्रचाल्यं स्थिरम् । यद्यपि रक्तमांसार्बुदयोः रक्तमांसयोर्हेतुत्वेनोक्तिः, तथापि रक्तजे पित्तम्, मांसजे वायुरारंभकः, एवमपि ताभ्यां घृतदुग्धन्यायेन व्यपदेशः । समांसपरायणस्य मांसभक्षणशीलस्य तस्य चातिमात्रं मांसवृद्धिः "मांसं मांसेन वर्द्धते" इति वचनात् । एतन्मांसार्बुदमसाध्यम् । साध्येष्वप्यसाध्यप्रकारानाह—साध्येष्विति । साध्येष्वपि इमानि अर्बुदानि वर्जयेत् । संप्रस्रुतं स्रावयुक्तम् । स्रावश्चात्राशक्तित्वेपि त्वग्दारणात् मनागवगंतव्यः । स्रोतस्सु शिरादिषु, अचाल्यं स्थिरम् ॥ २२ ॥ २३ ॥ अध्यर्बुदमाह—यदिति । अधिकमर्बुदमध्यर्बुदम्, एतद्द्विर्बुदमेव । यद् द्वंद्वजातं युगपदेकदा क्रमेण वा तत् द्विरर्बुदं न साध्यम्, तथा च भोजः—"अर्बुदे त्वर्बुदं जातं द्वंद्वजं चानुजं च यत् । द्विरर्बुदमिति ज्ञेयं तच्चासाध्यं विनिर्दिशेत्" इति । अर्बुदानामपाकभावे हेतुमाह—नेति । सर्वार्बुदानि पित्तरक्तजान्यपि न पाकमायांति, कुत इत्याह—कफाधिकत्वान्मेदोबहुत्वाच्च । ननु अप-

**यद्द्वन्द्वजातं युगपत्क्रमाद्वा द्विरर्बुदं तच्च भवेदसाध्यम् ॥**
**न पाकमायान्ति कफाधिकत्वान्मेदोबहुत्वाच्च विशेषतस्तु ॥**
**दोषस्थिरत्वाद्ग्रथनाच्च तेषां सर्वार्बुदान्येव निसर्गतस्तु ॥ २५ ॥**

इति श्रीमाधवकरविरचिते माधवनिदाने गलगण्डगण्डमाला-
पचीग्रन्थ्यर्बुदनिदानं समाप्तम् ॥ ३८ ॥

# अथ श्लीपदनिदानम् ३९.

**यः सज्वरो वङ्क्षणजो भृशार्तिः शोथो नृणां पादगतः क्रमेण ॥**
**तच्छ्लीपदं स्यात्करकर्णनेत्रशिश्नौष्ठनासास्वपि केचिदाहुः ॥ १ ॥**

मधुकोशव्याख्या ।

साध्यं विनिर्दिशेत्'' इति ॥ २४ ॥ अर्बुदानां पाकाभावे हेतुमाह—न पाकमायान्तीत्यादि । सर्वार्बुदानि पित्तरक्तजान्यपि न पाकमायान्ति, कुतः ? इत्यत आह—कफाधिकत्वात् मेदोबहुत्वाच्च । ननु, अपच्यामपि विशेषतः कफमेदसी अधिके, अथ च तस्याः पाकोऽस्त्येव, इत्यत आह—दोषस्थिरत्वादिति—अपच्यां कालान्तरेण हि रक्तपित्तमधिकं पाकमारभते, तच्चेह दोषस्थिरत्वात् सदा सदृशदोषत्वात् ग्रथितत्वाच्च न पाकारम्भकम् । अन्ये तु दोषस्थिरत्वादिति दोषोच्छ्रायरूपशोथकाठिन्यादित्याहुः, तदप्रयोजनकम्, अन्यत्र दोषोच्छ्रायशोथकाठिन्येऽपि पाकदर्शनात् । अथ कुतो यथोक्तहेतुसंपदित्याह—निसर्गतस्त्विति । निसर्गतो व्याधिस्वभावात् । भोजेऽप्युक्तं—"न पच्यते स्थिरत्वाच्च ग्रथितत्वात्स्वभावतः" इति ॥ २५ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां गलगण्डगण्डमालापचीग्रन्थ्यर्बुदनिदानं समाप्तम्॥३८॥

उत्सेधसाधर्म्यादर्बुदेन सह कफसंबन्धाव्यभिचारसाम्याच्चाथ श्लीपदनिदानम् । तस्य संप्राप्तिमाह—यः सज्वर इत्यादि । वंक्षणावस्थानमेवास्य पूर्वरूपम् । क्रमेणेति

आतंकदर्पणव्याख्या ।

च्यामपि कफमेदसी अधिके, अथ च तस्याः पाकः कालतोऽस्त्येवेत्याह—दोषस्थिरत्वातिकालांतरेण हि रक्तपित्तमधिकं पाकमारभते । ननु, इह दोषस्थिरत्वात् सदृशदोषत्वात् ग्रथितत्वाच्च न पाकारंभकत्वम्, अथ कुतो यथोक्तहेतुसंपदित्याह—निसर्गतस्त्विति । निसर्गतो व्याधिस्वभावात् । भोजेप्युक्तम्—"न पच्यते स्थिरत्वाच्च ग्रथितत्वात्स्वभावतः" इति । तेषामर्बुदानामिति ॥ २५ ॥
इत्यातंकदर्पणे निदानव्याख्यायां गलगण्डमालाऽपचीग्रंथ्यर्बुदनिदानम् ॥

उत्सेधसाधर्म्यादर्बुदेन सह कफसंबंधसंवादत्वादव्यभिचारसाधर्म्याच्च श्लीपदनिदानम् । तस्य संप्राप्तिमाह—य इति । वंक्षणाद्यवस्थानमेवास्य पूर्वरूपम् । क्रमेणेति शनैः वंक्षणमूरुमेढ्रसंधिवंक्ष-

वातजं कृष्णरूक्षं च स्फुटितं तीव्रवेदनम् ॥
अनिमित्तरुजं तस्य बहुशो ज्वर एव च ॥ २ ॥
पित्तजं पीतसंकाशं दाहज्वरयुतं मृदु ॥
श्लैष्मिकं स्निग्धवर्णं च श्वेतं पाण्डु गुरु स्थिरम् ॥ ३ ॥
वल्मीकमिव संजातं कण्टकैरुपचीयते ॥
अब्दात्मकं महत्तच्च वर्जनीयं विशेषतः ॥ ४ ॥

---

मधुकोशव्याख्या ।

शनैःशनैः । तत् श्लीपदं स्यादित्यनेन निरुपाधिरेवेयं संज्ञेति दर्शयति, अन्ये शिलावत् पदं श्लीपदमिति वदन्ति, नैरुक्तेन च विधिना साधुत्वम् । करकर्णादिगतश्लीपदानां यथोक्तसंप्राप्त्यभावात् केचिदाहुरिति परमतेनोक्तिः ॥ १-३ ॥ एषामसाध्यतामाह—वल्मीकमिव संजातं कण्टकैरुपचीयते इति । संजातं प्रवृद्धं सत् वल्मीकवद्बहुशिखराकारं ग्रन्थिभिरुपचितं यद्भवति तदसाध्यम् । अन्ये तु पुनरमुं ग्रन्थिं कफजलक्षणत्वेन वर्णयन्ति । तन्न, मनो धिनोति, सुश्रुते वल्मीकवज्जातस्यासाध्यत्वेनाभिधानात् । तद्यथा—"तत्र संवत्सरातीतमतिमहद्वल्मीकमिव संजातं संप्रस्रुतमिति वर्जनीयानि भवन्ति" इति । अब्दात्मकमित्यादि । अब्दात्मकं संवत्सरातीतम्; अब्दमेकमिति पाठे तु अतिक्रान्तमिति शेषः । महदिति अत्यन्तमुच्छूनम् । वर्ज-

आतङ्कदर्पणव्याख्या ।

णस्थः श्वयथुः । भृशार्तिसहितः, चरणं गच्छतीत्यर्थः, तत् श्लीपदं स्यात्--इत्यनेन पारिभाषिकी निरुपाधिरेवेयं संज्ञेति । अन्ये शिलावत् । केचिदाहुरिति परमतेनोक्तिः ॥ १ ॥ वातजमाह--अनिमित्तमिति । अकारणेनैव पीडा । बहुशो वारंवारं ज्वरः, शेषं सुगमम् ॥ २ ॥ पित्तजमाह--पीतसंकाशं पीतावभासम्, मृदु मृदुस्पर्शम् ॥ श्लेष्मजमाह—स्निग्धवर्णमिति । स्निग्धवद् वर्णं यस्य, चिक्कणमित्यर्थः । पांडु पीतश्वेतम् ॥ ३ ॥ एषामसाध्यतामाह--वल्मीकमिति । वल्मीकवद्बहुशिखराकारग्रंथिभिरुपचितं यद् भवति तदसाध्यम् । अन्ये पुनरमुं ग्रंथिं कफजलक्षणत्वेन वर्णयंति तन्न मनो धिनोति, सुश्रुते वल्मीकवज्जातस्यासाध्यत्वेनाभिधानात् । तद्यथा "तत्र संवत्सरातीतमतिमहद्वल्मीकजातं प्रस्रुतमिति वर्जनीयानि भवन्ति" इति । सर्वात्मकं त्रिदोषजम् । अन्ये अब्दात्मकमिति पठंति । तत्रातिक्रांतवत्सरमित्यर्थः । महत् अत्यंतमुच्छूनम् वर्ज्जनीयं विशेषत इति प्रत्याख्येयम् । श्लीपदेषु कफस्याव्यभिचारेण प्राधान्यमाह--त्रीणित्रीणि वातजादीनि, यतो गुरुत्वं च श्लेष्मणा विना न स्यात् । ननु, यद्येवं तर्हि कथमेकदोषजव्यपदेशः सर्वस्य ॥४॥

त्रीण्यप्येतानि जानीयाच्छ्लीपदानि कफोच्छ्रयात् ॥
गुरुत्वं च महत्त्वं च यस्मान्नास्ति कफं विना ॥ ५ ॥
पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः ॥
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ ६ ॥
यच्छ्लेष्मलाहारविहारजातं पुंसः प्रकृत्याऽपि कफात्मकस्य ॥
सास्रावमत्युन्नतसर्वलिङ्गं सकण्डुरं श्लेष्मयुतं विवर्ज्यम् ॥ ७ ॥
इति श्रीमाधवकरविरचिते माधवनिदाने श्लीपदनिदानं समाप्तम् ॥ ३९ ॥

---

मधुकोशव्याख्या ।

नीयं विशेषत इति प्रत्याख्येयम् ॥ ४ ॥ श्लीपदेषु कफस्याव्यभिचारेण प्राधान्यमाह—त्रीण्यप्येतानीत्यादि । ननु, यद्यव्यभिचारी सर्वत्र कफः कथं तर्हि एकदोषजत्वव्यपदेशः, सर्वस्य द्विदोषजत्वप्रसङ्गात् ? उच्यते, अनुबन्धोऽत्र कफः, न त्वनुबन्ध्यः । एतेनात्र न द्विदोषजप्रसंग इत्यभिप्रायः ॥ ५ ॥ श्लीपदसंभवहेतुं देशमाह—पुराणोदकेत्यादि । आनूपदेशे हि सलिलं पतितं बहूदकं निम्नतया न शोषमुपयाति । जाङ्गले तु आग्नेयोन्नतभूभागत्वात् न पुराणोदकभूयिष्ठता । स्तिमितस्यानूपस्य मन्दातपत्वेनोष्णर्तावपि शीततेति । अत उक्तं—"सर्वर्तुषु च शीतलाः" इति । करकर्णादिगतश्लीपदसन्देहे कोपद्वारेण ज्वरेण श्लीपदावधारणं करणीयम् ॥ ६ ॥ अपरमसाध्यलक्षणमाह—सास्रावमित्यादि । अत्युन्नतसर्वलिङ्गमिति येन दोषेणारब्धं श्लीपदं तस्यात्युन्नतानि अतिवृद्धानि सर्वाणि लिङ्गानि यत्र तत् तथा । सकण्डुरमिति अत्यन्तकण्डुमत् । श्लेष्मयुतमिति श्लेष्मानुगम् ॥ ७ ॥ इति श्रीकण्ठदत्तविरचितायां मधुकोशव्याख्यायां श्लीपदनिदानं समाप्तम् ॥ ३९ ॥

आतंकदर्पणव्याख्या ।

द्विदोषजत्वप्रसंगात् ? उच्यते—कफोऽत्रानुबंधरूपः, न त्वनुबन्ध्यः । तेन द्विदोषजत्वप्रसंग इत्यभिप्रायः ॥५॥ श्लीपदसंभवे हेतुनिर्देशमाह--पुराणोदकेति । पुराणोदकभूयिष्ठा इति अनूपदेशे सलिलं पतितं बहूदकं निम्नभूभागतया न शोषमुपयाति, अतोऽनूपदेशस्य पुराणोदकभूयिष्ठता । जांगले त्वाग्नेयोन्नतभूभागतया सलिलं पतितं न तिष्ठति, स्थितमपि रूक्षोष्णशुष्कदेशस्य शोषमुपयाति, इति जांगलदेशस्य न पुराणोदकभूयिष्ठता । सर्वेष्वपि ऋतुषु शीतला ये देशाः हिमवत्प्रदेशाः ॥ ६ ॥ पुनरसाध्यतामाह—यदिति । श्लेष्मलाहारो मधुरादिः, विहारो दिवास्वप्नादिः, कफप्रकृतिकस्य सास्रावम् आस्रावयुतम् । अत्युन्नतसर्वलिंगं येन दोषेणारब्धं श्लीपदं, तस्यात्युन्नतानि इमान्यतिप्रवृद्धानि सर्वाणि त्रिदोषलिंगानि यत्र तत्, सकंडुरं कंडूयुतम्, श्लेष्मयुतं श्लेष्मणापगतम् ॥ ७ ॥ इत्यातंकदर्पणे निदानव्याख्यायां श्लीपदनिदानम् ॥ ३९ ॥

# अथ विद्रधिनिदानम् ४०.

त्वग्रक्तमांसमेदांसि संदूष्यास्थिसमाश्रिताः ॥
दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥ १ ॥
महामूलं रुजावन्तं वृत्तं वाप्यथवायतम् ॥
स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः ॥ २ ॥
पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा ॥
षण्णामपि हि तेषां तु लक्षणं संप्रचक्ष्यते ॥ ३ ॥
कृष्णोऽरुणो वा विषमो भृशमत्यर्थवेदनः ॥
चित्रोत्थानप्रपाकश्च विद्रधिर्वातसंभवः ॥ ४ ॥

---

मधुकोशव्याख्या ।

शोथत्वसामान्यात् विद्रधिनिदानम् । तस्य संप्राप्तिमाह—त्वग्रक्तमांसमेदांसीत्यादि । घोरमित्यन्येभ्योऽपि शोथसमुत्थानेभ्यो ग्रन्थ्यादिभ्य आशुकारित्वाद्दारुणम् । उच्छ्रिता भृशमिति अत्यर्थं वृद्धाः । अस्थिसमाश्रिता इत्यनेन स्थानसंश्रयोऽभिहितः । उच्छ्रिता भृशमित्यनेन प्रकोप आविष्कृतः, एतेनैवान्तरीयकतया चयप्रसरावप्याक्षिप्तौ मन्तव्यौ । महामूलमस्थ्यादिसमाश्रयणाद्गम्भीरमूलम् । रुजावन्तमिति उत्पत्तावेव रुजाप्रकर्षवन्तम्, अतिशायने मतुप् । वृत्तमित्यादि वृत्तं वर्तुलम् । आयतं दीर्घम् । वृत्तायताभ्यां ग्रन्थ्यादिविलक्षणता । विद्रधिरिति ख्यात इति,इतिशब्देन निरुपाधिसंकेतमात्राद्विद्रधिसंज्ञेति दर्शयति । चरके तु विदाहप्रकर्षाद्विद्रधिसंज्ञा । यदुक्तं—"स वै शीघ्रविदाहित्वाद्विद्रधीत्यभिधीयते" इति ॥ १-३ ॥ वातिकमाह—कृष्ण इत्यादि । विषमो भृशमिति कदाचिदल्पः कदाचिन्महान् । चित्रोत्था-

आतङ्कदर्पणव्याख्या ।

शोथसामान्याद्विद्रधिनिदानम् । तस्य संप्राप्तिमाह—त्वगिति । घोरमन्येभ्यः शोथसमुत्थानेभ्यो ग्रंथ्यादिभ्यः आशुकारित्वाद्दारुणम् । उच्छ्रिता भृशमिति अत्यर्थं वृद्धाः, अस्थिसमाश्रिता इति स्थानसंश्रयोऽर्थोऽभिहितः । उच्छ्रिता भृशमित्यनेन प्रकोप आविष्कृतः ॥ १ ॥ स महामूलम् । अस्थ्यादिसमाश्रयणाद् गंभीरमूलम्, रुजावंतमुत्पत्तावेव रुजाप्रकर्षवन्तम्, वृत्तं वर्त्तुलम्, आयतनदीर्घवृत्तत्वायतत्वाभ्यां ग्रंथ्यादिविलक्षणता कथिता, विद्रधिरिति ख्यात इति । इतिशब्देन निरुपाधिसंकेतमात्राद् विद्रधिरिति संज्ञेति दर्शयति, चरके तु विदाहप्रकर्षाद्विद्रधिसंज्ञा । यदुक्तम् । "सर्वैः शीघ्रविदाहित्वाद्विद्रधिरिति निरूप्यते" इति । स च षट्प्रकारः,त्रिभिर्दोषैस्त्रयः, सन्निपातेनैकः, क्षतेनैकः, असृजाप्येक इति षट् । षण्णामपि लक्षणं कथ्यते ॥ २ ॥ ३ ॥ वातिकविद्रधिलक्षणमाह—कृष्ण इति । विषमो भृशमिति कदाचिदल्पः, कदाचिन्महान्,

**पक्वोदुम्बरसंकाशः श्यावो वा ज्वरदाहवान् ॥**
**क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसंभवः ॥ ५ ॥**
**शरावसदृशः पाण्डुः शीतः स्निग्धोऽल्पवेदनः ॥**
**चिरोत्थानप्रपाकश्च विद्रधिः कफसंभवः ॥ ६ ॥**
**तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः ॥**
**नानावर्णरुजास्रावो घाटालो विषमो महान् ॥ ७ ॥**

---

मधुकोशव्याख्या ।

नप्रपाक इति चित्रौ नानाविधौ वायोर्विषमक्रियत्वात् उद्गमप्रपाकौ यस्य स तथा ॥ ॥ ४ ॥ पैत्तिकमाह—पक्वेत्यादि । ज्वरदाहावुत्थानकाल एव, पाककाले तु प्रकर्षवन्तौ ताविति विशेषः ॥ ५ ॥ कफजमाह—शरावेत्यादि । शरावसदृश इति महत्त्वसूचनपरम् ॥ ६ ॥ पाकानन्तरं संभूतास्रावलिंगमाह—तनुपीतसिताश्चैषामित्यादि । क्रमशः इति यथाक्रमम्; तेन वातेन तनुः, पित्तेन पीतः; कफेन सितः; तनुस्रावे वातानुरूपो वर्णो ज्ञेयः ॥ सन्निपातजमाह—नानेत्यादि । नानावर्णरुजास्राव इति नानाशब्दः प्रत्येकमभिसंबध्यते, नाना बहुविधा वर्णाः कृष्णपीतशुक्लवर्णाः, रुजाः तोददाहकण्ड्वादिकाः, तनुपीतसिता आस्रावाश्च यस्य स तथा । अन्यत्र शोथे पाककाले नानारुजा अत्र तु सर्वदा । घाटाल इति, घाटा अस्यास्ति स घाटाल इति मत्वर्थीयो लच्, अत्युच्छ्रिताग्रत्वेन घाटाल इव । विषमोऽसाध्यत्वात् । विषमं पच्यते इति चिराचिरगम्भीरोत्तानोर्ध्वानूर्ध्वभेदेन विषमं यथा भवति तथा पच्यत इति । विषमम् असमम् । ननु, विषमपाकित्वं वातिके विद्रधावुक्तं, तथानुपक्रान्ते च शोथे । यथा—"योऽभ्युत्थितोऽल्पो यदि वा महान्स्यात् क्रिया विना पाकमुपैति शोथः ।

आतङ्कदर्पणव्याख्या ।

भृशमतिशयेन । चित्रोत्थानप्रपाक इति । चित्रौ नानाविधौ वायोर्विषमक्रियत्वादुद्गमप्रपाकौ यस्य स तथा ॥ ४ ॥ पैत्तिकमाह—पक्वेति । पक्वोदुंबरसदृशः, श्यावः श्यामवर्णः, ज्वरदाहौ उत्थानकाल एव स्याताम्, पाककाले तु तावेव प्रकर्षवंतौ, क्षिप्रमुत्थानप्रपाकौ यस्य स तथा ॥ ५ ॥ श्लेष्मजमाह—शरावेति । शरावसदृश इति महत्त्वसूचनम् चिरमुत्थानप्रपाकौ यस्य स तथा ॥ ६ ॥ तेषां दोषभेदेन स्रावानाह—तन्विति । क्रमश इति क्रमेण—वातेन तनुः, पित्तेन पीतः, श्लेष्मणा सितः, तनुस्रावे वातानुरूपो वर्णो ज्ञेयः ॥ सान्निपातिकमाह—नानेति । नाना बहुविधाः कृष्णपीतशुक्लवर्णाः, तोददाहकंड्वादिरुजास्तनुपीतसिताः स्रावा यस्य स तथा । अन्यत्र शोथे पाककाले नाना रुजाः, अत्र तु सर्वदा । घाटाल इति । घाटा अस्यास्तीति घाटालः, मत्वर्थीयो लच् अत्युच्छ्रिताकृतित्वेन घाटाल इव, विषमोऽसाध्यत्वात् । विषमं पच्यत इति । चिराचिरगंभीरोत्तानो-

विषमं पच्यते चापि विद्रधिः सान्निपातिकः
तैस्तैर्भावैरभिहते क्षते वाऽपथ्यकारिणः ॥ ८ ॥
क्षतोष्मा वायुविसृतः सरक्तं पित्तमीरयेत् ॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः ॥ ९ ॥
आगन्तुर्विद्रधिर्ह्येष पित्तविद्रधिलक्षणः ॥
कृष्णस्फोटावृतः श्यावस्तीव्रदाहरुजाकरः ॥ १० ॥

---

मधुकोशव्याख्या ।

विशालमूलो विषमो विदग्धः स कृच्छ्रतां यात्यवगाढदोषः" इति । अतः संशये कथं मिथोभेदप्रतीतिः? उच्यते, अप्रतीकारेणैव विषमपाकित्वं, प्रतीकारेणैव भेदितम् । इह पुनः प्रतीकारेऽपि वैषम्यम्; वातिके तु पाकमात्रवैषम्यं, न तु गाम्भीर्यादिना, अत एवायं साध्यः ॥ ७ ॥ अभिघातजस्यागन्तोः संप्राप्तिमाह–तैस्तैरित्यादि। तैस्तैरिति काष्ठलोष्टपाषाणादिभिः । अभिहत इति अस्रुतरक्तस्य मथितपिच्चितादेरुपलक्षणम् । क्षत इति स्रुतरक्तस्य छिन्नभिन्नादेः, द्वयोरभिहतक्षतयोरपथ्यकारिण इति विशेषणम् । क्षतोष्मेति क्षतशब्दस्य हिंसामात्रपरिग्रहात् क्षताभिहतयोरप्यूष्मा क्षतोष्मशब्देनोच्यते । वायुविसृत इति क्षते रक्तक्षयात् अभिहते अभिघातादेव वातकोपः, कुपितेन वातेन हेतुभूतेन विसृतः प्रसृतो वायुविसृतः । यद्यप्ययं वातपित्तरक्तजस्तथापि प्रागभिघातसंभवत्वेनागन्तुः, वातपित्तरक्तजानां जनकत्वेनैव विलक्षणाऽस्य संप्राप्तिः । पित्तविद्रधिलक्षण इति अत्रोक्तज्वरादिव्यतिरिक्तसंस्थानवर्णवेदनादिपित्तविद्रधिलिङ्गयुक्त इत्यर्थः ॥ ८॥९ ॥ रक्तजमाह–कृष्णेत्यादि । पित्तविद्रधिलिङ्गातिदेशेन लब्धावपि दाहज्वरौ तीव्रताविशेषार्थमुक्तौ । श्याव इति पित्तविद्रधिलिङ्गा-

आतङ्कदर्पणव्याख्या ।

द्ध्रानूर्द्धभेदेन विषमं यथा भवति तथा पच्यते ॥ ७ ॥ अभिघातजस्यागंतोर्विद्रधेः संप्राप्तिमाह–तैस्तैरिति । काष्ठलगुडपाषाणादिभिः अभिहित इति अस्रुतरक्तस्य मथितपिच्चितादेरुपलक्षणम् । द्वयोरभिहतक्षतयोरपथ्यकारिण इति योज्यम् ॥ ८ ॥ क्षतोष्मेति । क्षतस्य हिंसात्वमात्रपरिग्रहात् क्षताभिहतयोरप्यूष्मा क्षतोष्मशब्देनोच्यते । वायुविसृत इति । वातेन विस्तारितः क्षते रक्तक्षयात्, अभिहते अभिघातादेव वातकोपः, कुपितेन च वातेन हेतुभूतेन विसृतः प्रसृतः रक्तं पित्तं च ईरयेत् कोपयेत् ॥९॥ यद्यप्ययं वातपित्तरक्तजस्तथापि प्रागभिघातसंभवत्वेनागंतुः पित्तविद्रधिलक्षण इति । अत्र ज्वरदाहव्यतिरिक्तसंस्थानवर्णवेदनादिपित्तलक्षण इत्यर्थः । रक्तजविद्रधिमाह–कृष्णेति । कृष्णः कृष्णवर्णः, स्फोटावृतः पिडकायुक्तः, श्यावः श्याववर्णः, अन्ये

---

१ एतच्च–"कृष्णः स्फोटावृतः" इति पाठाभिप्रायेण ।

पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥
पृथक् संभूय वा दोषाः कुपिता गुल्मरूपिणम् ॥ ११ ॥
वल्मीकवत्समुन्नद्धमन्तः कुर्वन्ति विद्रधिम् ॥
गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा ॥ १२ ॥
वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि वाप्यथ ॥
तेषामुक्तानि लिङ्गानि बाह्यविद्रधिलक्षणैः ॥ १३ ॥

मधुकोशव्याख्या।

तिदेशेन प्रसक्तस्य पक्वोदुम्बरसंकाशस्यापवादः। भोजप्रभृतयस्तु धातुरक्तजं विद्रधिं परित्यज्य मक्कल्लसंज्ञयाऽऽर्तवलक्षणरक्तजं पठन्ति। तेषां मते आर्तवजेन सह षड् विद्रधयः, सुश्रुते तु धातुरक्तजोऽपि तथा मक्कल्लसंज्ञकोऽपि विद्रधिः सामान्येन रक्तज एवेति षड् विद्रधय इति बोद्धव्यम् ॥१०॥ अधिष्ठानविशेषेण लिङ्गविशेषं साध्यतामसाध्यतां च प्रतिपादयितुमाभ्यन्तरविद्रधिमाह—पृथक् संभूय वा इत्यादि। इयमधिकविधानार्थमुक्तापि संप्राप्तिर्विद्रधेः पुनरुच्यते। आभ्यन्तरस्य रक्तजस्य तथागन्तोश्च विद्रधेर्दोषेण व्यपदेशादियमेव तत्रापि संप्राप्तिर्ज्ञेयेति कश्चित्। बाह्यागन्तुवदाभ्यन्तरागन्तुसंप्राप्तिरित्यर्थः। क्षतजस्याभ्यन्तराभावान्न निर्दिष्टः क्षतज इति तु जेज्जटः। गुल्मरूपिणमिति गुल्मवत् संहतम्। एतदाभ्यन्तरविद्रधीनां सामान्यरूपम्; विशेषलक्षणं तु बाह्यविद्रधिलक्षणैरेव ज्ञेयम् ॥ ११ ॥ वल्मीकवदिति वल्मीक 'उयेरडिषि' तद्वत्। समुन्नद्धं समन्तादुन्नतम्; एतदपि पच्यमानावस्थायां सर्वेषां समानम्। वस्तिमुख इति

आतङ्कदर्पणव्याख्या।

'कृष्णस्फोटावृतः' इति पठंति, तत्र कृष्णैः स्फोटैरावृतः ॥ १० ॥ पित्तविद्रधिलक्षणनिर्देशेन यद्यपि दाहज्वरौ लब्धौ, तथाप्यत्रातिदाहज्वरव्यापनार्थमुक्तम्। भोजप्रभृतयस्तु धातुरक्तजं विद्रधिं परित्यज्य मक्कल्लसंज्ञार्तवलक्षणं रक्तजं पठंति। तेषां मते आर्तवजेन सह षड् विद्रधयः, सुश्रुते तु धातुरक्तजोपि तथा मक्कल्लजोपि विद्रधिः सामान्येन रक्तज एवेति षड् विद्रधय इति बोद्धव्यम् ॥ अधिष्ठानविशेषेण लिंगविशेषं साध्यतां च ज्ञापयितुमंतरविद्रधीनाह—पृथगिति। दोषा वातादयः, पृथग् भिन्नाः, संभूय मिलित्वा वा, अंतर्मध्ये, गुल्मरूपिणं गुल्मवत्संहतम्, वल्मीकवत्समुन्नतम्, वल्मीकं भूमौ कृमिविशेषैः कृतं तद्वत्समंतात् उन्नतम्। स्थानसंश्रयमाह—गुद इति। वस्तिमुख इति वस्तिमुखाश्रितमांसादौ न च वस्तौ, तनुत्वात्। कुक्षौ पार्श्वयोरधोभागे वंक्षणयोः ऊरुमेढ्रसंध्योः ॥ ११ ॥ १२ ॥ वृक्कौ मांसपिंडद्वयम्, एको वामपार्श्वे स्थितः, द्वितीयो दक्षिणपार्श्वे स्थितः, प्लीहा उदरस्य वामपार्श्वे स्थितः, यकृत् कालखंडं दक्षिणपार्श्वस्थम्, हृदयं कमलमुकुलाकारमधोमुखम्, क्लोम कालखंडादधस्तात् स्थितं दक्षिणपार्श्वस्थं तिलकं प्रसिद्धम्, तेषामाभ्यंतराणां

अधिष्ठानविशेषेण लिङ्गं शृणु विशेषतः ॥
गुदे वातनिरोधश्च वस्तौ कृच्छ्राल्पमूत्रता ॥ १४ ॥
नाभ्यां हिक्का तथाऽऽटोपः कुक्षौ मारुतकोपनम् ॥
कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ ॥ १५ ॥
वृक्कयोः पार्श्वसंकोचः प्लीह्न्युच्छ्वासावरोधनम् ॥
सर्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते ॥
श्वासो यकृति हिक्का च क्लोम्नि पेपीयते पयः ॥ १६ ॥
नाभेरुपरिजाः पक्वा यान्त्यूर्ध्वमितरे त्वधः ॥
अधःस्रुतेषु जीवेत्तु स्रुतेषूर्ध्वं न जीवति ॥ १७ ॥

मधुकोशव्याख्या ।

वस्तिमुख एव, विद्रध्याधारभूतमांसादिसंभवात्; न वस्तौ, तस्य तनुत्वात् ॥१२-१४॥ आटोपो रुजापूर्वकक्षोभः मारुतकोपनमिति मार्गावरोधाद्वायोः कोपः । वृक्कयोरिति वृक्कमग्रमांसम् । सर्वाङ्गप्रग्रहः प्रत्यङ्गव्यथा, सर्वशिराधिष्ठानत्वात् हृदयस्य । क्लोम्नीति क्लोम वृक्कादूर्ध्वं पिपासास्थानम् । पेपीयते पयः इति पुनःपुनर्जलं पातुमिच्छतीत्यर्थः ॥१५॥१६॥ स्रावनिर्गममार्गमाह-नाभेरुपरिजा इत्यादि. उपरिजा वृक्कप्लीहादिजाःयान्ति स्रवन्ति । नाभिजस्तूभयमार्गस्रावी, ऊर्ध्वाधःस्रावश्च तथागतित्वात् वातस्य । यदाह हारीतः-"ऊर्ध्वं प्रभिन्नेषु मुखाद्व्रणानां प्रवर्ततेऽसृक्सहितोऽपि पूयः। अधःप्रभिन्नेषु च पायुमार्गात् द्वाभ्यां प्रवृत्तिस्त्विह नाभिजेषु" इति । इतर इति, नाभिवस्तिवङ्क्षणजा ॥ साध्यत्वादिकमाह-अध इत्यादि । अधःस्रुतेष्विति स्वयमेव । यदा नाभ्यादिजा भिन्ना अधः स्रवन्ति तदा जीवति । स्रुतेषूर्ध्वं न जीवतीति, ऊर्ध्वं

आतङ्कदर्पणव्याख्या ।

विद्रधीनां लिंगानि बाह्यविद्रधीनां लिंगानि बाह्यविद्रधिलक्षणैरुक्तानि ॥ १३ ॥ प्रत्येकं स्थानसंश्रयत्वेन रूपमाह-गुद इति । गुदेनार्ते विद्रधौ वातनिरोधो भवति, तथा वस्तौ कृच्छ्रमूत्रता अल्पमूत्रता च ॥१४ ॥ नाभ्यां हिक्का तथा आटोपो रुजापूर्वकः क्षोभः, कुक्षौ मारुतकोपनमिति मार्गरोधात् वायोः प्रकोपः, वंक्षणोत्थे विद्रधौ तीव्रः कटीपृष्ठग्रहो भवति ॥ १५ ॥ वृक्कयोरिति । वृक्कमग्रमांसम्, पार्श्वसंकोचः पार्श्वोत्पाटनमिव, प्लीह्नि उच्छ्वासावरोधनं भवति । तथा हृदीति हृदयोत्थे विद्रधौ सर्वाङ्गप्रग्रहाद्य उपद्रवा भवंतीत्यर्थः । तीव्रो दुःसहः, सर्वेषामंगानां प्रकर्षेण ग्रहणमिव सर्वांगग्रहः प्रत्यंगव्यथा, सर्वाधिष्ठानत्वात्, हृदयस्य, यकृति जाते विद्रधौ श्वासस्तथा हिक्का च भवति ॥ क्लोम्नीति । वृक्कादूर्ध्वं पिपासास्थानं क्लोम, पेपीयते पय इति पुनःपुनर्जलं पातुमिच्छति ॥ १६ ॥ स्रावनिर्गममाह-नाभेरिति ।

हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु बाह्यतः ॥
जीवेत्कदाचित्पुरुषो नेतरेषु कदाचन ॥ १८ ॥
साध्या विद्रधयः पञ्च विवर्ज्यः सान्निपातिकः ॥
आमपक्वविदग्धत्वं तेषां शोथवदादिशेत् ॥ १९ ॥
आध्मातं बद्धनिष्यन्दं छर्दिहिक्कातृषान्वितम् ॥
रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम् ॥ २० ॥

इति श्रीमाधवकरविरचिते माधवनिदाने विद्रधिनिदानं समाप्तम् ॥ ४० ॥

---

मधुकोशव्याख्या ।

पूयस्यास्यमार्गनिर्गमान्न जीवनम् । हृन्नाभिर्वस्तिवर्ज्या इति प्लीहक्लोमादिजाः । भिन्नेषु बाह्यत इति वैद्यव्यापारेण भिन्नेषु; अन्ये मर्माद्याशयजेषु स्वयमेव भिन्नेषु इति इति व्याचक्षते । अन्तर्भिन्नेष्वप्यधःस्राविषु जीवनोक्तेः । नेतरेष्विति हृन्नाभिवस्तिजेषु भिन्नेषु तेषां मर्मत्वात् बाह्या आभ्यन्तरा वा वर्ज्याः । कदाचनेति पाके अपाके वा । तथा च भोजः—"असाध्यो मर्मजो ज्ञेयः पक्वोऽपक्वश्च विद्रधिः । सन्निपातोत्थितोऽप्येवं पक्व एव तु वस्तिजः" ॥ त्वग्जो नाभेरधो यश्च साध्यो मर्मसमीपजः । अपक्वश्चैव पक्वश्च साध्यो नोपरि नाभिजः" इति । अत्र मर्मशब्देन हृदयनाभिजा-

आतङ्कदर्पणव्याख्या ।

उपरिजाताः हृत्क्लोमादिजाः पक्वाः संत ऊर्ध्वं यांति स्रवंति, नाभिजस्तूभयमार्गस्रावी ऊर्ध्वाधःस्रावश्च, तथा गतिस्वाद्वानस्य, तथा च हारीतः—"ऊर्ध्वं प्रभिन्नेषु मुखान्तरागां प्रवर्त्तनेऽसृक्सहितश्च पूयः । अधःप्रभिन्नेषु तु पायुमार्गाद्वाभ्यां प्रवृत्तिस्त्विह नाभिजेषु ॥" इति । इतरे नाभिवस्तिवंक्षणजाः स्रवंति, स्वयमेव यदा नाभ्यादिजा भिन्ना अधः स्रवंतीति तदा जीवति, मुखेपूर्ध्वमित्यादि, ऊर्ध्वस्रुतेषु न जीवति । ऊर्ध्वपूयस्यास्यद्वारनिर्गमान्न जीवनम् ॥ १७ ॥ स्राव-विषयसाध्यासाध्यत्वमाह—हृदिति । भिन्नेषु बाह्यत इति वैद्यव्यापारेण भिन्नेषु कदाचिद्दैववशात् पुरुषो जीवेत् । अन्ये मर्माद्याशयजेषु स्वयमेव भिन्नेष्विति व्याचक्षते । अंतर्भिन्नेष्वप्यधःस्राविषु जीवनोक्तेः । नेतरेष्विति हृन्नाभिवस्तिजेषु भिन्नेषु तेषां मर्मत्वात्, बाह्या आभ्यंतरा वा वर्ज्याः ॥ कदाचनेति । पाके आपाके च । तथा च भोजः—"असाध्यो मर्मजो ज्ञेयः पक्वोऽपक्वश्च विद्रधिः । सन्निपातोत्थितोप्येवं पक्व एव तु वस्तिजः ॥ त्वग्जो नाभेरधो यश्च साध्यो मर्मसमीपजः । अपक्वश्चैव पक्वश्च साध्यो नोपरिनाभिजः" इति । अत्र मर्मशब्देन हृदयनाभिजावुच्येते ॥ १८ ॥ साध्यासाध्यत्वमाह—पंच इति । वातिकपैत्तिकश्लैष्मिकागंतुरक्तजा इति । अयं बाह्येषु विषयः त्रिदोषजस्त्वसाध्यः । तेषां विषयमाह—आमेति ॥ १९ ॥ तेषां विद्रधीनामाभ्यंतरेष्वसाध्यत्वमाह—आध्मानमिति । बद्धनिष्पंदं बद्धमूत्रम्, एतद्वस्तिजे प्रायः । शेषं सुगमम् । अत्र केचित्तु तंत्रां-

# अथ व्रणशोथनिदानम् ४१.

एकदेशोत्थितः शोथो व्रणानां पूर्वलक्षणम् ॥
षड्विधः स्यात्पृथक्सर्वरक्तागन्तुनिमित्तजः ॥ १ ॥
शोथाः षडेते विज्ञेयाः प्रागुक्तैः शोथलक्षणैः ॥
विशेषः कथ्यते चैषां पक्वापक्वादिनिश्चये ॥ २ ॥
विषमं पच्यते वातात्पित्तोत्थश्चाचिराच्चिरम् ॥
कफजः पित्तवच्छोथो रक्तागन्तुसमुद्भवः ॥ ३ ॥
मन्दोष्मताऽल्पशोथत्वं काठिन्यं त्वक्सवर्णता ॥
मन्दवेदनता चैतच्छोथानामामलक्षणम् ॥ ४ ॥

---

मधुकोशव्याख्या ।

वुच्येते । बद्धनिष्यन्दामिति बद्धमूत्रम् । एतद्वातिजे प्रायः ॥ १७-२० ॥ इति श्रीकण्ठदत्तकृतायां मधुकोश व्याख्यायां विद्रधिनिदानं समाप्तम् ॥ ४० ॥

प्रायेण चिकित्सासाधर्म्यात् भाविव्रणत्वसंबन्धतुल्यत्वाच्च व्रणशोथनिदानमाह- एकदेशोत्थित इत्यादि । षाड्विध इति संख्याकथनं द्वन्द्वजनिषेधार्थम् । प्रागुक्तैरिति आमपक्वैषणीयोक्तैः, तत्र हि "वातश्वयथुररुणः कृष्णो वा परुषो मृदुरनवस्थितः" इत्यादिना षट्शोथलक्षणान्युक्तानि । विशेषः कथ्यते चैषामिति तत्रानुक्तो विशेषः कथ्यत इत्यर्थः । पक्वापक्वादिनिश्चय इति अत्रादिशब्देन पच्यमानस्य परिग्रहः ॥ १ ॥ ॥ २ ॥ वातादिभेदेन विशेषलक्षणमाह-विषममित्यादि । पित्तवदिति पित्तशोथ-

आतङ्कदर्पणव्याख्या ।

तरोक्तं स्तनविद्रधिलक्षणं पठंति, तद्यथा-"एवमेव स्तनशिरा विवृताः प्राप्य योषिताम् । सूतानां गर्भिणीनां च संभवेच्छ्वयथुर्घनः ॥ स्तने सदुग्धे चातासृग्बाह्यविद्रधिलक्षणः । नाडीनां सूक्ष्मरंध्रत्वात्स कन्यानां न जायते ॥ इत्यातंकदर्पणे निदानव्याख्यायां विद्रधिनिदानम् ॥ ४० ॥

व्रणचिकित्सासामान्याद्भाविव्रणत्वसंबंधतुल्यत्वाच्च व्रणशोथनिदानारंभः । तेषां प्राग्रूपेण संख्यामाह-एकेति । ऐकदेशे शोथ एतद्व्रणपूर्वरूपम्, स च षड्विधः-त्रिभिर्दोषैस्त्रयः, सन्निपातेनैकः, अन्य आगंतुकः, अभिघातजः, एवं षट्, षड्विध इति संख्याकथनं द्वंद्वजनिषेधार्थम् ॥ १ ॥ तेषां लक्षनिर्देशं दर्शयन्नाह-शोथा इति । प्रागुक्तैरिति । शोथनिदानोक्तैश्च, 'रसस्तनुत्वक्पारुष्यादिकैः' इत्यादि । सांप्रतं पक्वापक्वादिनिश्चय इत्यत्रादिशब्देन पच्यमानावस्थाया ग्रहणम् ॥ २ ॥ तत्रैव विशेषमाह-विषममिति । श्वयथोरेकदेशे अर्द्धे वा पित्तोत्थोऽचिरं शीघ्रं कफजश्चिरं चिरकालम् । रक्तागंतुजयोः पित्तवत् पित्तशोफवदचिरं पच्यते ॥ ३ ॥ आमशोथलक्षणमाह-मंदेति ।

दह्यते दहनेनेव क्षारेणेव च पच्यते ॥
पिपीलिकागणेनेव दश्यते छिद्यते तथा ॥ ५ ॥
भिद्यते चैव शस्त्रेण दण्डेनेव च ताडयते ॥
पीडयते पाणिनेवान्तः सूचीभिरिव तुद्यते ॥ ६ ॥
सोषाचोषो विवर्णः स्यादङ्गुल्येवावघट्यते ॥
आसने शयने स्थाने शान्तिं वृश्चिकविद्धवत् ॥ ७ ॥
न गच्छेदाततः शोथो भवेदाध्मातवस्तिवत् ॥
ज्वरस्तृष्णारुचिश्चैव पच्यमानस्य लक्षणम् ॥ ८ ॥
वेदनोपशमः शोथो लोहितोऽल्पो न चोन्नतः ॥
प्रादुर्भावो वलीनां च तोदः कण्डूर्मुहुर्मुहुः ॥ ९ ॥

---

मधुकोशव्याख्या ।

वदाचिरं पच्यते ॥ ३ ॥ ४ ॥ पच्यमानलक्षणमाह—दह्यत इत्यादि । पच्यमानशोथे पित्तलिङ्गान्येव भूयसा भवन्ति, विदाहस्य पित्तप्रकोपजत्वात्; विदाहश्चात्र दोषादीना-मेव तेन ज्वरतृष्णारुच्यादयोऽत्र पित्तलिङ्गानि । छिद्यत इति द्विधा क्रियत इव । भिद्यत इति विदार्यते । सोषाचोष इति उषा दाहः, चोषः पार्श्वस्थाग्निसंतापवद्व्यथा ताभ्यां सह वर्तते यः स तथा ॥ ५–८ ॥ पक्वलक्षणमाह—वेदनोपशम इत्यादि । दाहादिवेदनोपशान्तिः, विदाहोपशमेन पित्तस्याबलवत्त्वात् । तोदः कण्डूश्चात्र वात-कफलिङ्गम् । प्रादुर्भावो वलीनामिति मांसशैथिल्याद्वलीसंभवः । उपद्रवाणां प्रशम

आतङ्कदर्पणव्याख्या ।

मंदोष्मता स्वल्परागता, त्वक्सवर्णता त्वक्तुल्य एव वर्णः ॥ ४ ॥ व्रणशोफस्य पच्यमानावस्था-माह—दह्यत इति । पच्यमानशोफे पित्तलिंगान्येव भूयसा भवंति, विदाहः पित्तप्रकोपात्, ज्वर-तृष्णारुच्यादयोऽपि पित्तलिंगानि, अग्निना दह्यत इव, क्षारेण पच्यत इव, पिपीलिकाभिर्दश्यत इव, छिद्यते द्विधाक्रियत इव, शस्त्रेण भिद्यत इव, दंडेन ताडयत इव, अंतर्मध्ये हस्तेन पीडयत इव, सूचीभिर्विध्यत इव ॥ ५ ॥ ६ ॥ उषा एकदेशिको दाहः, चोषः पार्श्वस्थिताग्निसंतापवद्व्यथा ताभ्यां सह वर्तते यः स तथा, विवर्णः म्लानः, अंगुल्या इवावघट्यते चाल्यते । आसने तथा शयने तथा स्थाने ऊर्ध्वभवने वृश्चिकविद्धवत् शांतिं न गच्छेत् । आध्मातवस्तिवत् वायु-पूर्णवस्त्यादिमूत्रकोशवत्, श्वयथुः सततो भवति, त्वक्संकोचरहित इत्यर्थः । ज्वरतृष्णादयश्चो-पद्रवा भवंति ॥ ॥ ७ ॥ ८ ॥ पच्यमानव्रणशोफे पक्वावस्थस्य शोफस्य लक्षणमाह—वेदनोप-शम इति । विदाहोपशमेन पित्तस्याबलत्वात् । अलोहितः पांडुः धूसरो वा, यदुक्तं सुश्रुते—

उपद्रवाणां प्रशमो निम्नता स्फुटनं त्वचाम् ॥
वस्ताविवाम्बुसंचारः स्याच्छोथेऽङ्गुलिपीडिते ॥ १० ॥
पूयस्य पीडयत्येकमन्तमन्ते च पीडिते ॥
भक्ताकाङ्क्षा भवेच्चैतच्छोथानां पक्वलक्षणम् ॥ ११ ॥
नर्तेऽनिलाद्रुङ् विना च पित्तं पाकः कफं चापि विना न पूयः ॥
तस्माद्धि सर्वे परिपाककाले पचन्ति शोथास्त्रिभिरेव दोषैः॥१२॥

मधुकोशव्याख्या ।

इति पित्तकोपजनिता उषाचोषतृष्णारुच्यादयो रोगा एव उपद्रवास्तेषां प्रशमः । निम्नता स्वरूपतः, अङ्गुलिपीडनाद्वा । स्फुटनं त्वचामिति किंचित्त्वगवदारणम् । वस्ताविवेत्यादि ।-वस्तिश्चर्मपुटकं, पूयस्येत्यत्र 'सञ्चार' इति शेषः । अयमर्थः-वस्तौ यथाम्बुसंचारस्तथा शोथेऽङ्गुलीपीडिते सति पूयस्य संचारः । पीडयत्येकमन्तमन्ते च पीडित इति एकमन्तं देशम्, अन्ते अवयवे पीडिते पीडयति अवगाहते, 'पूय' इति शेषः ॥ ९-११ ॥ एकदोषारब्धेऽपि शोथे पाककाले सर्वदोषसंबन्धमाह-नर्तेऽनिलाद्रुगित्यादि । रुग्रुजा तोदादिरूपा । सुश्रुते-"त्रिभिरेतैः शोणितचतुर्थैः शरीरमिदं धार्यते-" इति । द्वितीयं दर्शनं शोणितप्राधान्याख्यापकमाश्रित्योक्तम्-"कालान्तरेणाभ्युदितं तु पित्तं कृत्वा वशे वातकफौ प्रसह्य । पचत्यतः शोणितमेव पाको मतः परेषां विदुषां द्वितीयः-" इति । अत्र दर्शने पित्तं विदाह-

आतङ्कदर्पणव्याख्या ।

"पांडुताल्पशोथा" इति, अल्पवेदना इति ईषत् पीडा वेदनोपशमः, इति । यदुक्तम्-उक्त वेदनापेक्षया । प्रादुर्भावो वलीनामिति मांसस्थौ शैथिल्याद्वलीसंभव इति । तोदः कंडुश्चात्र वातकफलिंगम् ॥ ९ ॥ उपद्रवाणामित्यादि । पित्तकोपजनिता उपाचोपतृष्णाऽऽरुच्यादय उपद्रवास्तेषामुपशमः, निम्नता स्वरूपतोऽगुलिनिपीडनाद्वा, स्फुटनं त्वचामिति । किंचित्त्वगवदरणम्, वस्ताविवेत्यादि-वस्तिश्चर्मपुटकम्, पूयस्येत्यत्र संचार इति शेषः । अयमर्थः वस्तौ यथांबुसंचारः, तथांऽगुलिपीडिते शोथेऽपि पूयस्य सञ्चारः । एकमंतं देशम्, अंते अवयवे पीडिते पीडयति अवगाहते पूय इति शेषः । भक्ताकांक्षेति । वेदनापगमादेव ॥ १० ॥ ११ ॥ एकदोषारब्धेऽपि शोथे पाककाले । सर्वदोषसंबंधमाह-नेति । अनिलाद्वातादृते रुङ् न भवति, पित्तं विना पाको न भवति, कफं विना पूयो न भवति, तस्माद्धेतोः सर्वे शोफाः परिपाककाले त्रिभिरेव दोषैः पाकं गच्छंति, रुक् रुजा तोदादिरूपा, शेषं सुगमम् । सुश्रुते-'त्रिभिरेतैः शोणितचतुर्थैः शरीरमिदं धार्य्यते' इति । द्वितीयं निदर्शनं शोणितप्राधान्याख्यापकमा-

**कालान्तरेणाभ्युदितं तु पित्तं कृत्वा वशे वातकफौ प्रसह्य ॥**
**पचत्यतः शोणितमेष पाको मतः परेषां विदुषां द्वितीयः ॥ १३ ॥**
**कक्षं समासाद्य यथैव वह्निर्वाय्वीरितः संदहति प्रसह्य ॥**
**तथैव पूयो ह्यविनिःसृतो हि मांसं शिराः स्नायु च खादतीह ॥ १४ ॥**
**आमं विदह्यमानं च सम्यक् पक्वं च यो भिषक् ॥**
**जानीयात्स भवेद्वैद्यः शेषास्तस्करवृत्तयः ॥ १५ ॥**

मधुकोशव्याख्या ।

कुपितं शोणितं दूष्यं कर्मभूतं पचति, वातकफौ वशे कृत्वा क्रोडीकृत्य, हीनार्थो वा वशेशब्दः, वातकफौ हीनौ कृत्वेत्यर्थः; शोणितं कर्मभूतं वा, तेन पचत्यनुकूलत्वाद्विवक्षितम्; पूर्वदर्शने कफात् पूयः, अत्र दर्शने शोणितात् पूय इति विशेषः । गम्भीरपाके शोथे सकलामपच्यमानलक्षणानुदयादज्ञायमाने लक्षणान्तरमुक्तं सुश्रुतेन । तद्यथा—"कफजेषु खलु शोथेषु गम्भीरगतित्वादभिघातजेषु वा केषुचिदसमस्तं पक्वलक्षणं दृष्ट्वा पक्वमपक्वमिति भिषङ्मोहमुपैति । यत्र हि त्वक्सवर्णता शीतशोथता अल्परुजता अश्मवद्घनता, न तत्र मोहमुपेयात्—" इति । अस्यार्थः—यदा रागदाहादिवेदनासमुदायानन्तरं त्वक्सवर्णतादीनि भवन्ति तदा न मोहमज्ञानतामुपेयात्, पक्वमेवेति निश्चिनुयात् । गदाधरेण तु त्वक्सवर्णतादीनि संशयहेतून्युक्तानि । यतस्तेन "गम्भीरपाकित्वादन्तः पाको बहिः पुनः त्वक्सावर्ण्यं, गम्भीरपाकित्वादेव बहिः शीतता, कफारब्धत्वान्मन्दरुजताऽश्मवच्च घनता" इत्यभिधाय "शेषं पक्वलक्षणैर्जानीयात्" इत्युक्तम् ॥ १२ ॥ १३ ॥ अविनिःसृतस्य पूयस्य दोषमाह—कक्षमित्यादि । कक्षं समासाद्येति कक्षं तृणादिगहनम् । शेषास्तस्करवृत्तय इति लोभ-

आतङ्कदर्पणव्याख्या ।

श्रित्योक्तं मतांतरमाह—कालांतरेणेति । पित्तप्रकोपप्रसंस्थानसंग्रहकालावधिना अभि समंततो भावेनाभ्युदितं कुपितं पित्तम्, पित्तमत्र दोषो ज्ञेयः, शोणितं दूष्यम्, तु—शब्दोऽत्र पुनरर्थे, वातकफौ वशे कृत्वा आत्मसात् कृत्वा, पाकक्रियायां पित्तस्य प्राधान्यात्, पूर्वमते कफात् पूयः, अत्र तु शोणितादिभिस्तात्पर्यार्थः ॥ १३ ॥ अनिर्हृत्य पूयस्य दोषं दृष्ट्वा तेन दर्शयन्नाह—कक्षमिति । कक्षं तृणादीनां समूहम्, स्नायुमूलाः शिराः, वाय्वीरितः वायुप्रेरितः । आमादिलक्षणज्ञाने गुणमज्ञाने च दोषं दर्शयन्नाह—आममिति । आममपक्वम्, विदह्यमानं पच्यमानम्, सम्यक् पक्वं च, यो भिषक् जानीयात्, स वैद्यो भवेत्, आयुर्वेदवित् स्यात्, दोषा अन्ये आमादिज्ञानवर्जिताः लोभमात्रप्रयुक्तत्वात्तस्करा एव ॥ पक्वापक्वयोश्छेदनाछेदनेन वैद्यदोषमाह—य इति । श्वपचश्चा-

१ एष श्लोकः केवलमधुकोशसहितपुस्तके नोपलभ्यते ।

यश्छिनत्त्याममज्ञानाद्यो वा पक्वमुपेक्षते ॥
श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ ॥ १६ ॥
इति श्रीमाधवकरविरचिते माधवनिदाने व्रणशोथनिदानं समाप्तम् ॥ ४१ ॥

---

# अथ शारीरव्रणनिदानम् ४२.

द्विधा व्रणः स विज्ञेयः शारीरागन्तुभेदतः ॥
दोषैराद्यस्तयोरन्यः शस्त्रादिक्षतसंभवः ॥ १ ॥
स्तब्धः कठिनसंस्पर्शो मन्दस्रावो महारुजः ॥
तुद्यते स्फुरति श्यावो व्रणो मारुतसंभवः ॥ २ ॥
तृष्णामोहज्वरक्लेददाहदुष्टयवदारणैः ॥
व्रणं पित्तकृतं विद्याद्गन्धैः स्रावैश्च पूतिकैः ॥ ३ ॥

---

मधुकोशव्याख्या ।

मात्रप्रयुक्तत्वात् तस्करा इव शेषाः श्वपचाविव चण्डालाविव मन्तव्यौ ज्ञातव्यौ ॥ १४–१६ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां व्रणशोथनिदानं समाप्तम् ॥ ४१ ॥

शोथानामनुपक्रान्तानां व्रणभावापत्तेर्व्रणनिदानमाह–द्विधेत्यादि । 'व्रण' गात्रविचूर्णने–इत्यस्माद्धातोर्व्रणस्य साधुत्वमुक्तम् । व्रणनिरुक्तिश्च सुश्रुतेन कृता । यथा—"वृणोति यस्माद्रूढेऽपि व्रणवास्तु न नश्यति । आदेहधारणाज्जन्तोर्व्रणस्तस्मान्निरुच्यते" इति । अन्य इत्यागन्तुः । आगन्तुव्रणे यद्यपि दोषस्तत्कालं तदात्वेन संचयकोपप्रसरणशाली विकारकरणसमर्थः कल्पयितुं शक्यते, तथापि सप्तरात्रं क्षतोष्म-

आतङ्कदर्पणव्याख्या ।

चाल:, स हि सर्वभक्षित्वात् श्वानमपि पचति, शेषं सुगमम् ॥ १४–१६ ॥ इत्यातंकदर्पणे निदानव्याख्यायां शोथव्रणनिदानम् ॥ ४१ ॥

व्रणशोफानामनुपक्रांतानां व्रणभावापत्तेर्व्रणनिदानम् । तेषां भेदमाह–द्विधेति । 'व्रण–गात्रविचूर्णने' इत्यस्माद्धातोः व्रणस्य निरुक्तिः । व्रणनिरुक्तिश्च सुश्रुते कृता, यथा–"वृणोति यस्माद्रूढेपि व्रणवास्तु न नश्यति । आदेहधारणाज्जंतोर्व्रणस्तस्मान्निरुच्यते" इति । शारीरागंतुभेदतो व्रणो द्विधा ज्ञेयः, तयोर्द्वयोर्मध्ये आद्यः शारीरः, स च दोषैः पवनकफपित्तशोणितसंनिपातैः स्यात्, अन्य इत्यागंतुः शस्त्रादिक्षतसंभवो भवति ॥१॥ वातिकमाह–स्तब्ध इति । स्तब्धः अचलः, तुद्यते शूलेनेव, श्यावः शाववर्णः ॥ २ ॥ पैत्तिकमाह–तृष्णेति । एतैर्लिंगैः पित्तकृतं जानीयात् ।

बहुपिच्छो गुरुः स्निग्धः स्तिमितो मन्दवेदनः ॥
पाण्डुवर्णोऽल्पसंक्लेदश्चिरपाकी कफव्रणः ॥ ४ ॥
रक्तो रक्तस्रुती रक्ताद्द्वित्रिजः स्यात्तदन्वयैः ॥
त्वङ्मांसजः सुखे देशे तरुणस्यानुपद्रवः ॥ ५ ॥
धीमतोऽभिनवः काले सुखे साध्यः सुखं व्रणः ॥
गुणैरन्यतमैर्हीनस्ततः कृच्छ्रो व्रणः स्मृतः ॥ ६ ॥

---

मधुकोशव्याख्या ।

निर्वापणाय मधुसर्पिरुपयोगात् शीतक्रियाविधानाच्च निजव्रणविलक्षणचिकित्सार्थं व्यपदिश्यते ॥ १-४ ॥ रक्तस्यैकैकस्मिन् दोषे द्वन्द्वे च प्रसरमाह—'द्वित्रिजः स्यात्तदन्वयैरित्यादि । रक्तान्वयैः एकैकदोषैर्द्वन्द्वैश्च; रक्तान्वितैरेकैकदोषैर्द्विजो व्रणः, रक्तान्वितैर्द्वन्द्वत्रयैस्त्रिजः । एवं दोषत्रयेऽपि रक्तसंबन्ध ऊहनीयः । एवं पञ्चदशधा प्रसरो दोषाणामुपगृहीतो भवति । अथवायमर्थः—तदन्वयैर्दोषद्वन्द्वत्रयान्वयैस्तेन दोषद्वयान्वयेन द्विजो द्वन्द्वजो व्रणः, दोषत्रयान्वयेन त्रिजः सन्निपातजः ॥ साध्यत्वादिकमाह—त्वगित्यादि । सुखे देश इति मर्मरहिते देहावयवे । अनुपद्रव इति ज्वरतृष्णाद्युपद्रवरहितः धीमत इति हिताहितज्ञस्य । काले सुखे इति हेमन्ते शिशिरे

आतङ्कदर्पणव्याख्या ।

क्लेद आर्द्रता, दाहदुष्टिः दाहवान्, अवदारणं त्वक्स्फोटनम्, पूतिकैर्दुर्गन्धैः ॥ ३ ॥ कफजमाह—बह्विति । बहुपिच्छः भूयः पिच्छः पिच्छिलः, स्तिमितो निश्चलः, अल्पसंक्लेदः ईषदार्द्रः ॥ ४ ॥ रक्तस्यैकस्मिन् दोषे द्वंद्वे च प्रसरमाह—रक्त इति । रक्तवर्णो भवति, रक्तस्रावो वा । द्वित्रिजः स्यात्तदन्वयैरिति रक्तानुगैः पृथग्दोषैः द्वंद्वैश्च, तेन पृथग्दोषैः सरक्तैः द्विजः, द्वंद्वजैः सरक्तैस्त्रिजः, एवं त्रिदोषजेपि रक्तः संबंधनीयः । तद्यथा—वातजः, पित्तजः, श्लेष्मजः, संघातजः, रक्तजः, वातपित्तजः, श्लेष्मजः, पित्तश्लेष्मजः एवमष्टौ, शोणितसंबंधात् सप्त, वातशोणितसंबंधात्तज्जः, श्लेष्मः पित्तशोणितजः, श्लेष्मशोणितजः, वातपित्तशोणितजः, वातश्लेष्मशोणितजः, वातपित्तश्लेष्मशोणितजः, सन्निपातक्षतजः इति । एवं दोषाणां भेदेन पंचदशधा प्रसर उक्तः, अथवा तदन्वयैः दोषत्रयान्वयैः, तेन दोषत्रयान्वयेन द्विजः द्वंद्वजो व्रणः, दोषत्रयान्वयेन त्रिजः सान्निपातिको व्रण इत्यर्थः । व्रणस्य सुखसाध्यत्वमाह—त्वगिति । त्वङ्मांसजः । सुखे देशे मर्मरहिते देहावयवे, अनुपद्रवः ज्वरतृष्णाद्युपद्रवरहितः, धीमतः अतरलबुद्धेः, सुखे काले हेमंते शिशिरे च । व्रणस्य कष्टसाध्यत्वमाह—गुणैरिति । प्रागुक्तानां गुणानां मध्ये अन्यतमैर्गुणैर्हीनः रहितः, त्वग्मांसजादीनामित्यर्थः ।

सर्वैर्विहीनो विज्ञेयस्त्वसाध्यो भूर्युपद्रवः ॥
पूतिः पूयातिदुष्टासृक्स्राव्युत्सङ्गी चिरस्थितिः ॥
दुष्टो व्रणोऽतिगन्धादिः शुद्धलिङ्गविपर्ययः ॥ ७ ॥
जिह्वातलाभोऽतिमृदुः श्लक्ष्णः स्निग्धोऽल्पवेदनः ॥
सुव्यवस्थो निरास्रावः शुद्धो व्रण इति स्मृतः ॥ ८ ॥

मधुकोशव्याख्या ।

च । अन्यतमैरिति उक्तानां गुणानां मध्ये एकतमैर्गुणैः ॥ ५ ॥ ६ ॥ दुष्टव्रणलिङ्गमाह—पूतिरित्यादि । पूयातिदुष्टासृक्स्रावीति पूययुक्तमतिदुष्टं रक्तं सततं स्रवतीत्यर्थः । उत्सङ्गी कोटरवान् । चिरस्थितिरित्यनेन बहुलदोषसंबन्धं दर्शयति । तथा चोक्तम्—"अनात्मवतामज्ञैश्चोपक्रान्ता व्रणाः प्रदुष्यन्ति बृद्धत्वाद्दोषाणाम्" इति । दुष्टव्रण इत्यत्र परिभाषित इति शेषः । अतिगन्धादिरिति आदिशब्देन वर्णस्राववेदनाकृतयो गृहीताः, अतिशब्देन च विशिष्यन्ते । शुद्धलिङ्गविपर्यय इति वक्ष्यमाणशुद्धलिङ्गविपरीतः; पूतित्वादियोगादेव । 'पूतिपूयातिदुष्टासृक्स्रावि' इति क्वचित् पाठे पूतिशब्दः पूयदुष्टासृग्विशेषणम् ॥ ७ ॥ शुद्धव्रणलक्षणमाह-जिह्वेत्यादि । जिह्वातलाभ इति जिह्वातलवदाभा प्रभा यस्य स तथा; तलशब्दः स्वरूपवचनः । जिह्वातलाभशब्दश्चात्र मृदुश्लक्ष्णस्निग्धशब्दैः प्रत्येकमभिसंबध्यते; तेन जिह्वातलाभो मृदुः श्लक्ष्णः स्निग्धश्चेत्याहुः । सुव्यवस्थित इति उत्सन्नोत्साङ्गित्वरहितः । निरास्राव इति दोषकृतस्रावरहितः । चरके तु पठ्यते—"नातिरक्तो नातिपाण्डुर्नातिस्रावो न चातिरुक् । न चोत्सन्नो न चोत्सङ्गी शुद्धो रोप्यः परं व्रणः" इति, तद्दर्शनादत्र निरास्रावत्वं दोषकृतस्रावहीनत्वम् । विगतवेदनत्वं च वाताद्युक्तवेदनारहितत्वम् । व्रणस्रावकृतवेदनायुक्तत्वं पुनरस्त्येव । अत एव रूढलिङ्गे अरुजमित्युक्तम् ॥ ८ ॥

आतङ्कदर्पणव्याख्या ।

स व्रण' कष्टसाध्यः ॥ ५ ॥ ६ ॥ असाध्यमाह—सर्वैरिति । सर्वैस्त्वग्मांसजादिकैर्गुणैः रहितः [ निरुपक्रमः अनुपक्रांतः ] दुष्टव्रणलक्षणमाह—पूतिरिति । पूतिः शटितः, "पूतिपूयातिदुष्टासृक्स्रावी" इति क्वचित्पाठः, तत्र पूतिशब्दः पूयदुष्टासृग्विशेषणम्, पूययुक्तमतिदुष्टरक्तं सततं स्रवंतीत्यर्थः । चिरस्थितिरित्यनेन बहुदोषसंबंधं दर्शयति । तथा चोक्तम्—"अनात्मवतामज्ञैश्चोपक्रांता व्रणा वृद्धत्वाद्दोषाणां प्रदुष्यंति" । दुष्टे व्रण इति कथितः अतिगंधादिः, आदिशब्देन वर्णस्राववेदनाकृतयो गृह्यंते ॥ शुद्धलिंगविपर्यय इति । वक्ष्यमाणशुद्धलक्षणविपरीतम् ॥ ७ ॥ शुद्धव्रणलक्षणमाह—जिह्वेति । जिह्वातलवदाभा प्रभा यस्य स तथा । तलशब्दः स्वरूपवचन, जिह्वातलशब्दश्चात्र मृदुश्लक्ष्णस्निग्धशब्दैः सह प्रत्येकमभिसंबध्यते; तेन जिह्वातलाभो मृदुः श्लक्ष्णः स्निग्धश्चेति, प्राहुः । सुव्यवस्थ इति शोभनाकृतिः, तेन उत्सन्नोत्संगित्वरहितः,

१ "भूर्युपद्रवः" इत्यत्र "निरुपक्रमः" इति पाठाभिप्रायेण । "सर्वैर्विहीनोऽसाध्यस्तु तथैवोपद्रवान्वितः" इत्यपि पाठान्तरम् ।

कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ॥
स्थिराश्च पिडकावन्तो रोहतीति तमादिशेत् ॥ ९ ॥
रूढवर्त्मानमग्रन्थिमशूनमरुजं व्रणम् ॥
त्वक्सवर्णं समतलं सम्यग्रूढं विनिर्दिशेत् ॥ १० ॥
कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ॥
व्रणाः कृच्छ्रेण सिध्यन्ति येषां चापि व्रणे व्रणाः ॥ ११ ॥
वसां मेदोऽथ मज्जानं मस्तुलुङ्गं च यः स्रवेत् ॥
आगन्तुजो व्रणः सिध्येन्न सिध्येद्दोषसंभवः ॥ १२ ॥

---

मधुकोशव्याख्या।

रुह्यमानलक्षणमाह—कपोतेत्यादि। कपोतवर्णप्रतिमा इति पाण्डुधूसराः। स्थिराः अदारुणाः। चिपिटिकावर्ण इति पाठान्तरे, चिपिटिका मांसचेली तद्वर्णाः ॥ ९ ॥ सम्यग्रूढलक्षणमाह—रूढवर्त्मानमित्यादि। रूढवर्त्मानमिति वर्त्म व्रणमार्गो व्रणवास्तु रूढो यस्य तम्। अन्तःपूयाभावादशूनमरुजं च। त्वक्सवर्णं त्वचा समानवर्णम्। समतलमिति समं तलेन जिह्वातलेन करतलेन वा; अग्रन्थिमित्यनेन उपरि उच्छूनताया निषेधः, समतलेन त्वधोनिम्नताया निषेधः ॥ १० ॥ व्याधिविशेषेण व्रणस्य कृच्छ्रसाध्यत्वमाह—कुष्ठिनामित्यादि। कुष्ठविशेषेणात्यन्तदोषदूषितरक्तादिदूष्यत्वेन सर्वदा दुष्टिरधिकेति कृच्छ्रसाध्यत्वम्। विषजुष्टानामिति दूषीविषार्तानाम्। शोषे मधुमेहे च धातुक्षयात्, व्रणे च रक्तस्रावाच्चाहारसंयमना-दधिका दुष्टिः ॥ ११ ॥ वसां मेदोऽथ मज्जानं मस्तुलुङ्गं च यः स्रवेदिति मज्जा

आतङ्कदर्पणव्याख्या।

किंतु सम इत्यर्थः। निरास्राव इति दोषकृतास्रावहीनः। यदुक्तं चरके—"नातिरक्तो नातिपांडुर्नातिश्यावो न चातिरुक्। न चोत्सन्नो न चोत्संगी शुद्धो रोप्यः परं व्रणः ॥" इति दर्शनात् ॥ ८ ॥ रोहणोन्मुखव्रणलक्षणमाह—कपोतेति। यस्य व्रणस्यांताः प्रांताः कपोतवर्णप्रतिमाः, पांडुधूसरा इत्यर्थः। क्लेदेन वर्जिताः, स्थिरा अचलाः कठिना इत्यर्थः। "चिपिटिकावंतः" इति पाठे चिपिटिका मांसचेली चर्मवलीति यावत्। 'करोचडी' इति लोके, ता विद्यंते येषां ते चिपिटिकावंतः ॥ ९ ॥ रूढव्रणलक्षणमाह—रूढवर्त्मानमिति। वर्त्म व्रणमार्गो व्रणवास्तु स रूढो यस्य तम्, अग्रंथिं ग्रंथिरहितम्। एतेन उपरि उत्सन्नताया निषेधः। अशूनं श्वयथुरहितम्, अरुजं पीडारहितम्, त्वक्सवर्णं त्वचा समानवर्णम्। समतलमिति। समं तलेन जिह्वातलेन करतलेन वा, समतलशब्देन त्वधो निम्नताया निषेधः ॥ १० ॥ व्याधिविशेषेण व्रणस्य कृच्छ्रसाध्यत्वमाह—कुष्ठिनामिति। कुष्ठविशेषेणात्यंतदोषदूषितरक्तादिदूष्यत्वेन सर्वदा दुष्टिरधिकेति कृच्छ्रत्वम्। विषजुष्टानां दूषीविषार्तानाम्, शोषे मधुमेहे च धातुक्षयाद् व्रणे रक्तस्रावाच्चाहारसंयमाच्चाधिकदुष्टिः ॥ ११ ॥ पुनः कृच्छ्रसाध्यत्वमाह—वसेति। वसा मांसस्नेहः

मद्यागुर्वाज्यसुमनःपद्मचन्दनचम्पकैः ॥
सगन्धा दिव्यगन्धाश्च मुमूर्षूणां व्रणाः स्मृताः ॥ १३ ॥
ये च मर्मस्वसंभूता भवन्त्यत्यर्थवेदनाः ॥
दह्यन्ते चान्तरत्यर्थं बहिः शीताश्च ये व्रणाः ॥ १४ ॥
दह्यन्ते बहिरत्यर्थं भवन्त्यन्तश्च शीतलाः ॥
प्राणमांसक्षयश्वासकासारोचकपीडिताः ॥ १५ ॥
प्रवृद्धपूयरुधिरा व्रणा येषां च मर्मसु ॥
क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणाः ॥
वर्जयेदपि तान् वैद्यः संरक्षन्नात्मनो यशः ॥ १६ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने शारीरव्रणनिदानं समाप्तम् ॥ ४२ ॥

---

मधुकोशव्याख्या ।

अस्थिस्नेहः, मस्तुलुङ्गं घृतिका । न सिध्येद्दोषसंभव इति दोषैरतिदूषितानां वसादीनां स्रावस्य बहुव्यापत्तिकरत्वात् ॥ १२ ॥ रिष्टरूपां गन्धविकृतिमाह-मद्यागुर्वाज्येत्यादि । सुमना जाती, सगन्धाः समानगन्धाः, दिव्यगन्धा अपरिकल्पितोद्भूतपारिजातादिगन्धाः ॥ १३ ॥ ये च मर्मस्वसंभूता इति मर्मसु न जाता अपि भृशवेदनाः, मर्मजातत्वेन हि भृशवेदनावत्त्वं युक्तम् ॥ १४ ॥ व्रणमांसक्षय इति प्राणक्षयेण शक्तिक्षयः, मांसक्षयेण चोपचयक्षयः । अनुक्तमप्यशेषं रिष्टं संगृह्णन्नाह-क्रियाभिरित्यादि ॥ १५ ॥ १६ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां शारीरव्रणनिदानं समाप्तम् ॥ ४२ ॥

आतङ्कदर्पणव्याख्या ।

मज्जाऽस्थिस्नेहः, मस्तुलुंगो मस्तकाभ्यंतरस्नेहः, वसादीनां स्रवादागंतुजे व्रणे कृच्छ्रत्वं वा, किंतु दोषजे व्रणेऽकृच्छ्रत्वम् । दोषैरतिशयदूषितानां रसादीनां स्रावस्य बहुव्यापत्तिकरत्वात् ॥ १२ ॥ रिष्टरूपां गंधविकृतिमाह-मद्येति । मद्यं प्रसिद्धम् । अगुरु गन्धद्रव्यम् । आज्यं घृतम्, सुमना जाती, पद्मं कमलम्, मद्यादिभिः समानगंधाः ॥ १३ ॥ पुनश्चासाध्यत्वमाह-य इति । मर्मसु न जाता अपि भृशवेदनाः स्युः, मर्मजा तत्त्वेन हि भृशवेदनत्वयुक्तम् । ये बहिः शीतलाः, अंतर्मध्यं अत्यर्थं दह्यते ॥ १४ ॥ पुनश्चासाध्यलिंगत्वमाह-प्राणेति । प्राणक्षयः शक्तिक्षयः, मांसक्षयः उपचयक्षयः, मर्मसु पायुनाभिहृदयादिषु ॥ १५ ॥ पुनश्चासाध्यत्वमाह-क्रियाभिरिति । पादचतुष्टयान्विताभिः ॥ १६ ॥ इत्यातंकदर्पणे निदानव्याख्यायां शारीरव्रणनिदानम् ॥ ४२ ॥

# अथसद्योव्रणनिदानम् ४३.

नानाधारमुखैः शस्त्रैर्नानास्थाननिपातितैः ॥
भवन्ति नानाकृतयो व्रणास्तांस्तान्निबोध मे ॥ १ ॥
छिन्नं भिन्नं तथा विद्धं क्षतं पिच्चितमेव च ॥
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥ २ ॥
तिर्यक्छिन्न ऋजुर्वापि यो व्रणस्त्वायतो भवेत् ॥
गात्रस्य पातनं तद्धि छिन्नमित्यभिधीयते ॥ ३ ॥
शक्तिकुन्तेषुखड्गाग्रविषाणैराशयो हतः ॥
यत्किंचित् प्रस्रवेत्तद्धि भिन्नलक्षणमुच्यते ॥ ४ ॥

मधुकोशव्याख्या ।

शारीरव्रणमभिधायागन्तुव्रणमाह—नानाधारमुखैरित्यादि । नानाधारा मुखानि च येषां तानि, तथा स्थानविशेषोऽपि शस्त्रनिपाततुल्यत्वेनाकृतिविशेषे हेतुरित्यत उक्तं—नानास्थाननिपातितैरिति ॥ १ ॥ २ ॥ छिन्नलक्षणमाह—तिर्यगित्यादि। तिर्यगिति तिर्यग्व्यवस्थितः । छिन्नः छेदसंपन्नः । ऋजुरवक्रः । गात्रस्य पातनमिति गात्रावयवस्य तदेकदेशरूपस्य वा गात्रस्य पातनम् ॥ ३ ॥ भिन्नलक्षणमाह—शक्तीत्यादि । विषाणं दन्तः शृङ्गं च । एतद्भिन्नलक्षणं पारिभाषिकं, तेन व्यध एवाशयदेशे भेद उच्यते, आशयदेशरहिते तु व्यधः । यत्किंचिदित्यादि । यस्य मूत्ररुधिरादेर्य आशयो भिन्नः स तत् प्रस्रवेत्, तेन वस्तिर्भिन्नो मूत्रं, रुधिराशयो रुधिरमिति॥४॥

आतङ्कदर्पणव्याख्या ।

अथ शारीरव्रणमभिधायागन्तुमाह– नानेति । नानाधारामुखैः शस्त्रैः, नानास्थाननिपातितैः, एभिर्नानाकृतयो व्रणा भवंति, मे मत्सकाशात्तान् व्रणान् निबोध जानीहि ॥ १ ॥ तत्षाड्विध्यमाह—छिन्नमिति । एवं छिन्नादिभेदेन आगंतवः षड्विधा भवंति ॥ २ ॥ तत्र छिन्नलक्षणमाह—तिर्यगिति । यो व्रणस्तिर्यक् छिन्नः, अथवा ऋजुः छिन्नः सन्नायतो भवेत्, तिर्यगिति तिर्यग् व्यवस्थितः छिन्नः छेदसंपन्नः । "तिरश्चीनः" इति पाठांतरे स एवार्थः, ऋजुरवक्रः, अनयोर्द्वयोरप्यायत इति विशेषण । अत्र पातनं निर्दिशन्नाह—गात्रस्य पातनमिति । गात्रस्यावयवस्य तदेकदेशरूपस्य वा, गात्रस्य पातनम् । डल्हनस्तु व्याचष्टे—शस्त्रादिप्रहारेण गात्रस्य हस्तादेः पातनम्, चकारादपातनं च ॥ ३ ॥ भिन्नलक्षणमाह—शक्तीति । शक्त्यादिभिराशयो हतः सन् यत्किंचित् प्रस्रवेत्, तद्भिन्नलक्षणमुच्यते । कुंतो भल्लः, विषाणं दंतः शृंगं च, एतद् भिन्नलक्षणं पारिभाषिकम्, तेन व्यध एवाशयदेशे भेद उच्यते, आशयरहिते तु देशे व्यधः । यत्किं-

स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च ॥
हृदुण्डुकः फुफ्फुसश्च कोष्ठ इत्यभिधीयते ॥ ५ ॥
तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते ॥
मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति ॥ ६ ॥
मूर्च्छा श्वासस्तृषाध्मानमभक्तच्छन्द एव च ॥
विण्मूत्रवातसङ्गश्च स्वेदास्रावोऽक्षिरक्तता ॥ ७ ॥
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च ॥
हृच्छूलं पार्श्वयोश्चापि विशेषं चात्र मे शृणु ॥ ८ ॥

मधुकोशव्याख्या ।

यत्र भूयसाऽऽशयानां स्थाने भेदव्यपदेशस्तमाह—स्थानानीत्यादि । आमस्य स्थानमामाशयः, अग्नेः पच्यमानाशयः, पक्वस्य पक्वाशयः, मूत्रस्य वस्तिः रुधिरस्य यकृत्प्लीहानौ । हृत् हृदयम् । उण्डुक इक्षुरसपाकमलवद्यः शोणितमलस्तज्ज उण्डुकः, स चान्त्रदेशे व्यवस्थितः पुरीषाधानमिति । फुफ्फुस इति हृदयस्य वामपार्श्वे रक्ताधारः फुस्फुस इति ख्यातः ॥ ५ ॥ मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छतीति वस्त्यादौ भिन्ने मेहनगुदाभ्यां रक्तं निःसरति, आमाशयादिभेदे तु मुखघ्राणाभ्यां रक्तनिर्गमः । स्वेदास्राव इति स्वेदस्यात्यन्तस्रुतिः ॥ ६ ॥ ७ ॥ पार्श्वयोश्चापीति शूल-

आतङ्कदर्पणव्याख्या ।

चित् प्रस्रवेत् इति किमपि निर्देष्टव्यमित्यर्थः । यस्य मूत्ररुधिरादेर्यश्चाशयो भिन्नः स तत्, प्रस्रवेत्, तेन वस्तिर्भिन्नो मूत्रम्, उदरं मेदः, पुरीषाशयः पुरीषम्, रुधिराशयो रुधिरमिति ॥ ४ ॥ यत्र भूयसाऽऽशयानां स्थानभेदव्यपदेशस्तमाह—स्थानानीति । स्थानशब्दः आमादिभिः प्रत्येकं संबध्यते, आमस्य स्थानमामाशयः, अग्नेः पच्यमानाशयः पक्वस्यः पक्वाशयः, मूत्रस्य वस्तिः, रुधिरस्य यकृत्प्लीहानौ, हृत् हृदयम्, उण्डुक इक्षुरसपाकमलवच्छोणितमलः, तज्ज उण्डुकः, स चांत्रदेशे व्यवस्थितः पुरीषाधानम्, फुफ्फुस इति हृदयस्य वामपार्श्वे फुस्फुस इति ख्यातः । आमादीनां स्थानानि कोष्ठ इत्यभिधीयते ॥ ५ ॥ भिन्नकोष्ठस्य सामान्यलिंगमाह—तस्मिन्निति । तत्र वस्त्यादौ भिन्ने मेहनगुदाभ्यां रक्तं निःसरति, आमाशयादिभेदे तु मुखघ्राणाभ्यां रक्तनिर्गमः, ज्वरमूर्च्छादय उपद्रवा भवंति विण्मूत्रवातानां संगोऽप्रवृत्तिः, स्वेदास्रावः स्वेदस्यास्रुतिः ॥ ६ ॥ ७ ॥ मुखस्य लोहगंधता, हृत्पार्श्वयोः शूलमिति संबंधः । अत्रापि मे मत्तो विशाष शृणु ॥ ८ ॥

१ एतदादिषु "द्वन्द्वश्च प्राणि०" इति शास्त्राप्रवृत्तिश्चिन्त्या ।

आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि ॥
आध्मानमतिमात्रं च शूलं च भृशदारुणम् ॥ ९ ॥
पक्काशयगते चापि रुजा गौरवमेव च ॥
अधःकाये विशेषेण शीतता च भवेदिह ॥ १० ॥
सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयं विना ॥
उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत् ॥ ११ ॥
नातिच्छिन्नं नातिभिन्नमुभयोर्लक्षणान्वितम् ॥
विषमं व्रणमङ्गे यत्तत्क्षतं त्वभिधीयते ॥ १२ ॥

---

मधुकोशव्याख्या ।

मिति संबन्धः । मे इत्यव्ययं मत्त इत्यर्थः ॥ ८ ॥ आमाशयस्थमिति आध्मानं रक्तावततत्वाद्वायोः ॥ ९ ॥ रुजा शूलम् । गौरवं रक्तबहुत्वात् । अधःकाये विशेषेण शीततेति व्याधिप्रभावात् ॥ १० ॥ विद्धलक्षणमाह—सूक्ष्मास्यशल्येत्यादि । आशयं विनेति उक्तामाद्याशयं विना । उत्तुण्डितम् अनिर्गतशल्योपलक्षणं, तेनानुत्तुण्डितमुत्तुण्डितं च विद्धं गृह्यते, निर्गतेन च निर्गतमुखं विद्धं सर्वथा न निर्गतं च गृह्यते, तेन तन्त्रान्तरे "विद्धमुत्तुण्डितमनुत्तुण्डितं भिन्नं निर्भिन्नम्" इति यच्चतुःप्रकारमभिहितं तत् सर्वं संगृहीतम् ॥ ११ ॥ क्षतमाह—नातिच्छिन्नमिति । नातिच्छिन्नं नावगाढच्छेदम् । नातिभिन्नमिति नातिविदीर्णाशयम् । उभयोर्लक्षणान्वितमिति स्तोकच्छेदस्तोकावदरणयोगादुभयलक्षणयुक्तम । विषमं व्रणमङ्गे यदिति अङ्गवै-

आतङ्कदर्पणव्याख्या ।

रक्तपूर्णलक्षणभेदमाह—आमाशयस्थ इति । अतिमात्रमाध्मानम् । आध्मातवस्तिरेवोदरपूर्णता, दारुणं मारणात्मकम् ॥ ९ ॥ पक्वाशयस्थितस्य रक्तस्य लक्षणमाह—पक्वेति । रुजा शूलम् । गौरवमिति नामरधो बोद्धव्यम् । अधःकाये विशेषेण शीततेति व्याधिप्रभावात् ॥ १० ॥ विद्धलक्षणमाह—सूक्ष्मेति । आशयं विना सूक्ष्मास्येन शल्येन यद् अंगमभिहतम् । उत्तुण्डितम् उन्नमितं त्वङ् मांसम् । ईषद्दृष्टमुखं वा निर्गतं निर्गतशल्यम्, उत्तुंडितमनिर्गतशल्योपलक्षणम् । तेनानुत्तुंडितं च विद्धं गृह्यते, निर्गतेन च विनिर्गतमुखं विद्धं सर्वदा निर्गतं च गृह्यते, तेन तंत्रांतरे विद्धमुत्तुंडितमनुत्तुण्डितं भिन्नं निर्भिन्नम् इति । चतुःप्रकारमभिहितम् । तत्संगृहीतम् ॥ ११ ॥ क्षतलक्षणमाह—नेति । नातिच्छिन्नमिति नावगाढच्छिन्नम्, नातिभिन्नमिति नातिविदीर्णाशयम् । उभयोरिति छिन्नभिन्नयोरित्यर्थः । तेन स्तोकच्छेदस्तोकावदरणयोगादुभयलक्षणयुक्तम् । विषमं

प्रहारपीडनाभ्यां तु यदङ्गं पृथुतां गतम् ॥
सास्थि तत्पिच्चितं विद्यान्मज्जरक्तपरिप्लुतम् ॥ १३ ॥
घर्षणादभिघाताद्वा यदङ्गं विगतत्वचम् ॥
उषास्रावान्वितं तच्च घृष्टमित्यभिधीयते ॥ १४ ॥
श्यावं सशोथं पिडकाचितं च मुहुर्मुहुः शोणितवाहिनं च ॥
मृदूद्गतं बुद्बुदतुल्यमांसं व्रणं सशल्यं सरुजं वदन्ति ॥ १५ ॥
त्वचोऽतीत्य शिरादीनि भित्त्वा वा परिहृत्य वा ॥
कोष्ठे प्रतिष्ठितं शल्यं कुर्यादुक्तानुपद्रवान् ॥ १६ ॥

---

मधुकोशव्याख्या ।

षम्यकरं व्रणं यत्तत् क्षतम् ॥ १२ ॥ पिच्चितलक्षणमाह—प्रहारेत्यादिना । प्रहारो मुद्गरादिना, पीडनं कपटादिना पृथुतामिति चिप्पिटताम् । मज्जरक्तपरिप्लुत-मित्यनेन व्रणभावात् मज्जरक्तागमं दर्शयति । तेन यत् व्रणं पिच्चितं तद्भग्नस्य तथा सद्योव्रणस्य च चिकित्साविषयम् ॥ १३ ॥ घृष्टलक्षणमाह—घर्षणादित्यादि । घर्षणात् कर्कशवस्त्रादिना । विगतत्वचामिति पाठं त्यक्त्वा विगतत्वचेति पाठः साधुः, विगतत्वचोपलक्षितमङ्गम् । उषा ऊष्मानिर्गमवद्व्यथा ॥ १४ ॥ १५ ॥ कोष्ठभेदमाह—त्वच इत्यादि । त्वच इति सप्त त्वचः । शिरादीनीति मांसस्नाय्व-स्थिसन्धीनि । परिहृत्य वेति परिहारपक्षेऽपि कोष्ठभेदस्य संगतत्वात्; शिराव्यधलिङ्गं चात्रैव "सुरेन्द्रगोपप्रतिमम्" इत्यादिना व्यक्तीभविष्यति । उक्तानिति प्रनष्टशल्य-विज्ञानीये । तत्र ह्युक्तं—"काष्ठगत त्वाटोपानाहौ मूत्रपुरीषाहारदर्शनं च व्रणमुखाद्ध-

आतङ्कदर्पणव्याख्या ।

व्रणमंगे इति । अंगे वैषम्यकरं व्रणं यत्तत्क्षतमिति ॥ १२ ॥ पिच्चितलक्षणमाह--प्रहारो मुद्ग-रादिना,पीडनं कफादिना, पृथुतां विपुलताम्, सास्थि अस्थिखंडान्वितम्, मज्जरक्तपरिप्लुतमित्यनेन व्रणभावान्मज्जरक्तागमं दर्शयति, तेन यद्व्रणं पिच्चितं तद् भग्नस्य तथा सद्योव्रणस्य चिकित्साविष-यम् ॥ १३ ॥ घृष्टलक्षणमाह—घर्षणादिति । यदंगं घर्षणात् कर्षणात् कर्कशवस्त्रादिना अभि-घाताद्वा विगतत्वचं भवति, अन्ये "विगतत्वचा" इति पाठं पठंति,विगतत्वचालक्षितमंगम् । उषा ऊष्मानिर्गमवद्व्यथा ॥ १४ ॥ शल्यव्रणलक्षणमाह—श्यावमिति । श्यावं शावर्वणम् । मुहुर्वारंवा-रम्, शोणितस्रावयुक्तम्,मृदु कोमलम्, उद्गतं तुम्ब्याकारावस्थितबुद्बुदेन सदृशं मांसं यस्य तम्, सरुजं पीडायुक्तम् ॥ १५ ॥ कोष्ठभेदमाह—त्वच इति । सप्त त्वचः, शिरादीनि शिरामांसस्ना-य्वस्थिसंधीनि भित्त्वा, परिहृत्य वेति संत्यज्य वा । उक्तानिति प्रनष्टशल्यविज्ञानीये । तत्र-

तत्रान्तर्लोहितं पाण्डुशीतपादकराननम् ॥
शीतोच्छ्वासं रक्तनेत्रमानद्धं च विवर्जयेत् ॥ १७ ॥
भ्रमः प्रलापः पतनं प्रमोहो विचेष्टनं ग्लानिरथोष्णता च ॥
स्रस्ताङ्गता मूर्च्छनमूर्ध्ववातस्तीव्रा रुजा वातकृताश्च तास्ताः १८
मांसोदकाभं रुधिरं च गच्छेत् सर्वेन्द्रियार्थोपरमस्तथैव ॥
दशार्धसंख्येष्वथ विक्षतेषु सामान्यतो मर्मसु लिङ्गमुक्तम्॥१९॥
सुरेन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवेत्तत्क्षतजश्च वायुः ॥
करोति रोगान्विविधान्यथोक्ता ञ्छिरासु विद्धास्वथवा क्षतासु२०

---

मधुकोशव्याख्या।

वति" इति ॥ १६ ॥ असाध्यकोष्ठभेदलिङ्गमाह—तत्रेत्यादि। तत्र कोष्ठे। अन्तर्लोहितमिति अभ्यन्तरस्थितरक्तम्, अनिःसृतरक्तमिति यावत्। आनद्धमित्यानाहवन्तम् ॥ १७ ॥ मांसशिरास्नाय्वस्थिसन्धिमर्मसु पञ्चसु क्षतेषु सामान्यलिङ्गमाह—भ्रम इत्यादि। विचेष्टनं विरुद्धचेष्टनं करचरणादिक्षेपादिकम्। ग्लानिर्बलक्षयः। स्रस्ताङ्गता अङ्गसन्धिविस्रंसवद्व्यथा। मूर्च्छनमिन्द्रियमोहः। इन्द्रियार्थोपरम इन्द्रियाणां स्वविषयेषु रूपादिषु उपरमो ग्रहणाशक्तिः। दशार्धसंख्येषु पञ्चसु॥१८॥१९॥ शिरादयो मर्मरूपा अमर्मरूपाश्च सन्ति, तत्र पूर्वं मर्मरहितानां शिरादीनां विद्धलिङ्गमाह—सुरेन्द्रगोपेत्यादि। यथोक्तानिति शोणितवर्णनीयोक्तान्। तत्र चोक्तं—"तद्‌तिप्रवृत्तं शिरोऽभितापमान्ध्यमाक्षेपादींश्च करोति" इति। विद्धासु बाणादिना।

आतंकदर्पणव्याख्या।

ह्युक्तम्, "कोष्ठगते त्वाटोपानाहौ मूत्रपुरीषाहारदर्शनं च व्रणमुखाद्भवति" इति॥ १६ ॥ असाध्यकोष्ठांतर्भेदलिंगमाह—तत्रेति। कोष्ठे अंतर्लोहितम्। अभ्यंतरस्थितरक्तम्, अनिःसृतरक्तमिति। पांडूनि शीतानि पादकराननानि यस्य तं, तथा। आनद्धम् आनाहयुक्तम् ॥ १७ ॥ मांससंधिशिरास्नाय्वस्थिमर्मसु पंचसु क्षतेषु सामान्यलिंगमाह—भ्रम इति। भ्रमश्चक्रारूढस्येव, पतनं भूमौ, प्रमोहः मनोमोहः, विचेष्टनं विरुद्धचेष्टनं चरणक्षेपणादिकम्,। ग्लानिः बलक्षयः, स्रस्तांगता अंगसंधिविस्रंसवद्व्यथा, शरीरशैथिल्यं वा, मूर्च्छनमिंद्रियसंमोहः, प्रमोहस्तु मनोमोहः, ऊर्ध्ववात इति उद्गारबाहुल्यम्, वातकृता रुजस्तास्तां दंडापतानकाक्षेपकाद्याः। सर्वेंद्रियार्थोपरमः स्वविषयेषु रूपादिषु उपरमो ग्रहणेऽशक्तिः, दशार्द्धसंख्येषु पंचसु ॥ १८ ॥ १९ ॥ शिरादयो मर्मरूपा अमर्मरूपाश्च संति, तत्र मर्मरहितशिरादिविद्धलिंगमाह—सुरेन्द्रेति। इंद्रगोपो वार्षिकः

कौब्ज्यं शरीरावयवावसादः क्रियास्वशक्तिस्तुमुला रुजश्च ॥
चिराद्व्रणो रोहति यस्य चापि तं स्नायुविद्धं पुरुषं व्यवस्येत्॥२१॥
शोफा[1]भिवृद्धिस्तुमुला रुजश्च बलक्षयः सर्वत एव शोथः ॥
क्षतेषु सन्धिष्वचलाचलेषु स्यात्सर्वकर्मोपरमश्च लिङ्गम् ॥ २२ ॥
घोरा रुजो यस्य निशादिनेषु सर्वास्ववस्थासु च नैति शान्तिम्॥
भिषग्विपश्चिद्विदितार्थसूत्रस्तमस्थिविद्धं पुरुषं व्यवस्येत्॥२३॥
यथास्वमेतानि विभावयेच्च लिङ्गानि मर्मस्वभिताडितेषु ॥
पाण्डुर्विवर्णः स्पृशितं न वेत्ति यो मांसमर्मण्यभिपीडितस्स्यात्२४

मधुकोशव्याख्या ।

क्षतासु खड्गादिना ॥ २० ॥ कौब्ज्यं कुब्जता । तुमुला गहनाः ॥ २१ ॥ सन्धिष्वचलाचलेष्विति । अचलेषु निश्चेष्टेषु, आचलेषु चेष्टावत्सु; सन्धयश्चलाचलभेदेन द्विविधाः । तथाच सुश्रुतः—"शाखासु हन्वोः कट्यां च चेष्टावन्तश्च सन्धयः । शेषास्तु सन्धयः सर्वे विज्ञातव्याः स्थिरा बुधैः" इति ॥ २२ ॥ २३ ॥ मर्मरहितानां शिरादीनां विद्धलक्षणमभिधाय शिरादिमर्मविद्धलिङ्गमतिदेशयन्नाह—यथास्वमेतानीत्यादि । विभावयेच्चेति चकारो भिन्नक्रमे; तेन एतानि लिङ्गानि, तथा सामा-

आतङ्कदर्पणव्याख्या ।

कीटः, तत्क्षतजः, तस्य रुधिरस्य क्षयाजातो वायुः यथोक्तानिति शोणितवर्णनीयोक्तान्, तथा चोक्तम्—तदतिप्रवृत्तं शिरोभितापमांध्यमाक्षेपकादींश्च करोति । विद्धासु वाणादिना, क्षतासु खड्गादिना ॥ २० ॥ स्नायुविद्धमाह—कौब्ज्यमिति । यस्य कौब्ज्यादिचिह्नं भवति, तं पुरुषं स्नायुविद्धं व्यवस्येत् जानीयात् । कौब्ज्यं कुब्जता, तच्च अंतर्बहिरायामजं द्विधा, अवयवावसादः अवयवानां स्वकर्मण्यसामर्थ्यम्, क्रियास्वशक्तिः, सर्वशरीरस्योत्क्षेपणापक्षेपणप्रसारणाकुंचनक्रियाणामशक्तिः, तुमुला गहनाः । अन्ये तु वातपित्तकफजनिता एकत्र व्याकुलीभूतवेदनास्तुमुला उच्यंते । इति वदंति ॥ २१ ॥ संधिविद्धमाह—शोफेति । अचलाचलेषु संधिषु क्षतेषु सत्सु शोफातिवृद्ध्यादिलिंगं स्यात् । संधयस्तु चलाचलभेदात् द्विविधाः । तथा चोक्तं सुश्रुते—"शाखासु हन्वोः कट्यां च चेष्टावन्तश्च संधयः । शेषास्तु संधयः सर्वे विज्ञातव्याः स्थिरा बुधैः" इति । कर्मोपरमः कर्मोपरतिः ॥ २२ ॥ अस्थिविद्धमाह—घोरा इति । तमस्थिविद्धं जानीयात्, सर्वास्ववस्थासु उपशयनाशनादिकासु, विदितार्थसूत्रः अधिगतशल्यतंत्रः ॥ २३ ॥ मर्मरहितानां शिरादीनां विद्धलिंगमभिधाय शिरादिमर्मलिंगमतिदेशेनाह—यथास्वमिति ॥ विभावयेचेति चकारोत्र भिन्नक्रमे, तेनैतानि

[1] शोषाभिवृद्धिरिति पाठान्तरम् ।

विसर्पः पक्षघातश्च शिरास्तम्भोऽपतानकः ॥
मोहोन्मादव्रणरुजो ज्वरस्तृष्णा हनुग्रहः ॥ २५ ॥
कासश्छर्दिरतीसारो हिक्का श्वासः सवेपथुः ॥
षोडशोपद्रवाः प्रोक्ता व्रणानां व्रणचिन्तकैः ॥ २६ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने सद्योव्रणनिदानं समाप्तम् ॥ ४३ ॥

---

# अथ भग्ननिदानम् ४४.

भग्नं समासाद्द्विविधं हुताश काण्डे च सन्धौ च हि तत्र सन्धौ ॥
उत्पिष्टविश्लिष्टविवर्तितं च तिर्यग्गतं क्षिप्तमधश्च षट् च ॥ १ ॥

---

मधुकोशव्याख्या ।

न्यलिङ्गानि च जानीयादित्यर्थः । अनुक्तमांसमर्मणो विद्धस्य लिङ्गमाह—पाण्डुर्विवर्ण इत्यादि । ननु, शिरादिविद्धलिङ्गवत् मांसविद्धलिङ्गमपि पूर्वं कुतो नोपदिष्टम्? उच्यते, केवलमांसविद्धस्याबहुव्यापत्करत्वात् पूर्वमनुपादानम् ॥ २४ ॥ सर्वव्रणानामुपद्रवानाह—विसर्प इत्यादि ॥ २५ ॥ २६ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां सद्योव्रणनिदानं समाप्तम् ॥ ४३ ॥

आगन्तुसामान्यात् भग्ननिदानम् । द्विविधं हि भग्नं सव्रणमव्रणं च, तत्र सव्रणमभिधायाव्रणमाह—भग्नं समासादित्यादि । हुताश इति अग्निवेशसंबोधनं,

आतङ्कदर्पणव्याख्या ।

मर्मविद्धशिरालिंगानि तथा सामान्यलिंगानि भ्रमप्रलापादीनि पूर्वोक्तानि च यथास्वं जानीयादित्यर्थः । विद्धलिंगमाह—पांडुरिति । विवर्णो विच्छायः । ननु, शिरादिविद्धलिंगवन्मांसविद्धलिंगमपि पूर्वं कुतो नोपदिष्टम् ? उच्यते,—केवलमांसविद्धस्याबहुव्यापत्करत्वात् पूर्वमनुपादानम् ॥ २४ ॥ सर्वव्रणानामुपद्रवानाह—विसर्प इति । व्रणरुजो व्रणपीडा, वेपथुः कंपः ॥ २५ ॥ २६ ॥ इत्यातंकदर्पणे निदानव्याख्यायां सद्योव्रणनिदानम् ॥ ४३ ॥

आगंतुत्वसामान्याद्भग्नमाह—भग्नमिति । तं चागंतुव्रणं समासात् द्विविधमाहुः, कथमित्याह—कांडे भग्नं तथा संधौ चेति, कांडे च संधौ चेति संधिविच्छिन्नमेकम्, काण्डमग्निकाण्डः । कांडेन च नलककपालवलयतरुणरुचकानां ग्रहणम् । तत्र भग्नं कांडभग्नम् द्वयोरस्थ्नोः संधानं संधिः, तद्विश्लेषः संधिमुक्तम् । संधिमुक्तस्य षाड्विध्यमाह—उत्पिष्टेति । तत्र संधाविति । तत्र तयोः कांडभग्नसंधिभग्नयोर्मध्ये, संधौ मुक्तेपि लिंगमभिधीयत इति शेषः । उत्पिष्टादिभेदेन षोढा भवति । ननु, कथं संधिमुक्तं भग्नमुच्यते ? अस्थ्नां भंगो युक्तः, । उच्यते, अस्थिविं-

प्रसारणाकुञ्चनवर्तनोग्रा रुक् स्पर्शविद्वेषणमेतदुक्तम् ॥
सामान्यतः सन्धिगतस्य लिङ्गमुत्पिष्टसन्धेः श्वयथुः समन्तात् २
विशेषतो रात्रिभवा रुजा च विश्लिष्टजे तौ च रुजा च नित्यम् ॥
विवर्तिते पार्श्वरुजश्च तीव्रास्तिर्यग्गते तीव्ररुजो भवन्ति ॥ ३ ॥

मधुकोशव्याख्या ।

चरके हुताशशब्देनाग्निवेशोऽभिधीयते, एकदेशेनापि समुदायप्रतीतेः ।काण्डे च सन्धौ चेति सन्धिविच्छिन्नमेकं, काण्डमस्थिकाण्डः, काण्डेन च नलककपालवलयतरुणरुचकानां ग्रहणम् । तत्र भग्नं काण्डे भग्नम् । द्वयोरस्थ्नोः सन्धानं सन्धिः तद्विश्लेषः सन्धिमुक्तम् । तत्र सन्धाविति सन्धौ मुक्ते 'लिङ्गमभिधीयते' इति शेषः । ननु कथं सन्धिमुक्तं भग्नमुच्यते? अस्थ्नां हि भङ्गो युक्तः । उच्यते, अस्थिविश्लेषोऽत्र भग्नोऽभिप्रेतः, स च काण्डभग्ने सन्धिमुक्ते चास्तीति न दोषः ॥ १ ॥ संधिभग्नस्य सामान्यलिङ्गमाह—प्रसारणेत्यादि । प्रसारणाकुञ्चनवर्तनोग्रा रुगिति प्रसारणादिषु उग्रा रुक् वर्तनं निष्क्रियतयावस्थानम् ॥ उत्पिष्टादिलिङ्गमाह—उत्पिष्टसन्धेरित्यादि । उत्पिष्टं द्वाभ्यामस्थिभ्यां सन्धौ घर्षणम् । श्वयथुः समन्तादिति उभयभागे शोथः, उभयतः सन्ध्यस्थ्नोर्घर्षितत्वात् ॥ २ ॥ विशेषतो रात्रिभवा रुजा चेति अभिघातकुपित एव रात्रौ शैत्येनात्यन्तं वृद्धो वायुः रुजां करोति । अत्र चूर्णितत्वेन

आतङ्कदर्पणव्याख्या ।

श्लेषोऽत्र भग्नोऽभिप्रेतः । स च काण्डभग्ने संधिमुक्ते चास्तीति न दोषः ॥ १ ॥ तत्र संधिमुक्तस्य सामान्यलक्षणमाह--प्रसारणेति । प्रसारणादिषु उग्रा रुक् व्यथा, वर्तनमिति निष्क्रियतयाऽवस्थानम् । एतत्सामान्यलिंगविशिष्टलिंगमाह—उत्पिष्टसंधेरिति । उत्पिष्टं द्वाभ्यामस्थिभ्यां संधौ वर्षणम्, श्वयथुः समंतादिति उभयभागे शोफः, उभयतः संध्यस्थ्नोर्घर्षणत्वात् ॥ २ ॥ विशेषत इत्याद्यभिघातकुपित एव रात्रौ शैत्येनात्यंतं वृद्धो वायुः रुजं करोति, अत्र चूर्णितत्वेन मार्गावरणाद्वातप्रकोप इत्यर्थः । विश्लिष्टमाह—विश्लिष्टज इति । विश्लिष्टे संधिमुक्ते तौ च नित्यं च रुजा च भवति । विश्लिष्टं मनाक्संधिविश्लेषः, शिथिलतामात्रम् विश्लिष्टमिति भावे क्तः । तेनाल्पः शोफो बोद्धव्यः । तौ चेति विश्लिष्टरात्रिरुजासमंताच्छोथौ, समन्ताच्छोथोऽप्यत्राल्पो बोध्यः । संधेरनभिघातात् । संधिविक्रियया अस्थ्नोरपसृतत्वान्मध्यनिम्नत्वम्, "उत्पिष्टमथ विश्लिष्टं संधिमुक्तं तथा च्युतम् । सघनं प्रतिपिष्टं च भग्नं यत्तद्विवर्जयेत्" इति । मनाक् विक्रियया वा । रुजा च नित्यमिति सर्वदा रुजा बलवती भवतीत्युत्पिष्टाद्विशेषः । विवर्तितमिति, संधाविति शेषः । विवर्तिते विपरीतं वर्तिते विवर्त्तनं संधौ द्वयोरस्थ्नोर्विवृत्तिर्विभ्रमणमार्जवता । पार्श्वे रुजाश्च तीव्राः संति, अत्यंतसंधिस्थानयोः पार्श्वसंध्यस्थ्नोः पार्श्वगतत्वात्तीव्राः पार्श्वरुजः, चकारात् संधिसंश्रययोर-

**क्षिप्तेऽतिशूलं विषमत्वमस्थ्नोः क्षिप्ते त्वधो रुग्विघटश्च सन्धेः ॥**
**काण्डे त्वतः कर्कटकाश्वकर्णविचूर्णितं पिच्चितमस्थिच्छल्लिका॥४॥**

मधुकोशव्याख्या ।

मार्गावरणात् वातकोप इत्यर्थः । विश्लिष्टजे इति विश्लिष्टजाते सन्धिमुक्ते, विश्लिष्टं मनाक् सन्धिविश्लेषः, शिथिलतामात्रं; विश्लिष्टमिति भावे क्तः । तौ चेति विश्लिष्टे रात्रिरुजासमन्ताच्छोथौ; समन्ताच्छोथोऽप्यत्रालपो बोध्यः; सन्धेरनभिघातात् । सन्धिविक्रियया अस्थ्नोरपसृतत्वात् मध्यनिम्नत्वम्, उत्पिष्टमथ विश्लिष्टं सन्धिं विघट्टयेदिति वचनात्; मनाग्विक्रियया वा । रुजा च नित्यमिति सर्वदा रुजा बलवती भवतीत्युत्पिष्टाद्विशेषः । विवर्तित इति सन्धाविति शेषः, विवर्तिते विपरीतं वर्तिते, विवर्तनं सन्धौ द्वयोरस्थ्नोर्विवृतिर्विभ्रमणमार्जवता । पार्श्वरुजश्च तीव्रा इति अत्यक्तसन्धिस्थानयोः पार्श्वसन्ध्यस्थ्नोः पार्श्वगतत्वात्तीव्राः पार्श्वरुजः । तिर्यग्गत इति तिर्यक्क्षिप्ते । अत्र ह्येकं सन्ध्यस्थि सन्धिस्थानं त्यक्त्वा तिर्यग्याति। क्षिप्तेऽतीति अतिक्षिप्ते; ऊर्ध्वमिति शेषः । अत्र ह्येकास्थिविक्रियया उभयास्थिविक्रियया वा द्वयोरप्यस्थ्नोः परस्परातिक्रमणं दूरगमनं वा । विश्लिष्टे तु, मनाक् शिथिलतामात्रम्। अधःक्षिप्ते तु किंचिदधोगमनमिति विशेषः । विषमाश्च सक्थ्नोरिति पाठे तु 'रुज' इति शेषः । क्षिप्ते त्वधोरुग्विघटश्च सन्धेरिति अधःक्षिप्ते रुक् रुजा, सन्धेर्विघटश्च विघटनम् । 'विरुद्धचेष्टा विघटस्य' इति पाठान्तरे विघटितस्य सन्धेरित्यर्थः । अत्र अधोऽस्थिगमनम् । अधःक्षिप्तवदूर्ध्वं क्षिप्तस्याप्यभिधाने प्राप्ते, अनुक्तिरतिक्षिप्तेऽवरोधात् ॥ अतःपरं काण्डभग्नमभिधीयते—काण्डे त्वत इत्यादि । काण्डे इत्यत्र भग्नमिति शेषः । अत इति अतःपरम् । कर्कटकेति उभयोः पार्श्वयोर्निपीडनेनावनतम्, अतएव मध्ये ग्रन्थिरिवोन्नतं कर्कटतुल्यत्वात् कर्कटकम् । अश्वकर्णेति अश्वकर्णवत् विपुलास्थिनि-

आतंकदर्पणव्याख्या ।

प्यस्थ्नोर्व्यावर्तनेन पार्श्वोपगमनाद्विषमांगतेति डल्हनः । तिर्यगिति—तिर्यक् क्षिप्ते, संधाविति शेषः । अत्र ह्येकसंध्यस्थि संधिस्थानं त्यक्त्वा तिर्यग्याति । अतिक्षिप्तमाह—क्षिप्ते । ऊर्ध्वमिति शेषः । अत्र तु द्वयोरपि शक्थ्नोः परस्परातिक्रमणं, दूरगमनं वा विश्लिष्टे तु मनाक् शिथिलतामात्रमिति भेदः । अधःक्षिप्ते तु किंचिदधोगमनमिति विशेषः । सक्थ्नोरूरुकटिसंध्योर्विषममिति शूलविषममिति, कदाचिद्धीनं कदाचिद्विवृद्धम् । "विषमाश्च सक्थ्नोः" इति पाठांतरम् । रुजा इति शेषः ॥ ३ ॥ अधःक्षिप्तमाह—क्षिप्ते त्विति । अधःक्षिप्तेऽधोगते संधौ रुक् रुजा संधेर्विघटश्च, विघटो विघटनम् । 'विरुद्धचेष्टा विघटस्य' इति पाठांतरे विघटितस्य संधेरित्यर्थः । अत्राधोऽस्थिगमनम् । अधःक्षिप्तवदूर्ध्वक्षिप्तस्याप्यभिधाने प्राप्तेऽनुक्तमपि ऊर्ध्वक्षिप्ताभिधानम्, अतः परं कांडे भग्नमाह—कांडे त्विति । छिन्नं द्विधा कांडे इत्यत्र भग्नमिति शेषः । अत इति अतः परम् । कर्क-

**काण्डेषु भग्नं ह्यतिपातितं च मज्जागतं च स्फुटितं च वक्रम् ॥**
**छिन्नं द्विधा द्वादशधापि काण्डे स्रस्ताङ्गता शोथरुजातिवृद्धिः॥५॥**

मधुकोशव्याख्या ।

र्गमादश्वकर्णम् । विचूर्णितमिति क्षुण्णमस्थि, तच्च शब्दस्पर्शाभ्यामवगन्तव्यम् । पिच्चितमिति यन्त्रितं बहुशोथम् । अस्थिच्छल्लिकेति छल्लं वल्कलं तदत्रास्तीति अस्थिच्छल्लिका, अत्र मत्वर्थीयष्ठिकण् । अत्र तु आ न भवति, वृद्धेरनित्यत्वात् । एषा पार्श्वगतस्तोकास्थिविश्लेषाद्भवति । 'अस्थिच्छल्लितम्' इति वा पाठः, छल्लमस्य जातं छल्लितम् ॥ ३ ॥ ४ ॥ काण्डेषु भग्नमित्यनेन काण्डभग्नमभिधीयते, प्रसारणे कम्पमानं काण्डभग्नम् । यद्यपि काण्डेभग्नं सर्वमेव कर्कटादि तथापि विशिष्टे काण्डभग्ने काण्डभग्नसंज्ञेयं बोद्धव्या । यथा जाङ्गलशब्दो जाङ्गलाद्यष्टविधमांसवर्गे सामान्येऽपि षड्विधमांसवर्गे विलेशयादौ पुनरेणादावेव विशेषे च वर्तते । अतिपातितमिति अस्थिनिःशेषितच्छिन्नमतिपातितम् । मज्जागतमिति अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जानं निःसारयतीति मज्जागतम् । स्फुटितं स्तोकं विदीर्णं शूकपूर्णमिव वेदनावत् । वक्रमिति अविमुक्तास्थि कुब्जीभूतं वक्रम् । वक्रतापि भग्नत्वं ज्ञेयम् । छिन्नं द्विधेति एकमणुविदीर्णं, बहुविदीर्णमन्यत्, एकं विदीर्णं संलग्नम् अपरम् विदीर्णं, द्विधाभूतम् । अन्यस्तु विपुलैकविदरणमित्याह । सुश्रुते एतत् पाटितसंज्ञम् । काण्डेभ-

आतङ्कदर्पणव्याख्या ।

टकेति उभयोः पार्श्वयोः निर्पीडनेनावनतम्, अत एव मध्ये ग्रंथिरिवोन्नतं कर्कटतुल्यत्वात्कर्कटकम् । अश्वकर्णेति अश्वकर्णवद्विपुलास्थिनिर्गमादश्वकर्णम्, विचूर्णितमिति क्षुण्णमस्थि, तच्च शब्दस्पर्शाभ्यामवगन्तव्यम् । पिच्चितमिति यंत्रितं बहुशोथम्, अस्थिच्छल्लिकेति—छल्लं, वल्कलम् तदत्रास्तीति अस्थिच्छल्लिका एषा पार्श्वगतस्तोकास्थ्यवयवविशेषाद्भवति । "अस्थिच्छल्लितम्" इति पाठः । छल्लमस्य जातं छल्लितम् ॥ ४ ॥ कांडेषु भग्नमिति । अनेन कांडभग्नमित्यभिधीयते । प्रसारणे कंपमानं कांडभग्नम् । यद्यपि कांडे भग्नं सर्वमेव कर्कटकादि, तथापि विशिष्टे कांडे भग्ने संज्ञेयं बोद्धव्या । अतिपातितमिति । अस्थिविशेषच्छिन्नम् अतिपातितम् । मज्जागतमिति । अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जानं निःसारयतीति मज्जागतम् । स्फुटितस्तोकं बहुधा विदीर्णं शूकपूर्णमिव वेदनावत् । वक्रमिति । अविमुक्तास्थि कुब्जीभूतवक्रम्, वक्रतापि भग्नत्वं ज्ञेयम् । छिन्नं द्विधेति । एकमणुविदीर्णं, बहुविदीर्णमन्यत् । कश्चिदेकतरपार्श्वलग्नमपरत्र विदीर्णमित्याह,—अन्यच्च विपुलैकविदरणम्, एतच्च सुश्रुते पाटितसंज्ञम् । कांडे भग्नस्य द्वादशविधत्वं नियमयति—द्वादशधापि कांडे इति । कांडे इत्यत्र भग्नमिति शेषः।अपि शब्दोऽत्र भिन्नक्रमः। स चावधारणार्थः । तेन छिन्नमित्यत्र संबध्यते, छिन्नमेव द्विधा न कर्कटकादि । सामान्येन कांडभग्नलक्षणमाह—स्रस्तांगतेति । कांडे

संपीडयमाने भवतीह शब्दः स्पर्शासहं स्पन्दनतोदशूलाः ॥
सर्वास्ववस्थासु न शर्मलाभो भग्नस्य काण्डे खलु चिह्नमेतत् ६॥
भग्नं तु काण्डे बहुधा प्रयाति समासतो नामभिरेव तुल्यम्॥७॥
अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च ॥
उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ॥ ८ ॥
भिन्नं कपालं कट्यां तु सन्धिमुक्तं तथा च्युतम् ॥
जघनं प्रतिपिष्टं च वर्जयेद्धि विचक्षणः ॥ ९ ॥

---

मधुकोशव्याख्या ।

ग्नस्य द्वादशविधत्वं नियमयति—काण्ड इति। अत्र भग्नमिति शेषः। अपिशब्दोऽत्र भिन्नक्रमः, स चावधारणार्थ, तेन छिन्नमित्यत्र संवध्यते। छिन्नमेव द्विधा, न कर्कटादि ॥ ५ ॥ ६ ॥ काण्डेभग्नस्य द्वादशप्रकारादप्यधिकत्वमाह—भग्नमित्यादि। समासतो नामभिरेव तुल्यमिति संक्षेपतो नामानुरूपमेतदवगन्तव्यमित्यर्थः ॥ ७ ॥ कष्टसाध्यतामाह—अल्पेत्यादि। वातात्मकस्येति वातप्रकृतेः। उपद्रवैरिति उपद्रवा ज्वराध्मानमूत्रपुरीषसङ्गादयः ॥ ८ ॥ असाध्यतामाह—भिन्नं कपालमित्यादि। भग्नमिति वाच्ये भिन्नमिति यत् कृतं, तत् कपालानां प्रायशो भेदात्। अतएवोक्तं—"कपालानि विभज्यन्ते" इति। ननु, कट्यस्थ्नः कपालसंज्ञाया अभावात् कथमुच्यते भिन्नं कपालं कट्यामिति? यदुक्तं सुश्रुते—"जानुनितम्बांसगण्डतालुशंखवंक्षणशिरःसु कपालानि" इति। उच्यते, नितम्बग्रहणेन तत्र कटीग्रहणाददोषः, अथवा सर्वं कपालसंज्ञितम् अस्थिभिन्नं, तथा कट्यां चास्थिभिन्नं वर्जयेत्। असंश्लिष्टकपालं

आतङ्कदर्पणव्याख्या ।

भग्नस्य एतच्चिह्नं स्रस्तांगता शोफरुजयोरतिवृद्धिः ॥५॥ संपीड्यमाने हस्तादिना मृदिते सति शब्दः, स्पर्शासहश्च, तथा स्पंदनतोदशूला भवंति। सर्वासु शयनासनादिकास्ववस्थासु शर्मलाभो न भवति॥६॥ कांडे भग्नस्य द्वादशप्रकारादप्यधिकत्वमाह—भग्नमिति। संक्षेपतो नामानुरूपमेतदेवावगंतव्यम्, यस्येदशाऽस्थि भग्नं तस्यैव नामेत्यर्थः ॥ ७ ॥ भग्नकृच्छ्रमाह—अल्पाशिन इति। आहाररहितस्य, अनात्मवतोऽपथ्याशिनः, वातात्मकस्य वातप्रकृतेः ॥ उपद्रवैरिति। उपद्रवा ज्वरमोहमूत्रपुरीषसंगादयः ॥ ८ ॥ असाध्यतामाह—भिन्नमिति। भग्नमिति वाच्ये भिन्नमिति यत्कृतं, तत्कपालानां प्रायशो भेदात्। यदुक्तमिहैव—'कपालानि विभिद्यंते' इति। ननु, कट्यस्थिकपालसंज्ञाया अभावात् कथमुच्यते भिन्नं कपालं कट्यामिति ? यदुक्तं सुश्रुते—"जानुनितंबांसगंडतालुशंख-

असंश्लिष्टकपालं च ललाटे चूर्णितं च यत् ॥
भग्नं स्तनान्तरे पृष्ठे शङ्खे मूर्ध्नि च वर्जयेत् ॥ १० ॥
सम्यक्सन्धितमप्यस्थि दुर्निक्षेपनिबन्धनात् ॥
संक्षोभाद्वापि यद्गच्छेद्विक्रियां तच्च वर्जयेत् ॥ ११ ॥

---

मधुकोशव्याख्या ।

चेति तु नियमार्थः; तेन ललाटे कपालस्यासंश्लिष्टस्यासाध्यत्वं, नान्यथा भिन्नस्येति । भिन्नं कपालमिति काण्डभग्नमेतत् । सन्धिमुक्तमिति नानाविधमपि सन्धिमुक्तं कट्यां न सिध्यतीति । च्युतमिति अधःक्षिप्तम्, अन्यस्तु विश्लिष्टमाह । अथवा कट्यां सन्धिमुक्तं च्युतलक्षणं न सर्वम् । जघनं प्रतिपिष्टं चेति जघनस्थाने पिष्टमुत्पिष्टमेतत्तथा च्युतमिति च । सन्धिमुक्तं पुनर्विशेषार्थमुक्तं, विशेषाभिधानादन्यस्य कटीसन्धिमुक्तस्य कदाचित् साध्यता सूच्यते, अतएव चिकित्सिते ततः स्थानस्थिते सन्धाविति वक्ष्यति । असंश्लिष्टकपालं च ललाटे चूर्णितं च यदिति यथा अविद्यमानसंश्लेषं यत् कपालं, तथा ललाटे चूर्णितं च यत् विघटितसन्धि तदसाध्यम् । भग्नमिति सामान्येन सन्धिमुक्तं काण्डभग्नं गृह्यते । अन्ये तु भग्नमित्यनेन काण्डभग्नविशेषं प्रसारणे कम्पमानमित्यनेनोक्तं वदन्ति । उक्तं च भालुकिना—"शंखे मूर्ध्नि स्तनान्तरे वा काण्डेभग्नं मरणाय" इति । स्तनान्तरे उरसि, मूर्ध्नि चूडास्थाने ॥ ॥ ९ ॥ १० ॥ सर्वेषामनवधानतोऽसाध्यत्वमाह—सम्यगित्यादि । सन्धितं संयमितम् । दुर्निक्षेपनिबन्धनादिति दुःस्थापनात्तथा दुष्टबन्धनात् । संक्षोभाद्वेति अभिघातभयादिसंक्षोभात् । अयमर्थः—सम्यक्संयमितमपि दुःस्थापनात्, सुन्यस्तमपि दुष्ट-

आतङ्कदर्पणव्याख्या ।

वंक्षणशिरस्सु कपालानि" इति । उच्यते,—नितंबग्रहणेन तत्र कटीग्रहणाददोषः, अथवा—सर्वं कपालसंज्ञितम् । अस्थिभिन्नम्, छेदात् । तथा काट्यां चास्थिभिन्नं च वर्जयेत् ॥ संधिमुक्तमिति । नानाविधमपि संधिमुक्तं कट्यां न सिद्ध्यति । तथा कट्यां च्युतमिति अधःक्षिप्तम्, संज्ञेयम् । पिष्टमुत्पिष्टमसंज्ञं च, जघनं लक्षीकृतं न सिद्ध्यति ॥ ९ ॥ पुनर्वर्ज्यं भग्नमाह—असंश्लिष्टमिति । यथा तथा अविद्यमानसंश्लेषं यत् कपालं तथा ललाटे चूर्णितं यत् विघटितसंधि तदसाध्यम् । भग्नमिति सामान्येन संधिमुक्तं कांडे भग्नं च गृह्यते, अन्ये तु भग्नमिति कांडे भग्नमाहुः । यदुक्तं भालुकिना—"शंखे मूर्ध्नि स्तनांतरे वा कांडेभग्नं मरणाय" इति । अधस्तनांतरे उरसि, स्तनग्रहणेन स्तनांतरं बोद्धव्यम् ॥ १० ॥ सर्वेषामनवधानतोऽसाध्यत्वमाह—सम्यगिति । दुर्निक्षेपनिबंधनात् दुःस्थापनात् तथा दुष्टबंधनात् । संक्षोभाद्वेति अभिघातभयादिसंक्षोभात् । अयमर्थः—सम्यक्संयमितमपि दुष्टबंधनात्तथा

तरुणास्थीनि नम्यन्ते भिद्यन्ते नलकानि च ॥
कपालानि विभज्यन्ते स्फुटन्ति रुचकानि च ॥ १२ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने भग्ननिदानं समाप्तम् ॥ ४४ ॥

## अथ नाडीव्रणनिदानम् ४५.

यः शोथमाममतिपक्कमुपेक्षतेऽज्ञो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः ॥
अभ्यन्तरं प्रविशति प्रविदार्य तस्य
स्थानानि पूर्वविहितानि ततः सपूयः ॥ १ ॥

मधुकोशव्याख्या ।

बन्धनात्, सुन्यस्तं सुबन्धमपि संक्षोभाद्विकृतमसाध्यम् ॥ ११ ॥ अस्थिविशेषेण भग्नविशेषमाह–तरुणास्थीनीत्यादि । नम्यन्ते वक्रीभवन्ति, तेनात्र वक्रलक्षणं भग्नम् । घ्राणकर्णाक्षिपुटेषु तरुणं कोमलमस्थि । भिद्यन्ते नलकानि चेति अस्थ्यन्तरानुप्रवेशाद्भिद्यन्ते, अतिपातितलक्षणेन च भग्नेन नलकानि युज्यन्ते । अन्ये तु द्वादशविधमपि भग्नमत्रेच्छन्ति । कपालानि विभज्यन्त इति कपालेषु विदरणलक्षणो भग्नः । 'विभिद्यन्ते' इति पाठान्तरम्, अर्थस्तु स एव । रुचकानि दन्तास्तेषु स्फुटितलक्षणो भग्नः । अस्थीनि पञ्चविधानि तरुणनलककपालवलयरुचकभेदात् । रुचकानि चेति चकारात् वलयान्यपि स्फुटितानि भवन्तीति । एतत् सुश्रुते स्फुटितं भग्नम् ॥ १२ ॥
इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां भग्ननिदानं समाप्तम् ॥ ४४ ॥

भग्नस्यापि व्रणस्योपेक्षया नाडी भवति, अतोऽनन्तरं नाडीमाह–यः शोथमित्यादि । उपेक्षत इति पीडनशोधनादिकं न करोति । प्रचुरपूय इत्यनेन गम्भीरपाकि-

आतङ्कदर्पणव्याख्या ।

सुन्यस्तं सुबद्धमपि संक्षोभात् विकृतसाध्यम् ॥ ११ ॥ अस्थिविशेषेण भग्नविशेषमाह–तरुणेति । घ्राणकर्णाक्षिकूटेषु तरुणास्थीनि कोमलास्थीनि नम्यंते वक्रीभवंति । अत्र वक्रलक्षणम्–भिद्यंते नलिकानीति । अस्थ्यन्तरानुप्रवेशाद्भिद्यन्ते, अतिपातितलक्षणेन च भग्नेन नलकानि युज्यंते । अन्ये तु द्वादशविधमपि भग्नमात्रमिच्छंति । कपालेषु विदरणलक्षणोभग्नः । रुचकानि दंताः, तेषु स्फुटितलक्षणो भंगः । अस्थीनि पंचविधानि, तरुणनलककपालवलयरुचकभेदात् । चकाराद् वलयान्यपि स्फुटंतीति ज्ञेयम् । एतच्च सुश्रुते स्फुटितं भग्नम् ॥ १२ ॥ इत्यातंकदर्पणे निदान-व्याख्यायां भग्ननिदानम् ॥ ४४ ॥

भग्नस्यापि व्रणस्योपेक्षया नाडीभवात्तदनंतरं नाडीमाह–य इति । योऽज्ञः पक्कं शोफम् आममित्युपेक्षते पीडनशोधनादीनि न करोति, अथवा–यः पुरुषः प्रचुरपूयं व्रणम् उपेक्षते

तस्यातिमात्रगमनाद्गतिरिष्यते च
नाडीव यद्वहति तेन मता तु नाडी ॥
दोषैस्त्रिभिर्भवति सा पृथगेकशश्च
संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥ २ ॥
तत्रानिलात्परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपासु ॥
पित्तात्तृषाज्वरकरी परिदाहयुक्ता
पीतः स्रवत्यधिकमुष्णमहःसु चापि ॥ ३ ॥

---

मधुकोशव्याख्या ।

त्वमुक्तम् । असाधुवृत्तः अहिताहाराचारः । स्थानानि पूर्वविहितानीति व्रणास्रावविज्ञानीयोक्तानि त्वङ्मांसशिरास्नायुसन्ध्यस्थिकोष्ठमर्माणि ॥ १ ॥ तस्येति पूयस्य । नाडीवेति अन्तःशुषिरलतादिनाडीवत् । तासां कालान्तरसंभवेन दोषानुबन्धेन संख्यामाह—दोषैस्त्रिभिरित्यादि । दोषैः पृथक् तिस्रः । एकशश्च संमूर्च्छितैरिति प्रत्येकं वृद्ध्या मिश्रीभूतैस्त्रिभिश्चतुर्थी । कार्तिकस्तु सन्निपतितैरित्यध्याहार्य एकशश्च सन्निपतितैरन्या । संमूर्च्छितैः संश्लिष्टैरपरास्तिस्रः । अतएवोक्तं चिकित्सिते—'दोषद्वयाभिहितलक्षणदर्शनेन तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात्' इति । व्यतिकरप्रभवा द्वन्द्वप्रभवाः । अपिचकारौ सार्थकावित्याहुः । न चोक्तपञ्चसंख्याहानिः, अस्मिन् पक्षेऽतिदेशेनोक्तयोर्द्वन्द्वसन्निपातयोः सर्वत्रागणनात् । शल्यनिमित्ततोऽन्येति आगन्तुरपरेत्यर्थः । इति पञ्च नाड्यः ॥ २ ॥ वातजामाह—तत्रेत्यादि । अधिकं स्रवति क्षपास्विति शैत्येन वातवृद्धे रात्रावधिकं स्रवणम् ॥ पित्तजामाह—पित्तादि-

आतङ्कदर्पणव्याख्या ।

इति संबंधः । प्रचुरपूयमित्यनेन गंभीरपाकित्वं दर्शयति । असाधुवृत्तः अहिताहाराचारः । सपूयः तस्य पूर्वोक्तानि व्रणस्रावविज्ञानीयोक्तानि त्वग्मांसशिरास्नायुसंध्यस्थिकोष्ठमर्माणि स्थानानि विदार्यांतः प्रविशति॥ १ ॥ तस्येति । पूयस्यातिमात्रगमनाद्गतिरिष्यते, इष्यते चेति च । शब्दो नाडीनिरुक्तिरक्षांतरसमुच्चये, तामेव नाडीनिरुक्तिमाह—नाडीति । येन हेतुना नाडीव प्रणाली वोद्वहति, तेन हेतुना नाडी मतेत्यर्थः । अतः शुषिरनाला नाडी ॥ तासां कालांतरसंभवेन दोषानुबंधेन संख्यामाह—दोषैरिति । त्रिभिर्दोषैस्तिस्रः, शल्यनिमित्ततोन्येति, आगंतुरित्यर्थः । एवं पंच नाड्यः ॥ २ ॥ तत्र वातजामाह--तत्रेति । परुषं कर्कशं सूक्ष्मं मुखं यस्याः सा तथा, शैत्येन वातवृद्धिरतो रात्रावधिकं स्रवति ॥ पित्तजामाह--पित्तादिति । परिदाहः समंताद्दाहः, अधिकमुष्णम्, अहःस्विति

---

"तु" इति पाठान्तरम् ।

ज्ञेया कफाद्बहुघनार्जुनपिच्छिलास्रा
स्तब्धा सकण्डुररुजा रजनीप्रवृद्धा ॥
दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा
यस्यां भवन्त्यभिहितानि च लक्षणानि ॥ ४ ॥
तामादिशेत्पवनपित्तकफप्रकोपाद्
घोरामसुक्षयकरीमिव कालरात्रिम् ॥
नष्टं कथंचिदनुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति ॥ ५ ॥

---

मधुकोशव्याख्या ।

त्यादि । अधिकमुष्णमहःसु चेति दिवा औष्ण्येन पित्तकोपात् ॥ ३ ॥ कफजामाह-ज्ञेयेत्यादि । बहुघनार्जुनपिच्छिलास्रा इति अत्रार्जुनः श्वेतः, घनः सान्द्रः, आस्रशब्द आस्रावशब्दैकदेशपाठः, पदेऽपि पदैकदेशप्रयोगात् । यथा "जे प्रोष्ठपदानाम्" इत्यत्र जे इत्यनेनैव जात इत्युच्यते । पिच्छिलास्रुरिति पाठेऽप्ययमेवार्थः । आस्रुशब्दः संपदादिषु पाठात् क्विबन्तः, तुगभावस्त्वागमानित्यत्वात् । त्रिदोषजामाह-दाहेत्यादि । अभिहितानीति प्रत्येकं वातादिजनाडीकथितानि ॥ ४ ॥ असुक्षयकरीमिति मारणात्मिकां, कालरात्रिं मरणकारिणीं यमभगिनीमिव । गतिं त्वसुहरामिति पाठान्तरम् । शल्यनिमित्तामाह-नष्टमित्यादि । नष्टमदृश्यमानम् । कथंचिदिति वेगक्षयादिकारणानामनियमार्थमुक्तम् । अनुमार्गं मार्गं लक्षीकृत्य । केचित् 'अणुमार्गम्' इति पठित्वा शल्यविशेषणतया योजयन्ति । किंत्वस्मिन् पक्षेऽणुमार्गत्वेनैव शल्यस्यादर्शने प्रयुक्ते कथंचिदिति निरर्थकं स्यात् । उदीरितेष्विति त्वगादिषु ॥ ५ ॥

आतङ्कदर्पणव्याख्या ।

दिवसेषु औष्ण्येन पित्तप्रकोपात् ॥ ३ ॥ श्लेष्मजामाह--ज्ञेया इति । बहुरधिकः, घनः सांद्रः, अर्जुनः श्वेतः, पिच्छिलः आस्रः आस्रावो यस्यां सा तथा । आस्रशब्देन आस्राव उच्यते । अन्ये-"पिच्छिलास्रुः" इति पठंति । अत्राप्ययमेवार्थः । आस्रुशब्दः संपदादित्वात्क्विबंतः, तुगभावस्त्वागमानित्यत्वात् । रजनीप्रवृद्धेति । शैत्येन श्लेष्मणः प्रकोपात् ॥ त्रिदोषजामाह--दाहेति । अभिहितानीनि पूर्वोक्तदोषत्रयलक्षणानि ॥ ४ ॥ असुक्षयकरीमिति मारणात्मिकाम्, कालरात्रिमिवेति मृत्युरूपामिव, शल्यनिमित्तामाह--नष्टमिति । नष्टम् अदृश्यमानम्, कथंचित् प्रमादात्, अनुमार्गं लक्षीकृत्य । केचिद् 'अणुमार्गम्' इति पठंति । तत्र शल्यविशेषणतया योजयंति । उदीरि-

सा फेनिलं मथितमुष्णमसृग्विमिश्रं
स्रावं करोति सहसा सरुजा च नित्यम् ॥
नाडी त्रिदोषप्रभवा न सिध्येत्
शेषाश्चतस्रः खलु यत्नसाध्याः ॥ ६ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने नाडीव्रणनिदानं समाप्तम् ॥ ४५ ॥

---

## अथ भगन्दरनिदानम् ४६.

गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिडकाऽऽर्तिकृत् ॥
भिन्ना भगन्दरो ज्ञेयः स च पञ्चविधो मतः ॥ १ ॥

---

मधुकोशव्याख्या ।

फेनिलं फेनवन्तम् । मथितमुन्मथितम् । उष्णमुष्णस्पर्शम् । एते च धर्माः प्रसारणाकुञ्चनादौ चलता शल्येन मांसादिक्षोभेन भवन्ति ॥ असाध्यत्वादिकमाह—नाडीत्यादि । ननु, नाडी त्रिदोषप्रभवा न सिध्येदिति पुनरुक्तम्? असुक्षयकरीमित्यनेनैवासाध्यत्वस्योक्तत्वात् । नैवम्, अयं ग्रन्थः सुश्रुतेन निदानस्थानोक्तमेव त्रिदोषनाड्या असाध्यत्वमनूद्य तदन्यासां शेषत्वनिश्चयेन यत्नसाध्यत्वप्रतिपादनाय चिकित्सिते पठितः, स एवात्र माधवकरेण लिखित इत्यदोषः ॥ ६ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां नाडीव्रणनिदानं समाप्तम् ॥ ४५ ॥

नाडीविशेषत्वात् संख्यासाम्याच्च भगन्दरनिदानम् । भगन्दरपूर्वरूपपिडकामाह—गुदस्येत्यादि । क्षेत्रे देशे । सैव भिन्ना भगन्दरः । निरुक्तिरस्य सुश्रुतेन कृता । तद्यथा—"गुदभगवस्तिप्रदेशदारणाद्भगन्दरः" इति । भगशब्दो गुदाद्युपलक्षणम् । भोजेऽप्युक्तं—"भगं परिसमन्ताच्च गुदं वस्तिं तथैव च । भगवद्दारयेद्यस्मात्तस्माज्ज्ञेयो भगन्दरः" इति । पूर्वरूपं त्वस्य सुश्रुते पठ्यते यथा—"कटीकपालवेदना गुदक-

आतङ्कदर्पणव्याख्या ।

तेष्विति । त्वग्मांसादिषु पूर्वोक्तेषु ॥ ५ ॥ सा नाडी, फेनिलं फेनवर्णम् उन्मथितम्, उष्णम् उष्णस्पर्शम्, एते च धर्माः प्रसारणादौ चलता शल्येन मांसादिक्षोभेण भवंति । असाध्यामाह—नाडीति । शेषा वातपित्तकफशल्यजा इति ॥ ६ ॥ इत्यातंकदर्पणे निदानव्याख्यायां नाडीव्रणनिदानं समाप्तम् ॥ ४५ ॥

नाडीविशेषसंख्यासामान्याद् व्रणवदुपक्रमाद्वाऽतोऽनंतरं भगंदरनिदानम् । तस्यावस्थानसंश्रयत्वेन लक्षणमाह—गुदस्येति । क्षेत्रे देशे, पार्श्वतः समीपतः पिडका, सैव भिन्ना भगंदर आर्तिकृत्, तस्य च निरुक्तिः सुश्रुतेन कृता—"गुदभगवस्तिप्रदेशदारणाद् भगंदरः" इति । भगं-

**कषायरूक्षैस्त्वतिकोपितोऽनिलस्त्वपानदेशे पिडकां करोति याम्॥**
**उपेक्षणात्पाकमुपैति दारुणं रुजा च भिन्नारुणफेनवाहिनी ॥**
**तत्रागमो मूत्रपुरीषरेतसां व्रणैरनेकैः शतपोनकं वदेत् ॥ २**
**प्रकोपणैः पित्तमतिप्रकोपितं करोति रक्तां पिडकां गुदाश्रिताम् ॥**
**तदाशुपाकाहिमपूतिवाहिनीं भगन्दरं तूष्ट्रशिरोधरं वदेत् ॥ ३ ॥**

---

मधुकोशव्याख्या।

ण्डुर्दाहः शोथश्च गुदस्य भवति'' इति। एतत् सामान्यं पूर्वरूपम्। कटीकपालमत्र कटीफलकम्। पञ्चविध इति संख्याकथनं रक्तजद्वन्द्वजभगन्दरसंभावनानिरासार्थम् ॥ १॥ शतपोनकमाह—कषायेत्यादि। अपानदेश इति गुददेशे। उपेक्षणादिति विम्लापनाद्यकरणात्। रुजा च भिन्नेति रुजा रुजान्विता, अर्श आदेराकृतिगणत्वादच्। भिन्ना विदीर्णा। व्रणैरनेकैः शतपोनकं वदेदिति शतपोनकतुल्यत्वात् शतपोनकः, शतपोनकश्चालनिका, सहस्रधारा इत्यन्ये। किंवा शतपोनकः शूकदोषे पठितो विकारः ''छिद्रैरणुमुखैः'' इत्यादिना, किंतु यदि शूकदोषपठितशतपोनकतुल्यत्वमस्य तदा छिद्रैरण्डमुखैरित्यादिनिमित्तस्योभयत्र पठितत्वात् किं तत्सादृश्यप्रवृत्तेयं संज्ञा सा वा एतत्सादृश्यप्रवृत्तेति दुर्विज्ञानात् तत्रापि चालनिकातुल्यत्वमेव प्रवृत्तिनिमित्तमिति मन्यमानेन जेज्जटेन चालनिकातुल्यत्वमत्र वर्णितम्। शतपोनकवदनेकमुखत्वे वातिकभगन्दरस्वभाव एव हेतुः ॥ २ ॥ उष्ट्रग्रीवलक्षणमाह—प्रकोपणैरित्यादि। तदाशुपाकाहिमपूतिवाहिनीमिति तदेति तत्काले, पित्तजत्वेनाशुपाका

आतंकदर्पणव्याख्या।

दरशब्दे भगशब्दो गुदाद्युपलक्षणः, भोजेप्युक्तम्—''भगं परिसमंताच्च गुदं वस्तिं तथैव च। भगवद्दारयेद्यस्मात्तस्माज्ज्ञेयो भगंदरः ॥'' इति। पूर्वरूपं त्वस्य सुश्रुते पठितम्, यथा—''कटीकपालवेदना गुदकंडुर्दाहः शोथश्च गुदस्य भवति'' इत्येतत्सामान्यं पूर्वरूपमिति। कटीकपालमत्र कटीफलकम्। स च पंचविधः—दोषैस्त्रयः, सन्निपातेनैकः, शल्येन चापरः, एवं पंचविधसंख्याकथनं रक्तजद्वंद्वजभगंदरसंभावनानिरासार्थम् ॥ १ ॥ वातिकशतपोनकमाह—कषायेति। उपेक्षणादिति विम्लापनाद्यकरणात्, रुजा च भिन्नेति। रुजा रुजान्विता, भिन्ना विदीर्णा ॥ शतपोनकतुल्यत्वाच्छतपोनकः शूकदोषपठितो विकारः, चालनिकातुल्यत्वमस्य शतपोनकवदनेकमुखत्वेन। तत्र च वातिकभगंदरस्वभाव एव हेतुः, शतपोनकोऽस्य नाम ॥ २ ॥ पित्तजमुष्ट्रग्रीवमाह—प्रकोपणैरिति। उष्णपूतिदुर्गंधवाहिनीम्। अत्रापि पिडकावस्थागतगलवक्रत्वे उष्ट्रग्रीवा-

---

१ अत्र ''तोदो गुदायामश्च'' इति पाठान्तरम्।

कण्डूयनो घनस्रावी कठिनो मन्दवेदनः ॥
श्वेतावभासः कफजः परिस्रावी भगन्दरः ॥ ४ ॥
बहुवर्णरुजास्रावा पिडका गोस्तनोपमा ॥
शम्बूकावर्तवन्नाडी शम्बूकावर्तको मतः ॥ ५ ॥
क्षताद्गतिः पायुगता विवर्धते ह्युपेक्षणात्स्युः क्रिमयो विदार्य ते ॥
प्रकुर्वते मार्गमनेकधा मुखैर्व्रणैस्तदुन्मार्गिभगन्दरं वदेत् ॥ ६ ॥

मधुकोशव्याख्या ।

च सा अहिमपूतिवाहिनी उष्णपूतिवाहिनी च सा आशुपाकाहिमपूतिवाहिनी ताम्। अत्र पिडकावस्थागतगलवक्रत्वेन उष्ट्रग्रीवाकारत्वं, तेनोष्ट्रग्रीवसंज्ञा ॥ ३ ॥ परिस्राविणमाह—कण्डूयन इत्यादि । परिस्रावी कफजः; स च घनस्रावयोगात् परिस्रावी ॥ ४ ॥ सन्निपातजं शम्बुकावर्तमाह—बहुवर्णरुजास्रावेत्यादि । प्रत्येकदोषजभगन्दरपठितवर्णवेदनाः स्रावाश्च । शम्बुकावर्तवत् पूर्णनद्याः शम्बुकावर्तवदावर्तेन वेदनादोषगतिविशेषाद्भवतीति शम्बुकावर्तः । तथाच भोजः—"नदीनां परिपूर्णानां शम्बुकावर्तका यथा । समुत्तिष्ठन्ति वेगेन तोयवेगसमीरिताः" इति ॥ ५ ॥ उन्मार्गिभगन्दरमागन्तुमाह—क्षताद्गतिरित्यादि । क्षतादिति कण्टकादिघातात् । विदार्य त इति ते क्रिमयो विदार्य मार्गं कुर्वत इति योजना । अनेकधा मुखैरनेकमुखैः । अत्रोन्मार्गेण क्रिमिकृतविमार्गेण पुरीषादिगमनादुन्मार्गिसंज्ञा ज्ञेया । तन्त्रान्तरे त्वर्शोभगन्दरः पठितः । तद्यथा—"कफपित्ते तु पूर्वोत्थे दुर्नामाश्रित्य कुप्यतः । अर्शोमूले

आतङ्कदर्पणव्याख्या ।

कारत्वम्, तेनोष्ट्रग्रीवसंज्ञा । परिस्राविसंज्ञं कफजं भगंदरमाह—कंडूयन इति । परिस्रावी भगंदरः कफजः, स च घनपरिस्रावयोगात्परिस्रावी कंडूयनः कंडुबहुलः ॥ ४ ॥ सन्निपातजं शंबूकावर्त्तमाह—बह्वीति । बहुवर्णेति प्रत्येकदोषजभगंदरपठितवर्णवेदना स्रावी, शंम्बूकावर्तवत् लघुशंखवत्, पूर्णनद्याः शंबूकावर्तो यथा आवर्त्तेन च वेदना दोषगतिविशेषाद्भवतीति शंबूकावर्तः । तथा च भोजः—"नदीनां प्रतिपूर्णानां शंबूकावर्तका यथा । अभ्युत्तिष्ठंति वेगेन तोयवेगसमीरिताः" इति ॥ ५ ॥ उन्मार्गिभगंदरमागंतुमाह—क्षतादिति । क्षतात् कंटकादिघातात्, ये कृमयो विदार्य्य मार्गं प्रकुर्वत इति योजना । अनेकधा मुखैरनेकमुखैर्व्रणैः । अत्रोन्मार्गेण कृमिकृतविमार्गेण पुरीषादिनिर्गमादुन्मार्गिसंज्ञा प्रतीता । तंत्रांतरे त्वर्शोभगंदरः पठितः, यथा—"कफपित्ते तु पूर्वोत्थे दुर्नामाश्रित्य कुप्यतः । अर्शोमूले ततः शोफः कंडुदाहार्त्तिमान्भवेत् ॥ स शीघ्रं पक्वभिन्नोऽस्य क्लेदयन्मूलमर्शसः । स्रवत्यजस्रं गतिभिरयमर्शोभगंदरः" इति । अयं शतपोनका-

घोराः साधयितुं दुःखाः सर्वे एव भगन्दराः॥
तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्च विशेषतः॥ ७॥
वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च॥
भगन्दरात्स्रवन्तस्तु नाशयन्ति तमातुरम्॥ ८॥

इति श्रीमाधवकरविरचिते माधवनिदाने भगन्दरनिदानं समाप्तम्॥ ४६॥

# अथोपदंशनिदानम् ४७.

हस्ताभिघातान्नखदन्तपातादधावनादत्युपसेवनाद्वा॥
योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधापचारैः॥ १॥

मधुकोशव्याख्या।

ततः शोथः कण्डुदाहार्तिमान्भवेत्॥ स शीघ्रं पकभिन्नोऽस्य क्लेदयन्मूलमर्शसः। स्रवत्यजस्रं गतिभिरयमर्शोभगन्दरः" इति। अयमन्यतमस्मिन् शतपोनकादीनां दोषलक्षणदर्शनादन्तर्भाव्यः॥ ६॥ प्रतीकारप्रयत्नोपायमाह—घोरा इत्यादि। दुःखा इति दुःखप्रदाः। क्षतजश्च विशेषत इति क्षतजोऽपि विशेषमनेकव्रणयोगं क्रिमिसंभवादिकं वीक्ष्यासाध्यः। अत एव चिकित्सिते असाध्यतां प्रतिज्ञाय क्रियां वक्ष्यति, विशेषत इति ल्यब्लोपे पञ्चमी, विशेषतोऽतिशयादिसाध्य इत्यर्थः। यापनार्थं क्रियाविधिरिति। क्वचित् 'क्षतजश्च भगन्दरः' इति पाठः। क्षतजो विशेषतः साधयितुं घोरः असाध्य एव, स्रावरूपविशेषस्य युक्तत्वादिति गदाधरः॥ ७॥ अवस्थायामसाध्यतामाह—वातमूत्रपुरीषाणीत्यादि। भगन्दरात्स्रवन्त इत्यत्रामी विशेषा इति शेषः॥ ८॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां भगन्दरनिदानं समाप्तम्॥ ४६॥

स्थानप्रत्यासत्तेरुपदंशनिदानम्। नखदन्तपातादिति बलवदनुरागोदयात् नखदन्तच्छेदस्थानत्वेनानुक्तेऽपि मेहने नखदन्तपातः। यदुक्तं कामशास्त्रे—"शास्त्रस्य विषयस्ता-

आतंकदर्पणव्याख्या।

दीनां दोषलक्षणदर्शनादभावः॥ ६॥ असाध्यलक्षणमाह—घोरा इति। क्षतजोपि विशेषमनेकव्रणयोग्यं क्रिमिसंभवादिकं वीक्ष्यासाध्यः॥ ७॥ अवस्थायामसाध्यतामाह—वातेति। भगंदरात्स्रवंत इत्यत्र 'अमी विशेषा' इति शेषः। अमी वाताद्या विशेषा भगंदरात्स्रवंतस्तमातुरं विनाशयंति॥ ८॥ इत्यातंकदर्पणे निदानव्याख्यायां भगंदरनिदानम्॥ ४६॥

व्रणत्वसामान्यात्स्थानप्रत्यासन्नत्वादुपदंशनिदानम्। तस्य हेतुमाह—हस्तेति। नखदंतपातादिति बलवदनुरागोदयात्प्रबलकामरागवशात् कामिनां मेहने दंतनखपातो भवति। यदुक्तं काम-

सतोदभेदैः स्फुरणैः सकृष्णैः स्फोटैर्व्यवस्येत्पवनोपदंशम् ॥
पीतैर्बहुक्लेदयुतैः सदाहैः पित्तेन रक्तात् पिशितावभासैः ॥ २ ॥
स्फोटैः सकृष्णै रुधिरं स्रवन्तं रक्तात्मकं पित्तसमानलिङ्गम् ॥
सकण्डुरैः शोथयुतैर्महद्भिः शुक्लैर्घनैः स्रावयुतैः कफेन ॥ ३ ॥
नानाविधस्रावरुजोपपन्नमसाध्यमाहुस्त्रिमलोपदंशम् ॥
विशीर्णमांसं क्रिमिभिः प्रजग्धं मुष्कावशेषं परिवर्जयेच्च ॥ ४ ॥

मधुकोशव्याख्या ।

वद्यावन्मन्दरसा नराः । प्रवृत्ते रतिचक्रे तु न शास्त्रं नापि च क्रमः" इति । कलहादिवशाद्वा मेहने नखदन्तपातः । अधावनादप्रक्षालनात् । अत्युपसेवनादिति । व्यवायस्यात्यन्तसेवनात् । योनिप्रदोषादिति दीर्घकर्कशरोमादियोगात् योनिदुष्टेः । शिश्ने मेहने । विविधापचारैरिति क्षारोष्णसलिलप्रक्षालनब्रह्मचारिणीगमनादिभिः । उपदंशसंज्ञा च दंशनोपाधिमन्तरेणापि रूढा बोद्धव्या । यद्यप्यभिघातक्षते मेहने उपदंश आगन्तुः षष्ठः संभाव्यते तथापि तस्य दोषलिङ्गयुक्ततया दोषज एवान्तर्भावः ॥ १ ॥ पैत्तिकमाह—पीतैरित्यादि । स्फोटैरित्यनुषंजनीयम् । एवमुत्तरत्रापि । रक्तजमाह—रक्तादित्यादि । रक्तात् पिशितावभासैरिति मांसवत्ताम्रैः स्फोटैः रक्ताच्छोणितात् उपदंशं व्यवस्येत् । रक्तैरिति पाठान्तरे रक्तैः शोणितैः ॥ २ ॥ ३ ॥ सन्निपातजमाह—नानाविधेत्यादि । नानाविधस्रावरुजोपपन्नामिति प्रत्येकदोषोक्त-

आतङ्कदर्पणव्याख्या ।

शास्त्रे—"शास्त्रस्य विषयस्तावद्यावन्मंदरसा नराः। रतिचक्रे प्रवृत्ते च न शास्त्रं नापि च क्रमः" इति । कलहादिवशाद्वा मेहने नखदंतपातः। अधावनादप्रक्षालनात्, अत्युपसेवनादिति व्यवायस्यात्यंतसेवनात्, योनिप्रदोषात् अल्पमहाद्वारदीर्घकर्कशरोमसंकीर्णदेशत्वादियोनिदोषात्, रोगप्रसृष्टेर्वा योनिदुष्टेः । विविधोपचारैरिति क्षारोष्णमलिनांभःप्रक्षालनब्रह्मचारिणीगमनादिभिः ॥ पंचोपदंशा इति । वातेन, पित्तेन, शोणितेन, कफेन, संनिपातेन—एवं पंच । यद्यप्यभिघातक्षते मेहने उपदंश आगंतुः षष्ठः संभवी, तथापि तस्य दोषलिंगयुक्ततया दोषज एवांतर्भावः ॥ १ ॥ वातजोपदंशलक्षणमाह—सतोदेति । द्विधा क्रियत इव व्यवस्येत् जानीयात् ॥ पित्तजमाह—पीतैरिति । पित्तै रक्तैर्वेति विकल्पः, पित्तेन बहुक्लेदयुतैः आर्द्रताबहुलैः, स्फोटैरिति शेषः ॥ रक्तजमाह—पिशितावभासैरिति । मांसवत्ताम्रैः स्फोटैः रक्तात् शोणितात् उपदंशं व्यवस्येत् । 'रक्तैः' इति पाठांतरम्, तत्र रक्तैः शोणितैः ॥ २ ॥ कफजमाह—सकंडुरैः कंडूयुतैः, महद्भिः महत्परिग्रहैः, घनैः निबिडैः, स्फोटैरिति शेषः ॥ ३ ॥ सन्निपातजमाह--नानेति । प्रत्येकदोषोक्तस्राववेदनायुक्तम् ॥ त्रिमलोपदंशमिति । त्रिदोषोपदंशमसाध्यमाहुः। वर्ज्यमाह--विशीर्णेति । विशीर्णमांसं शटितमांसम्,

संजातमात्रे न करोति मूढः क्रियां नरो यो विषये प्रसक्तः ॥
कालेन शोथक्रिमिदाहपाकैर्विशीर्णशिश्नो म्रियते स तेन ॥५॥
अंकुरैरिव संघातैरुपर्युपरि संस्थितैः ॥
क्रमेण जायते वर्तिस्ताम्रचूडशिखोपमा ॥ ६ ॥
कोषस्याभ्यन्तरे सन्धौ सर्वसन्धिगतापि वा ॥
( सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा ॥ )
लिङ्गवर्तिरभिख्याता लिङ्गार्श इति चापरे ॥ ७ ॥
इति श्रीमाधवकरविरचिते माधवनिदाने उपदंशनिदानं समाप्तम् ॥ ४७ ॥

मधुकोशव्याख्या ।

स्राववेदनायुक्तम् । त्रिमलोपदंशमिति त्रिदोषोपदंशम् । असाध्यतामाह—विशीर्णेत्यादि । मुष्कावशेषमिति विशीर्णसमस्तमेहनमांसत्वेनावशिष्टफलकोषमात्रम् ॥ ४ ॥ उपक्रमे चिकित्साकरणार्थमाह—संजातेत्यादि । विषये प्रसक्त इति अतिव्यवायादिरतः कालेन चिरकालेन॥५॥ एकस्थानत्वेनात्र लिङ्गार्श आह—अंकुरैरित्यादि। अंकुरैरंकुरसदृशैरीषद्दीर्घैः, संघातैर्मांससंप्रतानैः, सञ्जातैरिति पाठे मांसैरिति शेषः । ताम्रचूडशिखोपमा इति ताम्रचूडः कुक्कुटः तच्चूडातुल्या । सन्धाविति मेढ्ररन्ध्रसन्धौ, सर्वसन्धिगतेत्यनेन सर्वसन्धेरुक्तत्वात्। एषा त्रिदोषजा, वर्त्तिरिति योज्यम् । अत एव 'सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा' इति क्वचित् पाठः । सुश्रुते क्वचित् स्त्रीणामप्युपदंशः पठ्यते । यथा, "मेढ्रसन्धौ व्रणाः केचित्केचित्सर्वाश्रयास्तथा । कुलत्थाकृतयः केचित्केचित्पद्मदलोपमाः ॥ रुजादाहार्तिबहुलाः कृष्णास्तोदसमन्विताः । शीघ्रं केचित् विसर्पन्ति शनैः केचित् तथापरे । स्त्रीणां पुंसां च जायन्ते उपदंशाः सुदा-

आतङ्कदर्पणव्याख्या ।

क्रिमिभिः प्रजग्धं भक्षितम्, मुष्कावशेषमिति शीर्णसमस्तमेहनमांसत्वेनावशिष्टफलकोशमात्रम्, एवमुक्तलक्षणमुपदंशं परिवर्जयेत् ॥ ४ ॥ उपक्रमे चिकित्साकरणार्थमाह—संजातेति । यो मूढो विषये प्रसक्तः व्यवायादितत्परः, स तेनोपदंशेन कालेन कालांतरेण म्रियते शोथादिभिरुपद्रवैः प्रशीर्णशिश्नः गलितमेहनः ॥ ५ ॥ एकस्थानत्वेनात्र लिंगार्श आह—अंकुरैरिति । अंकुरसदृशैरीषद्दीर्घैः संघातैः मांससंप्रतानैः । अन्ये संधाविति रन्ध्रसंधौ, सर्वसंधिगतेत्यनेन सर्वसंधेरुक्तत्वात्, एषा त्रिदोषजा । अत एव "सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा" इति कश्चित्पठ्यते । सुश्रुते तु कश्चित् स्त्रीणामप्युपदंशाः पठ्यंते । तद्यथा—"मेढ्रसंधौ व्रणाः केचित्केचित्सर्वाश्रयास्तथा । कुलत्थाकृतयः केचित्केचित्पद्मदलोपमाः ॥ रुजादाहार्तिबहुलाः कृष्णास्तोदसमन्विताः । स्त्रीणां पुंसां च जायंते

# अथ शूकदोषनिदानम् ४८.

**अक्रमाच्छेफसो वृद्धिं योऽभिवाञ्छति मूढधीः ॥**
**व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः ॥ १ ॥**

---

मधुकोशव्याख्या ।

रुणाः'' इति । किंतु समानतन्त्रेष्वदर्शनादेतदनार्षमाहुः ॥ ६ ॥ ७ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायामुपदंशनिदानं समाप्तम् ॥ ४७ ॥

समानस्थानत्वाच्छूकदोषनिदानमाह—अक्रमादित्यादि । शूको जलशूकः, स तु विषजन्तुर्जलमलोद्भवः सशूकः, तथा शूकप्रधानो लिङ्गवृद्धिकरो वात्स्यायनाद्युक्तो योगः शूक उच्यते । तस्य दोषो वैकृतमसम्यक्करणात्, ततो वा दोषो वातादिः, तत्कृतो वा विकारः 'दोषा अपि व्याध्याख्यां लभन्ते' इत्यागमात्; अतएव शूकदोषविवरणे शूकदोषनिमित्ता व्याधय एव बोद्धव्याः । एवं च यत्र कुम्भिकादौ रक्तपित्तोत्थेत्यादिकारणान्तरोपवर्णनं तत्र शूककृतरक्तपित्तादिरूपं ज्ञेयम् । अन्ये त्वादिशब्दलाभात् शूकादिदोषनिदानमाहुः । आदिशब्देन दुष्टयोनिगूढान्तर्लोमदुर्भगागमनादि गृह्यते; तन्न मनोहरं, वृद्धिं योऽभिवाञ्छतीत्यनेन विशेषणेन दुष्टयोन्यादेर्योगस्य ग्रहीतुमनर्हत्वात् । अन्ये तु दुष्टयोन्यादीन्युपदंशहेतुत्वेनोक्तत्वात् नानुमन्यन्ते; तदनैकान्तिकम्, एकजातीयहेतूनामनेकरोगकरणदर्शनात् अक्रमादित्यनुचितवृद्धिक्रमादनुचिता च वृद्धिर्भूरिविकारकरजलशूकयोगानामाचरणात्, जलशूकयो-

आतङ्कदर्पणव्याख्या ।

उपदंशाः सुदारुणाः ॥'' । इति । किंतु समानतंत्रेष्वदर्शनादेतदनार्षमाहुः ॥ ६ ॥ ७ ॥ इत्यातंकदर्पणे निदानव्याख्यायामुपदंशनिदानम् ॥ ४७ ॥

समानस्थानत्वात् शूकदोषनिदानम् । तस्य संप्राप्तिमाह--अक्रमादिति । शूको जलशूकः, स तु विषजंतुर्जलमलोद्भवः सशूकः, तत्प्रधानो लिंगवृद्धौ वात्स्यायनादिशास्त्रोक्तो योगः शूक उच्यते, तन्मुखत्वात् लिंगवृद्धौ अन्येपि योगाः शूकाः कथ्यंते, तस्य दोषो विकारः, शूकस्य कारणत्वात् ''क्वचिद्दोषा अपि व्याध्याख्यां लभंते'' इत्यागमात्, अत एव शूकदोषविवरणे शूकदोषनिमित्तत्वाद् व्याधय एव वक्तव्याः । अत्र शूकजा इति शूकदोषजा व्याधयः । अक्रमादिति अनुचितवृद्धिक्रमात्, अनुचिता वृद्धिः भूरिविकारजलशूकयोगानामाचरणात्, जलशूकयोगानां वात्स्यायनादौ विस्तरः । यथा—''भल्लातकास्थिजलशूकमथाब्जपत्रमंतर्विदह्य मतिमान्सह सैन्धवेन । एतद्विरूढबृहतीफलजोपपिष्टमालेपनं महिषविड्मिलीकृतेंगे ॥ स्थूलं महत्तरतुरंगमतुल्यमाशु शेफः करोत्यभिमतं न हि संशयोस्ति'' इत्यादि। यच्च जलशूकरहितमश्वगंधादितैलम्, तदुचितमेव लिंगवर्द्धनम् । यदुक्तम्–''अश्वगंधावचाकुष्ठमांसीसिंहीद (फ) लान्वितम् । चतुर्गुणेन

**गौरसर्षपसंस्थाना शूकदुर्भुग्नहेतुका ॥**
**पिडका श्लेष्मवाताभ्यां ज्ञेया सर्षपिका तु सा ॥ २ ॥**
**कठिना विषमैर्भुग्नैर्वायुनाऽष्ठीलिका भवेत् ॥**
**शूकैर्यत्पूरितं शश्वद् ग्रथितं नाम तत्कफात् ॥ ३ ॥**

---

मधुकोशव्याख्या ।

गानां वात्स्यायनादौ विस्तरः । यथा—"भल्लातकास्थिजलशूकमथाब्जपत्रमन्तर्विकृष्य मतिमान् सह सैन्धवेन । एतद्विरूढबृहतीफलतोयपिष्टमालेपनं महिषविडिमलीकृतेऽङ्गे। स्थूलं महत्तरतुरङ्गमतुल्यमाशु शेफः करोत्यभिमतं न हि संशयोऽस्ति" इत्यादि । यच्च जलशूकरहितमश्वगन्धादितैलं तदुचितमेव लिङ्गवर्धनम् । यदुक्तम्—"अश्वगन्धावरी-कुष्ठमांसीसिंहीफलान्वितम् । चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत् ॥ स्तनलिङ्गकर्ण-पालिवर्धनं म्रक्षणादिदम्" इति । गदाधरस्त्वाह—लिङ्गवृद्धिरेव कामपरायणनिन्दित-पुरुषैः क्रियमाणा अक्रमः । दश चाष्टौ चेति अष्टादश; संख्येयनिर्देशादेव लब्धायां संख्यायां पुनस्तदुक्तिः संमूढपिडकादौ द्वित्वशंकानिरासार्थम् ॥ १ ॥ सर्षपिकामाह-गौरेत्यादि । शूकदुर्भुग्नहेतुकेति दुर्भुग्नशूकहेतुकेत्यर्थः।"पिडकादिषु उभयवचनम्" इति परनिपातः । दुर्भुग्नो दुरवचारितः । शूकदुर्भगहेतुकेति तु पाठान्तरे शूकनिमित्ता दुष्टयोनिनिमित्ता चेत्यर्थः ॥ २ ॥ अष्ठीलिकामाह—कठिनेत्यादि । विषमैर्भुग्नैरिति वक्ष्यमाणशूकैरित्यनेन संबध्यते । विषमैरिति अप्रशस्तैः । अष्ठीलिका लौहकारस्य भाण्डीविशेषः । तत्तुल्यत्वादष्ठीलिका । ग्रथितमाह—शूकैरित्यादि । शूकैर्यत् पूरितं शश्वद् ग्रथितमिति शूकैः सर्वदा पूरितं लिङ्गं यत् ग्रन्थिलं तत् ग्रथितमित्यर्थः,

आतङ्कदर्पणव्याख्या ।

दुग्धेन तिलतैलं विपाचयेत्॥ स्तनलिंगकर्णपालिवर्द्धनम्रक्षणादिदम्" इति । शेफसो लिंगस्य गदा-धरस्त्वाह—लिंगवृद्धिरेव कामपरायणनिन्दितपुरुषैः क्रियमाणा अक्रमः । दश च अष्टौ चेति अष्टादश, संख्येयनिर्देशादेव लब्धायां संख्यायां पुनस्तदुक्तिः संमूढपिडकादौ द्वित्वसंख्यानिरासा-र्थम् ॥ १ ॥ वातश्लेष्मजनितां सर्षपिकामाह—गौरेति । गौरसर्षपतुल्या । शूकदुर्भग्नहेतुकेति दुर्भुग्नशूकहेतुकेत्यर्थः । 'पिडकादिषु उभयवचनम्' इति परनिपातः । दुर्भुग्नो दुरवचारितः । "शूकदुर्भगहेतुकी" इति पाठांतरम् । तत्र शूकनिमित्ता दुष्टयोनिनिमित्ता चेत्यर्थः ॥ २ ॥ अष्ठी-लिकामाह—कठिनेति । विषमैर्भुग्नैरिति वक्ष्यमाणशूकैरित्यनेन संबध्यते । विषमैः अप्रशस्तैः, भुग्नै-र्वक्रैः । अष्ठिलिका लोहकारभांडविशेषः, तत्तुल्यत्वादष्ठीलिका सा च वातेन । कफाद्ग्रथित-माह—शूकैरिति । शूकैः सर्वदा पूरितं लिंगं यत्तद्ग्रथितमित्यर्थः । ग्रथितत्वाद् ग्रथितसंज्ञा । शश्व-दिति अहरहः । शूकपूरणं शेफसि, एतेनैकदिनांतरपूरणं प्रशस्तमिच्छंति कामतंत्राचार्याः ।

कुम्भिका रक्तपित्तोत्था जाम्बवास्थिनिभाऽशुभा ॥
तुल्यजां त्वलजीं विद्याद्यथा प्रोक्तां विचक्षणः ॥ ४ ॥
मृदितं पीडितं यच्च संरब्धं वातकोपतः ॥
पाणिभ्यां भृशसंमूढे संमूढपिडका भवेत् ॥ ५ ॥
दीर्घा बह्व्यश्च पिडका दीर्यन्ते मध्यतस्तु याः ॥
सोऽधिमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत् ॥ ६ ॥

---

मधुकोशव्याख्या ।

ग्रन्थितुल्यत्वात् ग्रथितसंज्ञा ॥ ३ ॥ कुम्भिकामाह—कुम्भिकेत्यादि । कुम्भी कुम्भाडुलता तस्याः फलं कुम्भी, तद्धितस्य लुक्; 'इवे प्रतिकृतौ' कन्, कुम्भीफलवत् कुम्भिका । अशुभेति शुभं शुक्लं तद्विरोधे नञ् कृष्णेत्यर्थः । आशुजेति पाठान्तरम् । अलजीमाह—तुल्यजामित्यादि । तुल्यजामिति प्रमेहपिडका अलजी तत्तुल्यसंभवा, सा च रक्तासितास्फोटचिता । तुल्यत्वमेव विवृणोति—यथा प्रोक्तामिति, अलजीं यथा प्रोक्ता यादृशलक्षणा तथेयमपीत्यर्थः । एषा च कारणचिकित्साभेदात् प्रमेहं विना लिङ्ग एव संभवाच्च ततः पृथग्भूता ज्ञेया ॥ ४ ॥ मृदितमाह—मृदितमित्यादि। पीडितमिति अधिकृतत्वात् शूकपातानन्तरं पीडितमिति ज्ञेयम्, पीडितं लिङ्गमिति शेषः, संरब्धं सशोथम् । संमूढपिडकामाह—पाणिभ्यामित्यादि । पाणिभ्यां भृशसंमूढे इत्यधिकारात् पातितशूके लिङ्गे पाणिभ्यां भृशसंमूढे पिञ्चितावनते, अत्रापि वातकोपात् इत्यनुवर्तते ॥ ५ ॥ अधिमन्थमाह—दीर्घा इत्यादि । कफासृग्भ्यामिति

आतङ्कदर्पणव्याख्या ।

नित्यपूरणाद् ग्रथितनाम्नो रोगस्योत्पत्तिः ॥ ३ ॥ रक्तपित्ताभ्यां कुंभिकामाह—कुंभिकेति । कुंभिका कुंभकारी, तस्याः फलं कुंभी, तद्धितस्य लुक् "इवे प्रतिकृतौ" कन्, कुंभीफलवत् कुंभिका, तथा जाम्बवास्थिरूपा जंबूफलास्थिसदृशी अशुभा, शुभं शुक्लम्, न शुभम् अशुभम्, कृष्णेत्यर्थः । सा च रक्तपित्तजनिता । 'आशुजा' इति पाठांतरम् ॥ अलजीमाह—तुल्यजामिति । विचक्षणः अलजी पिडकां विद्यात्, किंभूताम्? तुल्यजामिति।प्रमेहपिडका अलजी,तत्तुल्यसंभवा । सा च रक्तासितस्फोटचिता । तुल्यत्वमेव विवृणोति—यथा प्रोक्तामिति । सा अलजी यथा प्रोक्ता यादृशलक्षणा तथेयमपीत्यर्थः।एषा च कारणचिकित्साभेदात् प्रमेहं विना लिंग एव संभवाच। ततः पृथग्भूता ज्ञेया । इयमपि दुष्टशूकावधारणाज्ज्ञेया ॥ ४ ॥ मृदितमाह—मृदितमिति । संरब्धं सशोफं तन्मृदितं मृदिताख्यं रोगाक्रांतं ज्ञेयम्, पीडितमित्यधिकृतत्वात् शूकपातानंतरं पीडितमिति ज्ञेयम् ॥ संमूढपिडकामाह—पाणिभ्यामिति । पाणिभ्यां भृशसंमूढे इत्यत्राधिकारात् पीडितशूकलिंगे पाणिभ्यां भृशसंमूढे अत्यर्थ पिञ्चितावनते संमूढपिडका स्यात्, अत्रापि वातप्रकोप इत्यनुवर्त्तते ॥ ५ ॥ अधिमन्थमाह—दीर्घा इति । दीर्घा विस्तीर्णाः बह्वयः बहुलाः । कफासृग्भ्यामिति शूकपातकृता-

पिडका पिडकाव्याप्ता पित्तशोणितसंभवा ॥
पद्मकर्णिकसंस्थाना ज्ञेया पुष्करिका तु सा ॥ ७ ॥
स्पर्शहानिं तु जनयेच्छोणितं शूकदूषितम् ॥
मुद्गमाषोपमा रक्ता रक्तपित्तोद्भवा तु या ॥
व्याधिरेषोत्तमा नाम शूकाजीर्णनिमित्ततः ॥ ८ ॥
छिद्रैरणुमुखैर्लिङ्गं चित्तं यस्य समन्ततः ॥
वातशोणितजो व्याधिः स ज्ञेयः शतपोनकः ॥ ९ ॥

मधुकोशव्याख्या।

शूकपातकृताभ्याम्। एवमन्यत्रापि सामान्येन शूकदोषाभिहिते शूकपातोऽनुक्तोऽपि ज्ञेयः। वेदनारोमहर्षकृदिति वेदनया रोमहर्षं करोति ॥ ६ ॥ पुष्करिकामाह—पिडकेत्यादिना ॥ ७ ॥ स्पर्शहानिमाह—स्पर्शहानिं त्वित्यादिना। उत्तमामाह—मुद्गमाषेत्यादिना। एषोत्तमा व्याधिः शूकाजीर्णनिमित्तजा भवति, शूकाजीर्णं पुनःपुनर्दुरवचारितशूकविकृतिरूपमेव। व्याधिरेषोत्तमो नामेति पाठान्तरे एषोत्तम इति निर्देशः पूर्वत्रासन्धिविधेरनित्यत्वात् साधुः ॥ ८ ॥ शतपोनकमाह—छिद्रैरणुमुखैरित्यादिना। छिद्रैरिति दुरवचारितशूकदोषजनितवातशोणितजैः। चितमुपचितम्, अतएव चिकि-

आतङ्कदर्पणव्याख्या।

भ्याम्। एवमन्यत्र सर्वेष्वपि सामान्येन शूकदोषेषु, शूकपातोऽनुक्तोऽपि ज्ञेयः। वेदनया रोमहर्षं करोति इति वेदनारोमहर्षकृत्। अधिमंथ इति संज्ञा ॥ ६ ॥ पुष्करिकामाह—पिडकाभिश्रितेति[1]। या पिडकेव पिडकाभिश्रिता व्याप्ता। पद्मकर्णिकसंस्थानेति कमलकोशतुल्या, पुष्करिकेति संज्ञा पित्तशोणिताद्विज्ञेया ॥७॥ स्पर्शहानिमाह—स्पर्शहानिमिति। स्पर्शहानिनामानं व्याधिविशेषम्, शूकदूषितं शूकेन दुष्टिं नीतं रक्तं जनयेत्। उत्तममाह—एषा उत्तमा नाम व्याधिः शूकाजीर्णनिमित्तजो भवति, शूकाजीर्णं पुनःपुनर्दुरवचारितशूकविकृतिरूपमेव, तदेव निमित्तं ततो जात इति। 'व्याधिरेषोत्तमा'[2] इति निर्देशः। पूर्वत्रासिद्धविषयैरनित्यत्वात् साधुः ॥८॥ शतपोनकमाह—छिद्रैरिति। यस्य लिंगं छिद्रैः सूक्ष्ममुखैः समंततः सर्वतश्चितं व्याप्तम्, स व्याधिः शतपोनको ज्ञेयः। छिद्रैरिति

१ एतच्च—"पिडकाभिश्रिता या च" इति पाठाभिप्रायेण।

२ अयमिममेव मुख्यं पाठं मनुते।

वातपित्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहकृत् ॥
कृष्णैः स्फोटैः सरक्ताभिः पिडकाभिर्निपीडितम् ॥ १० ॥
यस्य वास्तुरुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम् ॥
मांसदोषेण जानीयादर्बुदं मांससंभवम् ॥ ११ ॥
शीर्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः ॥
विद्यात्तं मांसपाकं तु सर्वदोषकृतं भिषक् ॥ १२ ॥
विद्रधिं सन्निपातेन यथोक्तमिति निर्दिशेत् ॥
कृष्णानि चित्राण्यथवा शूकानि सविषाणि वा १३ ॥

---

मधुकोशव्याख्या ।

त्सायां लेखनोपदेशः । शतपोनकश्चालनिका, तत्तुल्यत्वात् शतपोनकः ॥ ९ ॥ त्वक्पाकमाह–वातपित्तकृत इत्यादिना । शूकदोषेषु क्वचित् कस्यचित् दोषस्याभिधानं शूकविशेषादाहाराचारभेदाच्च पूर्वं संबन्धनीयम् शोणितार्बुदमाह–कृष्णैः स्फोटैरित्यादिना । पिडकाभिरिति स्वल्पाभिर्निपीडितं लिङ्गमिति बोद्धव्यम् ॥ १० ॥ यस्य वास्तुरुज इति वास्तु व्रणाधिष्ठानं, तत्र रुजः, अगाधोच्छ्रितमांसशोथत्वात् । वस्तिरुजश्चोग्रा इति पाठान्तरम् । अर्बुदं दुरवचारितशूकजशोणितकृतम् । मांसार्बुदमाह–मांसदोषेण इत्यादिना । मांसदोषेणेति शूकपातानन्तरं प्रहारादिना कृतेन मांसदोषेण ॥ ११ ॥ मांसपाकमाह-शीर्यन्ते यस्येत्यादिना । शीर्यन्ते गलन्ति, सर्वाश्च वेदना इति वातपित्तकफजाः ॥ १२ ॥ विद्रधिमाह–विद्रधिमित्यादि । सन्निपातेन यथोक्तमिति नानावर्णरुजास्रावा इत्यादिना सन्निपातजविद्रधिलक्षणं विद्रधिमिह

आतङ्कदर्पणव्याख्या ।

दुःखचारितशूकजनितवातशोणितजैः । शतपोनकश्चालनिका, तत्तुल्यः शतपोनकः ॥९॥ त्वक्पाकमाह–वातेति । वातपित्तकृतः त्वक्पाकनामा व्याधिर्ज्ञेयः । स च ज्वरदाहौ करोति । अयं च दुरवचरितशूकदूषितवातपित्तज इत्यर्थः । शूकं दोषेषु क्वचित्कस्यचिद्दोषस्याभिधानं शूकविशेषादाहारादिभेदाच्च समर्थनीयम् ॥ शोणितार्बुदमाह–कृष्णैरिति । पिडकाभिरिति स्वल्पाभिः निपीडितं लिंगमिति बोद्धव्यम् ॥ १० ॥ यस्य वास्तुरुज इति । वास्तु व्रणाधिष्ठानम्, तत्र रुजः, अगाधोच्छ्रितमांसशोषत्वात् । "वस्तिरुजश्चोग्राः" इति पाठांतरम् । सर्वदादुरवचारितशूकजशोणितकृतम् । मांसार्बुदमाह–मांसदोषेणेति । शूकपातानंतरं प्रमेहादिना कृतेन मांसदोषेण अत्रापि शोणितं हेतुः, मांसार्बुदसंज्ञा ॥ ११ ॥ मांसपाकमाह–शीर्यन्त इति । शीर्यंते गलंति सर्वाश्च वेदनाः इति वातपित्तकफजाः, अयं त्रिदोषजः ॥ १२ ॥ विद्रधिमाह–यथोक्तमिति सन्निपातविद्र-

पातितानि पचन्त्याशु मेढ्रं निरवशेषतः ॥
कालानि भूत्वा मांसानि शीर्यन्ते यस्य देहिनः ॥
सन्निपातसमुत्थांस्तु तान्विद्यात्तिलकालकान् ॥ १४ ॥
तत्र मांसार्बुदं यच्च मांसपाकश्च यः स्मृतः ॥
विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः ॥ १५ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने शूकदोषनिदानं समाप्तम् ४८ ॥

---

मधुकोशव्याख्या ।

जानीयादित्यर्थः । तिलकालकमाह—कृष्णानीत्यादिना । चित्राणीति नानावर्णानि । सविषाणीति शूकानां सविषत्वेऽपि विशेषार्थमुक्तम् । कालानीति कृष्णानि, कृष्णतिलतुल्यत्वात्तिलकालकसंज्ञा । शीर्यन्ते गलन्ति ॥ १३ ॥ १४ ॥ शूकदोषेषु असाध्यतामाह—तत्र मांसार्बुदमित्यादि । यच्चेति चकारोऽयं भिन्नक्रमः स च न सिध्यतीत्यनन्तरं द्रष्टव्यः, तेन साध्यताप्येषामचिरत्वादिना भवति, अतएव प्रत्याख्याय चिकित्साविधानमुपपन्नमिति गदाधरः । दुर्ज्ञानात् साध्ये एव असाध्यतारोपात्, असंपूर्णावस्थायामसाध्यऽपि क्रियासिद्धेश्च मा निवर्ततां भिषगिति प्रत्याख्याय चिकित्सां कारुणिकतया आचार्य उपदिशतीति मन्तव्यम् ॥ १५ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां शूकदोषनिदानं समाप्तम् ॥ ४८ ॥

आतङ्कदर्पणव्याख्या ।

विलक्षणेन जानीयात् । विद्रधिनिदानोक्तं 'नानावर्णरुजास्रावः' इत्यादिना ॥ तिलकालकमाह—कृष्णानीति । यस्य पुंसः शूकानि कृष्णानि, अथ वा चित्राणि, अथ वा सविषाणि, तानि संहत्याशु शीघ्रं निरवशेषतः समग्रं मेढ्रं पचंति, कृष्णानि कृष्णवर्णानि, चित्राणीति । शुक्लपीतनीलादिनानावर्णानि सविषाणीति शूकानां सविषत्वेपि विशेषार्थमुक्तम्, तथा कालानीति कृष्णानि परिणततिलफलवर्णानि भूत्वा शीर्यन्ति गलंति, तान् सन्निपातजान् तिलकालकान् विद्यात्, कृष्णतिलतुल्यवर्णत्वात्तिलकालकसंज्ञा ॥ १३ ॥ १४ ॥ शूकदोषेष्वसाध्यतामाह—तत्रेति । तत्र तेषु शूकदोषेषु मध्ये यन्मांसार्बुदम्, तथा यो मांसपाकः, तथा विद्रधिः, तथा ये च तिलकालकाः स्युः, एते सिध्यंति । ये चेति चकारो भिन्नक्रमः, स च न सिद्ध्यतीत्यनंतरं द्रष्टव्यः । तेन साध्यताप्येषामचिरत्वादिना भवति, अत एव प्रत्याख्याय चिकित्साविधानमुपपन्नमिति गदाधरः ॥ १५ ॥
इत्यातंकदर्पणे निदानव्याख्यायां शूकदोषनिदानम् ॥ ४८ ॥

# अथ कुष्ठनिदानम् ४९.

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ॥
भजतामागतां छर्दिं वेगांश्चान्यान्प्रतिघ्नताम् ॥ १ ॥
व्यायाममतिसन्तापमतिभुक्त्वा निषेविणाम् ॥
घर्मश्रमभयार्तानां द्रुतं शीताम्बुसेविनाम् ॥ २ ॥
अजीर्णाध्यशिनां चैव पञ्चकर्मापचारिणाम् ॥
नवान्नदधिमत्स्यातिलवणाम्लनिषेविणाम् ॥ ३ ॥

---

मधुकोशव्याख्या ।

अष्टादशसंख्यारूपेण तुल्यत्वात् कुष्ठनिदानमुच्यते । विशेषेण कुष्ठजनकं निदानमाह—विरोधीनीत्यादि । विरोधीनि 'न मत्स्यान्पयसाभ्यवहरेत्' इत्यादिनोक्तानि । भजतामिति पूर्वेण संबध्यते । आगतामिति उपस्थितवेगाम् । वेगांश्चान्यानिति मूत्रपुरीषादिवेगान् ॥ १ ॥ व्यायाममतिसन्तापमतिभुक्त्वेति । भुक्त्वा व्यायाममतियुज्य सन्तापमतियुज्य च, निषेविणामिति एतयोरेव सेवनशीलानां, निषेविणामित्यनेन सह प्रथमतः संबन्धे कृद्योगलक्षणा षष्ठी स्यात्, ततश्च व्यायामस्यातिसन्तापस्यातिनिषेविणामिति प्रयोगः प्रसज्जेत । शीतोष्णलङ्घनाहारान् क्रमं मुक्त्वा निषेविणामिति पाठान्तरे शीतोष्णादीनां यथाक्रमेण सेव्यत्वमुक्तं. तद्वैपरीत्येन तान् सेव्यमानान्; शीतोष्णलङ्घनाहारानित्यनन्तरं प्रतीति द्रष्टव्यं, तेन शीतोष्णादीन् प्रति यः क्रमस्तं मुक्त्वा एतेषामेव निषेविणाम् । घर्मश्रमभयार्तानामिति घर्मादिभिरार्तत्वे सति द्रुतमविश्रम्य शीताम्बुसेविनाम् । घर्म आतपः ॥ २ ॥ अजीर्णाध्यशिनामिति अजीर्णमाममन्नम्, अपक्वमिति यावत्, तद्भुञ्जानानाम्; अध्यशिनामाहार

आतङ्कदर्पणव्याख्या ।

अष्टादशरूपसंख्यातुल्यत्वात् कुष्ठनिदानमुच्यते । विशेषेण कुष्ठजनकं निदानमाह—विरोधीनीति । 'एतदाचरतां नृणां कुष्ठानि जायंते' इति संबंधः । विरोधीनि क्षीरमत्स्यादीनि, भजतामिति संबध्यंते । आगतामिति उपस्थितवेगाम्, छर्दिं तथा वेगांश्चान्यानिति मूत्रपुरीषादिवेगान् प्रतिघ्नतां प्रतिघातं कुर्वताम् ॥ १ ॥ व्यायाममतिसंतापमतिभुक्त्वेति । भुक्त्वा व्यायाममतियुज्य संतापमतियुज्य निषेविणामिति। एतयोरेव सेवनशीलानाम्, निषेविणामित्यनेन प्रथमतः संबंधे कृद्योगलक्षणा षष्ठी स्यात् । तत्र व्यायामस्यातिसंतापस्यातिनिषेविणामिति प्रयोगः प्रयुज्यते । शीतेत्यादि । शीतोष्णादीनां तु यदा येन क्रमेण सेव्यत्वमुक्तम्, तद्वैपरीत्येन तान् सेवमानानाम् । घर्म आतपः ॥ २ ॥ अजीर्णाध्यशिनामिति । अजीर्णमनग्निपक्वमन्नम्, चर्वणमिति यावत् । तद्भोजिनाम्, अध्यशिनाम्, आहार

माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम् ॥
व्यवायं चाप्यजीर्णेऽन्ने निद्रां च भजतां दिवा ॥ ४ ॥
विप्रान् गुरून् धर्षयतां पापं कर्म च कुर्वताम् ॥
वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च ॥ ५ ॥
दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ॥
अतः कुष्ठानि जायन्ते सप्त चैकादशैव च ॥ ६ ॥

मधुकोशव्याख्या ।

एवापरिणते भुञ्जानानाम् । अशिनामिति अजीर्णाधिशब्दाभ्यां सह संबध्यते। पञ्चकर्मापचारिणामिति पञ्च कर्माणि क्रियमाणे अपचारिणाम् । नवान्नदधिमत्स्यातीति अतिशब्दो नवान्नादिभिः सर्वैः संबध्यते ॥ ३ ॥ व्यवायं चाप्यजीर्ण इति विदग्धादिरूपेऽन्ने अजीर्णे ॥ ४ ॥ धर्षयतामिति अभिभवताम् । पापं कर्म च कुर्वतामित्यनेनैव विप्रादिधर्षणे लब्धे पुनस्तद्वचनं विशेषार्थम् ॥ दोषदूष्यसंग्रहमाह—वातादय इत्यादिना । वातादीनां त्रित्वे प्रतीतेऽपि त्रय इति वचनं सर्वकुष्ठेषु मिलितानामेव त्रयाणां दुष्टिप्रदर्शनार्थम् ॥ ५ ॥ द्रव्यसंग्रह इति । द्रव्यमारम्भकं कारणमुच्यते; यथा—'रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा' इति । अर्थलब्धमपि सप्तकमितिपदं सर्वत्र सप्तकनियमार्थं पुनरुक्तम् । ननु, विसर्पाणां समुत्पादे एतावत्येव सामग्री, यदुक्तं—"रक्तं लसीका त्वङ् मांसं दूष्यं दोषास्त्रयो मलाः । विसर्पाणां

आतङ्कदर्पणव्याख्या ।

एवापरिणते भुंजानानाम् । अशिनामिति । अजीर्णाधिभ्यां सह संबध्यते । पंचकर्मापचारिणामिति । पंच कर्माणि वमनविरेचकादीनि, तेषामपचारिणां व्यापत्त्वयोगिनाम् । नवान्नदधिमत्स्यातीति, अतिशब्दो नवान्नादिगुडांतैः प्रत्येकं संबध्यते ॥ ३ ॥ व्यवायं चाप्यजीर्णेन्ने इति । व्यवायं मैथुनम्, विदग्धरूपे अजीर्णे दिवा च निद्रां भजताम् ॥ ४ ॥ धर्षयतामिति, अभिभवताम् । पापं कर्म च कुर्वतामित्यनेनैव विप्रादिधर्षणे लब्धे पुनस्तद्वचनं विशेषार्थप्रतिपादकम् ॥ दोषदूष्यसंग्रहमाह—वातादय इति । वातादीनां त्रित्वे प्रतीतेऽपि त्रय इति वचनं सर्वकुष्ठेषु मिलितानामेव त्रयाणां दुष्टिप्रदर्शनार्थम् ॥ ५ ॥ द्रव्यसंग्रह इति । द्रव्यम् आरंभकं कारणमुच्यते । यथा—"रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा" इति । अर्थलब्धमपि सप्तकमिति पदं सर्वत्र सप्तकनियमार्थं पुनरुक्तम् । ननु, विसर्पाणामप्युत्पत्त्यादौ एतावत्येव सामग्री । यदुक्तम्—"रक्तं लसीका त्वग्मांसं दूष्यं दोषास्त्रयो मलाः।विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः" इति । तत्कुष्ठविसर्पयोः को भेदः ? उच्यते,—कुष्ठं चिरक्रियैः स्थिरैरप्रबलरक्तपित्तैर्दोषैर्जन्यते, विसर्पस्त्वचिरविसरणशीलैः प्रबलरक्तपित्तैः, कुष्ठे गुरुप्रधर्षणपरद्रव्यापहारादयो निमित्तम्, न विसर्पे । अन्ये त्वाहुः—विसर्पो

कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः ॥
सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकस्त्वतः ॥ ७ ॥
अतिश्लक्ष्णखरस्पर्शस्वेदास्वेदविवर्णताः ॥
दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिर्भ्रमः ॥ ८ ॥

मधुकोशव्याख्या ।

समुत्पत्तौ विज्ञेयाः सप्त धातवः" । इति लसीकावच्च तत्रोदकमुच्यते, तत् किंनिबन्धनः कुष्ठविसर्पयोर्भेदः ? उच्यते, कुष्ठं चिरक्रियैः स्थिरैरप्रबलरक्तपित्तैर्दोषैर्जन्यते, विसर्पस्त्वचिरविसर्पणशीलैः प्रबलरक्तपित्तैः; कुष्ठे गुरुप्रधर्षणपरद्रव्यापहारादयो निमित्तं न विसर्पे । अन्ये त्वाहुः—विसर्पा वातादिभिरेकैकशोऽपि भवन्ति, यदुक्तं—'पृथक् त्रयस्त्रिभिश्चैको विसर्पा द्वन्द्वजास्त्रयः' इति, कुष्ठं तु त्रिदोषजमेवेति । किं त्वेतत्समाधानं त्रिदोषजत्वेऽपि विसर्पाणामेकदोषजकुष्ठवदेकदोषजत्वकीर्तनं सङ्गतमिति न मनोहरम् । अतः कुष्ठानीति अत इत्यस्मात् दोषदूष्यसमुदायात् । सप्त चैकादशैव चेति विच्छेदपाठेन सप्तानां महाकुष्ठत्वमेकादशानां क्षुद्रत्वमिति बोधयति ॥ ६ ॥ कुष्ठानां त्रिदोषजत्वेऽपि उल्बणदोषेण सप्तप्रकारतामाह—कुष्ठानीत्यादि । दोषः पृथक् त्रयः, द्वन्द्वैस्त्रयः, समागतैः सन्निपातैरेक इति सप्तत्वम् । व्यपदेशोऽधिकं त्वतः इति यथा वातेन कुष्ठं कापालमित्यादि ॥ ७ ॥ पूर्वरूपमाह—अतिश्लक्ष्ण इत्यादिना । अतिश्लक्ष्ण अतिमसृणः; खरो रूक्षः, अतिश्लक्ष्णो वा खरो वा स्पर्शः, खरः कर्कशः, स्वेदास्वेदौ स्वेदवहस्रोतोवरोधानवरोधकृतौ । स्वापः स्पर्शाज्ञानम् । कोठोन्नतिः

आतङ्कदर्पणव्याख्या ।

वातादिभिरेकैकशोऽपि भवन्ति, यदुक्तम्—"पृथक्त्रयं त्रिभिश्चैको विसर्पा द्वंद्वजास्त्रयः" इति । कुष्टं त्रिदोषजमेवेति । किंत्वयं समाधिः त्रिदोषजत्वेपि विसर्पाणामेकदोषकुष्ठवदेकदोषजत्वकीर्त्तनं संगतमिति न मनोहरम् । कुष्टसंख्यामाह—अत इति । अत [1]इत्यस्माद्दोषदूष्यसमुदायात्सप्त तथा एकादश कुष्ठानि जायंते। सप्त चैकादशैवेति विच्छेदपाठेन सप्तानां महाकुष्ठत्वमेकादशानां क्षुद्रत्वमिति बोधयति ॥ ६ ॥ कुष्ठानां त्रिदोषजत्वेप्युद्रेकदोषेण सप्तप्रकारत्वमाह—कुष्ठानीति । कुष्ठानि सप्तधा सप्तप्रकाराणि, कथमित्याह पृथग्दोषैः वातेन, पित्तेन, श्लेष्मणा, त्रीणि तथा तैरेव दोषैर्द्वंद्वैर्वातपित्ताभ्याम्,—वातकफाभ्याम्,कफपित्ताभ्यां त्रीणि,तथा तैरेव दोषैः समागतैः सन्निपतितैरेकम् । इति सप्तत्वम्।नन्वेवं सत्येकदोषजं द्विदोषजं कुष्ठं, तत्सर्वं त्रिदोषजं स्यादित्याह—सर्वेष्विति । सर्वेष्वपि कुष्ठेषु त्रिदोषजेषु सत्स्वधिकत्वतः । अधिकत्वाद्व्यपदेशो निर्देशः कार्यः, सन्निपातस्य समविषमत्वात्, यथा वातेन कुष्ठं कापालमित्यादि ॥ ७ पूर्वरूपमाह—अतीति । अतिश्लक्ष्णा-

१ अयमेवमेव पाठमूरीकरोति ।

व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ॥
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽतिकोपनम् ॥
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ॥ ९ ॥
कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ॥
कपालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम् ॥ १० ॥
रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरम् ॥
उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत् ॥ ११ ॥
श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् ॥
कृच्छ्रमन्योन्यसंयुक्तं कुष्ठं मण्डलमुच्यते ॥ १२ ॥

मधुकोशव्याख्या ।

वरटीदष्टसंकाशः शोथः कोठः, तस्योन्नतिः ॥ ८ ॥ शीघ्रोत्पत्तिश्चिरास्थितिश्च व्रणानामेव । निमित्तेऽल्पेऽतिकोपनमिति अन्यथापि दुष्टशोणितत्वात् व्रणानां देहगतानामल्पेऽपि हेतौ कोपः । कुष्ठलक्षणमग्रजमिति कुष्ठानां पूर्वरूपमित्यर्थः ॥ ९ ॥ सप्तमहाकुष्ठानां लक्षणमाह-कृष्णारुणकपालाभमित्यादि । कृष्णारुणकपालाभं कृष्णारुणकपालवर्णं, कपालं शर्कराशकलम् । परुषं खरस्पर्शम् । तनु तनुत्वक्, विषमं दुश्चिकित्स्यम् ॥ १० ॥ रोमपिञ्जरमिति रोमभिः पिञ्जरं कपिलरोमेत्यर्थः ॥ ११ ॥ स्थिरं कठिनम् । स्त्यानं सान्द्रं सदलं वा । उत्सन्नमण्डलमुद्गतमण्डलम् । कृच्छ्रं कृच्छ्रसा-

आतङ्कदर्पणव्याख्या ।

दिकं कुष्ठलक्षणमग्रजमिति कुष्ठानां पूर्वरूपमित्यर्थः । अतिश्लक्ष्ण इति अतिमसृणः, खरो रूक्षः, अथ वा अतिश्लक्ष्णो वा खरः स्पर्शः । स्वेदाऽस्वेदाविति स्वेदवहस्रोतोवरोधानवरोधकृतौ । विवर्णता वैवर्ण्यम्, दाहः सर्वांगीणः, कंडूः त्वचि, स्वापः स्पर्शाज्ञत्वम्, कोठोन्नतिः वरटीदंशसंकाशः शोफः कोठः, तस्योन्नतिः, श्रमोऽनायासजः ॥ ८ ॥ शीघ्रोत्पत्तिश्चिरस्थितिः, व्रणानामेव । अल्पेपि निमित्ते कोपो व्रणानाम् ॥ ९ ॥ सप्तमहाकुष्ठानां लक्षणमाह—कृष्णेति । कृष्णोरुणा ये स्फुटितघट्याः खण्डास्तद्वर्णम् । अन्ये कृष्णारुणकपालशर्करावर्णमाहुः । रुक्षं रूक्षस्पर्शम्, परुषं खरस्पर्शम् । तनु तनुत्वक्, तोदबहुलं तोदाढ्यम्, विषमं दुश्चिकित्स्यम् ॥ १० ॥ औदुंबरं कुष्ठमाह—रुगिति । रुग्दाहरागकंडूभिर्युक्तम्, रोमपिंजरमिति रोमभिः पिंजरं कपिलरोममित्यर्थः । उदुंबरफलाभासं पक्वोदुंबरवर्णम् ॥ ११ ॥ मंडलकुष्ठमाह—श्वेतमिति । एवंविधं कुष्ठं मंडलं मंडलसंज्ञयोच्यते, श्वेतं रक्तं तदाभासम्, स्थिरं कठिनम्, स्त्यानम् सांद्रं सदलं वा, उत्सन्नमंडलम् उन्नतमंडलम्, कृच्छ्रं कृच्छ्र-

१ "भ्रमः" इत्यत्र "श्रमः" इति पा० ।

कर्कशं रक्तपर्यन्तमन्तःश्यावं सवेदनम् ॥
यदृष्यजिह्वसंस्थानमृष्यजिह्वं तदुच्यते ॥ १३ ॥
सश्वेतं रक्तपर्यन्तं पुण्डरीकदलोपमम् ॥
सोत्सेधं च सरागं च पुण्डरीकं तदुच्यते ॥ १४ ॥
श्वेतं ताम्रं तनु च यद्रजो घृष्टं विमुञ्चति ॥
प्रायश्चोरसि तत्सिध्ममलाबुकुसुमोपमम् ॥ १५ ॥
यत्काकणन्तिकावर्णं सपाकं तीव्रवेदनम् ॥
त्रिदोषलिङ्गं तत्कुष्ठं काकणं नैव सिध्यति ॥ १६ ॥

मधुकोशव्याख्या ।

ध्यम् । अन्योन्यसंयुक्तमिति अपरापरैर्मिलितम् ॥ १२ ॥ ऋष्यजिह्वसंस्थानमिति ऋष्यो नीलाण्डो हरिणः, तस्य जिह्वाकारम् ॥ १३ ॥ पुण्डरीकदलोपममिति । पुण्डरीकं रक्तपद्मं तत्पत्रोपमं, तेन सश्वेतं रक्तपर्यन्तम् । सरागमिति सलोहितं, मध्ये सश्वेतलोहितमित्यर्थः ॥ १४ ॥ श्वेतं ताम्रमिति श्वेतलोहितात्मकम् । प्रायश्चोरसीत्युरसि तद्बाहुल्येन भवति, कफप्रधानत्वात् । प्रायोग्रहणादन्यत्रापि भवति ॥ १५ ॥ यत् काकणन्तिकावर्णमिति काकणन्तिका गुञ्जा गुञ्जासवर्णत्वेन च मध्ये कृष्णमन्ते रक्तम्, अथवा मध्ये रक्तमन्ते कृष्णम् । कुष्ठत्वेनैव त्रिदोषजलक्षणत्वे सिद्धे त्रिदोषलिङ्गमिति पुनरुक्तं प्रबलदोषत्रयलिङ्गत्वोपदर्शनार्थम् । इति सप्तमहाकुष्ठानि । महत्त्वं

आतङ्कदर्पणव्याख्या ।

साध्यम्, अन्योन्यसंसक्तमिति, अपरापरैर्मिलितम् ॥ १२ ॥ ऋक्षजिह्वमाह- कर्कशमिति । कर्कशं खरस्पर्शम्, ऋक्षो नीलांडो हरिण इति । अन्ये ऋक्षम् रीछ इत्याहुः, तज्जिह्वाकारम् ॥ १३ ॥ पुंडरीकमाह—सश्वेतमिति।पुंडरीकं श्वेतकमलम्,तस्योपमम्, तेन सश्वेतं रक्तपर्यंतं मध्ये श्वेतं प्रांतेषु रक्तम् । सोत्सेधम् उन्नतम् । सरागमिति प्रांतेऽधिकरागप्रतिपादकम्, सरागमित्यत्र 'सदाहम्' इति क्वचित्पाठः १४ ॥ सिध्मलक्षणमाह—श्वेतमिति । श्वेतं ताम्रमिति श्वेतलोहितात्मकम्, तनु अघनं यत् घृष्टं सद्रजश्चूर्णं मुंचतीति ॥ प्रायश्चोरसीति । उरसि बाहुल्येन भवति, कफप्रधानत्वात् । प्रायोग्रहणादन्यत्रापि बोद्धव्यम् ॥ १५ ॥ काकणमाह—यदिति । काकणंतिका गुंजा, तत्समवर्णत्वेन मध्ये कृष्णमंतेऽतिरक्तम्, अथ वा--रक्तमंते कृष्णम्, तथा सपाकम्, तथा तीव्रवेदनम्, तथा त्रिदोषलिंगम् । तत् काकणाख्यं कुष्ठं नैव सिद्ध्यति ।कुष्ठत्वेनैव त्रिदोषलिंगत्वे सिद्धे त्रिदोषलिंगमिति पुनरुक्तं प्रबलदोषत्रयलिंगतोपदर्शनार्थम् । इति सप्त महाकुष्ठानि । महत्त्वं चैषां शीघ्रमुत्त-

१ अयमेवमेव पाठमूरीकरोति । २ 'यदृक्षजिह्वसंस्थानमृक्षजिह्वाम्' इतिपाठाऽभिप्रायेणैतत् ।

अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् ॥
तदेककुष्ठं चर्माख्यं बहुलं हस्तिचर्मवत् ॥ १७ ॥
श्यावं किणखरस्पर्शं परुषं किट्टिमं स्मृतम् ॥
वैपादिकं पाणिपादस्फुटनं तीव्रवेदनम् ॥ १८ ॥
कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम् ॥
सकण्डूरागपिडकं दद्रुमण्डलमुद्गतम् ॥ १९ ॥

---

मधुकोशव्याख्या ।

चैषां शीघ्रमुत्तरोत्तरधात्ववगाहनबहुदोषजत्वक्रियाभूयस्त्वयोगात् ॥ १६ ॥ अतः परमेकादश क्षुद्रकुष्ठान्युच्यन्ते—अस्वेदनमित्यादि । महावास्तु महास्थानम् । मत्स्यशकलोपमिति मत्स्यस्य त्वक्सदृशम् । चर्माख्यं चर्मकुष्ठम् । बहुलमपत्तलम् ॥१७॥ किणखरस्पर्शमिति किणो व्रणस्थानम् । परुषं रूक्षम् । वैपादिकमिति विपादिकायाः स्वार्थेऽण् ॥ १८ ॥ गण्डैरिति स्फोटैः । दद्रुमण्डलमिति मण्डलरूपतयोत्पादात् दद्रुमण्डलमिति कीर्तनम् । ननु, कथमस्य चरके क्षुद्रत्वेनाभिधानं, सुश्रुते महाकुष्ठे दद्रोरुक्तत्वात्; तथा सिध्म चरके महाकुष्ठे, सुश्रुते क्षुद्रकुष्ठे दर्शितम् । उच्यते, असिता दद्रुरवगाढमूला सुश्रुते महाकुष्ठम्, असितेतरदद्रुश्चरकेऽनवगाढमूला क्षुद्रकुष्ठम्; सुश्रुते असितेतरदद्र्वा विसर्पकुष्ठेऽन्तर्भावः, विसर्पणयोगात्; तथावगाढं सिध्म चरके महाकुष्ठं, सिध्मपुष्पिका तु त्वङ्मात्रगता सुश्रुते क्षुद्रकुष्ठम्; असितदद्रौ असितसि-

आतङ्कदर्पणव्याख्या ।

रोत्तरधात्ववगाहनबहुलदोषजन्यत्वक्रियाभूयस्त्वयोगात् ॥ १६ ॥ अतःप्रभृत्येकादश क्षुद्रकुष्ठान्याह । तत्रैव कुष्ठमाह—अस्वेदनमिति । तदेककुष्ठनाम, यद् अस्वेदनं स्वेदरहितम्, महावास्तु महास्थानम् । मत्स्यशकलोपममिति मत्स्यत्वक्खंडसदृशम् । चर्मकुष्ठमाह—हस्तिचर्मवत्, बहुलमपत्तलम् ॥ १७ ॥ किट्टिममाह—श्यावमिति । तत् किट्टिमनाम कुष्ठं स्मृतम् । श्यावं श्याववर्णम् किणखरस्पर्शमिति किणो व्रणस्थानम्, तद्वत् खरस्पर्शं कर्कशम्, परुषं रूक्षम्, किट्टिमाख्यं कुष्ठम् । वैपादिकमाह—पाणिपादयोः स्फुटनं विदारणम्, वैपादिकं कुष्ठम् ॥ १८ ॥ अलसकुष्ठमाह—कंडूमद्भिरिति । गंडैः स्फोटैः चितं युक्तम्, अलसकाख्यं कुष्ठम् ॥ दद्रुमंडलमाह—सकंडूरागाः कंडूरागसंयुक्ताः पिडका यत्र, तत् सकंडूरागपिडिकम्, तथा उद्गतमुत्सन्नम्, एवंविधं मंडलं यत्, तद् दद्रुनाम कुष्ठम् । ननु, कथमस्याश्चरके क्षुद्रत्वेनाभिधानम्, सुश्रुते महाकुष्ठत्वेनेति, तथा सिध्म चरके महाकुष्ठे, सुश्रुते क्षुद्रकुष्ठे दर्शितम् ? उच्यते—असिता दद्रुरवगाढमूला सुश्रुते महाकुष्ठम्, असितेतरदद्र्वा विसर्पकुष्ठेऽन्तर्भावः, विसर्पणयोगात् । तथा सिध्म चरके महाकुष्ठे, सिध्मपु-

रक्तं सशूलं कण्डूमत्सस्फोटं दलयत्यपि ॥
तच्चर्मदलमाख्यातं संस्पर्शासहमुच्यते ॥ २० ॥
सूक्ष्मा बह्व्यः पीडकाः स्रावत्यः
पामेत्युक्ताः कण्डुमत्यः सदाहाः ॥
सैव स्फोटैस्तीव्रदाहैरुपेता
ज्ञेया पाण्योः कच्छुरुग्रा स्फिचोश्च ॥ २१ ॥
स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ॥
रक्तं श्यावं सदाहार्ति शतारुः स्याद्बहुव्रणम् ॥
सकण्डूः पिडका श्यावा बहुस्रावा विचर्चिका ॥ २२ ॥

---

मधुकोशव्याख्या ।

ध्मनोऽवरोध इति गदाधरः । जेज्जटस्त्वाह-चरकोक्तं सिध्मैव सुश्रुते दद्रुशब्दाभिहितं नामभेदः केवलं परं न वस्तुभेदः, सन्ति ह्यर्थान्तराणि समानशब्दाभिहितानीत्यविरोधः । किंत्वियमसाध्वी व्याख्या, लक्षणवैलक्षण्यात्, किंच चरकसुश्रुतयोः कुष्ठं प्रति बहुप्रकारो विरोधः; तथाहि-सुश्रुतोक्तमरुणं न चरके पठ्यते, मण्डलं चरकोक्तं न सुश्रुते, क्षुद्रकुष्ठे चरकोक्तचर्माख्यालसकशतारुप्रभृतीनि न सुश्रुते, सुश्रुतोक्तक्षुद्रकुष्ठालसकादयश्च न चरके, तस्मादयं समाधिरुच्चितः कुष्ठानामसंख्येयत्वमिति केचित् चरके केचित् सुश्रुते कुष्ठप्रकारा उच्यन्ते । उक्तं हि चरके-'कुष्ठं सप्तविधम्,

आतङ्कदर्पणव्याख्या ।

ष्पिका तु त्वग्मात्रगता, सुश्रुते क्षुद्रकुष्ठमित्यादि ॥ १९ ॥ चर्मदलमाह-रक्तमिति । दलयति विदारयति, असंस्पर्शसहं च वस्त्रादिस्पर्शनाक्षमम्, तच्चर्मदलनाम ॥ २० ॥ पामामाह-सूक्ष्मा इति । एवंविधाः पिडकाः पामा इत्युक्ता वैद्यैरित्यर्थः । बह्व्यः प्रभूताः, स्रावत्यः स्रावयुक्ताः, कंडूमत्यः कंडूयुक्ताः ॥ कच्छुमाह-सैवेति । सैव पामा पाण्योः हस्तयोः । स्फिचोः कटिप्रोथयोश्च कच्छुः कथ्यते । तीव्रदाहैः तीव्रसंतापैः, स्फोटैरित्यर्थः ॥ २१ ॥ स्फोटमाह-स्फोटा इति । सुगमम् ॥ शतारुमाह-रक्तमिति । शतारुरिति बहुव्रणयोगाद् अन्वितं नाम । विचर्चिकामाह-सकंडूरिति । सकंडूः पिडका भवेत् । श्यावा वर्णतः, बहुस्रावा भूरिप्रस्रावा । अत्र कफकार्यं कंडूः बहुस्रावत्वं पित्तात्, श्यावत्वं वातात्, एवं सर्वत्र दोषत्रयलिंगमूह्यम् । नन्वेककुष्ठमारभ्य विचर्चिकापर्यंतेन द्वादश कुष्ठानि भवंति, तत् कथमेकादशेत्युच्यते-विचर्चिकैव पादयोर्भवति ।

---

१ "यद्दलत्यपि" इति पाठान्तरम् । २ एतादृशपाठाभिप्रायेण ।

खरं श्यावारुणं रूक्षं वातकुष्ठं सवेदनम् ॥
पित्तात्प्रकुथितं दाहरागस्रावान्वितं मतम् ॥ २३ ॥
कफात्क्लेदि घनं स्निग्धं सकण्डूशैत्यगौरवम् ॥
द्विलिङ्गं द्वन्द्वजं कुष्ठं त्रिलिङ्गं सान्निपातिकम् ॥ २४ ॥
त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यं च जायते ॥
त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्तनम् ॥ २५ ॥

मधुकोशव्याख्या ।

अष्टादशविधम्, असंख्येयं वा' इति । यद्गलत्यपीति गलति विदीर्यते । शतारुरिति बहुव्रणयोगान्वितं नाम । सकण्डूः पिडका श्यावा बहुस्रावा विचर्चिकेति । अत्र कफकार्यं कण्डूः, बहुस्रावत्वं पित्तात्, श्यावत्वं वातात्, एवं सर्वत्र दोषत्रयलिङ्गमूह्यम् । ननु, एककुष्ठमारभ्य विचर्चिकापर्यन्तेन द्वादशक्षुद्रकुष्ठानि भवन्ति तत्कथमेकादश इति ? उच्यते, विचर्चिकैव पादयोर्भवन्ती विदारणयोगाद्विपादिका भवति, तेन न संख्यातिरेकः । तथा च भोजः—"दोषाः प्रदूष्य त्वङ्मांसं पाणिपादसमाश्रिताः । पिडकां जनयन्त्याशु दाहकण्डूसमन्विताम् ॥ दाल्यते त्वक् खरा रूक्षा पाण्योर्ज्ञेया विचर्चिका । पादे विपादिका ज्ञेया स्थानान्यत्वाद्विचर्चिका" इति गदाधरः अन्ये त्वाहुः—सैव स्फोटैस्तीव्रदाहैरित्यभिधानेन पामैव तीव्रदाहबृहत्स्फोटयुक्ता कच्छुर्न । ततो भिन्नेति ॥ १९-२२ ॥ दोषत्रयनियतं कुष्ठलिङ्गमाह—खरं श्यावारुणमिति । श्यावारुणमिति श्यावं वा अरुणं वा भवति । चरके कुष्ठमधिकृत्य दोषविशेषकुष्ठजनकहेतूनां परस्परं ज्ञाप्यज्ञापकत्वमुक्तं, यथा—कुष्ठविशेषैर्दोषाः, दोषविशेषैः पुनः कुष्ठानि ज्ञायन्ते तैर्हेतुभिस्तांश्च प्रकाशयतीति ॥ २३ ॥ २४ ॥ इदानीमुत्तरोत्तरसप्तधातुगतकुष्ठस्य लक्षणं क्रमेणाह—त्वक्स्थे वैवर्ण्यमित्यादि । त्वक्शब्देनात्र रसोऽभिधीयते,

आतङ्कदर्पणव्याख्या ।

विदारणयोगाद् विशादिका भवति, तेन संख्यातिरेकः । तथा च भोजः—"दोषाः प्रदूष्य त्वग्मांसं पाणिपादसमाश्रिताः । पिडकां जनयंत्याशु दाहकंडूसमन्विताम् ॥ दह्यते त्वक् खरा रूक्षा पाण्योर्ज्ञेया विचर्चिका । पादे विपादिका ज्ञेया स्थानान्यत्वाद्विचर्चिका ॥" इति । दोषत्रये नियतम् ॥ २२ ॥ कुष्ठलिंगमाह—खरमिति । श्यावं वा अरुणं वा भवति, सवेदनं वेदानायुक्तम्, एतद्वातकुष्टं जानीयात् । पित्ताच प्रकथितं शटितमिव ॥ २३ ॥ युक्तं च कफात् क्लेदि क्लिन्नता युक्तम्, घनं निबिडम् । द्वंद्वजे कुष्टे द्विदोषलिंगं सान्निपातिके त्रिदोषलिंगम् ॥ २४ ॥ इदानीमुत्तरोत्तरसप्तधातुगतकुष्ठलक्षणं क्रमेणोच्यते—त्वगिति । त्वक्शब्देनात्र रसो वाच्यः, धातुप्रसवात्, त्वक्शब्देन रसस्याभिधानम्, तात्स्थ्यात् । बृहत् कुष्ठं रसगतं न भवतीति न शंकनीयम्, यतः सुश्रुतेनोक्तम्—

कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते ॥
बाहुल्यं वक्त्रशोषश्च कार्कश्यं पिडकोद्गमः ॥
तोदः स्फोटः स्थिरत्वं च कुष्ठे मांससमाश्रिते ॥ २६ ॥
कौण्यंगतिक्षयोऽङ्गानां संभेदः क्षतसर्पणम् ॥
मेदः स्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥ २७ ॥

मधुकोशव्याख्या ।

धातुप्रस्तावात्; त्वक्शब्देन रसस्याभिधानं तात्स्थ्यात् । जेज्जटस्तु त्वचमेवाह । बाह्यायास्त्वचश्चरके उदकधरत्वेनोक्ते रसग्रहणस्यानर्हत्वात् द्वितीया असृग्धरा अत्रोक्ता उदकाच्च रसो भिन्नः, तथाह्युक्तम्-'उदकं दशाञ्जलिमितं रसो नवाञ्जलिमितः' । रसं विहाय रक्ताद्युक्तिश्च प्रागेव रसं क्रोडीकृत्य तिर्यक्शिरागतैर्दोषैः कुष्ठजननात्, शिरासु रक्तव्यवस्थितेश्चेति तस्याशयः; साक्षाद्रस इत्यनभिधानात् । बृहत्कुष्ठं रसगतं न भवतीति नाशङ्कनीयम् । यतः सुश्रुतेनवोक्तं-'तेषां तु महत्त्वं सर्वधात्वनुसारित्वात्' इति, सर्वशब्देन च रसस्यापि ग्रहणम् । भोजेऽप्युक्तं-'प्रदुष्टाः प्रच्युता दोषा रसासृङ्मांससंश्रिताः । कुष्ठानि जनयन्त्याशु शरीरेषु शरीरिणाम्' इति । त्वक्स्रावो रोमहर्षश्च स्वेदस्यातिप्रवर्तनमिति, एतत् केचित् शोणितगतस्यैव लिङ्गं मन्यंते, अन्ये रसगतस्येति । इह रौक्ष्यं स्वेदातिप्रवृत्तिर्लोमहर्षश्च कुष्ठारम्भकदोषैः स्वेदवहस्रोतोदुष्ट्या भवति । यदुक्तं-'स्वेदवाहिषु दुष्टेषु पारुष्यं रोमहर्षणम् । अतिस्वेदनमस्वेदः परिदाहश्च जायते' इति ॥ २५ ॥ विपूयक इति विशेषणं पूययोगित्वम् ॥ २६ ॥ कौण्यं करभङ्गः । अङ्गानां संभेद इति अङ्गानां भङ्गः । प्रागुक्तानि तथैव चेति रसरक्तमांसधातुगतकुष्ठलिङ्गानीत्यर्थः, एतच्चैकत्राभिहितमपि क्रमेण परा-

आतङ्कदर्पणव्याख्या ।

"तेषां तु महत्त्वं सर्वधात्वनुसारित्वात्" इति । अतः सर्वशब्देन रसस्यापि ग्रहणम् । भोजेऽप्युक्तम्-"प्रदुष्टाः प्रच्युता दोषा रसासृग्मांससंश्रिताः । कुष्ठानि जनयंत्याशु शरीरेषु शरीरिणाम् ॥" इति । वैवर्ण्यम् अंगानां विवर्णता रौक्ष्यं च स्वेदातिप्रवृत्तिर्लोमहर्षश्च कुष्ठारंभकैर्दोषैः स्वेदवहस्रोतोदुष्ट्या भवति । यदुक्तम्-"स्वेदवाहिषु दुष्टेषु पारुष्यं रोमहर्षणम् । अतिस्वेदनमस्वेदः परिदाहश्च जायते" इति ॥ २५ ॥ रक्तगतमाह-कंडूरिति । विपूयक इति विशेषण पूययोगित्वम् ॥ मांसगतमाह-बाहुल्यमिति । बाहुल्यं स्थूलमंडलता, स्फोटः त्वचः स्फुटनम्, स्थिरत्वम् अचलत्वम् ॥ २६ ॥ मेदोगतमाह-कौण्यमिति । कौण्यं करभंगः, गतिक्षयो गमनाशक्तिः, अंगानां संभेदः अंगभंगः, क्षतप्रसरणम् प्रागुक्तानि रसरक्तमांसगतलिंगानि, एतच्चैकत्राभिहितमपि क्रमेण परापरधातुदुष्टौ पूर्वधातुदुष्टिलिंगख्यापनपरम्, न्यायस्य समानत्वात् । यदुच्यते-"समानेष्व-

नासाभङ्गोऽक्षिरागश्च क्षतेषु क्रिमिसंभवः ॥
स्वरोपघातश्च भवेदस्थिमज्जसमाश्रिते ॥ २८ ॥
दम्पत्योः कुष्ठबाहुल्याद्दुष्टशोणितशुक्रयोः ॥
यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम् ॥ २९ ॥
साध्यं त्वग्रक्तमांसस्थं वातश्लेष्माधिकं च यत् ॥
मेदसि द्वन्द्वजं याप्यं वर्ज्यं मज्जास्थिसंश्रितम् ॥ ३० ॥

---

मधुकोशव्याख्या।

परधातुदुष्टौ पूर्वपूर्वधातुदुष्टिलिङ्गख्यापनपरं. न्यायस्य समानत्वात्। यदुच्यते– 'समानेष्वर्थेष्वेकत्राभिहितो विधिरन्यत्राप्यासंजनीयः' इति ॥ २७ ॥ २८ ॥ शुक्रगतकुष्ठलिङ्गमाह–दम्पत्योरित्यादि। कुष्ठं शुक्रगतमपत्येन व्यज्यत इत्यर्थः। अत्र शुक्रदुष्टिलक्षणप्रस्तावेन तत्तुल्यकार्या स्त्रीगतार्तवदुष्टिरप्युक्ता। तदपीत्यपिशब्दात् पूर्वोक्तान्यपि रसादिमज्जान्तर्गतकुष्ठलिङ्गानि भवन्ति। कुष्ठितमिति संजातं कुष्ठमस्येति तारकादित्वादितच्। अत्र दुष्टं शुक्रमार्तवं वा सर्वथा बीजत्वानुपघातादपत्यजनकं, परंतु विकृतं जनयतीति द्रष्टव्यम्॥ २९ ॥ साध्यादिभेदमाह–साध्यं त्वग्रक्तमांसस्थमित्यादि। वातश्लेष्माधिकं च यदिति चर्मैककुष्ठं किट्टिभादिं, वर्ज्यं मज्जास्थिसंश्रितमिति अत्र मज्जास्थिप्रत्यासत्त्या शुक्रस्य तद्गतस्याप्यसाध्यत्वं बोद्धव्यम्॥ ३०॥

आतङ्कदर्पणव्याख्या।

र्थेष्वेकत्राभिहितो विधिरन्यत्राप्याशंकनीयः'' इति ॥ २७ ॥ अस्थिमज्जगतमाह–नासेति। नासाया भंगोऽवदरणम्, अक्षिरागो नेत्रलौहित्यम्, क्षतेषु कृमिसंभूतिः, स्वरहानिश्च ॥ २८ ॥ शुक्रगतकुष्ठलिंगमाह–दंपत्योरिति। दंपत्योः स्त्रीपुरुषयोः, कुष्ठबाहुल्यात् शुक्रार्त्तवयोर्दुष्टिः, शुक्रगतकुष्ठमपत्येन व्यज्यत इत्यर्थः। अत्र शुक्रदुष्टिलक्षणप्रस्तावेन च तत्तुल्यकार्या स्त्रीगतार्तवदुष्टिरप्युक्ता। तदपीत्यपिशब्दात् पूर्वोक्तान्यपि रसादिमज्जांतर्गतकुष्ठलिंगानि भवंति, अन्ये कुष्ठिलमिति पठंति, तत्रापि स एवार्थः। तत्र दुष्टं शुक्रमार्तवं वा सर्वथा बीजत्वानुपघातादपत्यजनकम्, परंतु विकृतं जनयतीति द्रष्टव्यम् ॥ २९ ॥ इदानीं धात्वनुक्रमेपि साध्यादिभेदमाह–साध्यत्वमिति। त्वग्रक्तमांसस्थं वातश्लेष्माधिकं च यत्, तत् साध्यम्, वातश्लेष्माधिकं च यदिति चर्मैककुष्ठकिट्टिमसिध्मालसविपादिका वातश्लेष्मजाः साध्याः, मेदोगतं द्वंद्वजं याप्यम्, अस्थिमज्जासंश्रयं वर्ज्यम्। अत्र मज्जास्थिप्रत्यासत्त्या शुक्रस्य तद्गतस्याप्य-

क्रिमितृड्दाहमन्दाग्निसंयुक्तं यत्त्रिदोषजम् ॥
प्रभिन्नं प्रस्रुताङ्गं च रक्तनेत्रं हतस्वरम् ॥
पञ्चकर्मगुणातीतं कुष्ठं हन्तीह मानवम् ॥ ३१ ॥
वातेन कुष्ठं कापालं पित्तेनौदुम्बरं कफात् ॥
मण्डलाख्यं विचर्चीं च ऋष्याख्यं वातपित्तजम् ॥ ३२ ॥
चर्मैककुष्ठं किटिभं सिध्मालसविपादिकाः ॥
वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी ॥ ३३ ॥
पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ॥
सर्वैः स्यात्काकणं पूर्वंत्रिकं दद्रु सकाकणम् ॥
पुण्डरीकर्ष्यजिह्वे च महाकुष्ठानि सप्त तु ॥ ३४ ॥

---

मधुकोशव्याख्या ।

प्रभिन्नमिति विदीर्णम् । पञ्चकर्मगुणातीतमिति पूर्वरूपक्रियया सह रसादिधातूनां चतुर्णां क्रियाकलापाः पञ्चकर्माणि, तेषां गुणा वीर्याणि, तान्यतीतो यः स तथा, अस्थिमज्जागत इत्यर्थः, ताश्च क्रियाः पूर्वरूपे शोधनमुभयतः, त्वक्प्राप्ते शोधनालेपनादि, रक्तप्राप्ते शोधनालेपनकषायपानशोणितावसेकादि, एवं मांसमेदसोरपि द्रष्टव्यमिति । अथवा पञ्चकर्माणि वमनादीनि, तेषां गुणाः फलानि, तान्यतीतम् ॥ ३१ ॥ कुष्ठेषु चिकित्सार्थं प्रधानं दोषमाह—वातेन कुष्ठं कापालमित्यादि । विचर्च्यपि कफात् तथेति श्लेष्मपित्तात्, तेन दद्रुप्रभृति चर्मदलान्तं श्लेष्मपित्तजमित्यर्थः । पूर्वंत्रिकमिति कापालोदुम्बरमण्डलाख्यम्, अतः सप्तमहाकुष्ठादन्यत्

आतङ्कदर्पणव्याख्या ।

साध्यत्वं बोद्धव्यम् ॥ ३० पुनश्चासाध्यलक्षणमाह—क्रमीति । प्रभिन्नं विदीर्णम्, प्रस्रुतांगं प्रस्रावयुक्तं शरीरम्, हतस्वरं घर्घरस्वरम्, पंचकर्मगुणातीतं पंचकर्माणि वमनादीनि तेषां गुणाः फलानि, तानि निष्फलीकृत्य जातम् ॥ ३१ ॥ कुष्ठेषु चिकित्सार्थं दोषप्राधान्यमाह—वातेनेति । सुगमम् ॥ ३२ ॥ अन्यदपि दोषप्राधान्यमाह—चर्मेति । दद्रुशतारुषी द्वे कुष्ठे न केवलं श्लेष्मपित्तात्, यावत्पुंडरीकं तथा विस्फोटम्, तथा पामा, तथा चर्मदलं जायते, तथेति श्लेष्मपित्तात्, तेन दद्रुप्रभृति चर्मदलांतं श्लेष्मपित्ताधिकसन्निपातजमित्यर्थः ॥ सर्वैरिति । सर्वैस्त्रिभिरेव सर्वैर्दोषैः काकणं नाम कुष्ठमुत्पद्यते । एतानि अष्टादश कुष्ठानि भवंति तेषां मध्ये पूर्वं, त्रिकमिति कापालोदुंबरमंडलाख्यं दद्रु काकणं पुंडरीकमृष्यजिह्वं चेति महाकुष्ठानि स्युः । अतः सप्तमहा-

**कुष्ठैकसंभवं श्वित्रं किलासं वारुणं भवेत् ॥**
**निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ॥ ३५ ॥**

मधुकोशव्याख्या ।

क्षुद्रकुष्ठम् ॥ ३२-३४ ॥ त्वग्दुष्टितुल्यत्वादत्रैव किलासमाह—कुष्ठैकसंभवमिति । कुष्ठेन सह एकं समानं विरुद्धाशनपापकर्मादिसंभवो निदानं यस्य तत्तथा, कुष्ठेन सह समानचिकित्सितत्वं च बोद्धव्यं, 'कुर्याच्चास्मै कुष्ठोक्तं विधानम्' इति वचनात् । चरके त्वस्य हेतुविशेषोऽपि पठ्यते, यथा—'वचांस्यतथ्यानि कृतघ्नभावो निन्दा गुरूणां गुरुधर्षणं च । पापक्रिया पूर्वकृतं च कर्म हेतुः किलासस्य विरोधि चान्नम्' इति । किलासमेव मांसमेदःसमाश्रयणयोगत्वादरुणः श्वित्रं च भण्यते, त्वग्गतमेव किलासं, तस्य लक्षणं निर्दिष्टमपरिस्रावीति स्रावो हि रक्तादिदुष्ट्या भवति, तेनास्य त्वग्गतत्वेन स्रावाभावः । उक्तं च—'त्वग्गतं च यदस्रावि तत् किलासं प्रकीर्तितम्, इति । त्रिधातूद्भवसंश्रयमिति त्रिधातुस्त्रयो दोषास्तथा रक्तमांसमेदांसि संश्रयोऽधिष्ठानं यस्य तत्तथा, अथवा त्रिधातुः रक्तमांसमेदांसि उद्भवाय संश्रयो यस्य तत्तथा, दोषास्तु सर्वसाधारणत्वात् लभ्यन्त एव । ननु, यदि धातुत्रयाश्रितं किलासं, तत्कथं 'यदा त्वचमतिक्रम्य तद्धातूनवगाहते । हित्वा किलाससंज्ञां च कुष्ठसंज्ञां लभेत्तदा' इति विश्वामित्रवचनं किलाससंज्ञाप्रतिक्षेपकं न विरुध्यते? तथा 'त्वग्गतमेव किलासम्' इति सुश्रुतेऽवधारणं विरुद्धम्? उच्यते, विश्वामित्रवचनस्य तावदयमर्थः प्रत्येतव्यः, यदोक्तरक्तादिगतसमस्तकुष्ठलक्षणजनकतया 'धातूनवगाहते तदा न तत् किलासं, किं तर्हि कुष्ठजनकहेत्वन्तरबृंहितदोषोपप्लवत्वात् धातून् दूषयते, तथा हेतुलब्धलक्षणमरुणादिकुष्ठं तदन्यादितररक्तादिगतकुष्ठलिङ्गव्यतिरिक्तमुत्पादसमकालभाविरक्तताम्रादिवर्णतामात्रकारकं रक्तादिगतदोषजन्यं

आतंकदर्पणव्याख्या ।

कुष्ठादन्यत् क्षुद्रकुष्ठं बोद्धव्यम् ॥ ३३ ॥ ३४ ॥ त्वग्दुष्टितुल्यत्वादत्रैव किलासमाह—कुष्ठैकसंभवमिति । कुष्ठेन सह एकः समानः, विरुद्धाशनपापकर्मादिसंभवो निदानं यस्य तत्तथा, कुष्ठतुल्यनिदानमित्यर्थः । कुष्ठेन सह समानचिकित्सितत्वं च बोद्धव्यम् । "कुर्याच्चास्मै कुष्ठदृष्टं विधानम्" इति वचनात् । चरके त्वस्य हेतुविशेषोपि पठ्यते । यथा—"वचांस्यतथ्यानि कृतघ्नभावो निंदा गुरूणां गुरुधर्षणं च । पापक्रिया पूर्वकृतं च कर्म हेतुः किलासस्य विरोधि चान्नम् ॥" इति । किलासमेव मांसमेदःसमाश्रयेण योगित्वाद्दारुणं श्वित्रमिति भण्यते । त्वग्गतमेव किलासं, तस्य लक्षणं निर्दिष्टम्—अपरिस्रावीति । स्रावो हि रक्तादिदुष्ट्या भवति । तेनास्य त्वग्गतत्वेन स्रावाभावः । उक्तं च—"त्वग्गतं तु यदस्रावि तत्किलासं प्रकीर्तितम्" इति । त्रिधातूद्भवसंश्रयमिति । त्रिधातुशब्देन पृथग्दोषाः शुक्रविधाः, त्रिधातुः, संश्रयो यस्य तत्तथा, अथवा—त्रिधातुः

वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ॥
सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥ ३६ ॥
सकण्डूरं क्रमाद्रक्तमांसमेदःसु चादिशेत् ॥
वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥ ३७ ॥

मधुकोशव्याख्या ।

किलासमेव, अन्यथा रक्तादिगतकिलासलक्षणेन चरकोक्तेन विरोधः स्यात्; स यदाह-'दोषे रक्ताश्रिते रक्तं ताम्रं मांससमाश्रिते । श्वेतं मेदःस्थिते श्वित्रं गुरु तच्चोत्तरोत्तरम्' इति, चरके हि किलासस्यैव धातुत्रयसंबन्धकृतवर्णेन दारुणादिसंज्ञान्तरमात्रं कृतं, सुश्रुतेऽपि त्वग्गतमेवेत्यनेन रक्तादिदुष्ट्या विशिष्टरक्तादिगतमहाकुष्ठलिङ्गरहितत्वं, तथा क्षुद्रकुष्ठवत् युगपद्रक्तलसीकात्वङ्मांसदूषकत्वविरहः ख्याप्यते; अथवा एवकारोऽयोगव्यवच्छेदे, यथा-नीलं सरोजं भवत्येवेति, उक्तप्रकारेण धातुत्रयमात्रत्वेनैकदोषजत्वेन चास्य कुष्ठाद्भेदः; श्वित्रसंज्ञां लभेत्तदेति जेज्जटपाठे तु श्वित्रसंज्ञामात्रव्यवहारः किलासस्य, न पुनरर्थभेदः कश्चिदिति । भालुकिना तु धातुभेदेन किलासस्य संज्ञान्तरं दर्शितम्-'वारुणं तत्तु विज्ञेयं मांसधातुसमाश्रयम् । मेदःश्रितं भवेच्छित्रं दारुणं रक्तसंश्रयम्' इति । तथा चरकेऽपि-'दारुणं वारुणं श्वित्रं किलासं नामभिस्त्रिभिः' इति । तेनेहापि तथा बोद्धव्यम् । क्रमाद्रक्तमांसमेदःसु चादिशेद्वर्णेनैवेदृगुभयमिति ईदृशमेव वर्णनारुणताम्रश्वेतेन किलासं रक्तमांसमेदःसु यथाक्रमेणादिशेत् । उभयमिति व्रणजं दोषजं च तच्छ्वित्रं भवति, तथाच भोजः-'श्वित्रं तु द्विविधं विद्याद्दोषजं व्रणजं तथा । तत्र मिथ्योपचारादि व्रणस्य व्रणजं स्मृतम् ॥

आतङ्कदर्पणव्याख्या ।

रक्तमांसमेदांसि,तेन वातादिना पृथगुद्भव उत्पादस्तथा रक्तमांसमेदांसि संश्रयोऽधिष्ठानं यस्य, तत्तथा ॥ ३५ ॥ वातादिना धातुसंश्रयभेदेन वर्णभेदमाह-वातादिति । वातात् श्वित्रं रूक्षं स्पर्शतः, अरुणं रक्तं वर्णतः ॥ पित्तादिति ।पित्तात् श्वित्रं कमलपत्रवत् पद्मदलमिव ताम्रं वर्णेन भवेत् । तथा सदाहं दाहयुक्तम्, तथा रोमविध्वंसि रोमघाति, कफादिति । कफात् श्वित्रं श्वेतं शुक्लम्, घनं सान्द्रम्,तथा गुरु अंगेनानुभूयते तथा' ॥ ३६ ॥ सह कंड्वा वर्तते इति सकंडु कंडुयुक्तम्, क्रमाद्रक्तमांसमेदस्सु चादिशेत् । वर्णेनैवेदृगुभयमिति ईदृशमेव वर्णेनारुणताम्रश्वेतेन किलासं रक्तमांसमेदस्सु यथा क्रमेणादिशेत्, उभयमिति व्रणजं दोषजमिति तत् श्वित्रं भवति । तथा च भोजः-"श्वित्रं तद् द्विविधं विद्याद्दोषजं व्रणजं तथा । तत्र मिथ्योपचाराद्धि व्रणस्य व्रणजं स्मृतम्॥ दोषजं द्विविधं प्रोक्तमात्मजं परजं तथा। परसंस्कारसंस्पर्शाचत्तत्परजमुच्यते ॥ तदा-

१ "सकण्डु च" इति पाठाभिप्रायेण ।

**अशुक्लरोमबहुलमसंश्लिष्टमथो नवम् ॥**
**अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥ ३८ ॥**
**गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् ॥**
**वर्जनीयं विशेषेण किलासं सिद्धिमिच्छता ॥ ३९ ॥**
**प्रसङ्गाद्गात्रसंस्पर्शान्निःश्वासात्सहभोजनात् ॥**
**एकशय्यासनाच्चैव वस्त्रमाल्यानुलेपनात् ॥ ४० ॥**

---

मधुकोशव्याख्या ।

दोषजं च द्विधा प्रोक्तमात्मजं परजं तथा । परसंस्कारसंस्पर्शाद्यत्तत परजमुच्यते । तदात्मजं विजानीयद्देहेष्वनिलादिजम् इति । रक्तादिधातुत्रयगतस्य च किलासस्य दूष्यप्रभावाद्यस्य कस्यापि दोषस्य संबन्धनियता एवारुणाद्या वर्णा बोद्धव्याः, यदि तु तत्र दोषनियतो वर्णः कल्प्यते तदा वर्णातिदेशो व्यर्थः स्यात्, वाताद्रूक्षारुणमित्यादिनैव सिद्धत्वात् । यद्येवं दोषेणात्र वर्णाभिधानं विफलं? निर्विषयत्वात्; नैवं, त्वङ्मात्रगते किलासे दोषवर्णस्य चरितार्थत्वात् । हन्त तर्हि कथं रक्तादिगतत्वमस्य निश्चेतव्यं? त्वग्गते स्वभावेनारुणादिवर्णस्य सद्भावेन सन्दिग्धत्वात् ।उच्यते, क्रमेणारुणादिवर्णोत्पादाद्रक्तादिगतत्वं निश्चेतव्यम्, उत्पत्तिमात्रे त्वरुणादियोगास्त्वग्गतत्वमिति ॥३५-३७॥ तस्य साध्यत्वमसाध्यत्वं चाह--अशुक्लेत्यादि । अशुक्लरोम कृष्णरोम, अबहुलं तनु,असंश्लिष्टं परस्परमसंयुक्तम् । अनग्निदग्धजं अग्निदग्धजं यन्न भवति, एतत् साध्यम् । अतोऽन्यथा अन्यथोक्त सर्वप्रकारमसाध्यं,चरकेऽप्येवंविधस्यासाध्यत्वमुक्तम् । यथा--'यत् शुक्लरोम बहुलं यत् संलग्नं परस्परम् । यच्च वर्षगणोपेतं तच्छ्वित्रं नैव सिध्यति' इति॥ ३८॥गुह्यपाणितलौष्ठेष्विति तलमत्र पादतलं, सुश्रुतेऽन्ते जातमिति सामान्येन निर्देशात् ॥३९॥ कुष्ठस्य संसर्गजप्रसङ्गेन सर्वानेव संसर्गजान् रोगानाह--प्रसङ्गादित्यादि । प्रसङ्गो मैथुनम्, अथवा प्रसङ्गः सातत्यं, तेन कृतात्

आतंकदर्पणव्याख्या ।

त्मजं विजानीयाद्देहेष्वनिलादिजम् ॥'' इति ॥ ३७ ॥ तस्य साध्याऽसाध्यत्वमाह—अशुक्लेति । अशुक्लरोम यावत् रोमाणि शुक्लानि भवंति, अबहुलं तनु, असंश्लिष्टं मिथः परस्परमसंयुक्तम्, अग्निदग्धजं यन्न भवति; एतत्साध्यम् अतोऽन्यथा उक्तप्रकारविपरीतमसाध्यम् । यदुक्तं चरके—''यत् शुक्लरोम बहुलं यत्संलग्नं परस्परम् । यच्च वर्षगणोपेतं तत् श्वित्रं नैव सिद्ध्यति ॥'' इति ॥ ३८ ॥ असाध्यमाह—गुह्येति । एषु स्थानेष्वनवमपि त्याज्यम् । गुह्यं लिंगम्, तलमत्र पादतलम् ॥ ३९ ॥ कुष्ठस्य संसर्गजत्वप्रसंगेनैव संसर्गजान् रोगानाह—प्रसंगादिति । प्रसंगो मैथुनम्, अथवा प्रसंगो नैरंतर्यम्, तेन कृतात् गात्रस्पर्शादेः ।

कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ॥
औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥ ४१ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने कुष्ठनिदानं समाप्तम् ॥ ४९ ॥

## अथ शीतपित्तोदर्दकोठनिदानम् ५०.

शीतमारुतसंस्पर्शात्प्रदुष्टौ कफमारुतौ ॥
पित्तेन सह संभूय बहिरन्तर्विसर्पतः ॥ १ ॥
पिपासारुचिहृल्लासदेहसादाङ्गगौरवम् ॥
रक्तलोचनता तेषां पूर्वरूपस्य लक्षणम् ॥ २ ॥
वरटीदष्टसंस्थानः शोथः संजायते बहिः ॥
सकण्डूस्तोदबहुलश्छर्दिज्वरविदाहवान् ॥ ३ ॥

मधुकोशव्याख्या ।

गात्रसंस्पर्शादेः । औपसर्गिकरोगा इति औपसर्गिकाः पापरोगादयो भूतोपसर्गजाश्च । संक्रामन्ति आविशन्ति रोगसंक्रान्तिश्च कुष्ठिप्रभृतिपापिजनसंसर्गेण पापसंक्रान्ते विकारप्रभावाद्वा बोद्धव्या ॥ ४० ॥ ४१ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां कुष्ठनिदानं समाप्तम् ॥ ४९ ॥

त्वग्दुष्टिदोषत्रयजन्यत्वसामान्यात् कुष्ठानन्तरं शीतपित्तोदर्दादिनिदानम् । तस्य दोषत्रयजन्यत्वमाह—शीतमारुतसंस्पर्शादित्यादि । पित्तेन सह संभूयेति स्वहेतूपचितेन पित्तेन संभूय मिलित्वा । बहिरन्तरिति बहिस्त्वचि, अन्तः शोणितादौ, विसर्पतः प्रसरतः ॥ १ ॥ पूर्वरूपमाह—पिपासेत्यादि । रक्तलोचनता प्रभावात् । पूर्वरूपस्य लक्षणमिति पूर्वरूपस्य स्वरूपमित्यर्थः; न तु लक्षणमत्र लिङ्गं, पिपासादिव्यतिरिक्तस्य पूर्वरूपस्याभावात् ॥ २ ॥ उदर्दलक्षणमाह—वरटीत्यादि । सकण्डूस्तोदबहुल-

आतंकदर्पणव्याख्या ।

औपसर्गिकरोगादयो भूतोपसर्गजा रोगाः संक्रामंति आविशंति । रोगसंक्रांतिश्च कुष्ठिप्रभृतिपापिजनसंसर्गेण पापसंक्रांतिर्विकारप्रभावाद्वा बोद्धव्या ॥ ४० ॥ ४१ ॥ इत्यातंकदर्पणे निदानव्याख्यायां कुष्ठनिदानम् ॥ ४९ ॥

त्वग्दुष्टिदोषत्रयजन्यत्वसामान्यात्कुष्ठानंतरं शीतपित्तादिनिदानम् । तस्य दोषत्रयजन्यत्वमाह—शीतेति । प्रदुष्टौ कुपितौ कफमारुतौ स्वहेतूपचितेन पित्तेन सह मिलित्वा बहिस्त्वचि अंतःशोणितादौ विसर्पतः प्रसरतः ॥ १ ॥ तस्य पूर्वरूपमाह—पिपासेति । अत्र रक्तलोचनताप्रभावात् पूर्वरूपस्य लक्षणमिति पूर्वरूपस्योपलंभनम्, न तु लक्षणं लिंगम् पिपासादेर्व्यतिरिक्तस्य पूर्वरूपस्याभावात् ॥ २॥ उदर्दलक्षणमाह—वरटीति । वरटी कीटविशेषः, तद्दष्टसदृशाकारः, बहिः-

उदर्दमिति तं विद्याच्छीतपित्तमथापरे ॥
वाताधिकं शीतपित्तमुदर्दस्तु कफाधिकः ॥ ४ ॥
सोत्सङ्गैश्च सरागैश्च कण्डूमद्भिश्च मण्डलैः ॥
शैशिरः कफजो व्याधिरुदर्द इति कीर्तितः ॥ ५ ॥
असम्यग्वमनोदीर्णपित्तश्लेष्मान्ननिग्रहैः ॥
मण्डलानि सकण्डूनि रागवन्ति बहूनि च ॥
उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयते ॥ ६ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने शीतपित्तोदर्दकोठ-
निदानं समाप्तम् ॥ ५० ॥

---

मधुकोशव्याख्या।

**छर्दिज्वरविदाहवानिति** । अत्र कण्डूः कफात्, तोदो वातात्, छर्दिज्वरविदाहाः पित्तादिति दोषत्रयलिङ्गम् । अनयोः शीतपित्तोदर्दयोः समानसंस्थानत्वेऽपि वाताधिकं शीतपित्त कफाधिक उदर्दः ॥ ३ ॥ ४ ॥ उदर्दस्य धर्मान्तरमाह—सोत्सङ्गैरित्यादि । उत्सङ्गैः मध्यनिम्नैः, शैशिर इति शिशिरसंभवः ॥ ५ ॥ त्वग्दुष्टिसाम्यादत्रैव कोठोऽभिधीयते—असम्यग्वमनेत्यादि । असम्यक्त्वं वमनस्यायोगमिथ्यायोगादिना, तथोदीर्णानां पित्तश्लेष्मान्नानां निग्रहो वेगविधारणं, तैर्मण्डलानि जायन्ते स कोठः । अथवायमर्थः—असम्यग्वमनोदीर्णौ पित्तश्लेष्माणौ, तथान्ननिग्रहः उपस्थितवेगस्यान्नस्य निग्रहः छर्दिनिग्रहः इति यावत् । तैर्हेतुभिर्भवति । वमनस्य चासम्यक्त्वमयोगमिथ्यायोगाभ्यां ज्ञेयम्, अतियोगस्य तु पित्तश्लेष्मकोपकत्वात् । एतेन हेतुलक्षणभेदाद्भिन्नः कोठ उदर्दात् । कोठो निरनुबन्धः । तथा चोक्तम्—'क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः' इति । सानुबन्ध उत्कोठोऽभिधीयते । सानुब-

आतङ्कदर्पणव्याख्या।

**शरीरे** शोथो जायते । अत्र कंडूः कफात्, तोदो वातात्, छर्दिज्वरविदाहाः पित्तादिति । दोषत्रयलिंगम्, अपरे शीतपित्तमित्याहुः॥ अनयोर्दोषद्वयाधिकत्वमाह—वाताधिकमिति । अनयोः शीतपित्तोदर्दयोः समानसंस्थात्वेऽपि वाताधिकं शीतपित्तम्, कफाधिक उदर्दः ॥ ३ ॥ ४ ॥ उदर्दस्य धर्मांतरमाह—सोत्संगैरिति । मध्यनिम्नैः, शैशिरः शिशिरसंभवः ॥ ५ ॥ त्वग्दोषसामान्यादत्रैव कोठः प्रोच्यते । सानुबंधता च पुनःपुनर्भवत्वेनेति । तथा चोक्तम्—"क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः" । इति सानुबंध उत्कोठोऽभिधीयते। असम्यक्त्वं वमनस्यायोगमिथ्यायो-

# अथाम्लपित्तनिदानम् ५१.

**विरुद्धदुष्टाम्लविदाहिपित्तप्रकोपिपानान्नभुजो विदग्धम् ॥**
**पित्तं स्वहेतूपचितं पुरा यत्तदम्लपित्तं प्रवदन्ति सन्तः ॥ १ ॥**

मधुकोशव्याख्या ।

न्धता च पुनःपुनर्भवनेन ॥ ६ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां शीतपित्तोदर्दकोठनिदानं समाप्तम् ॥ ५० ॥

कोठहेतौ पित्तश्लेष्मोल्लेखात् पित्तश्लेष्ममिलनरूपस्याम्लपित्तस्य निदानम् । निदानपूर्वकमम्लपित्तस्य स्वरूपमाह–विरुद्धेत्यादि । विरुद्धं क्षीरमत्स्यादि, दुष्टं व्यापन्नमन्नं, विदाहिस्थाने विदग्धेति पाठान्तरे विदग्धं भर्जितं, पित्तप्रकोपिपानान्नभुज इति पित्तप्रकोपि पानं तक्रसुरादि, अन्नमाशुधान्यमाषादि, पित्तप्रकोपिपानान्नग्रहणेनैवाम्लविदाहिनो ग्रहणे सिद्धे तदभिधानं विशेषार्थं, 'पित्तप्रकोपणाद्यन्नभुज' इति पाठान्तरे आदिशब्दात् कफादिप्रकोपणमन्नं गृह्यते, एवंविधपानान्नमुपभुञ्जानस्य विदग्धं कुपितं स्वहेतूपचितम्, पुरा यदिति वर्षासु जलौषधिगतविदाहादिभिः स्वहेतुभिरुपचितं संचयमापन्नम् । यदुक्तं–'वर्षास्वम्लविपाकित्वादद्भिरौषधिभिस्तथा' इति ॥ १ ॥

आतङ्कदर्पणव्याख्या ।

गादिना, उदीर्णानि प्रेरितानि पित्तश्लेष्माणानि, तेषां निग्रहैः शरीरे मंडलानि वर्तुलकमलादीनि अतिकंडुमंति लौहित्ययुक्तानि बहूनि च जायंते, अथवाऽयमेवार्थः–असम्यग्वमनेनोदीर्णौ पित्तश्लेष्माणौ, तथाऽन्ननिग्रहः उपस्थितवेगस्यान्नस्य निग्रहः, छर्दिनिग्रह इति यावत् । तैर्भवंति । वमनस्य चासम्यक्त्वमयोगमिथ्यायोगाभ्यां ज्ञेयम्, अतियोगस्य पित्तश्लेष्मकोपकत्वात्, एतेन हेतुलक्षणभेदाद् भिन्नः कोठ उदर्दादिति । कोठो निरनुबंधः, सानुबंध उत्कोठोभिधीयते ॥ ६ ॥ इत्यातंकदर्पणे निदानव्याख्यायां शीतपित्तोदर्दकोठनिदानम् ॥ ५० ॥

कोठहेतौ पित्तकफोल्लेखात् पित्तकफमिलितरूपस्याम्लपित्तस्यातोनंतरं निदानम् । तत्र निदानपूर्वकमम्लपित्तस्य स्वरूपमाह–विरुद्धेति । विरुद्धं क्षीरमत्स्यादि, दुष्टं व्यापन्नमन्नम् । विदाहिस्थाने "विदग्ध" इति पाठांतरम्, तत्र विदग्धं भर्जितम् । पित्तप्रकोपिपानान्नभुज इति । पित्तप्रकोपि पानं तक्रसुरादि, अन्नम् आशुधान्यमाषादि, "पित्तप्रकोपणाद्यन्नभुजः" इतिपाठांतरे । आदिशब्दात् कफादिप्रकोपणमन्नं गृह्यते, एवंविधपानान्नं भुञ्जानस्य विदग्धं कुपितं स्वहेतूपचितम्, पुरा यदिति वर्षासु जलौषधीगतविदाहादिभिर्हेतुभिः उपचितं संचयमापन्नम्, यदुक्तम्–"वर्षास्वम्लविपाकित्वादद्भिरोषधिभिस्तथा" इति । पित्तप्रकोपिपानान्नग्रहणेनैवाम्लविदाहिनो ग्रहणे सिद्धे

अविपाकक्लमोत्क्लेशतिक्ताम्लोद्गारगौरवैः ॥
हृत्कण्ठदाहारुचिभिश्चाम्लपित्तं वदेद्भिषक् ॥ २ ॥
तृड्दाहमूर्च्छाभ्रममोहकारि प्रयात्यधो वा विविधप्रकारम् ॥
हृल्लासकोठानलसादहर्षस्वेदाङ्गपीतत्वकरं कदाचित् ॥ ३ ॥
वान्तं हरित्पीतकनीलकृष्णमारक्तरक्ताभमतीव चाम्लम् ॥
मांसोदकाभं त्वतिपिच्छिलाच्छं श्लेष्मानुजातं विविधं रसेन ॥४॥
भुक्ते विदग्धे त्वथवाप्यभुक्ते करोति तिक्ताम्लवमिं कदाचित् ॥
उद्गारमेवंविधमेव कण्ठहृत्कुक्षिदाहं शिरसो रुजं च ॥ ५ ॥

मधुकोशव्याख्या ।

विदाहाद्यम्लगुणोद्रिक्तं पित्तमम्लपित्तं, तस्य लिङ्गमाह—अविपाकेत्यादि । अविपाक इत्याहारापाकः, क्लमोऽनायासजः श्रमः, अम्लपित्ते पित्तं प्रधानं, वातकफावप्यत्रानुगौ गौरवोद्गारकम्पादिना ज्ञेयौ ॥ २॥ तस्य कदाचिदूर्ध्व ऊर्ध्वगमनभेदाद्द्विविधस्याधोगतिं तावदाह—तृड्दाहेत्यादि । मूर्च्छा सर्वथा ज्ञानशून्यत्वं, मोहो विपरीतज्ञानम् । प्रयात्यधो वेत्यत्र वाशब्दो भाव्यूर्ध्वगमनापेक्षया । विविधप्रकारमिति हरित्पीतकृष्णरक्तादिबहुवर्णत्वदुर्गन्धित्वयोगान्नानाविधम् । कदाचिदिति न सर्वकालम् ॥ ३ ॥ ऊर्ध्वगतिमाह—वान्तमित्यादि । नीलं स्निग्धकृष्णं; कृष्णं मर्दनाञ्जनवद्रूक्षकृष्णम्, आरक्तमीषल्लोहितं, रक्तमन्तर्लोहितम् । मांसोदकाभमिति मांसधावनतोयाभं कृष्णलोहितमित्यर्थः । विविधं रसेनेति रसेन लवणकटुतिक्ताख्येन नानारूपम् ॥ ४ ॥ करोति तिक्ताम्लवमिमिति तिक्तस्य अम्लस्य वा वमिं करोति । उद्गारमेवंविधमे-

आतङ्कदर्पणव्याख्या ।

तदभिधानं विशेषार्थम् ॥ १ ॥ तस्य लिंगमाह—अविपाकेति । अविपाकः आहारापाकः, क्लमोऽनायासजः श्रमः, अम्लपित्ते पित्तं प्रधानम्, वातकफावप्यत्रानुगौ गौरवोद्गारकम्पादिना ज्ञेयौ ॥ २ ॥ तस्य कदाचित् कायोर्द्ध्वाधोगमनभेदाद्द्विविधस्याधोगतिं तावदाह—तृडिति । अधो विविधप्रकारं कदाचित्प्रयाति, तथा तृड्दहादिकारि, तथा हृल्लासादिकरम्, मूर्च्छा सर्वथा ज्ञानशून्यत्वम्, मोहोऽत्र विपरीतं ज्ञानम् । प्रयात्यधो वेत्यत्र वा शब्दो भाव्यूर्ध्वगमनापेक्षया; विविधप्रकारमिति हरितपीतकृष्णरक्तादिबहुवर्णत्वदुर्गंधित्वयोगान्नानाविधम् । कदाचिदिति न सर्वकालम् ॥ ३ ॥ उर्ध्वगतिमाह—वातमिति । हरित् शाकपत्राभम्, नीलं चाषपक्षप्रभम् स्निग्धम्, कृष्णम् अंजनाभम्, आरक्तम् ईषल्लोहितम् रक्तम् अत्यंतलोहितम्, मांसोदकाभं मांसधावनतोयाभम् । अच्छं निर्मलम्, विविधं रसेन लवणकटुतिक्ताख्येनानुरूपं करोति ॥ ४ ॥ आहारस्यावस्थामाह—भुक्त इति । भुक्ते आहारे विदग्धे अथवा कदाचिदभुक्तेपि सति तिक्ताम्लवमिं

# अथाम्लपित्तनिदानम् ५१.

**विरुद्धदुष्टाम्लविदाहिपित्तप्रकोपिपानान्नभुजो विदग्धम् ॥**
**पित्तं स्वहेतूपचितं पुरा यत्तदम्लपित्तं प्रवदन्ति सन्तः ॥ १ ॥**

मधुकोशव्याख्या ।

न्धता च पुनःपुनर्भवनेन ॥ ६ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां शीतपित्तोदर्दकोठनिदानं समाप्तम् ॥ ५० ॥

कोठहेतौ पित्तश्लेष्मोल्लेखात् पित्तश्लेष्ममिलनरूपस्याम्लपित्तस्य निदानम् । निदानपूर्वकमम्लपित्तस्य स्वरूपमाह–विरुद्धेत्यादि । विरुद्धं क्षीरमत्स्यादि, दुष्टं व्यापन्नमन्नं, विदाहिस्थाने विदग्धेति पाठान्तरे विदग्धं भर्जितं, पित्तप्रकोपिपानान्नभुज इति पित्तप्रकोपि पानं तक्रसुरादि, अन्नमाशुधान्यमाषादि, पित्तप्रकोपिपानान्नग्रहणेनैवाम्लविदाहिनो ग्रहणे सिद्धे तदभिधानं विशेषार्थं, 'पित्तप्रकोपणाद्यन्नभुज' इति पाठान्तरे आदिशब्दात् कफादिप्रकोपणमन्नं गृह्यते, एवंविधपानान्नमुपभुञ्जानस्य विदग्धं कुपितं स्वहेतूपचितम्, पुरा यदिति वर्षासु जलौषधिगतविदाहादिभिः स्वहेतुभिरुपचितं संचयमापन्नम् । यदुक्तं–'वर्षास्वम्लविपाकित्वादद्भिरौषधिभिस्तथा' इति ॥ १ ॥

आतङ्कदर्पणव्याख्या ।

गादिना, उदीर्णानि प्रेरितानि पित्तश्लेष्माननि, तेषां निग्रहैः शरीरे मंडलानि वर्तुलकमलादीनि अतिकंडुमंति लौहित्ययुक्तानि बहूनि च जायंते, अथवाऽयमेवार्थः–असम्यग्वमनेनोदीर्णौ पित्तश्लेष्माणौ, तथाऽन्ननिग्रहः उपस्थितवेगस्यान्नस्य निग्रहः, छर्दिनिग्रह इति यावत् । तैर्भवंति । वमनस्य चासम्यक्त्वमयोगमिथ्यायोगाभ्यां ज्ञेयम्, अतियोगस्य पित्तश्लेष्मकोपकत्वात्, एतेन हेतुलक्षणभेदाद् भिन्नः कोठ उदर्दादिति । कोठो निरनुबंधः, सानुबंध उत्कोठोऽभिधीयते ॥ ६ ॥ इत्यातंकदर्पणे निदानव्याख्यायां शीतपित्तोदर्दकोठनिदानम् ॥ ५० ॥

कोठहेतौ पित्तकफोल्लेखात् पित्तकफमिलितरूपस्याम्लपित्तस्यातोऽनंतरं निदानम् । तत्र निदानपूर्वकमम्लपित्तस्य स्वरूपमाह–विरुद्धेति । विरुद्धं क्षीरमत्स्यादि, दुष्टं व्यापन्नमन्नम् । विदाहिस्थाने "विदग्ध" इति पाठांतरम्, तत्र विदग्धं भर्जितम् । पित्तप्रकोपिपानान्नभुज इति । पित्तप्रकोपि पानं तक्रसुरादि, अन्नम् आशुधान्यमाषादि, "पित्तप्रकोपणाद्यन्नभुजः" इतिपाठांतरे । आदिशब्दात् कफादिप्रकोपणमन्नं गृह्यते, एवंविधपानान्नं भुञ्जानस्य विदग्धं कुपितं स्वहेतूपचितम्, पुरा यदिति वर्षासु जलौषधीगतविदाहादिभिर्हेतुभिः उपचितं संचयमापन्नम्, यदुक्तम्–"वर्षास्वम्लविपाकित्वादद्भिरौषधिभिस्तथा" इति । पित्तप्रकोपिपानान्नग्रहणेनैवाम्लविदाहिनो ग्रहणे सिद्धे

अविपाकक्लमोत्क्लेशतिक्ताम्लोद्गारगौरवैः ॥
हृत्कण्ठदाहारुचिभिश्चाम्लपित्तं वदेद्भिषक् ॥ २ ॥
तृड्दाहमूर्च्छाभ्रममोहकारि प्रयात्यधो वा विविधप्रकारम् ॥
हृल्लासकोठानलसादहर्षस्वेदाङ्गपीतत्वकरं कदाचित् ॥ ३ ॥
वान्तं हरित्पीतकनीलकृष्णमारक्तरक्ताभमतीव चाम्लम् ॥
मांसोदकाभं त्वतिपिच्छिलाच्छं श्लेष्मानुजातं विविधं रसेन ॥४॥
भुक्ते विदग्धे त्वथवाप्यभुक्ते करोति तिक्ताम्लवमिं कदाचित् ॥
उद्गारमेवंविधमेव कण्ठहृत्कुक्षिदाहं शिरसो रुजं च ॥ ५ ॥

मधुकोशव्याख्या।

विदाहाद्यम्लगुणोद्रिक्तं पित्तमम्लपित्तं, तस्य लिङ्गमाह—अविपाकेत्यादि। अविपाक इत्याहारापाकः, क्लमोऽनायासजः श्रमः, अम्लपित्ते पित्तं प्रधानं, वातकफावप्यत्रानुगौ गौरवोद्गारकम्पादिना ज्ञेयौ ॥ २॥ तस्य कदाचिदूर्ध्व ऊर्ध्वगमनभेदाद्द्विविधस्याधोगतिं तावदाह—तृड्दाहेत्यादि। मूर्च्छा सर्वथा ज्ञानशून्यत्वं, मोहो विपरीतज्ञानम्। प्रयात्यधो वेत्यत्र वाशब्दो भाव्यूर्ध्वगमनापेक्षया। विविधप्रकारमिति हरित्पीतकृष्णरक्तादिबहुवर्णत्वदुर्गन्धित्वयोगान्नानाविधम्। कदाचिदिति न सर्वकालम् ॥ ३ ॥ ऊर्ध्वगतिमाह—वान्तमित्यादि। नीलं स्निग्धकृष्णं; कृष्णं मर्दनाञ्जनवद्रूक्षकृष्णम्, आरक्तमीषल्लोहितं, रक्तमन्तर्लोहितम्। मांसोदकाभमिति मांसधावनतोयाभं कृष्णलोहितमित्यर्थः। विविधं रसेनेति रसेन लवणकटुतिक्ताख्येन नानारूपम् ॥ ४ ॥ करोति तिक्ताम्लवमिमिति तिक्तस्य अम्लस्य वा वमिं करोति। उद्गारमेवंविधमे-

आतङ्कदर्पणव्याख्या।

तदभिधानं विशेषार्थम् ॥ १ ॥ तस्य लिंगमाह—अविपाकेति। अविपाकः आहारापाकः, क्लमोऽनायासजः श्रमः, अम्लपित्ते पित्तं प्रधानम्, वातकफावप्यत्रानुगौ गौरवोद्गारकम्पादिना ज्ञेयौ ॥ २ ॥ तस्य कदाचित् कायोर्द्ध्वाधोगमनभेदाद्द्विविधस्याधोगतिं तावदाह—तृडिति। अधो विविधप्रकारं कदाचित्प्रयाति, तथा तृड्दहादिकारि, तथा हृल्लासादिकरम्, मूर्च्छा सर्वथा ज्ञानशून्यत्वम्, मोहोऽत्र विपरीतं ज्ञानम्। प्रयात्यधो वेत्यत्र वा शब्दो भाव्यूर्ध्वगमनापेक्षया; विविधप्रकारमिति हरितपीतकृष्णरक्तादिबहुवर्णत्वदुर्गंधित्वयोगान्नानाविधम्। कदाचिदिति न सर्वकालम् ॥ ३ ॥ उर्ध्वगतिमाह—वातमिति। हरित् शाकपत्राभम्, नीलं चाषपक्षप्रभम् स्निग्धम्, कृष्णम् अंजनाभम्, आरक्तम् ईषल्लोहितम् रक्तम् अत्यंतलोहितम्, मांसोदकाभं मांसधावनतोयाभम्। अच्छं निर्मलम्, विविधं रसेन लवणकटुतिक्ताख्येनानुरूपं करोति ॥ ४ ॥ आहारस्यावस्थामाह—भुक्त इति। भुक्ते आहारे विदग्धे अथवा कदाचिदभुक्तेपि सति तिक्ताम्लवमिं

करचरणदाहमौष्ण्यं महतीमरुचिं ज्वरं च कफपित्तम् ॥
जनयति कण्डूमण्डलपिडकाशतनिचितगात्ररोगनिचयम्॥ ६ ॥
रोगोऽयमम्लपित्ताख्यो यत्नात्संसाध्यते नवः ॥
चिरोत्थितो भवेद्याप्यः कृच्छ्रसाध्यः स कस्यचित् ॥ ७ ॥
सानिलं सानिलकफं सकफं तच्च लक्षयेत् ॥
दोषलिङ्गेन मतिमान्भिषङ्मोहकरं हि तत् ॥ ८ ॥
कम्पप्रलापमूर्च्छाचिमिचिमिगात्रावसादशूलानि ॥
तमसो दर्शनविभ्रमप्रमोहहर्षाण्यनिलकोपात् ॥ ९ ॥

मधुकोशव्याख्या ।

चेति । अत्र करोतीति संबध्यते,एवंविधमिति अम्लपित्तम् । कण्ठहृत्कुक्षिदाहं शिरसो रुजं चेति अत्रापि करोतीति संबध्यते ॥ ५ ॥ कण्डूमण्डलपिडकाशतनिचितगात्ररोगनिचयमिति कण्डादिनिचितगात्रं च रोगनिचयं चेति द्वन्द्वः, तेन कण्ड्वादिनिचितगात्रं रोगनिचयं च करोतीत्यर्थः, रोगनिचयोऽविपाकोत्क्लेशादिः ॥ ६ ॥ साध्यत्वादिकमाह—रोग इत्यादि । कृच्छ्रसाध्यः स कस्यचिदिति अहिताहाराचारशीलिनः कस्यचिच्चिरोत्थितोऽपि कृच्छ्रसाध्यः ॥ ७ ॥ तत्रैव केवलानिलकफमिलितानिलकफमात्राणां संसर्गमाह—सानिलमित्यादि । भिषङ्मोहकरमिति तस्योर्ध्वाधःप्रवर्तमानत्वेन छर्द्यतीसाराभ्यां सकाशाद्भेदस्य दुर्ज्ञानत्वात् वैद्यस्य मोहकरत्वम्॥८॥९॥

आतङ्कदर्पणव्याख्या ।

करोति इति संबध्यते । अम्लपित्ते कफपित्तवत्सामान्यमाह—करोति ॥ ५ ॥ कफपित्तं करचरणदाहादिकं जनयति, तथा कंडूमंडलपिडकाचितगात्ररोगनिचयमिति कंड्वादिनिचितगात्रं च रोगनिचयश्चेति द्वंद्वः । तेन कंड्वादिनिचितगात्रं रोगं च करोतीत्यर्थः । रोगचयः अविपाकोत्क्लेशादिः ॥ ६ ॥ साध्यत्वादिकमाह—रोग इति । अयम् अम्लपित्ताख्यो रोगो नवः सन् यत्नात्संसाध्यते, चिरोत्थितो याप्यो भवेत् । कस्यचिदिति ॥ अहिताहाराचारशीलिनः कस्यचिच्चिरोत्थितोपि कृच्छ्रसाध्य इत्यर्थः ॥ ७ ॥ तस्मिन्ननिलकफसंसर्गमाह—सानिलमिति । तच्चाम्लपित्तं सानिलं सवातम्, सानिलकफं सवातकफं लक्षयेत् । दोषलिंगेन वातपित्तकफलिंगेनेत्यर्थः । यत्तस्तद्भिषग्मोहकरं वैद्यभ्रांतिजनकम्, तस्योर्ध्वाधःप्रवर्त्तमानत्वेन छर्द्यतीसाराभ्यां भेदस्य दुर्ज्ञानत्वात् ॥ ८ ॥ सानिलस्याम्लपित्तस्य लक्षणमाह—कंपेति । वातयुतेऽम्ले कंपादयस्तथा तमो-

१ "विभ्रमहर्षणमोहाश्च वातयुते" इतिपाठाभिप्रायेण ।

कफनिष्ठीवनगौरवजडतारुचिशीतसादवमिलेपाः ॥
दहनबलसादकण्डूनिद्राचिह्नं कफानुगते ॥ १० ॥
उभयमिदमेव चिह्नं मारुतकफसंभवे भवत्यम्ले ॥
तिक्ताम्लकटुकोद्गारहृत्कुक्षिकण्ठदाहकृत् ॥ ११ ॥
भ्रमो मूर्च्छारुचिश्छर्दिरालस्यं च शिरोरुजा ॥
प्रसेको मुखमाधुर्यं श्लेष्मपित्तस्य लक्षणम् ॥ १२ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने अम्लपित्तनिदानं समाप्तम् ॥ ५१ ॥

# अथ विसर्पनिदानम् ५२.

लवणाम्लकटूष्णादिसंसेवादोषकोपतः ॥
विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात् ॥ १ ॥

---

मधुकोशव्याख्या।

सादवमिलेपा इत्यत्र सादोऽङ्गसादः, लेपः श्लेष्मलिप्तास्यता । दहनबलसादेति सादशब्दो दहनबलाभ्यां संबध्यते ॥ १०-१२ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायामम्लपित्तनिदानं समाप्तम् ॥ ५१ ॥

अम्लपित्त भवच्छर्दिर्वेगविधारणाद्रक्तदुष्टौ सत्यां विसर्पोत्पत्तेर्हेतुसाम्यात्तदनन्तरं विसर्पनिदानम्। छर्दिर्वेगविघातस्य रक्तदूषकत्वे चरकवचनं यथा—"छर्दिर्वेगप्रतीघातात्काले चानवसेचनात्। शरत्कालप्रभावाच्च शोणितं संप्रदूष्यति" इति । तस्य निदानपूर्विकां संख्यां निरुक्तिं चाह—लवणाम्लेत्यादि । 'विसर्पो न ह्यसंसृष्टो रक्तपित्तेन लक्ष्यते' इति वचनात् लवणाम्लादिकं विशेषेण रक्तपित्तनिदानमुक्तम्। संसे-

आतङ्कदर्पणव्याख्या।

दर्शनादयो भवंति ॥ ९ ॥ कफानुगतस्यलक्षणमाह—कफेति । कफानुगतेऽम्ले कफनिष्ठीवनादिर्लिंगं स्यात् ॥ सादवमिलेपा इति । सादः अंगसादः, लेपः कफलिप्तास्यता । दहनबलसादेति । सादशब्दो दहनबलाभ्यां संबध्यते, अन्यत्सुगमम् ॥ १०-१२ ॥ इत्यातंकदर्पणे निदानव्याख्यायामम्लपित्तनिदानम् ॥ ५१ ॥

अम्लपित्तसंभवच्छर्दिर्वेगविघाताद्रक्तदुष्टौ सत्यां विसर्पोत्पत्तेर्हेतुसामान्यात्तदानंतरं विसर्पनिदानमाह—छर्दिर्वेगविघातस्य च रक्तदूषकत्वे चरकवचनम्, यथा—"छर्दिर्वेगविघातात्तु काले चानवसेचनात्। शरत्कालस्वभावाच्च शोणितं संप्रदुष्यति ॥" इति । तस्य निदानपूर्विकां संख्यां निरुक्तिं चाह—लवणेति । लवणादिभिर्विसर्पो रोगो भवति, स सप्तधा ज्ञेयः । "विसर्पो न ह्यसंसृष्टो रक्त-

पृथक् त्रयस्त्रिभिश्चैको विसर्पा द्वन्द्वजास्त्रयः ॥
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः ॥ २ ॥
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वशास्त्रतः ॥
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः ॥
यस्तु कर्दमको घोरः स पित्तकफसंभवः ॥ ३ ॥
रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः ॥
विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः ॥ ४ ॥

---

मधुकोशव्याख्या ।

वया सततसेवया दोषकोपः संसेवादोषकोपस्ततः, अत्र आदिग्रहणात् चरकोक्तानां हरितशाकपिण्डाकीप्रभृतीनां ग्रहणम् । सप्तधेति उल्वणैकैकदोषजास्त्रयः, सन्निपातज एकः, त्रयो द्वन्द्वजाः, इति सप्तप्रकारत्वमुक्तम् । सर्वतः परिसर्पणादिति । सर्वतः परिसर्पणात् परिसर्पः, विविधं सर्पणाद्विसर्पः । यदुक्तं चरके-"विविधं सर्पति यतो विसर्पस्तेन स स्मृतः । परिसर्पोऽथवा नाम्ना सर्वतः परिसर्पणात्" इति ॥ १-३ ॥ सर्वेषामेव रक्तादिदूष्यचतुष्टयदोषत्रयजन्यत्वमाह-रक्तं लसीकात्वगित्यादि । विसर्पस्य समानसामग्रीकत्वेऽपि कुष्ठाद्भेदः कुष्ठाध्याय एव निरूपितः । दोषशब्देनैव वातादिग्रहणे सिद्धे मला इति कृतम्, अत्यर्थदुष्ट्या शरीरमलिनीकरणत्वं दोषाणां प्रतिपादयितुम् । सन्निपातजेऽसाध्यत्वमपि 'सर्वात्मकः क्षतकृतश्च न सिद्धिमेति' इति वचनात् । तेन विकृतिविषमसमवेतत्वमस्य । चरके त्वन्तर्जबहिर्जभेदेन

आतङ्कदर्पणव्याख्या ।

पित्तेन" इति वचनात् । लवणादिकं विशेषेण रक्तपित्तनिदानमुक्तम् । एषां संततसेवया दोषकोपः-आदिग्रहणाच्चरकोक्त-हरितशाकपिण्डाकीप्रभृतीनां ग्रहणम् । सप्तधेति।उल्वणैकैकदोषजास्त्रयः, सन्निपातज एकः, द्वन्द्वजास्त्रय इति सप्तप्रकारत्वम्।सर्वतः परिसर्पणात् परिसर्पः, विविधं सर्पतीति विसर्पः । यदुक्तं चरके-"विविधं सर्पति यतो विसर्पस्तेन स स्मृतः । परिसर्पोऽथ वा नाम्ना सर्वतः परिसर्पणात् ॥" इति॥ १ ॥ संख्यासंप्राप्तिमाह-पृथक्त्रयस्त्रिभिश्चैको विसर्पा द्वंद्वजास्त्रय इत्यादि सुगमम् ॥२॥ आग्नेय इत्यादिसुगमम् ॥३॥ सर्वेषामेव रक्तादिदूष्यचतुष्टयजन्यत्वमाह-रक्तमिति । विसर्पस्य समानसामग्रीकत्वेपि कुष्ठाद् भेदः कुष्ठाध्याय एव निरूपितः, दोषग्रहणेनैव वातादिग्रहणे सिद्धे मला इति कृतम्-अत्यर्थदुष्ट्या शरीरमलिनीकरणत्वं दोषाणां प्रतिपादयितुम् । लसीकाजेलम् , त्वक्-

---

१ अस्य 'त्वगन्तरे व्रणगतम्' इत्यादिर्बोध्यः ।

तत्र वातात्स वीसर्पो वातज्वरसमव्यथः ॥
शोथस्फुरणनिस्तोदभेदायासार्तिहर्षवान् ॥ ५ ॥
पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ॥
कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ॥
सन्निपातसमुत्थश्च सर्वलिङ्गसमन्वितः ॥ ६ ॥
वातपित्ताज्ज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः ॥
ग्रन्थिभेदाग्निसदनतमकारोचकैर्युतः ॥ ७ ॥
करोति सर्वमङ्गं च दीप्ताङ्गारावकीर्णवत् ॥
यंयं देशं विसर्पश्च विसर्पति भवेत् ससः ॥ ८ ॥

मधुकोशव्याख्या ।

विसर्पः पठितः । यदाह—"मर्मोपघातात्संमोहादयनानां विघट्टनात् । तृष्णातियोगाद्वेगानां विषमं च प्रवर्तनात् । विद्याद्विसर्पमन्तर्जमाशु चाग्निबलक्षयात् । अतो विपर्ययाद्बाह्यमन्यं विद्यात्स्वलक्षणैः" इति ॥ ४—६ ॥ आग्नेयविसर्पमाह—वातपित्तादित्यादिना । दीप्ताङ्गारावकीर्णवदिति ज्वलदङ्गारेणैव व्याप्तमङ्गं मन्यते ॥ ७ ॥ ८ ॥

आतङ्कदर्पणव्याख्या ।

शब्देनात्र त्वगेव रसस्य सप्तधातुषु कृतत्वात् ॥ ४ ॥ वातजं विसर्पमाह—तत्रेति । वातज्वरसमव्यथ इति 'वेपथुर्विषमो वेगः' इत्यादिकः । निस्तोदः शूलेन तुद्यत इव, भेदो विदीर्यत इव, आर्तिः पीडा: आयामो विस्तारवान्, हर्षो रोमहर्षः ॥ ५ ॥ पैत्तिकमाह—पित्तादिति । द्रुतगतिः शीघ्रगतिः । पित्तज्वरलिंग इति "वेगस्तीक्ष्णोऽतिसारः" इत्यादिकः । अतिलोहितोऽतिरक्तः ॥ कफजमाह—कफादिति । कफज्वरसमान इति "स्तैमित्यं स्तिमितो वेगः" इत्यादिकः । सान्निपातिकमाह—सन्निपातेति । सर्वदोषलक्षणैर्युक्त इत्यर्थः । सन्निपातजेऽसाध्यत्वमुक्तम् "सर्वात्मकः क्षतकृतश्च न सिद्धिमेति" इति वचनात् । तेन विकृतिविषमसमवेतत्वमस्य चरके त्वस्यांतर्जबहिर्जभेदेन विसर्पः पठितः । यदाह—"मर्मोपतापात्संमोहादयनानां च घट्टनात् । तृष्णातियोगाद्वेगानां विषमं च प्रवर्तनात् ॥ विद्याद्विसर्पमंतर्जमाशु चाग्निबलक्षयात् । अतो विपर्ययाद्बाह्यमन्यद्विद्यात्स्वलक्षणैः ॥" इति ॥ ६ ॥ वातपित्तजमाग्नेयाख्यं विसर्पमाह—वातपित्तादिति । वातपित्तजोऽयं संज्ञेयः । ज्वरादिभिरुपद्रवैर्युतः ॥ ७ ॥ दीप्तांगारावकीर्णवदिति ज्वल-

१ "भेदात्यीयामहर्षवान्" इतिपाठाभिप्रायेण ।

शान्ताङ्गारासितो नीलो रक्तो वाशु च चीयते ॥
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद्द्रुतं स च ॥ ९ ॥
मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः ॥
व्यथतेऽङ्गं हरेत्संज्ञां निद्रां च श्वासमीरयेत् ॥ १० ॥
हिक्कां च स गतोऽवस्थामीदृशीं लभते न ना ॥
क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु ॥ ११ ॥
चेष्टमानस्ततः क्लिष्टो मनोदेहप्रमोहवान् ॥
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥ १२ ॥
कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम् ॥
रक्तं वा वृद्धरक्तस्य त्वक्शिरास्नायुमांसगम् ॥ १३ ॥

---

मधुकोशव्याख्या ।

शान्ताङ्गारासित इति, निर्वाणाङ्गारवत् कृष्णवर्णः स देशो भवति नीलो रक्तो वेति स देशः स्निग्धो नीलो रक्तो वा भवति । अग्निदग्ध इवेति अग्निदग्धदेश इव । शीघ्रगत्वादिति शीघ्रकारित्वात् ॥ ९ ॥ मर्मानुसारी हृदयाद्यनुसारी । व्यथतेऽङ्गमित्यत्रान्तर्भावितो ण्यर्थः, तेन व्यथयतीत्यर्थः । निद्रां चेत्यत्र हरेदिति संबध्यते ॥ १० ॥ शर्म सुखम् । दुष्प्रबोधोऽश्नुते निद्रामिति निद्रां मरणरूपां प्राप्नोति ॥ ११ ॥ १२ ॥ ग्रन्थिविसर्पमाह—कफेन रुद्ध इत्यादि । कफेनेति स्वहेतुकुपितेन, पवनः स्वहेतुकुपितः,

आतङ्कदर्पणव्याख्या ।

दंगारेणेव व्याप्तमंगं मन्यते ॥ ८ ॥ शांतांगारासित इति, निर्वाणांगारवत्कृष्णवर्णः, नीलः चाषपक्षिवद्वा रक्तो वा स देशो भवति अग्निदग्ध इवेति।आशु शीघ्रम्, अग्निदग्ध इव स्फोटैरुपचीयते वृद्धिं नीयते, शीघ्रगत्वात् शीघ्रकारित्वात्, द्रुतं शीघ्रम्, स विसर्पः, मर्मानुसारी हृदयानुसारी, अतीव बलवानेव वातः । व्यथतेंगमिति । अत्रांतर्भावितो ण्यर्थः । तेन व्यथयतीत्यर्थः । निद्रां संज्ञां च हरेन्नाशयेत् । श्वासं हिक्कां च ईरयेत् प्रकोपयेत् । ईदृशीमवस्थां गतो ना पुरुषः । क्वचिच्छर्म सुखं न प्राप्नोति, केषु भूमिशय्यासनादिषु ॥ ९–११ ॥ स्वतः[१] आत्मनैव, क्लिष्टः पीडितश्चेष्टमानो विकृतां चेष्टां कुर्यात्, दुःखप्रबोधः मनोदेहश्रमोद्भवां[२] निद्रां मरणरूपामश्नुते प्राप्नोति ॥ १२ ॥ कफमारुतजं ग्रंथिवीसर्पमाह—कफेनेति । कफेन स्वहेतुकुपितेन, स्वहेतुकुपितः पवनः, कफं भित्त्वा

---

१ "ततः" इत्यत्र "स्वतः" इतिपाठाभिप्रायेण ।
२ "मनोदेहश्रमोद्भवाम्" इतिपाठा० ।

दूषयित्वा तु दीर्घाणुवृत्तस्थूलखरात्मनाम् ॥
ग्रन्थीनां कुरुते मालां सरक्तां तीव्ररुग्ज्वराम् ॥ १४ ॥
श्वासकासातिसारास्यशोषहिक्कावमिभ्रमैः ॥
मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युताम् ॥ १५ ॥
इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः ॥
कफपित्ताज्ज्वरः स्तम्भो निद्रा तन्द्रा शिरोरुजा ॥ १६ ॥
अङ्गावसादविक्षेपौ प्रलेपारोचकभ्रमाः ॥
मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ॥ १७ ॥
आमोपवेशने लेपः स्रोतसां स च सर्पति ॥
प्रायेणामाशयं गृह्णन्नेकदेशं न चातिरुक् ॥ १८ ॥

---

मधुकोशव्याख्या ।

तेन कफमारुतजत्वमस्योपपन्नं भवति । भित्त्वा तं बहुधा कफमिति कफं विस्तार्य । रक्तं वेति दूषयित्वेत्यनेन वक्ष्यमाणेन संबध्यते ॥ १३ ॥ दीर्घाणुवृत्तस्थूलखरात्मनामिति वृत्तं वर्तुलं; स्थूलमुच्छूनं, खरं कठिनम्, एवंरूपाणां ग्रन्थीनां मालां करोति, अयं च ग्रन्थिविसर्पः सुश्रुतेऽपचीसंज्ञया पठ्यते ॥ १४ ॥ १५ ॥ कर्दमविसर्पमाह—कफपित्तादित्यादिना । स्तम्भ इति गात्रस्य स्तब्धता, आमोपवेशनमामस्य वर्चसस्त्यजनम् । स च विसर्पति प्रायेणामाशयं गृह्णन्नेकदेशमिति कफपित्तयोरामाशयस्थानत्वात् प्रायेणामाशये भवन्नेकदेशव्यापी भवतीत्यर्थः । पिडकैरिति पिडकाभिः । मलिन इति मलदिग्धः । गम्भीरपाक इत्यन्तःपाकः, प्राज्योष्मा प्रचुरोष्मा–

आतङ्कदर्पणव्याख्या ।

विदार्य, रक्तं च दूषयित्वेत्यनेन वक्ष्यमाणेन संबध्यते, वृद्धरक्तस्य मनुष्यस्य । त्वक्शिरास्नायुमांसगमिति रक्तविशेषणम् ॥ १३ ॥ दीर्घाणुवृत्तस्थूलखरात्मनामिति । अणु सूक्ष्मम्, वृत्तं वर्तुलम्, स्थूलम् असूक्ष्मम्, खरं कठिनम्, एवंरूपाणां ग्रंथीनां मालां करोति ॥ १४ ॥ १५ ॥ कफपित्तात्मकं कर्दमविसर्पमाह—कफपित्तादयं ज्ञेयः । स्तंभो गात्रस्य स्तब्धता, अंगावसादः अंगखेदः, विक्षेपः अंगानामितश्चेतश्च प्रेरणम् । इंद्रियगौरवमिति चक्षुरादीनां गौरवम् ॥ १६ ॥ १७ ॥ आमोपवेशनमिति । आमस्य वर्चसस्त्यजनम्, लेपः स्रोतसाम्, स्रोतसां शुषिराणां लिप्तता श्लेष्मादिना । प्रायेणामाशयं गृह्णन्निति कफपित्तयोरामाशयस्थानत्वात् । प्रायेणामाशये भिन्नैकदेशव्यापी भवतीत्यर्थः । न चातिपीडाकरः । पिडकैः पिडकाभिरवकीर्णो व्याप्तः, किंभूतैः? अतिपीतलोहितपांडुरैः ।

पिडकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः ॥
स्निग्धोऽसितो मेचकाभो मलिनः शोथवान् गुरुः ॥ १९ ॥
गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते ॥
पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुशिरागणः ॥ २० ॥
शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम् ॥
बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन् ॥ २१ ॥
वीसर्पं मारुतः कुर्यात्कुलत्थसदृशैश्चितम् ॥
स्फोटैः शोथज्वररुजादाहाढ्यं श्यावशोणितम् ॥ २२ ॥
ज्वरातिसारौ वमथुस्त्वङ्मांसदरणं क्लमः ॥
अरोचकाविपाकौ च विसर्पाणामुपद्रवाः ॥ २३ ॥

मधुकोशव्याख्या ।

स्पष्टस्नायुशिरागण इति पूतिमांसगलनेन स्नाय्वादीनां स्पष्टता । कर्दमाख्यमुशन्ति तमिति । तं कर्दमसारूप्यात् कर्दमाख्यमिच्छन्ति ॥ १६—२० ॥ क्षतविसर्पमाह -बाह्यहेतोरित्यादिना । अयं च पित्तजे विसर्पेऽन्तर्भावनीयः तेन न संख्याधिक्यम् । तथाच भोजः—"शस्त्रप्रहारैस्तैस्तैस्तु व्यालदन्तनखैरपि । क्षते वाप्यथवा भग्ने बहुदोषस्य देहिनः । रक्तं पित्तं च कुपितं व्रणमाशु प्रपद्यते । कुरुतस्ते समेते तु व्रणशोथे सुदारुणम् ॥ आचितं तनुविस्फोटैः कृष्णैः पीतकसन्निभैः ।

आतङ्कदर्पणव्याख्या ।

असितः कृष्णः, मेचकाभः अंजनाभः, मलिनो मलदिग्धः, । गंभीरपाक इति । अंतःपाकः, प्राज्योष्मा प्रचुरोष्मा । स्फुटस्नायुशिरागण इति ।पूतिमांसापगमेन स्नाय्वादीनां स्फुटता॥ १८—२१॥ कर्दमाख्यमुशंति । तं कर्दमसारूप्यात् कर्दमाख्यं कथयंति । क्षतजमाह—बाह्यहेतोरिति । श्यावलोहितं वर्णेन । अयं क्षतजो विसर्पः पित्तजेन्तर्भावनीयः, तेन न संख्याधिक्यम् । तथा च भोजः— "शस्त्रप्रहारैस्तैस्तैस्तु व्यालदंतनखैरपि । क्षते वाप्यथ वा भग्ने बहुदोषस्य देहिनः ॥ रक्तं पित्तं च कुपितं व्रणमाशु प्रपद्यते । कुरुतस्ते समेते तु व्रणोत्सेधं सुदारुणम् ॥ आचितं व्रणविस्फोटैः कृष्णपीतसमन्वितैः । पित्तवीसर्पलिंगं च तस्य शेषं विनिर्दिशेत्" इति ॥ २२ ॥ विसर्पोपद्रवानाह— ज्वरेति । मांसदरणं मांसविदरणम्, शेषं सुगमम् । साध्यासाध्यानाह—सिद्ध्यंतीति । एकैकदोषजनितास्त्रयः साध्याः, त्रिदोषजः क्षतजश्चासाध्यः । पित्तात्मकोंऽजनवपुरिति पैत्तिको योऽत्यंतमुद्रिक्त

१ "स्पष्ट" इत्यत्र "स्फुट" इति पा०

सिध्यन्ति वातकफपित्तकृता विसर्पाः
सर्वात्मकः क्षतकृतश्च न सिद्धिमेति ॥
पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः
कृच्छ्राश्च मर्मसु भवन्ति हि सर्व एव ॥ २४ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने विसर्पनिदानं समाप्तम् ॥ ५२ ॥

# अथ विस्फोटनिदानम् ५३.

कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्षारैरजीर्णाध्यशनातपैश्च ॥
तथर्तुदोषेण विपर्ययेण कुप्यन्ति दोषाः पवनादयस्तु ॥ १ ॥
त्वचमाश्रित्य ते रक्तमांसास्थीनि प्रदूष्य च ॥
घोरान्कुर्वन्ति विस्फोटान्सर्वाञ्ज्वरपुरःसरान् ॥ २ ॥

मधुकोशव्याख्या ।

पित्तवीसर्पवल्लिङ्गं तस्य शेषं विनिर्दिशेत्" ॥ २१॥२३ ॥ साध्यत्वादिकमाह--सिध्यन्तीत्यादि । पित्तात्मकोऽञ्जनवपुरिति अत्यन्तमुद्रिक्तपित्तोऽञ्जनसमवर्णतनुः, अग्निविसर्पाख्यो न साध्य इति व्याख्यानयन्ति। कृच्छ्राश्च मर्मस्विति असाध्यत्वेन कृच्छ्रत्वं बोद्धव्यम् । यदाह भोजः-"वर्ज्यस्तु क्षतजस्तेषां सन्निपातात्तु यो भवेत् । भिषजा जानता त्याज्यः सर्व एव तु मर्मजः' इति ॥ २४ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां विसर्पनिदानं समाप्तम् ॥ ५२ ॥

प्रायेण दोषदूष्यचिकित्सासाम्याद्विस्फोटनिदानमाह--कट्वित्यादि । अजीर्णाध्यशनातपैश्चेति अजीर्णाशनमपक्वद्रव्यस्याशनम्, अध्यशनमजीर्णे भोजनम् । अथवा अजीर्णं स्वरूपतो हेतुरध्यशनं च । ऋतुदोषेणेति शीतोष्णादीनामतियोगेन । विपर्ययेणेति । ऋतुविपर्ययश्च ऋतुस्वभावस्यान्यथाभावः । एभिर्हेतुभिर्यथासंभवं प्रत्येकं दोषत्रयप्रकोपो बोद्धव्यः ॥१॥ ज्वरपुरःसरानित्यनेन ज्वरस्य पूर्वरूपतां दर्शयति॥२॥

आतङ्कदर्पणव्याख्या ।

पित्तत्वादंजनसवर्णः सोऽसाध्यः, अग्निवीसर्पो न साध्यः कृच्छ्राश्च मर्मस्विति असाध्यत्वं कृच्छ्रत्वेन बोद्धव्यम् । तथा च भोजः-"त्याज्यस्तु क्षतजस्तेषां सन्निपाताच्च यो भवेत् । भिषजा जानता त्याज्याः सर्व एव तु मर्मजाः" इति॥२४॥इत्यातंकदर्पणे निदानव्याख्यायां विसर्पनिदानम् ॥५२॥

प्रायेण दोषदूष्यचिकित्सितत्वतुल्यत्वादतोऽनंतरं विस्फोटनिदानारंभः,तस्य निदानमाह--कट्विति । अजीर्णाशनम् अपक्वद्रव्याशनम् । अध्यशनम् अजीर्णभोजनम् । तथर्तुदोषेण विपर्ययेणेति । शीतोष्णादेरतियोगेन ऋतुदोषः ऋतुविपर्ययः ऋतुस्वभावस्यान्यथाभावात्; एभिर्हेतुभिः यथासंभवं प्रत्येकं दोषत्रयप्रकोपो बोद्धव्यः ॥ १ ॥ विस्फोटकसंप्राप्तिमाह--त्वचमिति । ज्वरपुरःसरानित्यनेन ज्वरस्य

अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्तजाः ॥
क्वचित्सर्वत्र वा देहे विस्फोटा इति ते स्मृताः ॥ ३ ॥
शिरोरुक् शूलभूयिष्ठं ज्वरस्तृट् पर्वभेदनम् ॥
सकृष्णवर्णता चेति वातविस्फोटलक्षणम् ॥ ४ ॥
ज्वरदाहरुजास्रावपाकतृष्णाभिरन्वितम् ॥
पीतलोहितवर्णं च पित्तविस्फोटलक्षणम् ॥ ५ ॥
छर्द्यरोचकजाड्यानि कण्डूकाठिन्यपांडुताः ॥
अवेदनश्चिरात्पाकी स विस्फोटः कफात्मकः ॥ ६ ॥
कण्डूर्दाहो ज्वरश्छर्दिरेतैस्तु कफपैत्तिकः ॥
वातपित्तकृतो यस्तु कुरुते तीव्रवेदनाम् ॥ ७ ॥
कण्डूस्तैमित्यगुरुभिर्जानीयात्कफवातिकम् ॥
मध्ये निम्नोन्नतोऽन्ते च कठिनोऽल्पप्रपाकवान् ॥ ८ ॥

---

मधुकोशव्याख्या ।

विस्फोटस्वरूपमाह—अग्निदग्धनिभा इत्यादिना । रक्तपित्तजा इति सर्वत्रैव विस्फोटे रक्तपित्तयोरव्यभिचारित्वं, यथा—शूले वातस्य वातानुबन्धोऽप्यत्र बोद्धव्यः यदाह भोजः—"यदा रक्तं च पित्तं च वातेनानुगतं त्वचि । अग्निदग्धनिभान्स्फोटान्कुरुतः सर्वदेहगान् ॥ सज्वरान्सपरीदाहान्विद्याद्विस्फोटकांस्तु तान्" इति ॥ ३–७ ॥ सान्निपातिकलक्षणमाह—मध्य इत्यादि । मध्ये निम्नोन्नतोऽन्ते चेति

आतङ्कदर्पणव्याख्या ।

पूर्वरूपतां दर्शयति ॥ २ ॥ विस्फोटकसामान्यलिंगमाह—अग्नीति । सज्वरा इति ज्वरस्तेषां पूर्वरूपत्वेन ज्ञेयः । रक्तपित्तजा इति सर्वविस्फोटेषु रक्तपित्तयोरव्यभिचारित्वं सूचितम्, शूलेषु वातस्येव । यदुक्तं भोजे—"यदा रक्तं च पित्तं च वातेनानुगतं त्वचि । अग्निदग्धनिभान्स्फोटान्कुरुतः सर्वदेहगान् ॥ सज्वरान्सपरीदाहान् विद्याद्विस्फोटकांस्तु तान् ॥" इति । क्वचिदिति क्वचिच्छरीरदेशे ॥ ३ ॥ वातिकविस्फोटमाह—शिर इति । शूलं शरीरस्य तोदरूपम्, पर्वभेदनं संधिस्फुटनम् ॥ ४ ॥ पैत्तिकमाह—ज्वरेति । सुगमम् ॥ ५ ॥ श्लैष्मिकमाह—छर्दीति ॥ ६ ॥ कफजप्रसङ्गात् कफपैत्तिकमाह—कंडूरिति । एतैर्लक्षणैः कफपैत्तिको ज्ञेयः ॥ वातपैत्तिकमाह—वातेति । सुगमम् ॥ ७ ॥ कफवातिकमाह—कंडूिति । स्तैमित्यमिति निश्चलत्वम् त्रिदोषजमाह—मध्य इति ।

दाहरागतृषामोहच्छर्दिमूर्च्छारुजाज्वराः ॥
प्रलापो वेपथुस्तन्द्रा सोऽसाध्यः स्यात्त्रिदोषजः ॥ ९ ॥
रक्ता रक्तसमुत्थाना गुञ्जाविद्रुमसन्निभाः ॥
वेदितव्यास्तु रक्तेन पैत्तिकेन च हेतुना ॥ १० ॥
न ते सिद्धिं समायान्ति सिद्धैर्योगशतैरपि ॥
एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः ॥
सर्वदोषोत्थितो घोरस्त्वसाध्यो भूर्युपद्रवः ॥ ११ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने विस्फोटनिदानं समाप्तम् ॥ ५३ ॥

---

मधुकोशव्याख्या ।

मध्ये निम्नोऽन्ते चोन्नत इत्यर्थः । निम्नोन्नत इति प्रयोगोऽसिद्धस्यानित्यत्वेन । एवं संपूर्णा, लक्षणे यस्त्रिदोषजः सोऽसाध्यः ॥ ८ ॥ ९ ॥ रक्तजलक्षणमाह—रक्तेत्यादि । रक्तसमुत्थाना इति लक्ष्यपदं, वेदितव्यास्तु रक्तेनेति लक्षणपदम्, अश्मरीहेतु तत्पूर्वमिति यथा; अयमर्थः—रक्तसमुत्थानाश्च विस्फोटा भवन्ति ते च कथं विज्ञेया इत्यत उक्तं वेदितव्यास्तु रक्तेनेति, अथवा रक्तसमुत्थाना इति रक्तं समुत्थापयतीति निरुच्य रक्तच्छर्दनमभिमतमाचार्यस्य, वेदितव्यास्तु रक्तेनेति पदस्य कारणद्योतकस्याव्यवस्थानात् । घोरोऽत्यन्तदुःखदः । भूर्युपद्रव इति । अत्र विसर्पोक्त एवोपद्रवो ज्ञेयः ॥ १० ॥ ११ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां विस्फोटनिदानं समाप्तम् ॥ ५३ ॥

आतङ्कदर्पणव्याख्या ।

मध्ये निम्नः, अंते चोन्नत इत्यर्थः । अल्पप्रपाकत इति अल्पपाकवानित्यर्थः । मोह इंद्रियाणाम्, एवं संपूर्णलक्षणो यस्त्रिदोषजः सोऽसाध्यः ॥ ८ ॥ ९ ॥ रक्तजमाह--रक्ता इति । रक्ता रक्तवर्णाः, रक्तसमुत्थाना इति रक्तसमुत्थानाश्च विस्फोटा भवंतीत्यर्थः । ते च पित्तहेतुभिः कुपितेन रक्तेन वेदितव्याः, रक्तेनेति लक्षणपदम् यथाश्मरीहेतु तत्पूर्वमिति ॥ १० ॥ घोर इति अत्यंतदुःखप्रदः । भूर्युपद्रव इति बहूपद्रवः, अत्र विसर्पोक्ता एवोपद्रवा ज्ञेयाः ॥ ११ ॥ इत्यातंकदर्पणे निदानव्याख्यायां विस्फोटनिदानम् ॥ ५३ ॥

---

१ अयमेतादृशमेव पाठं मनुते ।

# अथ मसूरिकानिदानम् ५४.

कट्वम्ललवणक्षारविरुद्धाध्यशनाशनैः ॥
दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः ॥ १ ॥
क्रूरग्रहेक्षणाच्चापि देशे दोषाः समुद्धताः ॥
जनयन्ति शरीरेऽस्मिन् दुष्टरक्तेन सङ्गताः ॥ २ ॥
मसूराकृतिसंस्थानाः पिडकाः स्युर्मसूरिकाः ॥
तासां पूर्वं ज्वरः कण्डूर्गात्रभङ्गोऽरतिर्भ्रमः ॥ ३ ॥
त्वचि शोथः सवैवर्ण्यो नेत्ररागश्च जायते ॥
स्फोटाः श्यावारुणा रूक्षास्तीव्रवेदनयान्विताः ॥ ४ ॥
कठिनाश्चिरपाकाश्च भवन्त्यनिलसंभवाः ॥
सन्ध्यस्थिपर्वणां भेदः कासः कम्पोऽरतिः क्लमः ॥ ५ ॥
शोषस्ताल्वोष्ठजिह्वानां तृष्णा चारुचिसंयुता ॥
रक्ताः पीताः सिताः स्फोटाः सदाहास्तीव्रवेदनाः ॥ ६ ॥
भवन्त्यचिरपाकाश्च पित्तकोपसमुद्भवाः ॥
विड्भेदश्चाङ्गमर्दश्च दाहस्तृष्णारुचिस्तथा ॥ ७ ॥

---

मधुकोशव्याख्या ।

विस्फोटप्रभेदत्वात् प्रायेण तुल्यनिदानत्वाच्च मसूरिकानिदानम् । तस्या निदान पूर्विकां संप्राप्तिमाह-कट्वम्लेत्यादि । विरुद्धाध्यशनाशनैरिति विरुद्धैरन्यैरध्यशनैश्च, विरुद्धाध्यशनेन त्विति पाठो वा । दुष्टनिष्पावशाकाद्यैरिति: दुष्टं व्यापन्नमन्नं, निष्पावः शिम्बिबीजम्, आद्यशब्दान्मल्वालुकादिग्रहणम् । प्रदुष्टपवनोदकैरिति विषकुसुमादिसंस्पर्शात् प्रदुष्टः पवनस्तथोदकं च तैः । क्रूरग्रहेक्षणाच्चेति शनैश्चरादयो देशक्षोभकराः क्रूरग्रहास्तेषामीक्षणात् । दुष्टरक्तेन सङ्गता इत्यनेन रक्तस्य कटम्लादिभिर्हेतुभिर्विशेषेण कोपं दर्शयति । अत एवोक्तं तन्त्रान्तरे-"पित्तं शोणितसंसृष्टं यदा दूषयति त्वचम् । तदा करोति पिडकाः सर्वगात्रेषु देहिनाम् ॥ मसूरमुद्गमाषाणां तुल्याः कोलोपमा अपि । मसूरिकास्तु ता ज्ञेयाः पित्तरक्ताधिका बुधैः" इति ॥ १-३ ॥ वातजामाह-स्फोटा इत्यादि । चिरपाका इति विकारप्रभावात् ॥ ४ ॥ ॥५॥ पित्तजामाह-रक्ता इत्यादि । ज्वरस्तीव्रः सुदारुण इति तीव्रश्चण्डवेगः, सुदा-

मुखपाकोऽक्षिरागश्च ज्वरस्तीव्रः सुदारुणः ॥
रक्तजायां भवन्त्येते विकाराः पित्तलक्षणाः ॥ ८ ॥
कफप्रसेकः स्तैमित्यं शिरोरुग् गात्रगौरवम् ॥
हृल्लासः सारुचिर्निद्रा तन्द्रालस्यसमन्विताः ॥ ९ ॥
श्वेताः स्निग्धा भृशं स्थूलाः कण्डूरा मन्दवेदनाः ॥
मसूरिकाः कफोत्थाश्च चिरपाकाः प्रकीर्तिताः ॥ १० ॥
नीलाश्चिपिटविस्तीर्णा मध्ये निम्ना महारुजाः ॥
चिरपाकाः पूतिस्रावाः प्रभूता सर्वदोषजाः ॥ ११ ॥
कण्ठरोधारुचिस्तम्भप्रलापारतिसंयुताः ॥
दुश्चिकित्स्याः समुद्दिष्टाः पिडकाश्चर्मसंज्ञिताः ॥ १२ ॥
रोमकूपोन्नतिसमा रागिण्यः कफपित्तजाः ॥
कासारोचकसंयुक्ता रोमान्त्यो ज्वरपूर्विकाः ॥ १३ ॥

मधुकोशव्याख्या ।

रणो बहुदुःखेनातिदुःसहः ॥ ६ ॥ ७ ॥ रक्तजामाह—रक्तजायामित्यादि । एते विकाराः पित्तलक्षणा इति पित्तजमसूरीलक्षणत्वेन ये उक्ताः पीताः सिताः स्फोटा इत्यादयो येये विकारास्ते रक्तजायां भवन्ति । अत्र कफजामनुक्त्वैव पित्तजाया अनन्तरं रक्तजाया उक्तिः पित्तलक्षणस्यातिदिष्टस्याव्यवहितत्वेन सुखग्रहणार्थं, रक्तरससमत्वात् रक्तमलत्वाद्वा पित्तस्य पित्तजामभिधाय अस्याः कथनं, सर्वत्र कृतस्य समर्थनाय ॥ ८–१० ॥ सान्निपातिकलक्षणमाह—नीला इत्यादि । चिपिटविस्तीर्णा इति चिपिटश्चिउडा इति ख्यातः, तद्वद्विस्तृताः । चर्मसंज्ञिताः इति चर्मदल इति ख्याताः॥ ११॥ १२॥ मसूरिकायाः प्रकारं रोमान्तिकामाह—रोमकूपोन्नतिसमा इत्यादि ।

आतङ्कदर्पणव्याख्या ।

रक्तजामाह--रक्तजायामिति । एते विकाराः पित्तमसूरिकालक्षणत्वेन ये उक्ताः रक्ताः पीताः सिताः स्फोटा इत्यादयो ये विकाराः ते रक्तजायां भवंति ॥ १--९ ॥ कफजामाह--श्वेता इति । सुगमम् ॥ १० ॥ सन्निपातजामाह—नीला इति । नीलाश्चाषपक्षप्रतिमाः । चिपिटविस्तीर्णा इति चिपिटाश्चिउडा इति ख्याताः, तद्वद्वितताः । मध्ये निम्ना इत्युक्ते प्रांतोन्नतत्वं ज्ञेयम् । प्रभूताः प्रचुराः ॥ ११ ॥ कंठरोधः कंठग्रहः, प्रलापोऽबद्धभाषणम्, दुश्चिकित्स्याः असाध्याः, चर्मसंज्ञिता इति 'चामघांस' इति ख्यातः ॥ १२ ॥ मसूरिकायाः प्रकारांतरं रोमांतिकामाह--रोमेति ।

१ आद्याः सार्द्धसप्तश्लोकाः सुगमत्वान्न व्याख्याताः, लेखकप्रमादाद्वै तेषां व्याख्यानं परिभ्रष्टमिति न निश्चीयते ।

तोयबुद्बुदसंकाशाः त्वग्गतास्तु मसूरिकाः ॥
स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च ॥ १४ ॥
रक्तस्था लोहिताकाराः शीघ्रपाकास्तनुत्वचः ॥
साध्या नात्यर्थदुष्टाश्च भिन्ना रक्तं स्रवन्ति च ॥ १५ ॥
मांसस्थाः कठिनाः स्निग्धाश्चिरपाका घनत्वचः ॥
गात्रशूलतृषाकण्डूज्वरारतिसमन्विताः ॥ १६ ॥
मेदोजा मण्डलाकारा मृदवः किंचिदुन्नताः ॥
घोरज्वरपरीताश्च स्थूलाः स्निग्धाः सवेदनाः ॥ १७ ॥
संमोहारतिसंतापाः कश्चिदाभ्यो विनिस्तरेत् ॥
क्षुद्रा गात्रसमा रूक्षाश्चिपिटाः किंचिदुन्नताः ॥ १८ ॥

---

मधुकोशव्याख्या ।

रागिण्य इति लोहिताः, ज्वरपूर्विका इति ज्वरपूर्वरूपाः ॥ १३ ॥ रसादिसप्तधातुगतमसूरिकालिङ्गमाह-तोयबुद्बुदसंकाशा इत्यादि । अत्र दुष्टदूष्यप्रभावात् तोयबुद्बुदसंकाशादीनि दोपलक्षणानि च भवन्ति, दोषमन्तरेण दूष्यदुष्टेरभावात्; अत एव वक्ष्यति--'दोषमिश्राश्च सप्तैता द्रष्टव्या दोपलक्षणैः' इति । त्वक्शब्देनात्र रसोऽभिधीयते, धातुगतप्रस्तावात् । त्वग्गताः साध्या अल्पदोषसंबन्धाद्रक्तजाया अपि साध्यत्वेनाभिधानात् । मांसस्थाः कृच्छ्रसाध्याः, अत्यवगाढदोषदुष्टेः । मेदोजायां कश्चिदाभ्यो विनिस्तरेदित्यनेनात्यन्तकृच्छ्रसाध्यत्वं बोधयति । अस्थिमध्यस्थितत्वान्मज्ज्ञः क्षुद्रा इत्यादिना अस्थिमज्जगतयोः समानं लिङ्गम् । मज्जोत्था

आतङ्कदर्पणव्याख्या ।

रोमकूपोच्छ्रायाः, रागिण्य इति लोहिताः, ज्वरपूर्विका इति ज्वरपूर्वरूपाः ॥ १३ ॥ रसादिसप्तधातुगतमसूरिकाया लिंगमाह--तोयेति । अत्र दुष्टदूष्यप्रभावात्तोयबुद्बुदसंकाशादीनि लक्षणानि दोषलक्षणानि च भवंति, दोषमंतरेण दूष्यदुष्टेरभावात् । अत्र वक्ष्यति--"दोषमिश्रास्तु सप्तैता द्रष्टव्या दोपलक्षणैः" इति । त्वक्शब्देनात्र रसो गृह्यते, धातुगतप्रस्तावात् । त्वग्गताः साध्याः, स्वल्पदोषसंबंधात् ॥ १४ ॥ रक्तजामाह--रक्तोत्था इति । अत्यर्थं चेन्न दुष्टा तदा साध्या ॥ अत्रापि स्वल्पदोषानुबंधत्वेन साध्यत्वम् ॥ १५ ॥ मांसस्थामाह--मांसस्थाः, कृच्छ्रसाध्याः । अत्यवगाढदोषदुष्टेः ॥ १६ ॥ मेदोगतामाह--मेदोजा इति । मृदवो मृदुस्पर्शाः, घोरज्वरपरीता इति दारुणज्वरो यतः ॥ १७ ॥ संमोह इंद्रियाणाम्, कश्चिदाभ्यो विनिस्तरेदित्यनेनात्यंतं कृच्छ्रसाध्यत्वं बोधयति । अस्थिमज्जगतामाह--क्षुद्रा इति । अत्र अस्थिमज्जगतयोः

मज्जोत्था भृशसंमोहवेदनारतिसंयुताः ॥
छिन्दन्ति मर्मधामानि प्राणानाशु हरन्ति हि ॥ १९ ॥
भ्रमरेणेव विद्धानि कुर्वन्त्यस्थीनि सर्वतः ॥
पक्काभाः पिडकाः स्निग्धाः सूक्ष्मा[1]श्चात्यर्थवेदनाः॥२० ॥
स्तैमित्यारतिसंमोहदाहोन्मादसमन्विताः ॥
शुक्रजायां मसूर्यां तु लक्षणानि भवन्ति हि ॥ २१ ॥
निर्दिष्टं केवलं चिह्नं दृश्यते न तु जीवितम् ॥
दोषमिश्रास्तु सप्तैता द्रष्टव्या दोषलक्षणैः ॥ २२ ॥
त्वग्गता रक्तजाश्चैव पित्तजाः श्लेष्मजास्तथा ॥
श्लेष्मपित्तकृताश्चैव सुखसाध्या मसूरिकाः ॥ २३ ॥
वातजा वातपित्तोत्थाः श्लेष्मवातकृताश्च याः ॥
कृच्छ्रसाध्या मतास्तस्माद्यत्नादेता उपाचरेत् ॥ २४ ॥

मधुकोशव्याख्या ।

इत्यत्र मज्जग्रहणादस्थ्नोऽपि ग्रहणमाधारत्वात्, अतएव वक्ष्यति-'भ्रमरेणेव विद्धानि कुर्वन्त्यस्थीनि सर्वतः' इति । मर्मधामानीति मर्मस्थानानि । पक्काभा इत्यादिना शुक्रजाया लिङ्गम् । दृश्यते न तु जीवितमिति गम्भीरधातुगतदोषदुष्टेः शुक्रजाया असाध्यत्वम् । अस्य न्यायस्य समानतया अस्थिमज्जगतयोरप्यसाध्यत्वं बोद्धव्यम् ॥ १४–२३ ॥ वातजा इत्यादि । वातजादयः सन्निपातोत्थान्ता असाध्याः । एतासां संमूर्च्छनाविशेषजनितवक्ष्यमाणप्रवालादिवर्णयोगादसाध्यत्वं, तेनैतद्वर्णविरहे वातजायाश्चिकित्साविधिरप्युक्त उपपद्यत इति केचित् । अन्ये त वातजादय एताः

आतङ्कदर्पणव्याख्या ।

समानं लक्षणं ज्ञेयम् । मज्जोत्था इत्यत्र मज्जग्रहणादस्थ्नोऽपि ग्रहणमाधारत्वात्, क्षुद्राः तन्व्यः, गात्रसमाः शरीरसमवर्णाः, चिपिटाः चिउडाकाराः, अत एव वक्ष्यति-"भ्रमरेणेव विद्धानि भवंत्यस्थीनि सर्वतः" इति । मर्मधामानि मर्मस्थानानि हृदयादीनि । शुक्रगतामाह–पक्काभा इति । पक्काकारा अननुपक्का । अन्ये पंकाभाः इति पठंति । तत्र कर्दमाभाः श्लक्ष्णाः मसृणाः चिह्नं दृश्यते न तु जीवितमिति । गंभीरधातुगतदोषदुष्टेः शुक्रजायामसाध्यत्वं बोद्धव्यम् ॥ १८–२२ ॥ धातुगतानां दोषजानामपि साध्यत्वमाह–त्वग्गता इति ॥ २३ ॥ रसगताः कष्टसाध्या आह–वातजा

१ "सूक्ष्माः" इत्यत्र "श्लक्ष्णाः" इति पा० ।

असाध्याः सन्निपातोत्थास्तासां वक्ष्यामि लक्षणम् ॥
प्रवालसदृशाः काश्चित् काश्चिज्जम्बूफलोपमाः ॥ २५ ॥
लोहजालसमाः काश्चिदतसीफलसन्निभाः ॥
आसां बहुविधा वर्णा जायन्ते दोषभेदतः ॥ २६ ॥
कासो हिक्का प्रमोहश्च ज्वरस्तीव्रः सुदारुणः ॥
प्रलापश्चारतिर्मूर्च्छा तृष्णा दाहोऽतिघूर्णता ॥ २७ ॥
मुखेन प्रस्रवेद्रक्तं तथा घ्राणेन चक्षुषा ॥
कण्ठे घुर्घुरकं कृत्वा श्वसित्यत्यर्थवेदनम् ॥ २८ ॥
मसूरिकाभिभूतस्य यस्यैतानि भिषग्वरैः ॥
लक्षणानि च दृश्यन्ते न दद्यादत्र भेषजम् ॥ २९ ॥

मधुकोशव्याख्या ।

स्वरूपत एवासाध्याः, चिकित्सोक्तिस्तु वातजादीनां महात्ययनिषेधार्थं, लिङ्गान्तरसंभवार्थं च तासां वक्ष्यामि लक्षणमित्युक्तमित्याहुः । तासामिति असाध्यवातजादीनाम् । लोहजालसमा इति जालं जालकं गुडकमिति यावत्, तद्वत्कृष्णवर्णाः। अतसीफलसन्निभा इति उमाफलवर्णतुल्यवर्णाः । अनुक्तवर्णान्तरसंग्रहार्थमाह— आसां बहुविधा इत्यादि । दोषभेदत इति वातपित्तादिदोषविशेषात्, दुष्टिविशेषादित्यन्यः ॥ २४-२६ ॥ सर्वमसूरिकाया आवस्थिकं लिङ्गमाह—कास इत्यादि । ज्वरस्तीव्रः सुदारुण इति, अत्र सुदारुण इति परेण संबध्यते, तेन सुदारुणः प्रलापः अतिघूर्णता जिह्मायनम् । तथा घ्राणेन चक्षुषेत्यत्र रक्तं स्रवेदिति संबध्यते । श्वसि-

आतङ्कदर्पणव्याख्या ।

इति । एता वातजादयः स्वरूपत एव कष्टसाध्याः, चिकित्सितोक्तिस्तु वातजाया महात्ययनिषेधार्थम्॥२४॥असाध्या आह—असाध्या इति ।तासामिति वातादीनाम् । दोषदूष्यसंमूर्छनाद्विशेषवर्णत्वेन लक्षणमाह—प्रवालेति ॥ २५ ॥ लोहजालनिभाः लोहजालकं लोहगुलिकम् तद्वत्कृष्णवर्णाः, कश्चिदतसीफलतुल्यवर्णाः । अनुक्तवर्णान्तरसंग्रहार्थमाह—आसामिति । आसां मसूरिकाणां वर्णा बहुविधा जायंते । कथमित्याह—दोषभेदत इति । वातपित्तादिदोषविशेषात्, दुष्टिविशेषादित्यर्थः॥२६॥ तासामावस्थिकलक्षणमाह—कास इति । प्रमोह इंद्रियाणाम्, ज्वरस्तीव्र इति । तीव्रवेगः सुदारुणो घोरः । अन्ये सुदारुण इति परेण संबध्यत इत्याहुः, तेन सुदारुणः प्रलापः अतिघूर्णता जिह्मायनम्, तथा घ्राणेन चक्षुषेति । अत्र रक्तं प्रस्रवेदिति संबध्यते । श्वसितीति श्वासो

मसूरिकाभिभूतो यो भृशं घ्राणेन निःश्वसेत् ॥
स भृशं त्यजति प्राणांस्तृषार्तो वायुदूषितः ॥ ३० ॥
मसूरिकान्ते शोथः स्यात् कूर्परे मणिबन्धके ॥
तथांसफलके चापि दुश्चिकित्स्यः सुदारुणः ॥ ३१ ॥
इति श्रीमाधवकरविरचिते माधवनिदाने मसूरिकानिदानं समाप्तम् ॥ ५४ ॥

# अथ क्षुद्ररोगनिदानम् ५५.

स्निग्धाः सवर्णा ग्रथिता नीरुजा मुद्गसन्निभाः ॥
कफवातोत्थिता ज्ञेया बालानामजगल्लिकाः ॥ १ ॥

मधुकोशव्याख्या ।

तीति श्वासो भवति॥२७—२९॥सामान्येनासाध्यत्वमाह—मसूरिकाभिभूतो य इत्यादि। घ्राणेन निःश्वसेदिति मुखव्यतिरेकेण घ्राणेनैव निःश्वसेत्, सर्ववाक्यानामवधारणफलत्वात् ॥ ३० ॥ मसूरिकाया उपद्रवमाह—मसूरिकान्ते शोथः स्यादित्यादि । दुश्चिकित्स्य इति दुःशब्दोऽयं निषेधे, तेन असाध्य इत्यर्थः ॥ ३१ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां मसूरिकानिदानं समाप्तम् ॥ ५४ ॥

विसर्पादीनामक्षुद्रहेतुलक्षणचिकित्सितानामभिधानेन क्षुद्रहेतुलक्षणचिकित्सितानां क्षुद्ररोगाणां पारिशेष्यात् क्षुद्ररोगनिदानम् । ननु, यदि क्षुद्रत्वमेषां हेतुलक्षणचिकि-

आतङ्कदर्पणव्याख्या ।

भवति ॥ २७—२९ ॥ सामान्येनासाध्यतामाह—मसूरिकेति । यो मसूरिकाभिभूतो नरो भृशं घ्राणेन निःश्वसेदिति मुखव्यतिरेकेण घ्राणेनैव निःश्वसेत्, सर्ववाक्यानामवधारणत्वात् । तथा यः प्रदूषितो मसूरिकाभिः पीडितो नरो भृशं तृषार्तो भवति, स तथाविधो नरः प्राणांस्त्यजति ॥ ३०॥ मसूरिकाया उपद्रवमाह—मसूरिकांत इति । कूर्परे जानुकूर्परे, मणिबंधने घुटिकायाम्, अंसफलके पार्श्वयोरुपरि, दुश्चिकित्स्य इति असाध्य इत्यर्थः ॥ ३१ ॥ इत्यातंकदर्पणे निदानव्याख्यायां मसूरिकानिदानम् ॥ ५४ ॥

क्षुद्ररोगाणां मसूरिकारंभकत्वादतोनंतरं क्षुद्ररोगनिदानारंभः । क्षुद्रा लघवः, तिलकालकाभिप्रायेण, अग्निरोहिणीवल्मीकप्रभृतीनामभिप्रायेण क्षुद्राः तीक्ष्णाः, अन्यस्त्वाह, क्षुद्रशब्दः स्वल्पे रौद्रे च प्रवर्त्तते, तेन यथायोग्यं सर्वत्र व्यवस्था दृश्यते, रौद्रे च क्षुद्रशब्दो यथा—"अपि क्षुद्रा मृगा यत्र शांताश्चेरुः समं मृगैः" इति । क्षुद्राणां बालानां रोगाः क्षुद्ररोगा इति केचित् । अथवा पूर्वाचार्यपठिता पारिभाषिकीयं संज्ञा काथपाक्यसंज्ञावत्, एषां संक्षेपेण चतुश्चत्वारिंशद्विकारा अत्र वक्तव्याः । क्रमेण दर्शयति । तेष्वजगल्लिकामाह—स्निग्धेति। सवर्णा शरीरसम-

१ "वा प्रदूषितः" इति पा०

यवाकारा सुकठिना ग्रथिता मांससंश्रिता ॥
पिडका कफवाताभ्यां यवप्रख्येति सोच्यते ॥ २ ॥
घनामवक्रां पिडकामुन्नतां परिमण्डलाम् ॥
अन्त्रालजीमल्पपूयां तां विद्यात्कफवातजाम् ॥ ३ ॥
विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम् ॥
विवृतामिति तां विद्यात्पित्तोत्थां परिमण्डलाम् ॥ ४ ॥

---

मधुकोशव्याख्या ।

त्स्याल्पत्वेन तर्हि अग्निरोहिणीवल्मीकादीनां त्रिदोषजत्वेन हेत्वादिबाहुल्यात् कथं क्षुद्रत्वम् ? नैवं, बाहुल्येन तावत् छत्रिणो गच्छन्तीतिवत् । किंवा अवान्तरभेदविरहः क्षुद्रत्वं, येनात्र वक्तव्यानामजगल्लिकादीनां न दोषदूष्यादिकृतभूरिसंख्याभेदेन व्रणज्वरादिवन्निर्देशः, किंतु प्रत्येकं स्तोकसंख्ययाभिधानं तेषाम्, अन्यस्त्वाह—क्षुद्रशब्दोऽल्पे रौद्रे च वर्तते तेन यथायोग्यं सर्वत्र व्यवस्था दृश्यते, रौद्रे क्षुद्रशब्दो यथा—क्षुद्रा मृगा यत्र शान्ताश्चेरुः समं मृगैरिति । क्षुद्राणां बालानां रोगाः क्षुद्ररोगा इति केचित् । एवमप्यजगल्लिकाऽहिपूतनादीनामेव परिग्रहो न त्वन्येषाम् । संक्षेपेण चतुश्चत्वारिंशद्विकारानत्र वक्तव्यान् क्रमेण दर्शयति--स्निग्धेत्यादि । भोजे तु मूषिकाकर्णमुष्ककोशफलार्शःप्रभृतयोऽधिकविकाराः पठ्यन्ते, ते च सुश्रुते विकारस्यानन्त्यादनुमता एव। बालानामिति प्रायोभावित्वादुक्तं, तेनाबालानामपि दृश्यमानाः संगच्छन्ते ॥ १ ॥ यवप्रख्यामाह—यवाकारेत्यादि । यवाकारेति यववन्मध्ये स्थूला ॥ २ ॥ अन्त्रालजीमाह--घनामित्यादि । अन्त्रालजी स्नायुगता भोजवचनादवगन्तव्या । यदुक्तं-- 'श्लेष्मानिलौ श्रितौ स्नायुपिडकां परिमण्डलाम् । दुष्टौ जनयतोऽवक्रामल्पपूयामकण्डुराम् ॥ आमोदुम्बरसंकाशां विद्यादन्त्रालजीं तु ताम्' इति ॥ ३ ॥ विवृतामाह--विवृतास्यामित्यादि । पित्तेनाधिकपाकाद्विवृतमुखतया विवृतासंज्ञा ॥ ४ ॥

आतङ्कदर्पणव्याख्या ।

वर्णा, ग्रथिताकारत्वेन व्यवस्थिता, प्रायेण बालानामन्येषामप्यजगल्लिका भवति ॥ १ ॥ यवप्रख्यामाह--यवाकारेति । यववन्मध्ये स्थूला अंतर्निम्ना॥२॥ अंत्रालजीमाह—अन्त्रालजी बहिर्वक्ररहिता अंतर्मुखी स्नाय्वाश्रिता च । यदुक्तं भोजेन--"कफानिलौ श्रितौ स्नायुपिडकां परिमंडलाम्। दुष्टौ जनयतोऽवक्रामल्पपूयामकंडुराम्। आमोदुंबरसंकाशां विद्यादन्त्रालजीं तु ताम्॥" इति॥ ३ ॥ विवृतामाह--विवृतास्यामिति । पित्तेनाधिकपाकाद्विवृतमुखतया विवृतेति संज्ञा ॥ ४ ॥

ग्रथिताः पञ्च वा षड्वा दारुणाः कच्छपोपमाः ॥
कफानिलाभ्यां पिडका ज्ञेया कच्छपिका बुधैः ॥ ५ ॥
ग्रीवांसकक्षाकरपाददेशे सन्धौ गले वा त्रिभिरेव दोषैः ॥
ग्रन्थिः स वल्मीकवदक्रियाणां जातः क्रमेणैव गतः प्रवृद्धिम् ६
*मुखैरनेकैः स्रुतितोदवद्भिर्विसर्पवत्सर्पति चोन्नताग्रैः ॥
वल्मीकमाहुर्भिषजो विकारं निष्प्रत्यनीकं चिरजं विशेषात् ७॥
पद्मकर्णिकवन्मध्ये पिडकाभिः समाचिताम् ॥
इन्द्रविद्धां तु तां विद्याद्वातपित्तोत्थितां भिषक् ॥ ८ ॥
मण्डलं वृत्तमुत्सन्नं सरक्तं पिडकाचितम् ॥
रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम् ॥ ९ ॥
वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः ॥
स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्दभः ॥ १० ॥

मधुकोशव्याख्या।

कच्छपिकालक्षणमाह--ग्रथिता इत्यादि। दारुणाः कठिनाः।मध्योन्नतत्वेन पर्यन्ताल्पत्वेन च कच्छपिकासंज्ञा॥५॥ वल्मीकलक्षणमाह—ग्रीवांसेत्यादि । वल्मीकवदित्यनेन प्रचुरशिखरत्वेन समुच्छ्रितत्वं दूरावगाढमूलत्वं च ख्याप्यते। अत एव चिकित्सायामवगाढमूलशोधनार्थमग्निक्षाराभ्यां चिकित्सेदित्युक्तम् ॥ ६ ॥ ७ ॥ इन्द्रविद्धामाह—पद्मकर्णिकावदित्यादि। पद्मकर्णिकावन्मध्ये इति पद्मवराटवत् ॥८॥ गर्दभिकामाह—मण्डलमित्यादि । गर्दभिका यद्यपि समानतन्त्रे न पठ्यते तथापि सर्वत्र सुश्रुतेऽभिधीयते। अविगीतपाठेन व्यवस्थितैव ॥ ९ ॥ पाषाणगर्दभलक्षणमाह—वातेत्यादि । स्थिरः कठिनः, पाषाणवत् काठिन्यात् पाषाणगर्दभः ॥ १० ॥

आतङ्कदर्पणव्याख्या।

कच्छपिकामाह—ग्रथिता इति। दारुणाः कठिनाः, मध्ये उन्नतत्वेन पर्यंते नतत्वेन च कच्छपिका संज्ञा ॥ ५ ॥ वल्मीकमाह—ग्रीवेति । वल्मीकवदित्यनेन प्रचुरशिखरित्वमुच्छ्रितत्वं दूरावगाढमूलत्वं च ख्याप्यते, अत एव चिकित्सायामवगाढमूलशोधनार्थम् 'अग्निक्षाराभ्यामुपचरेत्' इत्युक्तम्। अक्रियाणामपथ्यं च तामनिष्प्रत्यनीकमसाध्यम् ॥ ६ ॥ ७ ॥ इंद्रविद्धामाह—पद्मेति। पद्मकर्णिकावत् मध्ये पिडकाभिः युक्तम् ॥ ८ ॥ गर्दभिकामाह—मंडलमिति । वृत्तं वर्तुलम्। उत्सन्नमुन्नतम् ॥ ९ ॥ पाषाणगर्दभमाह—वातेति । स्थिरः कठिनः ॥ १० ॥ पनसिकामाह—

कर्णस्याभ्यन्तरे जातां पिडकामुग्रवेदनाम् ॥
स्थिरां पनसिकां तां तु विद्याद्वातकफोत्थिताम् ॥ ११ ॥
विसर्पवत्सर्पति यः शोथस्तनुरपाकवान्[१] ॥
दाहज्वरकरः पित्तात्स ज्ञेयो जालगर्दभः ॥ १२ ॥
पिडकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम् ॥
सर्वात्मिकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम् ॥ १३ ॥

मधुकोशव्याख्या ।

पनसिकामाह—कर्णस्याभ्यन्तरे जातामित्यादिना । एषा भोजे ' समन्ततः ' इति वचनात्, कर्णस्य बहिरपि भवतीति केचिद्व्याचक्षते । यदुक्तं—"कफवातौ प्रकुपितौ मांसमाश्रित्य कर्णयोः । समन्ततः परिस्तब्धां कुरुतः पिडकां स्थिराम् ॥ विषमां दाहसंयुक्तां विद्यात्पनसिकां तु ताम्" इति । तत्तु न सम्यक्, समन्तत इत्यस्य कर्णाभ्यन्तर एवोपपन्नत्वात् । दृश्यते बाह्यरन्ध्रे शालूकाकारेयमिति केचित् । अस्यां वातकफजायां भोजे दाहपाठो विकृतिविषमसमवायादधिष्ठानभूतरक्तप्रभावाद्वावगन्तव्यः ॥ ११ ॥ जालगर्दभलक्षणमाह—विसर्पवदित्यादि । अपाकवानिति ईषत्पाकवान्, पित्तकृतत्वेन सर्वथापाकाभावस्यायुक्तत्वादिति चक्रः । किंतु पाकरहित एवायमुपलभ्यते । पित्तादित्युद्धतपित्तात्, तेन भोजोक्तं पित्तोल्बणदोषत्रयजन्यत्वमस्याविरुद्धं भवति । स यदाह—"पित्तोत्कटास्त्रयो दोषा जनयन्ति त्वगाश्रिताः । श्यावं रक्तं तनुं शोथमपाकं बहुवेदनम् ॥ विसर्पिणं सदाहं च तृष्णाज्वरसमन्वितम् । विसर्पमाहुस्तं व्याधिमपरं जालगर्दभम्" इति । जतुकर्णस्त्वाह—'पित्ताधिके तत्र तीव्रदाहो रक्तपाको विसर्पज्वरकरो जालगर्दभः' इति । अयमग्निवात इति ख्यातो विकारः ॥ १२ ॥ इरिवेल्लिकालक्षणमाह—पिडकामित्यादि। सर्वात्मिकां सर्वलिङ्गामिति

आतङ्कदर्पणव्याख्या ।

कर्णस्येति । भोजे 'समंततः' इति वचनात् कर्णस्य बहिरपि भवतीति व्याचक्षते । यदुक्तम्—"कफवातौ प्रकुपितौ मांसमाश्रित्य कर्णयोः । समंततः परिस्रावां कुरुतः पिडकां स्थिराम् । विषमां दाहसंयुक्तां विद्यात्पनसिकां तु ताम्" इति ॥ ११ ॥ जालगर्दभमाह—अपाकवानिति । ईषत्पाकवान्, पित्तकृतत्वेन सर्वथा पाकभावस्यायुक्तत्वादिति चक्रः । किंतु पाकरहित एवायमुपलभ्यते, तेन भोजोक्तं पित्तोल्बणदोषजन्यत्वमस्य विरुद्धं भवति स यदाह—"पित्तोत्कटास्त्रयो दोषा जनयंति त्वगाश्रिताः । श्यावं रक्तं तनुं शोथमपाकं बहुवेदनम् ॥ विसर्पिणं सदाहं च तृष्णाज्वरसमन्वितम् । विसर्पमाहुस्तं व्याधिमपरे जालगर्दभम् ॥" इति ॥ १२ ॥ इरिवेल्लिकामाह--पिडकामिति । उत्तमांगस्थां शिरोगताम् । सर्वात्मिकामित्यनेनैव सलिंगत्वं सिद्धं, पुनः सर्वलिं-

१ "अन्तःप्रपाकिनीम्" इति पाठान्तरम् ।

बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनाम् ॥
पित्तप्रकोपसंभूतां कक्षामित्यभिनिर्दिशेत् ॥ १४ ॥
एकामेतादृशीं दृष्ट्वा पिडकां स्फोटसन्निभाम् ॥
त्वग्गतां पित्तकोपेन गन्धमालां प्रचक्षते ॥ १५ ॥
कक्षभागेषु ये स्फोटा जायन्ते मांसदारणाः ॥
अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥ १६ ॥
सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम् ॥
तामग्निरोहिणीं विद्यादसाध्यां सर्वदोषजाम् ॥ १७ ॥

---

मधुकोशव्याख्या ।

सर्वात्मिकां सर्वदोषजां, सर्वात्मिकामित्यनेनैव सर्वलिङ्गत्वे सिद्धे पुनः सर्वलिङ्गामिति वचनं विकृतिविषमसमवायारब्धलिङ्गव्यतिरेकेण प्रत्येकदोषलिङ्गयुक्ततां ख्यापयति॥ ॥ १३ ॥ १४ ॥ गन्धमालामाह—एकामित्यादि । एकामेतादृशीमिति कक्षोक्तैककृष्णस्फोटसदृशीम् ॥ १५ ॥ अग्निरोहिणीलक्षणमाह—कक्षेत्यादि । सप्ताहाद्वा दशाहाद्वेत्यभिधानमसाध्यत्वख्यापकमनुपक्रमाद्बोद्धव्यम् । उपक्रमात् पुनरियं साध्यैव, अत एवास्याश्चिकित्साभिधानं चरकेणाप्यग्निरोहिण्याँ प्रत्यभिहितम्—'सन्ति ह्येवंविधा रोगाः साध्या दारुणसंमताः । ये हन्युरनुपक्रान्ता मिथ्यारम्भेण वा पुनः' इति । तन्त्रान्तरमपि—'पित्तरक्तोत्कटा दोषाः प्रदीप्ताङ्गारसन्निभान् । कक्षभागेषु कुर्वन्ति तीव्रदाहरुजाज्वरान् ॥ मांसावदारणान्स्फोटान्ये हन्युरनुपक्रमात् । पक्षाद्दशाहाद्वाग्वा सा ज्ञेया वह्निरोहिणी'' इति । वातपित्तकफाधिक्यात् यथाक्रमं सप्ताहादिवि-

आतङ्कदर्पणव्याख्या ।

गमिति ग्रहणं विकृतिविषमसमवायारब्धलिंगव्यतिरेकेण प्रत्येकदोषलिंगयुक्ततां ख्यापयति ॥ १३ ॥ कक्षामाह--बाह्विति । कक्षामिति नामतः प्रसिद्धिः ॥ १४ ॥ गन्धमालानाम्नीमाह--एकामिति । स्फोटसदृशीम् ॥ १५ ॥ अग्निरोहिणीमाह--कक्षेति । अस्यामसाध्यत्वमनुक्रमाद्बोद्धव्यम् । उपक्रमात्पुनरियं साध्या, अत एवास्याश्चिकित्साभिधानं चरकेणाप्यग्निरोहिण्याँ प्रत्यभिहितम्--''संति ह्येवंविधा रोगाः साध्यादारुणसंमताः । ये हन्युरनुपक्रांता मिथ्याचारेण वा पुनः ॥ '' इति । तंत्रांतरमपि--''रक्तपित्तोत्कटा दोषाः प्रदीप्तांगारसन्निभान् । कक्षाभागेषु कुर्वंति तीव्रदाहरुजाज्वरान् । मांसावदारणान् स्फोटान् ये हन्युरनुपक्रमात् । पक्षाद्दशाहाद्वाग्वा सा ज्ञेया वह्निरोहिणी'' इति । वातपित्तकफाधिक्याद् यथाक्रमं सप्ताहादिविकल्पः; तेन वाताधिकैः सप्ताहात् पित्ताधिकै-

नखमांसमधिष्ठाय वायुः पित्तं च देहिनाम् ॥
कुर्वते दाहपाकौ च तं व्याधिं चिप्पमादिशेत् ॥ १८ ॥
तदेवाल्पतरैर्दोषैः पुरुषं कुनखं वदेत् ॥ १९ ॥
गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् ॥
पादस्यानुशयीं तां तु विद्यादन्तः प्रपाकिनीम् ॥ २० ॥
विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु ॥
विदारिका भवेद्रक्ता सर्वजा सर्वलक्षणा ॥ २१ ॥

---

मधुकोशव्याख्या ।

कल्पः ॥१६॥१७॥ चिप्पमाह—नखेत्यादि । तं व्याधिं चिप्पमिति चिप्पमंगुलीवेष्टकमिति ख्यातम्।चरके त्वक्षतनामायं विकारः।यदुक्तम्—'रोगोऽक्षतश्चर्मनखान्तरे स्यान्मांसास्रदोषी भृशदाहपाकः' इति ॥१८॥ अनुशयीलक्षणमाह—गम्भीरामित्यादि गम्भीरामित्यन्तःपाकेन । अल्पसंरम्भामित्यल्पशोथाम् ॥ १९ ॥ २० ॥ विदारीलक्षणमाह—विदारीत्यादि ।'विदारिका भवेद्रक्ता सर्वजा सर्वलक्षणा' इति। अत्र केचिदसर्वजा असर्वलक्षणेति उभयत्रापि नञः प्रयोगमिच्छन्ति, तेनासर्वजा इति सर्वदोषैः सन्निपतितैर्न भवति, असर्वलक्षणेति सन्निपातलक्षणरहितेत्यर्थः । तेन प्रत्येकदोषद्वन्द्वजत्वेन षड्विधा सन्निपातमात्रेण न भवतीति वाक्यार्थः । किंत्वयं पक्षो यद्यभिमतः स्यादाचार्यस्य, तदा व्यक्त्यर्थं षड्विधा द्व्येकदोषजेति पदं कृतं स्यात् । किंच बहुप्रपञ्च-

आतङ्कदर्पणव्याख्या ।

ईशाहात्कफाधिकैः पक्षादित्यूह्यम् ॥ १६ ॥ १७ ॥ चिप्पमाह—तंत्रांतरेंगुलीवेष्टकमिति ख्यातम् । चरके त्वक्षतनामायं विकारः ।यदुक्तम्—" रोगोऽक्षतश्चर्मनखांतरे स्यान्मांसास्रदोषी भृशदाहपाकः" इति । अन्ये तु "इमेवाक्षतरोगाख्यं तथोपनखमित्यपि " इत्यधिकं ग्रंथमधीयते ॥ १८ ॥ तदेवचिप्पमिति । सुगमम् ॥ १९ ॥ अनुशयीमाह--गम्भीरामिति । अंतःपाकेन गंभीराम् अल्पसंरंभामिति स्वल्पशोथाम् । "कफादंतःप्रपाकांतां विद्यादनुशयीं भिषक्" इति केचन पाठं पठंति, तदा उपरिस्थितां मस्तके स्थितामिति व्याचक्षते ॥ २० ॥ विदारिकालक्षणमाह—विदारीति । सर्वजा सर्वलक्षणेत्यत्र केचिदसर्वजा असर्वलक्षणेत्युभयत्रापि । नञः प्रयोगमिच्छंति, तेनासर्वजति सर्वैर्दोषैः सन्निपतितैर्न भवति । असर्वलक्षणेति सन्निपातलक्षणरहितेत्यर्थः । तेन प्रत्येकदोषद्वंद्वजत्वेन षड्विधा न सन्निपातमात्रेण भवतीति वाक्यार्थः । किंत्वयं यदि पक्षोभिमत आचार्यस्य स्यात्, तदा व्यक्त्यर्थं षड्विधा द्व्येकदोषजेति पदं कृतं स्यात् । किंच, बहुप्रपंचत्वेन क्षुद्रत्वासंगतिश्च । अपरे "सर्वजा सर्वलक्षणा" इति पठंति, तदपि न संगतम् न सर्वैर्दोषैर्भवतीति ।

मधुकोशव्याख्या ।

त्वेन क्षुद्रत्वासङ्गतिश्च । अपरे सर्वजा सर्वलक्षणेति पठन्ति । तदपि न संगतं सर्वैर्दोषैर्न भवतीति । अथ सर्वदोषलक्षणा भवति हन्त तर्हि लिङ्गिनमन्तरेण लिङ्गप्रादुर्भावप्रसङ्गः । अन्ये तूत्तरपद एव नञः प्रयोगात् सर्वजाऽसर्वलक्षणेति वदन्ति, तत्र यदि सर्वेषां लक्षणानि सर्वलक्षणानि तान्यविद्यमानानि यस्यामिति तदा कथं लिंगमन्तरेण लिंगिनः परोक्षस्य परिच्छेदोदयः । अथ सर्वाणि तानि लक्षणानि अविद्यमानानि यस्यां सन्निपातजत्वेऽप्यसंपूर्णलक्षणेत्यर्थः । एतदपि न संगतं, यद्ययं पक्षोऽभीष्टः स्यात्तदाऽसर्वलक्षणेति न वक्तव्यमत्र स्यात्, सर्वत्र न्यायस्यास्य समानत्वात्; हेत्वनुरूपकोपवलेन हि सर्वत्र सर्वार्धाल्पलिङ्गसङ्गतिः असंपूर्णलक्षणत्वेन दोषाणां हीनबलत्वं समवृद्धानामनारम्भकत्वं वा शक्यमेवास्मिन् पक्षे वक्तुं, किंतु तन्नाद्रियंते, ततश्चोभयत्रापि न[illegible]र्वजा सर्वलक्षणेति पाठो युक्तः । सर्वजेत्यभिधायापि सर्वलक्षणेति वचनमिरिवेल्लिकायामिव प्रकृतिसमसमवायजन्यवातादिलक्षणदर्शनार्थं, तेन विकृतिविषमसमवायजन्यासाध्यत्वादिलक्षणानि न भवन्ति-अस्मिन्नपि पाठ सर्वजा सर्वैरेकादिप्रकारैर्वातादिभिर्जन्यते, एवं सर्वलक्षणेति वक्तुं पार्यते, किंतु क्षुद्ररोगत्वाद्दोषभेदेन गणना न युक्ता । चरके त्वियं कफमारुतजा पठ्यते । यदुक्तं,—"ज्वरान्विता वंक्षणकक्षसन्धौ वर्तिर्निरर्तिः कठिना मता या ।

आतङ्कदर्पणव्याख्या ।

अथ सर्वदोषलक्षणा भवति हंत तर्हि लिंगिनमंतरेण लिंगप्रादुर्भावप्रसंगः । अन्ये तु उत्तरपद एव नञः प्रयोगात् 'सर्वजा सर्वलक्षणा' इति पठंति । तत्र यदि सर्वेषां लक्षणानि सर्वलक्षणानि तान्यविद्यमानानि यस्यामिति । तदा कथं लिंगमंतरेण लिंगिनः परोक्षस्य परिच्छेदोदयः । अथ सर्वाणि च तानि लक्षणानि च तानि अविद्यमानानि यस्याम् । संनिपातजत्वेप्यसंपूर्णलक्षणेत्यर्थः । एतदपि न संगतम्, यद्यप्ययं पक्षोऽभीष्टः स्यात्तदा असर्वलक्षणेति न वक्तव्यमत्र स्यात्, सर्वत्र न्यायस्य समानत्वात् । तदुक्तं—"दोषे विरुद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणा" इति । हेत्वनुरूपकोपबलेन हि सर्वत्र सर्वार्द्धाल्पलिंगसंगतिः. । असंपूर्णलक्षणत्वेन दोषाणां हीनबलत्वं समवृद्धानामनारंभकत्वं वा शक्यमेवास्मिन्पक्षे वक्तुं, किंतु तन्नाद्रियंते, ततश्चोभयत्रापि नञः प्रयोगं विना "सर्वजा सर्वलक्षणा" इति पाठो युक्तः । सर्वजेत्यभिधायापि सर्वलक्षणेति वचनमिरिवेल्लिकायामिव प्रकृतिसमसमवायजन्यवातादिलक्षणदर्शनार्थं, तेन विकृतिविषमसमवायजन्यसाध्यत्वादिलक्षणानि न भवंति । अस्मिन्नपि पाठे सर्वजा सर्वैरेकादिप्रकारैर्वातादिभिर्जन्यते, एवं सर्वलक्षणेति च वक्तुं पार्य्यते, किंतु क्षुद्ररोगत्वाद्दोषभेदेन गणना न युक्ता । चरके त्वियं कफमारुतजा पठ्यते । यदुक्तं—"ज्वरान्विता वंक्षणकक्षसंधौ वर्तिर्निरर्तिः कठिना मता या । विदारिका सा कफमारुताभ्याम्" इति । तेनात्राप्यल्पपित्तयुक्तकफवातजत्वेन सर्वजत्वं ज्ञेयम् । ज्वरयोगेनाल्पपित्तत्वं चरके द्रष्टव्यम् । यदुक्तं—"ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना" इति । "विदारीमिति तां श्रिया-

प्राप्य मांसशिरास्नायूः श्लेष्मा मेदस्तथानिलः ॥
ग्रन्थि करोत्यसौ भिन्नो मधुसर्पिर्वसानिभम् ॥ २२ ॥
स्रवत्यास्रावमनिलस्तत्र वृद्धिं गतः पुनः ॥
मांसं संशोष्य ग्रथितां शर्करां जनयेत्ततः ॥ २३ ॥
दुर्गन्धि क्लिन्नमत्यर्थं नानावर्णं ततः शिराः ॥
स्रवन्ति रक्तं सहसा तं विद्याच्छर्करार्बुदम् ॥ २४ ॥
परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः ॥
पादयोः कुरुते दारीं पाददारीं तमादिशेत् ॥ २५ ॥

---

विदारिका सा कफमारुताभ्याम्''-इति। तेनात्राप्यल्पपित्तयुक्तकफवातजत्वेन सर्वजत्वं ज्ञेयम्। यथा-ज्वरयोगेनाल्पपित्तत्वम्। यदुक्तम्,-''ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना''-इति। विदारीमिति तां विद्यात् सर्वजां सर्वलक्षणामिति पाठान्तरे न कश्चिद्व्याख्यानप्रपञ्चः ॥ २१ ॥ शर्करामाह-प्राप्येत्यादि। इयमेव शर्करार्बुदस्य हेतुः। अस्यां कफानिलौ दोषौ, मांसशिरास्नायुमेदांसि दूष्याणि। अनिलस्तत्र वृद्धिं गत इति पूर्वमेव तावद्वृद्धोऽनिलः धातुक्षयेण वृद्धिमतिशयेन गतः मांसं विशोष्य काठिन्यात् शर्करातुल्यां शर्करां जनयति। अतः शर्करायाः तुल्यं शर्करार्बुदं भवति। दुर्गन्धि क्लिन्नमित्यादिना शर्करोत्पन्नं शर्करार्बुदलक्षणं, शर्करार्बुदं च शर्करावस्थैवेत्येव एवायं विकारः। तेन न संख्यातिरेकः। नानावर्णमिति घृतमेदोवसावर्णं रक्तं, तत इति शर्करार्बुदादेव। भोजेऽपि पठ्यते,-''तमेव भिन्नं दुर्गन्धं घृतमेदोनिभं शिराः। स्रवन्ति स्रावमनिशं तदा स्याच्छर्करार्बुदम्''-इति। तमेवेति ग्रन्थिम् ॥ २२-२४ ॥ पाददारीमाह—परिक्रमणशीलस्येत्यादि। परि-

आतङ्कदर्पणव्याख्या।

त्सरुजां सर्वलक्षणाम्'' इति पाठांतरे न कश्चिद्व्याख्यानप्रसंगः ॥ २१ ॥ शर्करामाह-प्राप्येति। अस्यां कफानिलौ दोषौ मांसशिरास्नायुमेदांसि दूष्याणि, अनिलस्तत्र वृद्धिं गत इति पूर्वमेव तावद्वृद्धोऽनिलो धातुक्षयात् पुनर्वृद्धिमतिशयं गतः मांसं विशोष्य काठिन्यात् शर्करातुल्यां शर्करां जनयति। शर्करा पाषाणकर्करः ॥ २२ ॥ २३ ॥ शर्करार्बुदमाह—दुर्गन्धीति। शर्करार्बुदं शर्करैर्वार्बुदत्वेनास्थितेत्येक एवायं विकारः, तेन न संख्यातिरेकः। नानावर्णमिति घृतमेदोवसावर्णयुक्तम्, तत इति शर्करार्बुद देशे, अत्रसप्तम्यर्थे पंचमी, भोजेपि पठ्यते—''तमेव भिन्नं दुर्गंधं घृतमेदोनिभं शिराः। स्रवन्ति स्रावमनिशं तदा स्याच्छर्करार्बुदम्'' इति। तमेवेति ग्रंथिम् ॥ २४ ॥ पाददारीमाह—परिक्रमणशीलस्येति। पादविहरणशीलस्य दारी, विदरणमात्रम्, विपादिकाकुष्ठं

शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ॥
ग्रन्थिः कोलवदुत्सन्नो जायते कदरं हि तत् ॥ २६ ॥
क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ ॥
दुष्टकर्दमसंस्पर्शादलसं तं विभावयेत् ॥ २७ ॥
रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ॥
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥ २८ ॥

---

मधुकोशव्याख्या ।

क्रमणं पादविहरणं, दारी दारणमात्रम् । विपादिकाकुष्ठं तु पिडका सविदारणेति भेदः ॥ २५ ॥ कदरमाह—शर्करोन्मथित इत्यादि । कदरं कोलाष्ठीति ख्यातम् । कोलवदित्यस्य स्थाने कीलवदिति पाठान्तरम् । कदरं हस्तेऽपि भवति । तथाच भोजः—"हस्तयोः पादयोश्चापि गम्भीरानुगतं खरम् । मांसकीलं जनयतः कुपितौ कफमारुतौ ॥ सशल्यमिव तं देशं मन्यते तेन पीडितः । शर्कराकदरं केचिन्मन्यन्ते वातकण्टकम्" इति । कोलवदिति बदरवत् ॥ २६ ॥ अलसकलक्षणमाह—क्लिन्नेत्यादि । अयं कफरक्तजो विकारः पाकुया इति ख्यातः । अत्र कण्डूः कफस्य, दाहरुजे रक्तस्य ॥ २७ ॥ इन्द्रलुप्तस्य लक्षणमाह—रोमकूपेत्यादि । एतैस्त्रिभिर्दोषैः सशोणितैः स्वभावान्नियतकालव्यापारैर्भवति । एतच्च स्त्रीणां न भवतीति विदेहवचनाद्व्याख्यानयन्ति । यदुक्तम्—"अत्यन्तसुकुमाराङ्ग्यो रजो दुष्टं स्रवंति च । अव्यायामरता यस्मात्तस्मान्न खलितिः स्त्रियाः" इति । अव्यायामाद्वातपित्तयोरकोपेन नातिरोमच्युतिः रजःस्रावेण च स्रोतोऽवरोधाभावाच्युतानामपि रोम्णां पुनर्विरोहः, किंतु स्त्रीष्वपि खलितिदर्शनात् प्रायिकं विदेहवचनम् । खालित्यं रुह्येति च तस्य पर्यायकथनम् । तथाच भोजः—"तदिन्द्रलुप्तमित्याहुः खल्वीं रुह्यां

आतङ्कदर्पणव्याख्या ।

तु पिडकानां विदरणमिति भेदः ॥ २५ ॥ कदरमाह—शर्करेति । पादे शर्करा घटकर्परखंडादयः, नाभिरुन्मथिते पीडिते कंटकादिभिर्वा क्षते कोलवदुत्सन्नो ग्रंथिर्जायते, तत्कदरं नाम शर्करा ईपत्, कोलवदिति स्थाने "कीलवत्" इति पाठांतरम् । कदरं हस्तेपि भवति । यदुक्तं भोजेन—"हस्तयोः पादयोश्चापि गंभीरानुगतं खरम् । मांसकीलं जनयतः कुपितौ कफमारुतौ ॥ सशल्यमिव तं देशं मन्यते तेन पीडितः । शर्कराकदरं केचिन्मन्यन्ते वातकंटकम्" इति । कोलवत् बदरवत् ॥ २६ ॥ अलसकलक्षणमाह—क्लिन्नेति । अयं च कफरक्तजो विकारः, तत्र कंडूः कफस्य दाहरुजे रक्तस्य ॥ २७ ॥ इंद्रलुप्तमाह—रोमेति । एतस्त्रिभिर्दोषैः सशोणितैः स्वभावान्नियतकालव्यापारैर्भवति । मूर्च्छितं वृद्धि-

रुणद्धि रोमकूपांस्तु ततोऽन्येषामसंभवः ॥
तदिन्द्रलुप्तं खालित्यं रुह्येति च विभाव्यते ॥ २९ ॥
दारुणा कण्डुरा रूक्षा केशभूमिः प्रपाट्यते ॥
कफमारुतकोपेन विद्याद्दारुणकं तु तम् ॥ ३० ॥
अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्ध्नि तु ॥
कफासृक्क्रिमिकोपेन नृणां विद्यादरुंषिकाम् ॥ ३१ ॥
क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः ॥
पित्तं च केशान्पचति पलितं तेन जायते ॥ ३२ ॥

---

मधुकोशव्याख्या ।

च केचन" इति । कार्तिकस्त्वाह--'इन्द्रलुप्तं श्मश्रुणि भवति, खालित्यं शिरस्येव, रुह्या च सर्वदेहे' इति । आगमस्त्वत्र नास्ति ॥ २८ ॥ २९ ॥ दारुणलक्षणमाह--दारुणेत्यादिना । दारुणेति कठिना । कफमारुतकोपादिति यद्यप्युक्तं तथापि पित्तरक्तानुबन्धोऽप्यत्र द्रष्टव्यः । तथाहि विदेहः,--"यदत्र पटलाभासं सरुजस्कं शिरस्त्वचि । परुषं जायते जन्तोस्तस्य रूपं विशेषतः ॥ तोदैः समन्वितं वातात्सकण्डूगौरवं कफात् । सपिपासं सदाहार्तिरागं पित्तास्रजं तथा" इति । अत्र वचन सदाहरागं च पित्तात्, सार्तिं तु रक्तात्, आर्तिर्हि रक्तजापि भवति । यदुक्तं--"रक्तं हि व्यम्लतां याति तच्चेन्नास्ति न चातिरुक्" इति । दारुणं रुक्खीति लोके ॥ ३० ॥ अरूंषिकामाह--अरुंषीत्यादिना । अरुंषीति व्रणाः ॥ ३१ ॥ पलितमाह--क्रोधेत्यादिना । शरी-

आतङ्कदर्पणव्याख्या ।

रस्तं प्रच्यावयति पातयति ॥ २८ ॥ ततोऽन्येषामसंभव इति अन्येषां रोम्णाम् अप्रादुर्भावः, एतच्च स्त्रीणां न भवति, विदेहवचनात्, तद्व्याख्यानयंति, यदुक्तम्--"अत्यंतसुकुमारांग्यो रजो दुष्टं स्रवंति च । अव्यायामरता यस्मात्तस्मान्न खलितिः स्त्रियाः ॥" इति । "खल्वीं रुह्यां च केचन" इति । खालित्यं रुह्येति च तस्य पर्यायकथनम् । कार्तिकस्त्वाह--"इंद्रलुप्तं श्मश्रुणि भवति, खालित्यं शिरस्येव रुह्या च सर्वदेहे" इति । आगमस्त्वत्र नास्ति ॥ २९ ॥ दारुणमाह--दारुणेति । प्रपाठ्यते पुटपुटायते, कफमारुतकोपादिति यद्यप्युक्तं, तथापि पित्तरक्तानुबंधोऽप्यत्र द्रष्टव्यः । तथाहि विदेहः--"यदत्र पटलाभासं सरुजस्कं शिरस्त्वचि । परुषं जायते जंतोस्तस्य रूपं विशेषतः ॥ तोदैः समन्वितं वातात्सकंडूगौरवं कफात् । सपिपासं सदाहार्तिरागं पित्तास्रजं तथा" इति । अत्र वचने सदाहरागं च पित्तात्, सार्तिं तु रक्तात्, आर्तिर्हि रक्तजापि भवति । दारुणकं रुक्खीति लोके ॥ ३० ॥ अरुंषिकामाह--अरुंषीति । नृणां पुरुषाणां कफाऽसृक्क्रिमिकोपेन मूर्द्धनि मस्तके बहुवक्त्राणि तथा बहुक्लेदानि, अरुंषीति व्रणा भवंति, ताम् अरुंषिकां विद्यात् ॥ ३१ ॥ पलितमाह--क्रोधेति । क्रोधादिकृतेन शिरोष्मणा शिरोगतेन, वैकृतं पित्तेन वयःकृतं तु प्राप्तेन

मधुकोशव्याख्या ।

रोष्मेति देहाग्निः । पित्तं चेति पित्तमपि शिरोगतं पलितहेतुः । ननु, पित्तमेवाग्निस्तत्र तत्र पित्तस्य पाचकत्वेनाभिधानात्, यदुक्तवान् सुश्रुतः–"न विना च पित्तं पाकः" इति तथा–'पित्ते तस्मिन् पाचकोऽग्निरिति संज्ञा' इति, तथा स एव—'न खलु पित्तव्यतिरेकेणान्योऽग्निरुपलभ्यते, आग्नेये तु पित्ते दहनपचनदारणादिष्वभिवर्तमानेऽग्निवदुपचारः क्रियते अन्तरग्निरिति, क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगादतिवृद्धे शीतक्रियोपयोगादागमाच्च पश्यामः 'न खलु पित्तव्यतिरेकेणान्योऽग्निः' इति । चरकाचार्योऽप्याह–"दर्शनं पक्तिरुष्मा च क्षुत्तृष्णादेहमार्दवम् । प्रभाप्रसादौ मेधा च पित्तकर्माविकारजम्" इति । पाकस्यान्यथानुपपत्त्या चाग्नेरङ्गीकारः । किंच मन्देऽग्नौ पित्तकरमरीचादिद्रव्योपयोगादग्नेर्वृद्धिः, पित्तप्रतिकूलशीतमधुरादिद्रव्योपयोगाच्चोपशम उपलभ्यते; यदि हि पित्ताद्भिन्नोऽग्निः स्यात्, तदा पित्तस्य वृद्धिह्रासानुविधानमस्यानुपपन्नं स्यात्, न हि तुहिनकिरणमण्डले हिमभाजि अहिमोपलम्भः, अतुहिनमण्डले अहिमभाजे भगवति भास्करे अभिमतहिमोपलम्भः; यद्यतो भिन्नं तत्ततो भेदेनोपलभ्यते, यथा सागरादजगरः; न चैवं पित्तादग्निस्तत्कुतः पित्तादग्नेः पृथगुपादानमिति ? अत्र प्रत्यभिधीयते, न तावदन्तराग्निः पित्तादभिन्नो; भेदसाधकप्रमाणस्य भूयःसद्भावात्; तथा ह्यभेदे 'समदोषः समाग्निश्च' इत्यत्र, "समप्रकोपौ दोषाणां सर्वेषामाग्निसंश्रयौ" इत्यत्र च दोषपदलब्धत्वाग्नेः पृथगुपादानमसङ्गतं; तीक्ष्णः पित्तेन चेति स्वात्मनि क्रियाविरोधादसङ्गतं; यत्पुनः 'न खलु पित्तव्यतिरेकेणान्योऽग्निः' इत्याद्युक्तं तद्भेदमेव साधयति, उपचाराभिधानात्, न ह्यभेदे उपचारः संभवति । यदप्यग्नेः पित्तवृद्धिह्रासानुविधानमभिहितं तदप्रयोजकं, भेदेऽपि समानत्वेन तदुपपत्तेः । यथा कफवृद्धिह्रासकरसौम्याग्नेयद्रव्याभ्यां शुक्रस्य वृद्धिह्रासौ दृष्टौ न च कफशुक्रयोरैक्यं, किंच घृतं पित्तशमनमग्नेश्च दीपनं, पित्तस्य संचयादौ नाग्नेर्वृद्धिः, पेयादिकं चाग्निकरं, न पित्तकृत्; ततश्च पित्ताद्विलक्षणोऽन्तराग्निः । स च द्रवतेजःसमुदायात्मकस्य पित्तस्य तेजोभागो न बहिरनलवद्भस्माङ्गाराकारः, समुदायतश्च समुदायो अन्य एव करचरणादिभ्य इव शरीरम्, अत्यन्तभेदेन चाग्रहणं,

आतङ्कदर्पणव्याख्या ।

र्थः । अन्ये तु पित्ताग्न्योर्भेदवादिन उभाभ्यां मन्यंत एतयोः कालजलक्षणं मन्यन्ते । अन्येपि त्रिभिरेव दोषैः स्यादिति कथयंति । शोकश्रमाभ्यां जनितवातेन शिरोष्मणे विक्षेपाच्छिरोगतत्वम्, तेनाऽनिलोपि लभ्यते । पित्तं च साक्षादुपात्तम्, चकारेण श्लेष्मापि । केशशुक्लताकारणं कोपि गृह्यते । एतेन दोषत्रयसहितः शरीरोष्मा पलितहेतुरिति वाक्यार्थः । "तेजोनिलाद्यैः सह केशभूमिं दग्ध्वाशु कुर्यात्खलतिं नरस्य । किंचित्तु दग्ध्वा पलितानि कुर्याद्धरित्प्रभत्वं च शिरोरुहाणाम्"—

**शाल्मलीकण्टकप्रख्याः कफमारुतरक्तजाः ॥**
**युवानपिडका यूनां विज्ञेया मुखदूषिकाः ॥ ३३ ॥**

मधुकोशव्याख्या ।

तस्य नित्यसंश्लेषणशालित्वात् । पित्तस्य तेजोंऽशः एव पाच ( व ) कः, तदाह भोजः—"दृढमुष्णोचितं ह्येतत् पित्तोष्मा पचतीति यत् । मूर्च्छितो रसवीर्याभ्यां समानव्यानसंहितः" इत्यारभ्य, "तस्मात्तेजोमयं पित्तं पित्तोष्मा यः स पक्तिमान् । स कायाग्निः स कायोष्मा स पक्ता स च जीवनः" इति । पित्तैकदेशत्वात्तेजसि पित्तोपचारमाश्रित्य सुश्रुतेनोक्तम्—"न विना च पित्तं पाकः" इति । तथा—"न खलु पित्तव्यतिरेकेणान्योऽग्निः" इति । एवमन्यदप्यग्नेरभेदसाधकं वचनं समाधेयम् । ननु, यदि तीक्ष्णः पित्तेनेत्युक्तं, तत् कथं पित्तेनैवाग्नेः प्रशमनमभिधीयते । यदुक्तं चरके—"कट्वजीर्णविदाह्यम्लक्षाराद्यैः पित्तमुल्बणम् । आप्लावयद्धन्त्यनलं जलं तप्तमिवानलम्" इति । उच्यते, यदा कटुकेन रूक्षोष्णेन पित्तं वृद्धं भवति, तदा तेजोभागरूपायाः पित्तस्यावस्थाया उल्बणत्वात् तीक्ष्णः पित्तेनेति सङ्गतम्; यदा अम्ललवणेन स्निग्धोष्णेन कफानुगमनभाजा वृद्धं पित्तं, तदा पित्तस्य द्रवावस्थाया उद्रिक्तत्वात् निर्वापणमग्नेरुक्तमिति । जतुकर्णेऽप्युक्तं—'कुपितेन वायुना दीपस्येवाग्नेर्निर्वापणं, पित्तेनोष्णजलवत्, कफेनाम्बुवत्, इति । ततश्च युक्तमग्नेः पृथगुपादानमिति । अग्निश्च पित्तगतत्वेन क्रोधकृतो भवत्येव, क्रोधेन पित्तकोपात्; शोकश्रमाभ्यां तु जनितवातेन शरीरोष्मणोऽपि विक्षेपगात् शिरोगतत्वं, तेनानिलोऽपि लभ्यते पित्तं च साक्षादुपात्तम्, चकारेण श्लेष्मापि केशशुक्लताकारो गृह्यते । एतेन दोषत्रयसहितशरीरोष्मा पलितहेतुरिति वाक्यार्थश्चरकोक्तार्थेन सह संवादी भवति । यदाह-"तेजोऽनिलाद्यैः सह केशभूमिं दग्ध्वा तु कुर्यात् खलितं नरस्य । किंचित्तु दग्ध्वा पलितानि कुर्याद्धरित्प्रभत्वं च शिरोरुहाणाम्" इति । एतच्चाकालजपलितव्यापकं लक्षणम् । कालजे तु क्रोधादिग्रहणं कारणान्तरोपलक्षणं, तेन वयःपरिणामकृतशरीरोष्मा दोषत्रययुक्तः कालजपलितहेतुः । अन्यथा कालजपलितस्य संग्रहो न स्यात् । किंवा कालजं स्वाभाविकत्वादेव नोच्यते । अन्ये तु पित्तगतश्चेच्छरीरोष्मा तत् किमुभयोरुपादानेनेत्याभिधाय शरीरोष्मा पित्तं चेति कर्तृद्वयमाचक्षते; तेन नात्रैकस्मिन् विषये समुच्चयः किं तर्हि विषयभेदात् कर्तृद्वयम्; तत्र शरीरोष्मा वैकृतं पलितं करोति, पित्तं च प्राकृतं पित्तप्रकृतेः पलितं करोति । यदुक्तं—'पित्तप्रकृतिरकालजवलीपलितयुक्तश्च भवति' इति। एवं स्वाभाविकजरापलितमपि पित्तेनैवास्य हेतोः कृतत्वात्, न चोष्मकृतत्वेन पलितस्यादोषजत्वप्रसङ्गः; ऊष्मणः पित्तधर्मत्वेन पित्तेऽन्तर्भावात् ॥ ३२॥ युवानपिडकालक्षणमाह—शाल्मलीत्यादिना । युवानपिडका लोके वरण्डका

आतङ्कदर्पणव्याख्या ।

इति ॥ ३२ ॥ यौवनपिडकामाह—शाल्मलीति । एषा स्वभावाद्यूनामेव मुखे भवति । मुखे दूषका

कण्टकैराचितं वृत्तं मण्डलं पाण्डुकण्डुरम् ॥
पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥ ३४ ॥
सममुत्सन्नमरुजं मंडलं कफरक्तजम् ॥
सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिस्तु सः ॥ ३५ ॥
अवेदनं स्थिरं चैव यस्मिन् गात्रे प्रदृश्यते ॥
माषवत्कृष्णमुत्सन्नमनिलान्मषकं तु तत् ॥ ३६ ॥

---

मधुकोशव्याख्या ।

उच्यते यूनामाननपिडका युवानपिडका, पृषोदरादित्वान्नकारलोपः; एषा च यूनामेव मुख एव स्वभावात् ॥३३॥ पद्मिनीकण्टकमाह—कण्टकैरित्यादि । तदाख्यमिति पद्मिनीकण्टकाख्यम्॥३४॥जतुमणिमाह—सममित्यादिना। समं मसृणम् । उत्सन्नमुद्गतम्। अयं जटुल इति लोके प्रसिद्धः।कफरक्तजमिति प्राधान्येनोक्तं.तेन चरकोक्तं त्रिदोषजत्वमप्यस्योपपन्नं भवति । यदुक्तं तेन,-'कृष्णः स्निग्धो जतुमणिर्ज्ञेयो वातोत्तरैस्त्रिभिः। अरुजं त्वपरैरुक्तं लक्ष्मेत्याहुर्भिषग्वराः'—इति । सहजं लक्ष्म चैकेषामिति एकेषामाचार्याणां मतेन सहजं लक्ष्म लक्षणं स्त्रीपुंसयोरङ्गभेदेन शुभाशुभफलप्रदं भवति । सहजं शरीरेण सह जातं जन्मकालप्रवृत्तमित्यर्थः ॥ ३५ ॥ मषकलिङ्गमाह—अवेदनमित्यादिना । स्थिरं कठिनमिति गयदासः, अचलमिति युक्तं, भोजे मृद्विति पाठात् । मषकमादिशेदिति माषशब्दात् 'इवे प्रतिकृतौ' इति कन्, नैरुक्त्येन च विधिना ह्रस्वत्वम् । अत्र चकारेण कफमेदसी समुच्चीयेते । तथाच भोजः—'वातेरिते त्वचि यदा दूष्येते कफमेदसी । श्लक्ष्णं मृदुसवर्णं च कुरुतो

आतङ्कदर्पणव्याख्या ।

मुखकांतिहारकाः, युवानपिडका यूनामाननपिडकाः । पृषोदरत्वान्नकारस्य लोपः ॥ ३३ ॥ पद्मिनीकंटकमाह—कंटकैरिति । पद्मिनीकंटकसदृशैः कंटकैराचितं वृत्तादिलक्षणं यन्मंडलं भवति, तत्तदाख्यमिति पद्मिनीकंटकाख्यम् ॥३४॥ जतुमणिमाह—सममिति । समं मसृणम्, उत्सन्नमुद्गतम् । अयं जटुल इति लोके प्रसिद्धः । कफरक्तजमिति प्राधान्येनोक्तम्, तेन चरकेणोक्तं त्रिदोषजत्वमप्यस्य भवति । यदुक्तं तेन "कृष्णः स्निग्धो जतुमणिर्ज्ञेयो वातोत्तरैस्त्रिभिः । अरुजं त्वपरैरुक्तं लक्ष्मेत्याहुर्भिषग्वराः" इति । एकेषामाचार्याणां मते सहजं लक्ष्म लक्षणं स्त्रीपुंसयोरङ्गभेदेन शुभफलप्रदं भवति । सहजं शरीरेण सह जातं जन्मकालप्रवृत्तमित्यर्थः ॥ ३५ ॥ मषकमाह—अवेदनमिति । स्थिरमचलम् । भोजे मृद्विति पाठात् अत्र चकारेण कफमेदसी समुच्चीयेते । तथाच भोजः—"वातेरिते त्वचि यदा दूष्येते कफमेदसी । श्लक्ष्णं मृदु

कृष्णानि तिलमात्राणि नीरुजानि समानि च ॥
वातपित्तकफोच्छोषात्तान्विद्यात्तिलकालकान् ॥ ३७ ॥
महद्वा यदि वा चाल्पं श्यावं वा यदि वाऽसितम् ॥
नीरुजं मंडलं गात्रे न्यच्छमित्यभिधीयते ॥ ३८ ॥

---

मधुकोशव्याख्या ।

मषकं वदेत्' इति ॥ ३६ ॥ तिलकालकलक्षणमाह--कृष्णानीत्यादिना । वातपित्तकफोच्छोषादिति पाठे वातपित्ताभ्यां हेतुभ्यां कफस्योच्छोषः शोषणं तस्मात् । अन्ये चरकं दृष्ट्वा वातपित्तासृगुच्छोषादिति पठन्ति । तथाच चरकः--"यस्य पित्तं प्रकुपितं शोणितं प्राप्य शुष्यति । तिलका विप्लवा व्यङ्गा नीलिका चास्य जायते", इति । अस्मिन् वचने वातोऽप्यवगन्तव्यः, तेनापि शोषस्य क्रियमाणत्वात् । अन्येऽपि तन्त्रान्तरं दृष्ट्वा वातपित्तकफोत्सेकादिति पठन्ति । उत्सेकादित्युद्रेकात् । यथाहि तन्त्रान्तरम्--'मारुतः पित्तमादाय कफरक्तसमाश्रितः । चिनोति तिलमात्राणि त्वचि ते तिलकालकाः' इति । किंत्वस्मिन्नपि तन्त्रे कफरक्तसमाश्रित इत्यनेन कफरक्तयोराश्रितवातेन पित्तसहितेनोच्छोषादेव तिलकालके कार्ष्ण्यस्य संभवोऽवगम्यते, ततश्च वातपित्तकफोच्छोषादिति पाठो युज्यते । वातपित्तरसोद्रेकादिति पाठान्तरम् ॥ ३७ ॥ न्यच्छलिङ्गमाह--महद्वेत्यादिना । असितं कृष्णं, नीरुजं मण्डलमित्यस्य स्थाने सहजं मण्डलमिति केचित् पठन्ति, तेन जन्मकालप्रवृत्तं

आतङ्कदर्पणव्याख्या ।

सवर्णं च कुरुते मषकं वदेत्" इति ॥ ३६ ॥ तिलकालकलक्षणमाह--नीलानीति[1] । शरीरत्वक्समानि नोद्गतानीत्यर्थः ॥ वातपित्तकफोद्रेकादिति । "वातपित्तकफोच्छोषात्" इति पाठे वातपित्ताभ्यां हेतुभ्यां कफस्योच्छोषः शोषणं, तस्मात् । अन्ये तु "वातपित्तासृगुच्छोषात्" इति पठंति । तत्र वातपित्ताभ्यां रक्तस्य शोषादित्यर्थः । अत एव तिलकालके कार्ष्ण्यं तथा च चरकः--"यस्य पित्तं प्रकुपितं शोणितं प्राप्य शुष्यति । तिलका विप्लवो व्यंगा नीलिका चास्य जायते" इति । अस्मिन्वचने वातोऽप्यवगंतव्यः, तेनापि शोषस्य क्रियमाणत्वात् । अन्ये तंत्रांतरं दृष्ट्वा "वातपित्तकफोत्सेकात्" इति पठंति । उत्सेकादिति उद्रेकात्[2] । तथाहि तंत्रांतरे--"मारुतः पित्तमादाय कफरक्तसमाश्रितः । चिनोति तिलमात्राणि त्वचि ते तिलकालकाः" इति ॥ ३७ ॥ न्यच्छमाह--महदिति । श्यावं शुक्लानुविद्धं कृष्णवर्णम्, असितं कृष्णम्,

---

१ "कृष्णानि" इत्यत्र "नीलानि" इति पाठः ।
२ अयमेवमेव पाठमङ्गीकरोति ।

क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः ॥
मुखमागत्य सहसा मण्डलं विसृजत्यतः ॥ ३९ ॥
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ॥
कृष्णमेवंगुणं गात्रे मुखे वा नीलिकां विदुः ॥ ४० ॥
मर्दनात्पीडनाद्वापि तथैवाप्यभिघाततः ॥
मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरन् ॥ ४१ ॥

मधुकोशव्याख्या ।

न्यच्छमिच्छन्ति, अत एव न्यच्छस्य पर्याये लाञ्छनमिति तैः पठ्यते । यथा—'न्यच्छं लाञ्छनमुच्यते'—इति । लाञ्छनं लक्षणम् । अत्र भोजवचनात् पित्तरक्तान्वितो वायुः कारणम् । यदाह—'रक्तपित्तान्वितो वायुस्त्वक्प्रदेशाश्रितो यदा । जनयेन्मण्डलं कृष्णं श्यावं वा न्यच्छमादिशेत्' इति । अत्र श्यावत्वपक्षे मुखेतरदेश एव संभवेन बहुलत्वेन व्यङ्गाद्भेदोऽवगन्तव्यः ॥ ३८ ॥ व्यङ्गलिङ्गमाह—क्रोधायासेत्यादिना । श्यावमिति शुक्लानुविद्धकृष्णवर्णम् । अस्य छयावक इति मेछेता इति लोके ख्यातिः ॥ नीलिकालक्षणमाह—कृष्णमेवंगुणमित्यादि । एवंगुणमिति नीरुजतनुकमण्डलधर्मम्. व्यङ्गोक्तदोषोऽत्रापि बोद्धव्यः संमूर्च्छनविशेषात्तु नीलत्वकारी । कृष्णन्यच्छादतिकृष्णत्वेन भिन्ना नीलिका, व्यङ्गनीलिकयोस्तु व्यक्त एव भेदः, श्यावो व्यङ्गः, कृष्णा नीलिका, भोजे तु नीलिका गात्र एवोक्ता । यदुक्तम्,—"मारुतः क्रोधहर्षाभ्यामूर्ध्वगो मुखमाश्रितः । पित्तेन सह संयुक्तः करोति वदनत्वचि ॥ नीरुजं तनुकं श्यावं व्यङ्गं तमिति निर्दिशेत् । कृष्णमेवंगुणं गात्रे नीलिकां तां विनिर्दिशेत्"—इति ॥ ३९ ॥ ४० ॥ मेढ्रगताभिघातजे रोगत्रये परिवर्तिकामाह—मर्दनादित्यादि । पीडनाद्वापीत्यतिशब्दो मर्दनपीडनाभ्यां सह संब-

आतङ्कदर्पणव्याख्या ।

'नीरुजं मंडलम्' इत्यस्य स्थाने 'सहजं मंडलम्' इति केचित् पठंति, तेन जन्मकालप्रवृत्तं न्यच्छमिच्छंति,न्यच्छस्य पर्यायो लांछनमिति तैः पठ्यते । अभिधाने—"न्यच्छं लांछनमुच्यते" इति । अत्र भोजवचनात् पित्तरक्तान्वितो वायुः कारणम्, यदाह—"रक्तपित्तान्वितः" इत्यादि ॥ ३८ ॥ व्यंगमाह—क्रोधेति । श्यावं शुक्लानुविद्धकृष्णवर्नम् 'मुखछाई' इति लोके ॥ नीलिकामाह—कृष्णमिति । एवंगुणमिति, नीरुजं तनुकं मंडलधर्मकम्, व्यंगोक्तो दोषोऽत्रापि बोद्धव्यः । संमूर्छनविशेषात्तु नीलत्वकारी कृष्णन्यच्छादतिनीलत्वेन भिन्ना नीलिका, व्यंगनीलिकयोस्तु व्यक्त एव भेदः । श्यावो व्यंगः, कृष्णा नीलिका, भोजे तु नीलका गात्र एवोक्ता । यदुक्तम्—"मारुतः क्रोधहर्षाभ्यामूर्ध्वगो मुखमाश्रितः । पित्तेन सह संयुक्तः करोति वदनत्वचि ॥ नीरुजं तनुकं श्यावं व्यंगं तमिति निर्दिशेत् । कृष्णमेवं गुणं गात्रे नीलिकां तां विनिर्दिशेत्" इति ॥ ३९ ॥ ४० ॥ लिंगपरिवर्तिकामाह—मर्दनादिति । अतिशब्दो मर्दनपीडनाभ्यां प्रत्येकमभिसंबध्यते । अतियोगादेव ते वातं कोपयतः ।

तदावा तोऽसृष्टत्वात्तच्चर्म परिवर्तते ॥
मणे धस्तात्कोषश्च ग्रन्थिरूपेण लम्बते ॥ ४२ ॥
सरुजां वातसंभूतां तां विद्यात्परिवर्तिकाम् ॥
सकण्डूः कठिना चापि सैव श्लेष्मसमुत्थिता ॥ ४३ ॥
अल्पीयःखां यदा हर्षाद्बलाद्गच्छेत्स्त्रियं नरः ॥
हस्ताभिघातादपि वा चर्मण्युद्वर्तिते बलात् ॥ ४४ ॥

---

मधुकोशव्याख्या ।

ध्यते । अतियोगादेव ते वातं कोपयतः । सर्वतश्चरन्निति व्यानः, सर्वतश्चर इति पाठे स एवार्थः । परिवर्तत इति सर्वतो विवर्तते । कोष इति चर्मकोषः । परिवर्तिकेति वृतधातोः रोगाख्यायां ण्वुल् बहुलम्'—इति ण्वुल् ( वृत णक-आप् ) एवमवपाटिकायां च बोद्धव्यम् । अस्यां वातजायामपि पित्तानुबन्धाद्दाहपाकौ भवतः, कफसंबन्धस्तु सकण्डूः कठिना वापीत्यादिनाभिहितः । भोजेऽप्युक्तम्—"मणेरधो मेढ्रचर्म व्यानस्तु परिवर्तयेत् । सशूलतोददाहाद्यैर्विज्ञेया परिवर्तिका । श्लैष्मिकी कठिना स्निग्धा कण्डूमत्यल्पवेदना"—इति ॥ ४१—४३ ॥ अवपाटिकामाह—अल्पीयःखामित्यादि । अल्पीयःखामित्यल्पतरं खं योनिमुखं यस्याः सा तथा, कन्या हि अनार्तवा अल्पीयःखा भवति । अत्र हेत्वन्तरं हस्ताभिघातादपि वेति। उद्वर्तित इति ऊर्ध्वं वर्तिते । यस्यावपाट्यत इति स्वयमेव विदीर्यते । एषा च पृथक् दोषत्रयेणानुबध्यते।

आतंकदर्पणव्याख्या ।

"सर्वतश्चरन्" इति पाठे स एवार्थः ॥ ४१ ॥ परिवर्तत इति सर्वतो विवर्तते । कोष इति चर्मकोषः । परिवर्तिकाख्योयम्, अस्यां वातजायां पित्तानुबंधाद्दाहपाकौ भवतः । कफसंबंधात् कंडूः कठिना वा । यदुक्तं भोजे—'मणेरधो मेढ्रचर्म व्यानस्तु परिवर्त्तयेत् । सशूलतोददाहाद्यै-र्विज्ञेया परिवर्तिका ॥ श्लैष्मिकी कठिना स्निग्धा कंडूमत्यल्पवेदना'' इति ॥४२॥४३॥ अवपाटिकामाह—अल्पीयःखामिति । अल्पतरं खं योनिमुखं यस्याः सा तथा, कन्या ह्यनार्त्तवा अल्पीयःखा भवति । हस्ताभिघातादिति हेत्वंतरम्। उद्वर्तित इति ऊर्ध्वं वर्त्तते । यस्यावपाट्यत इति स्वयमेव विदीर्यते । एषा पृथग्दोषत्रयेणानुबध्यते । तथाच भोजः—"मर्दनाभिघाताद्वा कन्यायोनिप्रपीडनात् । लक्ष्यते यदि मेढ्रस्य चर्म दर्भैरिव क्षतम् ॥ अवपाटिकेति तां विद्यात्पृथग्दोषैः समन्विताम् । वातात्सा परुषा रूक्षा शूला निस्तोदकारिणी ॥ पित्तात्पीता सरक्ता वा दाहतृष्णासम-

---

१ "सर्वतश्चरः" इति मुग्धोऽस्य पाठः ।

यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् ॥
वातोपसृष्टे मेढ्रे वै चर्म संश्रयते मणिम् ॥ ४५ ॥
मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥
निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम् ॥ ४६ ॥

---

मधुकोशव्याख्या ।

तथाच भोजः—"मर्दनादभिघाताद्वा कन्यायोनिप्रपीडनात् । लक्ष्यते यदि मेढ्रस्य चर्म दर्भैरिव क्षतम्॥अवपाटिकेति तामाहुः पृथग्दोषैः समन्विताम् । वातात्सा परुषा रूक्षा शूलनिस्तोदकारिणी॥पित्तात्सदाहा रक्ताद्वा दाहतृष्णासमन्विता । श्लैष्मिकी कठिना स्निग्धा कण्डूमत्यल्पवेदना" इति ॥ ४४ ॥ निरुद्धप्रकशमाह—वातोपसृष्ट इत्यादि । संश्रयत इति समग्रं श्रयते अत्रैव नीयत इत्यर्थः । अवपाटिका त्वरूढा चर्मसंकोचान्निरुद्धप्रकशो भवतीति ब्रुवते, सन्निरुद्धगुदवत् स्वतन्त्रोऽपि भवतीति शक्यते, वक्तुं, निरुद्धप्रकाश इत्यस्मिन्नर्थे निरुद्धप्रकशः, नैरुक्तेन च रूपसिद्धिः । मूत्रस्रोतो रुणद्धीति संकुचितचर्मपीडनेन मणेः स्वल्पद्वारत्वान्मूत्रस्रोतो रुणद्धि । अवेदनमित्यस्य स्थाने सवेदनमिति केचित् । अत्र भोजाभिप्रायेण व्याचक्षते—एकदा निरुद्धे स्रोतसि सवेदनमन्यदा तु प्रकाशे मूत्रं मन्दधारं प्रवर्तते, मणिश्च नावदीर्यते तथाच भोजः—"मेढ्रान्ते चर्मणि यदा मारुतः कुपितो भृशम् । द्वारं रुणद्धि स शनैः प्रकाशश्च मुहुर्भवेत् ॥ मूत्रं मूत्रयते कृच्छ्रात्प्रकाशस्तु यदा भवेत् । वातोपसृष्टमेढ्रस्तु मणिर्न च विदीर्यते । निरुद्धं च प्रकाशं च व्याधिं विद्यात्सुदारुणम्' इति । सुश्रुते तु निरुद्धप्रकाशत्वात् निरुद्धप्रकशः । मणिर्विदीर्यते न चेति मणिर्विवृतो

आतंकदर्पणव्याख्या ।

न्विता । श्लैष्मिकी कठिना स्निग्धा कंडूमत्यल्पवेदना" इति ॥ ४४ ॥ निरुद्धप्रकशमाह—वातेति । वातदुष्टमेढ्रे च मर्मणि संश्रयत इति समग्रं श्रयेत्, तत्रैव लीयत इत्यर्थः । चर्मसंकोचान्मूत्रस्रोतो रुध्यते, अवपाटिका दुरूढा चर्मसंकोचान्निरुद्धप्रकाशा भवतीति ब्रुवते । सन्निरुद्धगुदवत्स्वतंत्रोऽपि भवतीति शक्यते वक्तुम् ॥ निरुद्धप्रकाश इत्यस्मिन्नर्थे निरुद्धप्रकशनैरुक्तेन रूपसिद्धिः, अवेदनमित्यस्य स्थाने सवेदनमित्यन्ये भोजाभिप्रायेण व्याचक्षते । एकदा निरुद्धस्रोतसि अवेदनम्, अन्यदा तु प्रकाशे मूत्रं मंदधारं प्रवर्तते । मणिश्च विदार्यते मूत्रेणेतिशेषः । तथाच भोजः—"मेढ्रांते चर्मणि यदा मारुतः कुपितो भृशम् । द्वारं रुणद्धि स शनैः प्रकाशश्च मुहुर्भवेत् ॥ मूत्रं मूत्रयते कृच्छ्रात्प्रकाशस्तु यदा भवेत् । वातोपसृष्टमूत्रस्तु मणिर्न च विदीर्यते ॥ निरुद्धं च प्रकाशं

मूत्रं प्रवर्तते जन्तोर्मणिर्विव्रियते न च ॥
निरुद्धप्रकशं विद्यात्सरुजं वातसंभवम् ॥ ४७ ॥
वेगसन्धारणाद्वायुर्विहतो गुदसंश्रितः ॥
निरुणद्धि महास्रोतः सूक्ष्मद्वारं करोति च ॥ ४८ ॥
मार्गस्य सौक्ष्म्यात्कृच्छ्रेण पुरीषं तस्य गच्छति ॥
सन्निरुद्धगुदं व्याधिमेनं विद्यात्सुदारुणम् ॥ ४९ ॥
शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् ॥
स्विन्ने वाऽस्नाप्यमाने वा कण्डू रक्तकफोद्भवा ॥ ५० ॥
कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते ॥
एकीभूतं व्रणैर्घोरं तं विद्यादहिपूतनम् ॥ ५१ ॥

---

मधुकोशव्याख्या ।

न भवति ॥ ४५–४७ ॥ मूत्रमार्गरोधकनिरुद्धप्रकशानन्तरं पुरीषमार्गरोधकं सन्निरुद्धगुदमाह--वेगसन्धारणादित्यादि । तस्येति गुदस्य । महत्स्रोत इति पाठे तु महत्स्रोतो गुदविवरं, निरुद्धप्रकशवदत्रापि चर्मसंकोचात् सन्निरुद्धगुदम् ॥ ४८॥४९ ॥ अहिपूतनमाह—शकृन्मूत्रेत्यादिना । अपान इति गुदे, स्विन्ने स्वेदवति, अस्नाप्यमाने अक्रियमाणक्षालने; स्वेदमलक्लेदादेव कण्डूर्भवतीत्यर्थः । एकीभूतमिति अपानं व्रणैः सहैकीभूतम् । अहिपूतनं च बालानामेव भवति, भोजे पुनरिदं दुष्टस्तन्यपानादपि भवतीति पठितम् । यदुक्तम्—"दुष्टस्तन्यस्य पानेन मलस्याक्षालनेन च । कण्डूदाहरुजावद्भिः पिडकैश्च समाचिता । संभवन्ति यथादोषं दारुणा ह्यहिपूतनाः"

आतंकदर्पणव्याख्या ।

च व्याधिं विद्यात्सुदारुणम्" ॥ ४९–४७ ॥ संनिरुद्धगुदमाह—वेगेति । महत्स्रोतो गुदविवरं निरुद्धप्रकशवदत्रापि चर्मसंकोचान्निरुद्धगुदम् ॥ ४८ ॥ ४९ ॥ अहिपूतनमाह—शकृदिति । अपाने गुदे स्विन्ने स्वेदवति अस्नाप्यमाने अक्रियमाणप्रक्षालने स्वेदमलक्लेदादेव कंडूर्भवति । ततः स्फोटः जायते । एकीभूतमिति । अपानं व्रणैः सहैकभूतम्, अहिपूतनं बालानामेव भवति, भोजे पुनरिदं दुष्टस्तन्यपानादपि भवतीति पठितम् । यदुक्तम्—"दुष्टस्तन्यस्य पानेन मलस्याक्षालनेन च । कंडूदाहरुजावद्भिः पिडकैश्च समाचिता ॥ अहिपूतना संभवति यथादोषं च दारुणा ॥"

स्नानोत्सादनहीनस्य मलो वृषणसंस्थितः ॥
यदा प्रक्लिद्यते स्वेदात्कण्डूं जनयते तदा ॥ ५२ ॥
कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते ॥
प्राहुर्वृषणकच्छूं तां श्लेष्मरक्तप्रकोपजाम् ॥ ५३ ॥
प्रवाहणातीसाराभ्यां निर्गच्छति गुदं बहिः ॥
रूक्षदुर्बलदेहस्य गुदभ्रंशं तमादिशेत् ॥ ५४ ॥
सदाहो रक्तपर्यन्तस्त्वक्पाकी तीव्रवेदनः ॥
कण्डूमाञ्ज्वरकारी च स स्याच्छूकरदंष्ट्रकः ॥ ५५ ॥
इति श्रीमाधवकरविरचिते माधवनिदाने क्षुद्ररोगनिदानं समाप्तम् ॥ ५५ ॥

---

मधुकोशव्याख्या।

इति ॥५०॥५१॥ अहिपूतनासमानहेतुलिङ्गतया गुदाश्रयं गुदभ्रंशमुल्लङ्घ्यानन्तरं वृषणकच्छूमाह—स्नानोत्सादनहीनस्येत्यादि । एषा च निदानविशेषात् प्रायो वृषणभावित्वात् विशिष्टचिकित्सोपयोगित्वाच्च कुष्ठोक्तकच्छूतो भेदेन पठ्यते ॥ ५२॥५३ ॥ गुदभ्रंशलिङ्गमाह—प्रवाहणेत्यादि । प्रवाहणं प्रकर्षेण कुन्थनम् । वाह प्रयत्ने इत्यस्य रूपम् । प्रवाहणेनातिवेगोदीरणेन वातकोपः, अतीसारेण तु धातुक्षयात्; यदि वा प्रवाहणेनातीसारेण चाधोगतमारुतत्वेन गुदनिर्गमो रूक्षादिदेहस्य ॥ ५४ ॥ वराहदंष्ट्रलिङ्गमाह—सदाह इत्यादि । अयं वराहदाढ इति लोके प्रसिद्धः ॥ ५५ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां क्षुद्ररोगनिदानं समाप्तम् ॥ ५५ ॥

आतङ्कदर्पणव्याख्या।

इति ॥ ५० ॥ ५१ ॥ अहिपूतनासमानलिंगहेतुतया गुदाश्रयं गुदभ्रंशमुलंघ्यानंतरं वृषणकंडूमाह—स्नातेति । उत्सादनमाहरणबन्नम् । एषां च स्नानोत्सादननिदानविशेषात्प्रायो वृषणभावित्वाद्विशिष्टचिकित्सायोगित्वाच्च कुष्ठोक्तकंडूतो भिन्ना ॥ ५२ ॥ ५३ ॥ गुदभ्रंशमाह—प्रवाहेति । प्रवाहणं प्रकर्षेण कुन्थनं हत्कंठबलेन वायोरानयनम् । 'वाहृ प्रयत्ने' । प्रवाहणेन वातकोपः, अतिसारे तु धातुक्षयात् । यदि वा प्रवाहणेतिसारेणैव अधोगतमारुतत्वेन गुदनिर्गमो रूक्षादिदेहस्य अयं वातकोपजः ॥ ५४ ॥ सूकरदंष्ट्रमाह—सदाहेति । सूकरदंष्ट्राकारत्वेन सूकरदंष्ट्रको विसर्पलिंगः 'वराहदाढ' इति लोके प्रसिद्धः । अत्र क्षुद्ररोगाश्चत्वारिंशदुक्ताः ॥ ५५ ॥ इत्यातंकदर्पणे निदानव्याख्यायां क्षुद्ररोगनिदानम् ॥

# अथ मुखरोगनिदानम् ५६.

आनूपपिशितक्षीरदधिमत्स्यातिसेवनात् ॥
मुखमध्ये गदान्कुर्युः क्रुद्धा दोषाः कफोत्तगः ॥ १ ॥
कर्कशौ परुषौ स्तब्धौ संप्राप्तानिलवेदनौ ॥
दाल्यते परिपाटयेते ओष्ठौ मारुतकोपतः ॥ २ ॥
चीयते पिडकाभिश्च सरुजाभिः समन्ततः ॥
सदाहपाकपिडकौ पीताभासौ च पित्ततः ॥ ३ ॥
सवर्णाभिश्च चीयते पिडकाभिरवेदनौ ॥
भवतस्तु कफादोष्ठौ पिच्छिलौ शीतलौ गुरू ॥ ४ ॥

मधुकोशव्याख्या ।

रोगगणत्वसामान्यान्मुखरोगनिदानमुच्यते--आनूपेत्यादि । मुखरोगाश्च पञ्चषष्टिर्भवन्ति यदाह भोजः--"दन्तेष्वष्टावोष्ठयोश्च मूलेषु दश पञ्च च । नव तालुनि जिह्वायां पञ्च सप्तदशामयाः । कण्ठे त्रयः सर्वसरा एकषष्टिश्चतुष्पराः" इति ॥ १ ॥ तत्राष्टावोष्ठगतानाह ॥ वातिकलक्षणमाह--कर्कशावित्यादि । दाल्येते इति विदार्येते । परिपाटयेते इति किंचिदवदीर्णत्वचौ भवत इत्यर्थः ॥ २ ॥ पैत्तिकलक्षणमाह--चयिते इत्यादि । सरुजाभिरिति पित्तकृतरुजान्विताभिः । यद्येवं सदाहपाकपिडकाविति किमर्थमुच्यते ? पूर्वेणैव गतार्थत्वात् । नैवं, पक्षान्तरप्रतीत्यर्थं पुनरुच्यते, अयमर्थः--कदाचित् पित्तरुजान्वितबहुपिडकाचितावोष्ठौ, कदाचित् दाहपाकान्वितपिडकाचितौ वा भवतः, अन्यस्त्वाह--अनतिभिन्नार्थत्वादव्यक्तशब्दार्थत्वाच्च दाहपाकातिशयदर्शनार्थं पिडकानुवादः ॥ ३ ॥ कफजमाह--सवर्णाभिरित्यादि । सवर्णाभिरिति ओष्ठ-

आतङ्कदर्पणव्याख्या ।

रोगगणत्वसमान्यान्मुखरोगारंभः । मुखरोगाः पंचषष्टिर्भवंति । यदुक्तं भोजे--"दंतेष्वष्टावोष्ठयोश्च मूलेषु दश पंच च । नव तालुनि जिह्वायां पंच सप्तदशामयाः । कंठे त्रयः सर्वसरा एकषष्टिश्चतुष्पराः ॥" इति ॥ १ ॥ तत्राष्टावोष्ठगतान्निर्दिशति कर्कशाविति । कर्कशौ शाकपत्रसदृशौ, परुषौ रूक्षौ, स्तब्धौ निश्चलौ । संप्राप्तानिलवेदनावित्यत्र "कृष्णौ तीव्ररुजान्वितौ" इति पाठांतरम् । दाल्येते इति विदार्येते, द्विधा भवत इवेत्यर्थः । परिपाटयेते इति किंचिद्वदीर्णत्वचौ भवत इत्यर्थः ॥ २ ॥ पैत्तिकमाह--चीयेते इति । सरुजाभिः पित्तकृतरुजाभिः पित्तकृतरुजाचिताभिः, दाहपाकावपि पित्तकृतौ, तत्कथमुच्यते ? दाहपाकावतिशयदर्शनार्थं पिडकानुवाद इति ॥ ३ ॥ श्लैष्मिकमाह--सवर्णाभिरिति,--ओष्ठसमानवर्णाभिः, अवेदनौ श्लक्ष्णे-

सकृत्कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च ॥
सन्निपातेन विज्ञेयावनेकपिडकाचितौ ॥ ५ ॥
खर्जूरफलवर्णाभिः पिडकाभिर्निपीडितौ ॥
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ६ ॥
गुरू स्थूलौ मांसदुष्टौ मांसपिण्डवदुद्गतौ ॥
जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतोमुखात् ॥ ७ ॥
सर्पिर्मण्डप्रतीकाशौ मेदसा कण्डुरौ गुरू ॥
अच्छं स्फटिकसंकाशमास्रावं स्रवतो भृशम् ॥ ८ ॥

---

मधुकोशव्याख्या ।

समानवर्णाभिः । अवेदनौ ईषद्वेदनौ ॥ ४ ॥ सान्निपातिकलक्षणमाह--सकृदित्यादि । सकृदिति कदाचिद्विकृतिवशादेवं भवति । अनेकपिडकाचिताविति वातादिवेदनान्वितबहुपिडकौ, अनेकवर्णपिडकाचितावित्यन्ये । अनेकाश्च वर्णा वातादीनां कृष्णपीतश्वेताः, अत्र पक्षे सकृत्कृष्णावित्यादि पिडकातोऽन्यत्र कल्पनीयम् ॥ ५ ॥ रक्तजमाह--खर्जूरेत्यादि । खर्जूरफलवर्णाभिरित्यनेन वर्णमात्रेणैव साधर्म्यं प्रतिपाद्यते यदि तु सर्वात्मना साधर्म्यमभीष्टं स्यात्, तदा खर्जूरफलतुल्याभिरित्येवोच्येत । रक्तोपसृष्टाविति रक्तदूषितौ ॥ ६ ॥ मांसजमाह--गुरू स्थूलावित्यादिना । जन्तवश्चात्र मूर्च्छन्तीति क्रिमयोऽप्यत्र उच्छ्रिता भवन्ति । उभयतोमुखादिति मुखविवरमपेक्ष्योभयभागयोः, सृक्कणीप्रदेशयोरिति यावत् । मुखादिति ल्यब्लोपे पञ्चमी । उभयतोमुखा इति पाठान्तरे उभयसृक्कणभागो मुखमाश्रयो येषां ते तथा । द्विमुखा इत्यन्ये ॥ ७ ॥ मेदोजमाह--सर्पिर्मण्डप्रतीकाशावित्यादिना । सर्पिर्मण्डप्रतीकाशाविति सर्पिर्मण्डो घृतस्योपरितनस्वच्छभागस्तत्प्रतीकाशौ तत्सदृशौ । तयोरिति तादृ-

आतङ्कदर्पणव्याख्या ।

दनौ ॥ ४ ॥ सान्निपातिकमाह--सकृदिति । कदाचिद्विकृतिवशादेवं भवति । अनेकपिडकाचिताविति वातादिवेदनाचितबहुपिडकौ, अनेकवर्णपिडकान्वितावित्यन्ये ॥ ५ ॥ रक्तजमाह--खर्जूरेति । खर्जूरफलवर्णाभिरित्यनेन वर्णमात्रेणैव साम्यम्, न तु सर्वात्मना, अन्यथा खर्जूरफलतुल्याभिरित्येवोच्येत रक्तोपसृष्टाविति रक्तदूषितौ ॥ ६ ॥ मांसजमाह--गुरुस्थूलाविति । मुखविवरमपेक्ष्योभयभागयोः सृक्किणीप्रदेशयोरिति यावत् । "उभयतोमुखाः" इति पाठांतरम् । तत्र द्विमुखाः जन्तवः क्रिमयोप्यत्र मूर्च्छंति उच्छ्रिता भवंतीत्यर्थः ॥ ७ ॥ मेदोजमाह--सर्पिरिति ।

तयोर्व्रणो न संरोहेन्मृदुत्वं च न गच्छति ॥
ओष्ठौ पर्यवदीर्येते पाट्येते चाभिघाततः ॥
ग्रथीतौ च समाख्यातावोष्ठौ कण्डूसमन्वितौ ॥ ९ ॥
शोणितं दन्तवेष्टेभ्यो यस्याकस्मात्प्रवर्तते ॥
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ १० ॥
दन्तमांसानि शीर्यन्ते पचन्ति च परस्परम् ॥
शीतादो नाम स व्याधिः कफशोणितसंभवः ॥ ११ ॥
दन्तयोस्त्रिषु वा यस्य श्वयथुर्जायते महान् ॥
दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः ॥ १२ ॥

मधुकोशव्याख्या ।

शयोः ॥ ८ ॥ अभिघातजमाह–ओष्ठौ पर्यवदीर्येते इत्यादिना । अत्र कफरक्तयोरप्यनुबन्धो बोद्धव्यः । यदुक्तं भोजे–"क्षतावभिहतौ वापि रक्तावोष्ठौ सवेदनौ । भवतः सपरिस्रावौ कफरक्तप्रदूषितौ" इति । वायुरप्यत्राभिघाताल्लभ्यते, अयं चाभिघातजशोथात् यथोक्तलक्षणकारणभेदेन तथा वातिकोष्ठप्रकोपादपि कफरक्तरूपहेतुभेदयोगाद्भिद्यते ॥ ९ ॥ दन्तमूलगतान् पञ्चदश व्याकरोति शीतादमाह–शोणितमित्यादि । दन्तवेष्टेभ्य इति दन्तबन्धनमांसेभ्यः । अकस्मादिति अभिघातादिनिमित्तं विना । शीर्यन्त इत्यस्य स्थाने पच्यन्त इति गदाधरः, व्याचष्टे च स्वयमिति शेषः । पचन्ति च परस्परमित्यन्योन्यं पचन्ति, पाकोष्मदूषितशोणितसंचरणेन ॥ १० ॥ ११ ॥ दन्तपुप्पुटकमाह–दन्तयोस्त्रिष्वित्यादिना । अयं च दन्त-

आतङ्कदर्पणव्याख्या ।

सर्पिर्मंडो घृतस्योपरितनः स्वच्छो भागः, तत्प्रतीकाशौ तत्सदृशौ ॥ ८ ॥ तयोरिति । तादृशयोः । अभिघातजमाह–ओष्ठाविति । पर्यवदीर्येते पाट्येते खंडीक्रियेते, अत्र कफपित्तयोरनुबंधो ज्ञातव्यः । यदुक्तं भोजे–"क्षतावभिहतौ चापि रक्तावोष्ठौ सवेदनौ । भवतः सपरिस्रावौ कफरक्तप्रदूषितौ" इति । वातजः केवलः स्वकारणकुपितः, अत्र तु वायुः अभिघाताल्लभ्यते । तयोरयमेव भेदः, एवमष्टावोष्ठगताः ॥९॥ दंतमूलगतान् पंचदश व्याकरोति–शोणितमिति । यस्य दंतवेष्टेभ्यः दंतबंधनमांसेभ्यः, अकस्मादिति अभिघातादिनिमित्तं विना रक्तं प्रवर्त्तते, दंतमांसानि दुर्गंधीनि ईषदसितानि क्लेदयुक्तानि मृदूनि च भवंति । तथा शीर्यंते गलंति, शीर्यंत इत्यस्य स्थाने पच्यंते इति गदाधरः, व्याचष्टे च स्वयमिति शेषः । पचंति च परस्परमिति । अन्योन्यं च पतंति, पाकोष्मदूषितशोणितसंचरणेन स शीतादो नाम व्याधिरिति ॥ १० ॥ ११ ॥ दंतपुप्पुटकमाह–दंतयोरिति । दंतयोर्द्वयोः त्रिषु वा नियतः कफरक्तजः, शौषिराद्भिन्नोऽयं रुजालाल-

१ "क्षतजाभौ विदीर्येते" इति पाठान्तरम्।

स्रवन्ति पूयरुधिरं चला दन्ता भवन्ति च ॥
दन्तवेष्टः स विज्ञेयो दुष्टशोणितसंभवः ॥ १३ ॥
श्वयथुर्दन्तमूलेषु रुजावान्कफरक्तजः ॥
लालास्रावी स विज्ञेयः शौषिरो नाम नामतः ॥ १४ ॥
दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्यते ॥
यस्मिन्स सर्वजो व्याधिर्महाशौषिरसंज्ञितः ॥ १५ ॥
दन्तमांसानि शीर्यन्ते यस्मिन्ष्ठीवति चाप्यसृक् ॥
पित्तासृक्कफजो व्याधिर्ज्ञेयः परिदरो हि सः ॥ १६ ॥

---

मधुकोशव्याख्या ।

योस्त्रिष्वित्यभिधानात् द्वित्रिदन्तानियतः, कफरक्तजत्वेऽपि शौषिराद्भिन्नोऽयं रुजालालास्रावाभावात् ॥ १२ ॥ दन्तवेष्टमाह—स्रवन्तीत्यादि । स्रवन्ति पूयरुधिरमित्यत्र दन्तमूलानीति शेषः । चला दन्ता भवन्ति चेति चकारेण पचन्ति चेति द्रष्टव्यम् १३॥ शौषिरलिङ्गमाह—श्वयथुरित्यादि । नामत इति प्रसिद्धितः ॥ १४ ॥ महाशौषिरलिङ्गमाह—दन्ता इत्यादि । तालु चाप्यवदीर्यत इत्यत्र चकारेण दन्ता ओष्ठौ चाप्यवदीर्यन्ते इति बोद्धव्यम् । सप्तरात्राच्चायं मारकः । यदाह भोजः—"सदाहो दन्तमूलेषु शोथः पित्तकफानिलात् । जातः कफं क्षपयति क्षीणे तस्मिंस्तु शोणितम् ॥ विवृद्धमनिशं दन्तांस्ताल्वोष्ठमपि दारयेत् । महाशौषिरमित्येतत्सप्तरात्रान्निहन्त्यसून्"–इति । यस्मिन्निति शौषिरे । एवमपि भवति, स महाशौषिर इति गदाधरः ॥ १५ ॥ परिदरमाह—दन्तमांसानीत्यादि । दन्तमांसस्य परिदारणात्

आतङ्कदर्पणव्याख्या ।

भावात् ॥ १२ ॥ दंतवेष्टमाह—स्रवंतीति । अत्र दंतमूलानीति शेषः । चला दंता भवंतीति चेति चकारेण पचंति इति द्रष्टव्यम्, स व्याधिर्दंतवेष्टो विज्ञेयः ॥ १३ ॥ शौषिरमाह—श्वयथुरिति । दंतमूलेषु श्वयथुः पीडावान् कफरक्तोत्थो लालास्रावी स शौषिरो नाम नामतः प्रसिद्ध इति ॥ १४ ॥ महाशौषिरमाह—दंता इति।यस्मिन्, व्याधौ वेष्टेभ्यो दंताश्चलंति,तालु चाप्यवदीर्यत इति अत्र चकारेण दंतावोष्ठौ चाप्यावदीर्य्येते इति व्याख्यानयंति।सप्तरात्राच्चायं मारकः।यदाह भोजः—"सदाहो दंतमूलेषु शोफः पित्तकफानिलात् । जातः कफं क्षेपयति क्षीणे तस्मिन्सशोणितम् । विवृद्धमनिशं दंतास्ताल्वोष्ठमपि दारयत् । महाशौषिरमित्येतन्सप्तरात्रान्निहंत्यसून्" इति । सर्वजः सर्वदोषजः । यस्मिन्निति शौषिर एवमपि भवति,स महाशौषिर इति गदाधरः ॥ १५ ॥ परिदरमाह- दंतेति । यस्मिन् मांसानि शीर्यंते ष्ठीवति चाप्यसृगिति रोगी लोहितं थूत्करोतीत्यर्थः । स व्याधिः परि-

वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च ॥
(अघट्टिताः प्रस्रवन्तिः शोणितं मन्दवेदनाः ॥
आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते ॥ )
यस्मिन्सोपकुशो नाम पित्तरक्तकृतो गदः ॥ १७ ॥
घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् ॥
चला भवन्ति दन्ताश्च स वैदर्भोऽभिघातजः ॥ १८ ॥
मारुतेनाधिको दन्तो जायते तीव्रवेदनः ॥
खलिवर्धनसंज्ञोऽसौ जाते रुक् च प्रशाम्यति ॥ १९ ॥
शनैःशनैः प्रकुरुते वायुर्दन्तसमाश्रितः ॥
करालान्विकटान्दन्तान्करालो न स सिध्यति ॥ २० ॥

---

मधुकोशव्याख्या ।

परिदरसंज्ञा॥१६॥ उपकुशलक्षणमाह–वेष्टेष्वित्यादि । ताभ्यामिति दाहपाकाभ्याम् । सोपकुश इति निर्देशोऽसिद्धत्वानित्यत्वात् साधुः, तेन स उपकुश इत्यर्थः ॥ १७ ॥ वैदर्भलिङ्गमाह–घृष्टेष्वित्यादि । संरम्भ इति शोथः वेदनापाकौ वा ॥ १८ ॥ खलिवर्धनलिङ्गमाह—मारुतेनेत्यादि । जाते रुक् च प्रशाम्यतीति उत्थिते अधिके दन्ते प्रभावाद्वेदनाया अभावः ॥ १९ ॥ करालक्षणमाह–करालान् विषमान्, करालस्तु सुश्रुतेऽनुक्तः । अधिकः संग्रहकारेण पठितः, तेन सुश्रुतोक्तपञ्चदशसंख्या-

आतङ्कदर्पणव्याख्या ।

दरो ज्ञेयः । कथंभूतः ? पित्तासृक्कफजः, दंतमांसपरिदारणात्परिदरसंज्ञा ॥ १६ ॥ उपकुशलक्षणमाह–वेष्टेष्विति । वेष्टेषु दंतवेष्टनमांसेषु दाहः पाकश्च स्यात् । ताभ्यामिति दाहपाकाभ्यां दंताश्चलंति । अघट्टिता अचालिताः शोणितं स्रवंति, मंदरुजः रक्ते स्रुते सति ते तस्या ध्मायंते मुखं पूति च भवति । ताभ्यामित्यत्र तेभ्य इति पाठे, तेभ्यो दंतवेष्टेभ्यः । सोपकुश इति निर्देशोऽसिद्धत्वानित्यत्वात्साधुः, तेनोपकुश इत्यर्थः ॥ १७ ॥ वैदर्भलिंगमाह- घृष्टेष्विति । दंतमूलेषु दंतमांसेषु दंतकाष्ठादिना घृष्टेषु सत्सु महान् संरंभो जायते । संरंभ इति शोफः, वेदनापाकौ वा, दंताश्चंचला भवंति स व्याधिरभिघातजो वैदर्भाख्यः ॥ १८ ॥ खलिवर्द्धनलिंगमाह–मारुतेनेति । मारुतेन वायुना तीव्रवेदनोऽधिको दंतो जायते । जाते रुक् प्रशाम्यतीति । उत्थितेऽधिकदंते प्रभावाद्वेदनाया अभावः । असौ विकारः खलिवर्द्धनसंज्ञः. ॥ १९ ॥ करालक्षणमाह– शनैःशनैरिति । वायुर्दंतसमाश्रितः सन् शनैःशनैर्दंतान् करालान्विषमान् विकटान् कुर्यात्,

हानव्ये पश्चिमे दन्ते महाञ्छोथो महारुजः ॥
लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः ॥
दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः ॥ २१ ॥
दीर्यमाणेष्विव रुजा यस्य दन्तेषु जायते ॥
दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥ २२ ॥
कृष्णच्छिद्रश्चलः स्रावी ससंरम्भो महारुजः ॥
अनिमित्तरुजो वाताद्विज्ञेयः क्रिमिदन्तकः ॥ २३ ॥

---

मधुकोशव्याख्या ।

हानिः ॥ २० ॥ अधिमांसकमाह—हानव्य इत्यादिना । अधिमांसक इति संज्ञायां कन् । हानव्य इति हनुकूहरे । पश्चिम इत्यवसानजे अन्तजे इति यावत् ॥ पञ्च-दन्तनाडीराह—दन्तेत्यादि । नाड्यः पञ्च ज्ञेया यथेरिता इति नाडीनिदाने यथोक्त-वातपित्तकफसन्निपातागन्तुनिमित्तास्तथा दन्तमांसगता अपि नाड्यः । एताश्च नाडीव्रणसमानलक्षणा अपि शालाक्यसिद्धान्तेन संख्यापूरणाय चिकित्साभेदाच्च पुनरुक्ताः ॥ २१ ॥ दन्तगतानष्टौ प्राह—दालनमाह—दीर्यमाणेष्वित्यादिना । सदा-गतिनिमित्तज इति सदागतिर्वायुस्तस्मान्निमित्ताज्जात इति । सदागतिनिमित्तत इति वक्तव्ये सदागतिनिमित्तज इति यत्कृतं तद्बलवद्धेतुजन्यवातकृतत्वबोधनार्थमिति कार्त्तिकः । केवलवातजत्वख्यापनार्थमित्यन्यः ॥ २२ ॥ क्रिमिदन्तकमाह—कृष्ण-च्छिद्र इत्यादि । कृष्णच्छिद्र इति दुष्टरक्तजक्रिमिकृतशोथपाकद्वारेण कृष्णच्छिद्र

आतङ्कदर्पणव्याख्या ।

स व्याधिः करालो न सिद्ध्यति । करालस्तु सुश्रुतेऽनुक्तोऽधिकः संग्रहकारेण पठितः, तेन न सुश्रुतोक्ते पंचदशसंख्याहानिः ॥२०॥ अधिमांसकमाह—हानव्य इति । हनुभवे, पश्चिम इति अवसा-नजे, अंतज इति यावत् । नाड्यः पंच ज्ञेया यथेरिता इति नाडीनिदाने यथोक्ता वातपित्तक-फसंनिपातागंतुनिमित्तजाः, तथा दंतमूलगता अपि नाड्यः । एताश्च नाडीव्रणसमानलक्षणाः अपि शालाक्यसिद्धांतेन संख्यापूरणाय चिकित्सितभेदाच्च पुनरुक्ताः । तासां मध्ये त्रिलिंगा नाडी असाध्या ॥ २१ ॥ दंतगतानष्टौ प्राह—तत्र दालनमाह—दीर्यमाणेष्विति । दंतेषु दीर्य-माणेष्विव दाल्यमानेष्विव भृशं रुजा भवति, स दालनो नाम व्याधिः, कथंभूतः? सदागतिनि-मित्तज इति । सदागतिर्वायुः, तस्मान्निमित्ताज्जातः, सदागतिनिमित्त इति वक्तव्ये सदागतिनि-मित्तज इति यत् कृतं, तद्बलवद्धेतुजवातकृतत्वबोधनार्थमिति कार्त्तिकः । केवलवातजत्वख्याप-नार्थमित्यन्ये । असाध्योयं व्याधिः ॥ २२ ॥ क्रिमिदंतकमाह—कृष्णेति । कृष्णः कृष्णदंतकः, छिद्र

वक्रं वक्रं भवेद्यस्य दन्तभङ्गश्च जायते ॥
कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः ॥ २४ ॥
शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः ॥
पित्तमारुतकोपेन दन्तहर्षः स नामतः ॥ २५ ॥
मलो दन्तगतो यस्तु पित्तमारुतशोषितः ॥
शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥ २६ ॥

---

मधुकोशव्याख्या ।

इत्यर्थः । अन्ये 'कृष्णश्चित्र इति पठन्ति' चित्र इति चित्रवान्, अर्शआदित्वादच् । स्रावीति दन्तमूलेषु स्रावो बोद्धव्यः, दन्तानां नीरसत्वेन स्रावाभावात् । अनिमित्तरुज इति अवघट्टनादिनिमित्तं विनैव महारुजत्वेन रुजावानिति कार्तिकः ॥ २३ ॥ भञ्जनकलक्षणमाह—वक्रमित्यादि । वक्रं वक्रमिति दन्तभङ्गकारिणा दोषेण वक्त्रस्यापि वक्रत्वम् ॥ २४ ॥ दन्तहर्षणलक्षणमाह—शीतेत्यादि । 'शीतमुष्णं च दशनाः सहन्ते स्पर्शनं न च । यस्य तं दन्तहर्षं तु व्याधिं विद्यात्समीरणात्' इति श्लोकान्तरं पठन्ति । तत्र दन्तहर्षस्य वातजत्वेऽपि उष्णासहत्वं व्याधिप्रभावात्, कफरक्तावृतत्वाद्वा बोद्धव्यम् ॥ २५ ॥ दन्तशर्करालक्षणमाह-मल इत्यादि । शर्करेव खरस्पर्शेत्यस्य स्थाने सा दन्तानां गुणहरीति क्वचित् पठ्यते, दन्तानां गुणस्य शुक्लत्वदृढ-

आतङ्कदर्पणव्याख्या ।

इति छिद्रवान् । अर्शआदित्वादच् । कृमिकृतच्छिद्रत्वात्सच्छिद्रदंत इत्यर्थः । चलश्चलदंतः । स्रावी तु दंतमूलेषु स्रावो बोद्धव्यः, दंतानां नीरसत्वेन स्रावाभावात् । स संरंभः श्वयथुः । अनिमित्तरुज इति अवघट्टनादिनिमित्तं विनैव, महारुजत्वेन रुजावानिति स तथाविधो वातात्कृमिदंतको ज्ञेयः ॥ २३ ॥ दंतभंजलक्षणमाह—वक्रमिति । यस्मिन् रोगे दंतभंगकारिणा दोषेण वक्त्रस्यापि वक्रत्वं भवेत् दंतभंगश्च भवेत् । जायते इत्यत्र तीव्ररुक् इति पाठांतरम् । स व्याधिर्भञ्जनक इति ख्यातः । कथंभूतः ? कफवातकृतः । असाध्योऽयं व्याधिः ॥ २४ ॥ दंतहर्षमाह--शीतेति । यस्य द्विजा दंता शीतस्य भक्ष्यस्य प्रवातस्य प्रचंडवातस्याम्लस्यासहा अक्षमा भवंति, स नामतः प्रसिद्धितः कफमारुतकोपेन दंतहर्षो ज्ञेयः । भक्ष्य इत्यत्र "रूक्ष" इति पाठांतरम् ॥ २५ ॥ दंतशर्करालक्षणमाह—मल इति । यो दंतगतो मलः कफमारुतशोषितो भवति सा दंतशर्करा । तथा च वाग्भटः—"अधावनान्मलो दंते कफवातेन शोषितः । पूतिगंधः स्थिरीभूतः शर्करा साप्युपेक्षिता" इति । शर्करेव खरस्पर्शेत्यत्र स्थाने "सा दंतानां गुणहरी" इति क्वापि पठ्यते, दंतानां गुणस्य शुक्ल-

---

१ अयम् "रूक्ष-" इत्यत्र "भक्ष्य-" इत्येवपाठंमुख्यं मनुते ।

कपालेष्विव दीर्यन्तु दन्तानां सैव शर्करा ॥
कपालिकेति विज्ञेया सदा दन्तविनाशिनी ॥ २७ ॥
योऽसृङ्मिश्रेण पित्तेन दग्धो दन्तस्त्वशेषतः ॥
श्यावतां नीलतां वापि गतः स श्यावदन्तकः ॥ २८ ॥
दन्तमांसे मलैः सास्रैर्बाह्यान्तः श्वयथुर्गुरुः ॥
सदाहरुक्स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ॥ २९ ॥
जिह्वानिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा ॥
पित्तेन दह्यत्युपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च ॥
कफेन गुर्वी बहुलाचिता च मांसोच्छ्रयैः शाल्मलिकण्टकाभैः ३०

मधुकोशव्याख्या ।

त्वादिकस्य हरणशीला ॥ २६ ॥ कपालिकालक्षणमाह—कपालेष्वित्यादि । कपालेष्विवेति मलसहितदन्तावयवेषु काठिन्यात् कपालतुल्येषु दन्तमल एव कठिने कपालप्राये दीर्यमाणे सैव शर्करा कपालिका । सदेति बाल्यादौ । अत्रावकाशे हनुमोक्षः सुश्रुते दन्तदेशसामीप्याद्दन्तपीडनाच्च पठितः, स इह संग्रहकारेण मुख्यदन्तगतत्वाभावान्न पठितः, पठितस्तु हनुग्रहसंज्ञया वातव्याधौ भोजवचनात् । यदुक्तम्—"वाताभिघाताज्जन्तोर्हि हनुसन्धिर्विमुच्यते । निरस्तजिह्वः कृच्छ्रेण भाषितं तत्र गच्छति ॥ सम्यक् तमनिलव्याधिं हनुमोक्षं विनिर्दिशेत्" इति ॥ २७–२९ ॥ संप्रति जिह्वागतानाह—जिह्वानिलेनेत्यादि स्फुटितेति मनाग्विदीर्णा । प्रसुप्तेति

आतङ्कदर्पणव्याख्या ।

दृढत्वादिकस्य हरणशीला ॥ २६ ॥ कपालिकालक्षणमाह—कपालेष्विति । दंतानां कपालेषु मलसहितदंतावयवेषु काठिन्यात्कपालतुल्येषु दीर्यमाणेषु सैव शर्करा कपालिका ज्ञेया । दंतमूलः स च कठिने कपालप्राये दीर्यमाणे इति डल्हनः । सदेति बाल्यादौ दंतविनाशिनी "दलंति दंतवल्कानि यदा शर्करया सह" इति केचित्पठंति । तत्रापि स एवार्थः ॥ २७ ॥ श्यावदंतकमाह—य इति । यो दंतोऽसृग्विमिश्रेण पित्तेनाशेषतो दग्धः तथा श्यावतामथवा नीलतां गतो भवति, स श्यावदंतको ज्ञेयः । श्यावदंतक इति—संज्ञायां कन् । असाध्योऽयं व्याधिः । अत्रावकाशे हनुमोक्षः, सुश्रुते दंतदेशसामीप्याद्दंतपीडनाच्च दंतरोगः पठितः, स इह संग्रहकारेण मुख्यदंतगतत्वाभावान्न पठितः, पठितस्तु संग्रहे हनुग्रहसंज्ञया वातव्याधौ भोजवचनात् । यदुक्तम्—"वाता (भारा) भिघाताज्जंतोर्हि हनुसंधिर्विमुच्यते । निरस्तजिह्वः कृच्छ्रेण भाषितं तत्र गच्छति । सम्यक्तमनिलव्याधिं हनुमोक्षं विनिर्दिशेत्" । इति ॥ २८ ॥ २९ ॥ संप्रति जिह्वागतान्निर्दिशति । तत्र वातकंटकानाह—जिह्वेति । अनिलेन जिह्वा स्फुटितेति मनाग्विदीर्णा भवेत्, तथा

जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्तिः ॥
जिह्वां स तु स्तम्भयति प्रवृद्धो मूले च जिह्वा भृशमेति पाकम् ३१॥
जिह्वाग्ररूपः श्वयथुर्हि जिह्वामुन्नम्य जातः कफरक्तमूलः ॥
लालाकरः कण्डुयुतः सचोषः सा तूपजिह्वा पठिता भिषग्भिः ३२

मधुकोशव्याख्या ।

सुप्तेव, रसस्यानवबोधात् । शाकच्छदनप्रकाशेति शाकतरुपत्रवत् कण्टकाचितेत्यर्थः; शाको मरुजद्रुमः । पैत्तिककण्टकलक्षणे दह्यंतीति आत्मनेपदानित्यत्वात् साधुः । अयं च रोगो जाडीति ख्यातः ॥ ३० ॥ अलासमाह–जिह्वातले यः श्वयथुरित्यादिना । प्रगाढ इति प्रकर्षेण गाढो दारुण इत्यर्थः । तेन जिह्वागतेष्वलासस्त्वित्यादिना अलासस्यासाध्यतोक्ता सूच्यते । कफरक्तमूर्तिरिति कफरक्ताभ्यां हेतुभ्यां लब्धमूर्तिः कफरक्तज इत्यर्थः । जिह्वास्तम्भेन वायुरप्यत्र बोद्धव्यः, भृशपाकेन पित्तम्; अतस्त्रिदोषजो ज्ञेयः, अत एवास्यानुपक्रमेणासाध्यत्वं, कफरक्तयोस्तु प्राधान्येनाभिधानम् । अधोगत इति पाठान्तरे जिह्वाया अधोगतः ॥ ३१ ॥ उपजिह्विकामाह–जिह्वाग्ररूप इत्यादि । सचोष इति चोषः साक्षादग्निसंवन्धेनेवोपतापः,

आतङ्कदर्पणव्याख्या ।

सुप्तेति, सुप्तेव रसस्यानवबोधाद्चेतनेत्यर्थः । शाकच्छदनप्रकाशेति शाकतरुपत्रवत्कंटकचितेत्यर्थः । शाको मरुजद्रुमः । पैत्तिककंटकलक्षणमाह–पित्तेनेति । पित्तेन जिह्वा परिदह्यते । दह्यन्तीति आत्मनेपदस्यानित्यत्वात् साधुः । तथा सरक्तैः कंटकैर्व्याप्ता, अयं च रोगो नाडीति ख्यातः । पित्तात्सदाहैरुपचीयते तु दीर्घैरिति पाठांतरे पित्ताजिह्वा एवंविधैः कंटकैर्व्याप्यते ॥ कफकंटकानाह–कफेनेति । कफेन दूषिता जिह्वा गुर्वी बहुला स्थूला शाल्मलिकंटकाभैर्मांसोच्छ्रयैर्मांसांकुरैश्चिता व्याप्ता भवतीति संबंधः ॥ ३० ॥ अलासमाह–जिह्वातल इति । यो जिह्वातले श्वयथुः, सोऽलासनामा विकारः, स तु शोफः प्रवृद्धो जिह्वां स्तंभयति, जिह्वामूले भृशं पाकं प्राप्नोति । प्रगाढ इति प्रकर्षेण गाढो दारुण इत्यर्थः । तेन जिह्वागतेष्वलासस्त्वित्यादिना अलासस्यासाध्यतोक्ता सूच्यते । कफरक्ताभ्यां लब्धमूर्तिः कफरक्तज इत्यर्थः । जिह्वास्तंभेन तु वायुरप्यत्र बोद्धव्यः । भृशं पाकेन पित्तम्, अतस्त्रिदोषजोयम्, अत एवास्यानुपक्रमेणासाध्यत्वम् । कफरक्तयोस्तु प्राधान्येनाभिधानम् । "अधोगतः" इति पाठांतरे जिह्वाया अधोगतः ॥ ३१ ॥ उपजिह्विकामाह–जिह्वेति । उन्नम्य ऊर्ध्वीकृत्य, एतेन जिह्वाया अधो भवतीत्युक्तम्, जिह्वा-

१ चक्षिङो ङित्करणेनाऽनुदात्तेत्त्वलक्षणाऽऽत्मनेपदस्याऽनित्यत्वेऽपि "भावकर्मणोः" इति विहितात्मनेपदस्याप्यनित्यत्वेनात्र साधुत्वसाधनं साध्वसाधु वेति सुधीभिरेवानुसंधेयम् । कण्ड्वादेराकृतिगणत्वादेतत्सूपपादमिति परे ।

श्लेष्मासृग्भ्यां तालुमूले प्रवृद्धो दीर्घः शोथो ध्मातवस्तिप्रकाशः ॥
तृष्णाकासश्वासकृत्तं वदन्ति व्याधिं वैद्याः कण्ठशुण्डीति नाम्ना ३३
शोथः स्थूलस्तोददाहप्रपाकी प्रागुक्ताभ्यां तुंडिकेरी मता तु ॥
मृदुः शोथो लोहितो शोणितोत्थो ज्ञेयोऽध्रूषः सज्वरस्तीव्ररुक् च ३४
कूर्मोन्नतोऽवेदनोऽशीघ्रजन्मा रोगो ज्ञेयः कच्छपः श्लेष्मणा तु ॥
पद्माकारं तालुमध्ये तु शोथं विद्याद्रक्तादर्बुदं प्रोक्तलिङ्गम् ॥३५॥

मधुकोशव्याख्या ।

चोषश्चात्र रक्तयोनिना पित्तेन ॥ ३२ ॥ तालुगतानाह—कण्ठशुण्डीमाह—श्लेष्मासृग्भ्यामित्यादि । ध्मातवस्तिप्रकाश इति वायुपूरितचर्मपुटतुल्यः ॥३३॥ तुण्डिकेरीलक्षणमाह—शोथ इत्यादि । प्रागुक्ताभ्यामिति श्लेष्मासृग्भ्याम् । तुण्डिकेरी वनकार्पासीफलं, तत्तुल्यशोथतया तुण्डिकेरी । तोददाहाभ्यामिह वातपित्तानुबन्धो ज्ञेयः ॥ अध्रुषलक्षणमाह—मृद्वित्यादि । शोणितोत्थ इति रक्तसमुत्थः ॥ ३४ ॥ कच्छपलक्षणमाह—कूर्मोन्नत इत्यादि । अवेदन इत्यल्पवेदनः । अशीघ्रजन्मेति चिरजः ॥ ताल्वर्बुदमाह—पद्माकारमित्यादि । पद्माकारमिति पद्मकर्णिकाकारम् । तथाच भोजः—"उपर्येव भवेन्मध्ये यथा पद्मस्य कर्णिका । पार्श्वतश्चांकुरैर्दीर्घैर्नासा चाप्यवसीदति ॥ श्लेष्मरक्तसमुत्थानं तत्ताल्वर्बुदसंज्ञितम्" इति । रक्तजत्वाल्लो-

आतङ्कदर्पणव्याख्या ।

प्ररूपः जिह्वाग्रसन्निभः कफरक्तमूलः, कफरक्तकारणम् । सचोप इति । चोषः साक्षादग्निसंबंधेनोपतापः, चोषश्चात्र रक्तयोनिना पित्तेन, भिषग्भिः सा उपजिह्विका पठिता ॥ ३२ ॥ तालुगतानाह । तत्र गलशुंडिकामाह—श्लेष्मेति । श्लेष्मरक्ताभ्यां तालुमूले प्रवृद्धस्तथा दीर्घः प्रलंबः शोफः कंठशुंडीति गलशुंडीति नाम्नाऽयं व्याधिः पठितः । ध्मातवस्तिप्रकाश इति वायुपूरितचर्मपुटकतुल्यः ॥ ३३ ॥ तुंडिकेरीलक्षणमाह—शोफ इति । प्रागुक्ताभ्यामिति कफासृग्भ्यां तुंडिकेरी वनकार्पासीफलम्, तत्तुल्यशोफतया तुंडिकेरी । तोददाहाभ्यामत्र वातपित्तानुबंधोऽस्ति । अध्रुषलक्षणमाह-शोफ इति । स्तब्धादिलक्षणः शोथः अध्रुषो ज्ञेयः । अध्रूष इति च्छंदोनुरोधात् । लोहितोत्थ इति रक्तसमुत्थः ॥ ३४ ॥ कच्छपलक्षणमाह—कूर्मेति । कूर्मोत्सन्नः कूर्मवदुन्नतः, अवेदन इत्यव्यथः, अशीघ्रजन्मेति चिरजः, मंदानुसारीत्यर्थः, अरक्तः पांडुरः । ताल्वर्बुदमाह—पद्माकारमिति । तालुमध्ये उक्तलिंगं शोफं रक्तार्बुदं विद्यात् । कथंभूतम् ? पद्माकारं पद्मकर्णिकाकारम् । तथा च भोजः—"उपर्येव भवेन्मध्ये यथा पद्मस्य कर्णिका । पार्श्वतश्चांकुरैर्दीर्घैर्लीलां चाप्यवसीदति ॥

१ "मृदुः शोथः" इत्यत्र "शोफः स्तब्धः" इति पाठः । २ "रक्तो ज्ञेयः" इतिपाठा० ।

**दुष्टं मांसं नीरुजं तालुमध्ये कफाच्छूनं मांससंघातमाहुः ॥**
**नीरुक्स्थायीकोलमात्रः कफात्स्यान्मेदोयुक्तात्पुप्पुटस्तालुदेशे३६**
**शोषोऽत्यर्थं दीर्यते चापि तालुः श्वासश्चोग्रस्तालुशोषोऽनिलाच्च ॥**
**पित्तं कुर्यात्पाकमत्यर्थघोरं तालुन्येवं तालुपाकं वदन्ति ॥ ३७ ॥**
**गलेऽनिलः पित्तकफौ च मूर्च्छितौ प्रदुष्य मांसं च तथैव शोणितम्॥**
**गलोपसंरोधकरैस्तथाङ्कुरैर्निहन्त्यसून्व्याधिरियं हि रोहिणी॥३८॥**

मधुकोशव्याख्या ।

हितम् । प्रोक्तलिङ्गमिति पूर्वोक्तरक्तार्बुदतुल्यलिङ्गमित्यर्थः ॥ ३५ ॥ पुप्पुटमाह- नीरुगित्यादि । पुप्पुटस्तालुदेशे इति तालुपुप्पुटः । तालुशब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः । तालुशोषस्तु पित्तादिति केचित् पठन्ति, पित्तस्यापि शोषकत्वात् । केचित्तु वक्ष्यमाणं पित्तं कुर्यादिति पदमत्रापि संबध्य श्वासश्चोग्र इति चकारं भिन्नक्रमेण योजयित्वा विभक्तिविपरिणामं च कृत्वा पित्तं तालुशोषं कुर्यादिति व्याचक्षते । किंत्वयं भोजेऽपि वातादेव पठितः । यदुक्तम्-"तालुशोषो भवेद्वातात्" इत्यादि ॥ ३६ ॥ ३७ ॥ कण्ठगतास्तु रोहिण्यादयः सप्तदशोच्यन्ते, तत्र पञ्चानां रोहिणीनां सामान्यसंप्राप्तिमाह-गलेऽनिल इत्यादि । सर्वरोहिण्यः सन्निपातजाः, उत्कर्षाद्वातजादिव्यपदेशः । अन्ये तु पृथक् समस्ताश्च तथैव शोणित-

आतङ्कदर्पणव्याख्या ।

श्लेष्मरक्तसमुत्थानं तालुन्यर्बुदसंज्ञितम्" इति । प्रोक्तलिंगमिति पूर्वोक्तरक्तार्बुदस्य तुल्यलिंगं रक्तजत्वाल्लोहितम्, असाध्योऽयम् ॥ ३५ ॥ मांससंघातमाह-दुष्टमिति । अत्र केचित् "दुष्टं मांसं श्लेष्मणा नीरुजं वा ताल्वन्तस्थम्"इति पठन्ति।तालुपुप्पुटमाह-नीरुगिति । स्थायी स्थिरः,कोलमात्रः कोलसमः 'पुप्पुट' इति देशे । तालुनि पुप्पुटःतालुपुप्पुटः, तालुशब्दोऽत्र लुप्तनिर्दिष्टो द्रष्टव्यः॥३६॥ तालुशोषमाह-शोष इति । तालुन्यत्यर्थं शोषः तथा तालु दीर्यते, तथा उग्रः श्वासो भवति सोऽनिलोत्थस्तालुशोषो ज्ञेयः । तालुशोषस्तु पित्तादिति केचित्पठंति । पित्तस्यापि शोषकारकत्वात्, किंत्वयं भोजेपि वातादेव पठितः । तदुक्तम्-"तालुशोषो भवेद्वाताद्व्याधिर्यं क्ष्वेडसंयुते" इति । वाग्भटेन तु वातपित्ताभ्यां तालुशोषः पठितः । तथाहि-"वातपित्तज्वराऽयासैस्तालुशोषस्तदाह्वयः" इति । तालुपाकमाह-पित्तमिति । सुगमम् ॥ ३७ ॥ कंठगतास्तु रोहिण्यादयः सप्तदशोच्यंते, तत्र पंचानां रोहिणीनां सामान्येन संप्राप्तिमाह-गल इति । गलेऽनिलो वृद्धः, तथा पित्तकफौ मूर्च्छितौ दग्धौ मांसं प्रदूष्य तथा शोणितं प्रदूष्य तथा गलोपसंरोधकरैरसून्निहंति, अयं व्याधिः रोहिणीसंज्ञो ज्ञेयः । सर्वा रोहिण्यः सन्निपातजाः, उत्कर्षात्तु वातजादिव्यपदेशः

**जिह्वा समन्ताद्भृशवेदनास्तु मांसांकुराः कण्ठविरोधिनो ये ॥**
**सा रोहिणी वातकृता प्रदिष्टा वातात्मकोपद्रवगाढयुक्ता ॥ ३९ ॥**

मधुकोशव्याख्या ।

मिति पठित्वा सुश्रुते एकदोषजत्वमप्याहुः । भोजेऽप्युक्तम्–"वातपित्तकफरक्तान्येकशः सर्वशोऽपि वा । कण्ठं यदा निषेवन्ते" इत्यादि । निहन्त्यसूनित्यनेन यद्यपि सामान्येनासाध्यत्वमुक्तं तथापि सप्ताहादिना पृथग्दोषत्रयजानामनुपक्रमेणासाध्यत्वम्, एवं रक्तजाया अपि । सन्निपातजायास्तु जन्मनैवासाध्यत्वम्। तदुक्तं भोजेन–"ताल्वुः शुष्यति कण्ठश्च वातेनायाम्यते यदा । कण्ठेऽस्यान्नं प्रसज्येत सप्ताहात्स जहात्यसून् ॥ उच्यते चुष्यते पित्ताद्धूप्यते परिदह्यते । अङ्गारैरिव स जह्यात्प्राणानाशु चतुर्दिनात्" इति । "कफादन्तर्बहिःशोथः श्वासः कण्ठश्च बाध्यते । यस्य सोऽसूंस्त्यजेद्रोगी त्र्यहाद्रोहिणिपीडितः ॥ लक्षणं पित्तरोहिण्या तुल्यं शोणितजन्मनः ॥ सर्वदोषकृता या तु सर्वलिङ्गसमन्विता । असाध्यां तां विजानीयाद्रोहिणीं सन्निपातजाम् ॥ एषा सद्यो मारयति तिस्र आद्याः क्रियां विना" इति क्वचित् । भोजे 'अन्या सद्यो मारयति' इति पाठः, तदा रक्तजायामप्यसाध्यत्वमायाति । किंत्वियं साध्यैव, यदुक्तं–'लेख्याश्चतस्रो रोहिण्यः' इति । तथा–'साध्यानां रोहिणीनां तु हितं शोणितमोक्षणम्' इत्यनेन रक्तजाया अपि चिकित्सोक्ता, किंच गलगतेष्वेकैव रोहिणी सन्निपातजा 'रोहिणी गले' इत्यनेनासाध्योक्ता । भोजे तु 'तिस्र आद्याः क्रियां विना' इत्यभिधानं त्रिदोषजत्वेन प्राधान्यमभिप्रेत्य, खरनादेऽपि सन्निपातजाया एव सद्योमारकत्वमुक्तम् । यदाह–"सद्यस्त्रिदोषजा हन्ति त्र्यहाच्छ्लेष्मसमुद्भवा । पञ्चाहात्पित्तसंभूता सप्ताहात्पवनोत्थिता" इति ॥ ३८ ॥ वातजादिभेदेन रोहिणीलक्षणमाह–जिह्वेत्यादि । जिह्वासमन्तादिति जिह्वायाः सर्वत इत्यर्थः ।

आतङ्कदर्पणव्याख्या ।

अस्मिन् पाठे तु संख्या वातपित्तकफसंबंधिक्रियापदं च न विद्यते । तस्मादन्ये "गलेऽनिलः पित्तकफौ च मूर्छितौ पृथक्समस्ताश्च तथैव शोणितम् । प्रदूष्य मांसं गलरोधिनोंकुरान्सृजंति यान् साऽसुहरा तु रोहिणी" इति पठित्वा सुश्रुते एकदोषजत्वमित्याहुः । पृथगिति तिस्रः । समस्ता इति, एका सन्निपातात्, एका शोणितात्, एवं पंच रोहिण्यः । असुहराः प्राणहराः । भोजेप्युक्तम्–"वातपित्तकफारक्तमेकशः सर्वशोपि वा । कंठं यदा निषेवन्ते प्रदूष्य चोर्ध्वमागताः ॥ अंकुराञ्जनयंत्याशु जिह्वामूले समंततः । रोहिणीं तां विजानीयादाहुः पंचविधां तु ताम्" इति ॥ ३८ ॥ वातिकरोहिणीलक्षणमाह–जिह्वामिति । ये मांसांकुरा जिह्वासमंताद्भवंतिते कथं भृशवेदनाः ॥ तथा कंठनिरोधनाः सा वातकृता रोहिणी प्रदिष्टा । जिह्वासमंतादिति जि-

क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्तजा तु ॥
स्रोतोविरोधिन्यचलोद्गता च स्थिरांकुरा या कफसंभवा सा ४०॥
गम्भीरपाकिन्यनिवार्यवीर्या त्रिदोषलिङ्गा त्रितयोत्थिता च ॥
स्फोटैश्चिता पित्तसमानलिङ्गा साध्या प्रदिष्टा रुधिरात्मिका तु४१
कोलास्थिमात्रः कफसंभवो यो ग्रन्थिर्गले कण्टकशूकभूतः ॥
खरः स्थिरः शस्त्रनिपातसाध्यस्तं कण्ठशालूकमिति ब्रुवन्ति४२॥
जिह्वाग्ररूपः श्वयथुः कफात्तु जिह्वोपरिष्टादपि रक्तमिश्रात् ॥
ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्जयेदागतपाकमेनम् ॥ ४३ ॥

मधुकोशव्याख्या ।

वातात्मकोपद्रवगाढयुक्तेति वातात्मका उपद्रवाः कम्पविनामस्तम्भादयस्तैरतिशयमनुगताः त्रिदोषजायामनिवार्यवीर्येति क्रिययाऽपि न निवार्यं वीर्यमस्याः सद्योमारकत्वादित्यर्थः । त्रितयोत्थितेति दोषत्रयोत्थिता । पित्तलिङ्गातिदेशस्याव्यवहितत्वप्रतीत्यर्थं पित्तरोहिण्यनन्तरं रक्तजाया वक्तुमुचितायाः शेषेऽभिधानमितररोहिण्यपेक्षया सुखसाध्यत्वख्यापनार्थमिति केचित् ॥ ३९-४१ ॥ कण्ठशालूकलक्षणमाह—कोलेत्यादि । कण्टकशूकभूत इति कण्टकवत् शूकवच्च वेदनाजनकः, भूतशब्दः उपमानार्थं, किंवा कण्टकोपलक्षितः, शूको जलशूकः स इव भूतो जातः । कठिनगुडकतया शालूकसमत्वेन कण्ठशालूकम् । शालूकं जलोत्पलकन्दम् ॥ ४२ ॥ अधिजिह्विकामाह—जिह्वाग्ररूप इत्यादि । जिह्वोपरिष्टादित्यनेन जिह्वातलजातामुपजिह्वां व्यावर्तयति । अपि रक्तमिश्रादिति न केवलात् कफाद्भवति, किंतु रक्तमिश्रादेव कफा-

आतङ्कदर्पणव्याख्या ।

च्छायाः सर्वत्रेत्यर्थः ॥ वातात्मकोपद्रवगाढयुक्तेति । वातात्मका ये उपद्रवाः कंपविनामस्तंभादयः तैरतिशयमनुगताः ॥ ३९ ॥ पित्तजामाह—क्षिप्रोद्गमेति सुगमम् ॥४०॥ त्रिदोषजामाह—गंभीरेति । त्रिदोषलिंगा दोषत्रयलिंगयुक्ता, त्रितयोत्थितेति दोषत्रयोत्थिता । रक्तजामाह—स्फोटैरिति । सुगमम् ॥ ४१ ॥ कंठशालूकलक्षणमाह—कोलेति । कंटकशूकभूत इति कंटकवत्कश्चिच्छूकवच्च वेदनाजनकः। भूतशब्द उपमाने, किंवा—कंटकोपलक्षितः शूको जलशूकः, स इव भूतो जातः। कठिनगुडकतया पिशितांकुरचितत्वाच्छालूकं जलोत्पलकंदम् ॥ ४२ ॥ अधिजिह्विकामाह—जिह्वाग्रेति । जिह्वोपरिष्टादित्यनेन जिह्वातलजातामुपजिह्वां व्यावर्तयति, जिह्वोपरिष्टादित्यत्र "जिह्वाप्रबंधोपरि" इति पाठांतरे। जिह्वाप्रबंधस्योपरि जिह्वामूलस्योपरिष्टादित्यर्थः । अपि रक्तमिश्रादिति न केवलात् कफात् भवति, किंतु रक्तमिश्रादेव कफादित्यर्थः । अपिरवधारणे । आगतपाकत्वे

**बलाश एवायतमुन्नतं च शोथं करोत्यन्नगतिं निवार्य ॥**
**तं सर्वथैवाप्रतिवार्यवीर्यं विवर्जनीयं वलयं वदन्ति ॥ ४४ ॥**
**गले तु शोथं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम् ॥**
**मर्मच्छिदं दुस्तरमेनमाहुर्बलाशसंज्ञं निपुणा विकारम् ॥ ४५ ॥**
**वृत्तोन्नतोऽन्तःश्वयथुः सदाहः सकण्डुरोऽपाक्यमृदुर्गुरुश्च ॥**
**नाम्नैकवृन्दः परिकीर्तितोऽसौ व्याधिर्बलाशक्षतजप्रसूतः ॥४६॥**
**समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति ॥**
**तच्चापि पित्तक्षतजप्रकोपाज्ज्ञेयं सतोदं पवनात्मक तु ॥ ४७ ॥**

---

मधुकोशव्याख्या ।

दित्यर्थः । अपिरवधारणे । आगतपाकत्वेन पित्तमप्यत्र द्रष्टव्यम् ॥ ४३ ॥ वलयमाह—बलाश एवेत्यादिना । बलाशः कफः, अन्नगतिमिति अन्नस्य गतिर्येन स्रोतसा सोऽन्नगतिः अन्नवहमार्गः, अन्नस्य प्रवेशो वा । कफजोऽप्ययं प्रभावादसाध्यः ॥ ४४ ॥ बलाशलिङ्गमाह—गल इत्यादि । मर्मच्छिदमिति प्राणायतनहृदयमर्मच्छिदम् ॥ ४५ ॥ एकवृन्दमाह—वृत्तोन्नत इत्यादि । अन्तःश्वयथुरिति गलस्यान्तर्मध्ये । सदाह इति मन्ददाहः, सहशब्द ईषदर्थे । अपाक्यमृदुरिति अपाकी ईषत्पाकी, अमृदुरीषन्मृदुः, अन्ये पाकमृदुरिति पठन्ति, अपाकश्चासौ मृदुश्चेति अपाकमृदुः । बलाशक्षतजप्रसूत इति कफरक्तभव इत्यर्थः ॥ ४६ ॥ वृन्दमाह—समुन्नतमित्यादि । वृन्दमेव पवनानुविद्धं सतोदं स्यात् । ननु, सप्तदश कण्ठगता उक्ताः; उक्तं हि—'सप्तदशामयाः कण्ठे' इति । वृन्देन सहाष्टादश स्युः ।

आतङ्कदर्पणव्याख्या ।

पित्तमप्यत्र द्रष्टव्यम् ॥ ४३ ॥ वलयमाह—बलाश इति । बलाशः कफः । अन्नगतिमिति अन्नस्य गतिर्येन स्रोतसा सोऽन्नगतिरन्नवहस्रोतः, अन्नप्रवेशो वा, ताम् निवार्य आयतमुन्नतं शोफं करोति । बुधास्तं सर्वथा अप्रतिवार्यवीर्यं विवर्जनीयं बलयाख्यं व्याधिम् । कफजोप्ययं स्थानप्रभावादात्मनः स्वभावाच्चासाध्यः ॥ ४४ ॥ बलाशलिंगमाह—गले इति । गले प्रवृद्धौ श्लेष्मानिलौ श्वासरुजाभ्यामुपपन्नं सहितं शोफं कुरुतः । निपुणा धीमन्तः, एनं विकारं बलाशसंज्ञमाहुः । कथंभूतम्, मर्मच्छिदमिति । प्राणायतनहृदयमर्मच्छिदम् ॥ ४५ ॥ एकवृंदमाह—वृत्तेति । सदाहः मंददाहः, सहशब्द ईषदर्थे अपाक्यमृदुः, अपाकी ईषत्पाकी, अमृदुरीषन्मृदुः । अन्ये "अपाकमृदुः" इति पठंति । अपाकश्चासौ मृदुश्चेति अपाकमृदुः । बलाशक्षतजप्रसूत इति । कफरक्तभवः ॥४६॥ वृंदमाह—समुन्नतमिति । ननु सप्तदशकंठगता उक्ताः, उक्तं हि—"सप्तदशामयाः कंठे" इति वृंदेन

**वर्तिर्घना कण्ठनिरोधिनी या चितातिमात्रं पिशितप्ररोहैः ॥**
**अनेकरुक्प्राणहरी त्रिदोषाज्ज्ञेया शतघ्नी च शतघ्निरूपा ॥ ४८ ॥**
**ग्रंथिर्गले त्वामलकास्थिमात्रः स्थिरोऽतिरुग्यः कफरक्तमूर्तिः ॥**
**संलक्ष्यते सक्तमिवाशनं च स शस्त्रसाध्यस्तु गलायुसंज्ञः ॥ ४९ ॥**

---

मधुकोशव्याख्या ।

उच्यत, एकवृन्दस्यावस्थाविशेष एव वृन्दः तुल्यस्थानाकृतितो न संख्यातिरेकः, यद्यप्येकवृन्दः कफरक्तजः, वृन्दस्तु पित्तरक्तजः पठितस्तथा वृन्दस्यैव सतोदत्वेन वातात्मकत्वमुक्तम्, तथाप्येकवृन्दस्यावस्थाविशेषत्वेन वृन्दः संगच्छत एव, यथा कामलायां तद्भिन्नहेतुलक्षणस्यापि हलीमकस्य संग्रहः; यथा वातमदात्ययेन ध्वंसकविक्षेपकयोरत्यन्तभेदे हि स एव स्यान्न पुनस्तेन संग्रहः, भोजेऽप्ययमेकवृन्दज एव पठितः । यदाह—"श्लेष्मरक्तसमुत्थानमेकवृन्दं विभावयेत् । तुल्यस्थानाकृतिर्वृन्दो वृन्दजो रक्तपित्तजः" इति । वृन्दज इत्येकवृन्दजः । गदाधरस्तु कारणभेदात् धर्मभेदाच्च उत्पन्नत्वेन चैककार्यकारणयोरभेदप्रसंगमभिधाय वृन्दशब्दं छन्दोऽनुरोधादादिलोपादेकवृन्द एव वर्णयति, तथाच साति समुन्नतमित्यादिना पित्तानुबन्धसहितबहुलरक्तकृतैकवृन्दस्य लक्षणमुच्यते, सतोदं पवनात्मकं चेत्यनेन च वातानुबन्धैकवृन्दलक्षणमिति व्याख्येयम् । परंतु वृन्दजो वृन्द इति भोजवचनेनासंगतमिदं व्याख्यानम् ॥ ४७ ॥ शतघ्नीलक्षणमाह—वर्तिरित्यादि । अनेकरुगिति वातपित्तकफजतोददाहकण्डूादिवदनान्वितेत्यर्थः । शतघ्निरूपेति अयःकण्टकाच्छन्ना शतघ्नी महती शिला तत्तुल्या । प्राणहरीत्यसाध्या । भोजेऽप्युक्तं—'शंकुनेव गले विद्धा शतघ्न्येषा न सिध्यति' इति ॥ ४८ ॥ गलायुलक्षणमाह—ग्रन्थिरित्यादि । कफरक्त-

आतङ्कदर्पणव्याख्या ।

सहाष्टादश स्युः । उच्यते, एकवृंदस्यावस्थाविशेष एव वृंदः, तुल्यस्थानाकृतिश्चातो न संख्यातिरेकः । भोजेप्ययमेकवृंदज एव पठितः । यदाह—"श्लेष्मरक्तसमुत्थानमेकवृंदं विभावयेत् । तुल्यस्थानाकृतिर्वृंदो वृंदजो रक्तपित्तजः" इति । वृंदजे इत्येकवृंद इति ॥ ४७ ॥ शतघ्नीलक्षणमाह—वर्तिरिति । अनेकरुगिति वातपित्तकफजतोददाहकंड्वादिवेदनान्वितेत्यर्थः । शतघ्निरूपेति "अयःकंटकसंछन्ना शतघ्नी महती शिला" तत्तुल्या प्राणहरीत्यसाध्या । भोजेप्युक्तम् "वातपित्तकफा दुष्टा मांसांकुरसमाचिताम् । मध्यकंटचयां वर्तिं जनयंति ह्युपेक्षिताः ॥ शंकुनेव गले विद्धा शतघ्न्येषा न सिध्यति ॥" इति ॥ ४८ ॥ गलायुर्लिंगमाह—ग्रंथिरिति । सक्तमिवेति लग्नमिव,

सर्वं गलं व्याप्य समुत्थितो यः शोथो रुजः सन्ति च यत्र सर्वाः॥
स सर्वदोषैर्गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्वजस्य ॥ ५० ॥
शोथो महानन्नजलावरोधी तीव्रज्वरो वायुगतेर्निहन्ता ॥
कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्यते तु ॥५१ ॥
यस्ताम्यमानः श्वसिति प्रसक्तं भिन्नस्वरः शुष्कविमुक्तकण्ठः ॥
कफोपदिग्धेष्वनिलायनेषु ज्ञेयः स रोगः श्वसनात्स्वरघ्नः ॥५२॥
प्रतानवान्यः श्वयथुः सुकष्टो गलोपरोधं कुरुते क्रमेण ॥
स मांसतानः कथितोऽवलम्बी प्राणप्रणुत्सर्वकृतो विकारः॥५३॥

---

मधुकोशव्याख्या ।

मूर्त्तिरिति कफरक्तजः । सक्तमिवेति लग्नमिव, अशनं भुक्तम् ॥ ४९ ॥ गलविद्रधि-लिङ्गमाह—सर्वमित्यादि । तस्यैव तुल्यः खलु सर्वजस्येति प्रागुक्तस्य विद्रधेः सन्नि-पातजस्य तुल्य इत्यर्थः । स च स्थानप्रभावेण सन्निपातज एव, चिकित्साभेदार्थं च पुनः पठितः ॥ ५० ॥ गलौघलक्षणमाह—शोथ इत्यादि । वायुगतेर्निहन्तेति अति-महत्त्वादुदानवायुगतिरोधक इत्यर्थः ॥ ५१ ॥ स्वरघ्नलक्षणमाह—य इत्यादि । ताम्य-मान इति मूर्च्छां गच्छन्, अथवा तमः पश्यन् । श्वसिति प्रसक्तमिति निरन्तरं श्वसिति । शुष्कविमुक्तकण्ठ इति शुष्को नीरसो विमुक्तश्चास्वाधीनः कण्ठो यस्य स तथा । अस्वाधीनता च किमपि गिलितुमशक्यतया बोद्धव्या । अनिलायनेष्विति अनिलमार्गेषु कफरुद्धेषु सत्सु, वायुगतस्रोतसोर्द्वित्वेऽपि बहुवचनं प्रतानबहुत्वात् । श्वसनादिति वातात् ॥ ५२ ॥ मांसतानलिङ्गमाह—प्रतानवानित्यादि । प्रतानवानिति

आतङ्कदर्पणव्याख्या ।

अशनं भोजनं संलक्ष्यते स गलायुसंज्ञो विकारः, स शस्त्रसाध्यः ॥ ४९ ॥ गलविद्रधिमाह—सर्व-मिति । तस्यैवेत्यादिप्रागुक्तविद्रधेः सन्निपातजस्य तुल्य इत्यर्थः । अयं च स्थानप्रभावेण सन्नि-पातज एव, चिकित्साभेदार्थं च पुनः पठितः ॥ ५० ॥ गलौघलक्षणमाह—शोफ इति । वायु-गतेर्निहंतेति—अतिमहत्त्वादुदानवायुगतिरोधक इत्यर्थः ॥ ५१ ॥ स्वरघ्नलक्षणमाह—य इति । प्रसक्तमिति निरंतरं निःश्वसिति, शुष्कविमुक्तकंठ इति शुष्को नीरसो विमुक्तश्चास्वाधीनः कंठो यस्य स तथा, अस्वाधीनता च किमपि गिलितुमशक्यतया बोद्धव्या । केषु सत्सु ? अनिला-यनेष्विति अनिलमार्गेषु कफोपदिग्धेषु कफरुद्धेषु सत्सु, वायुवहस्रोतसोर्द्वित्वेपि बहुवचनं प्रतान-बहुत्वात् । स रोगः श्वसनात् वातात्स्वरघ्नो ज्ञेयः ॥ ५२ ॥ मांसतानलिंगमाह—प्रतानेति ।

सदाहतोदं श्वयथुं सुताम्रमन्तर्गले पूतिविशीर्णमांसम् ॥
पित्तेन विद्याद्वदने विदारीं पार्श्वे विशेषात्स तु येन शेते ॥ ५४ ॥
स्फोटैः सतोदैर्वदनं समन्ताद्यस्याचितं सर्वसरः स वातात् ॥
रक्तैः सदाहैस्तनुभिः सपीतैर्यस्याचितं चापि स पित्तकोपात् ॥
अवेदनैः कण्डुयुतैः सवर्णैर्यस्याचितं चापि स वै कफेन ॥ ५५ ॥

मधुकोशव्याख्या ।

विस्तारवान् । सुकष्ट इति महादुःखप्रदायी, न तु कृच्छ्रसाध्यः, प्राणप्रणुदिति वचनात्; अथवा पाकतः कष्टसाध्यः, समस्तगलोपरोधे तु प्राणप्रणुत् । 'स मांसतानः कथितोऽवलम्बी' इत्यस्य स्थाने 'स मांसतानेति बिभर्ति संज्ञाम्' इति पाठान्तरे मांसतानेत्यत्र इतिशब्देन प्रातिपादिकार्थस्योक्तत्वाद्विभक्त्यभावः । 'बिभर्ति संज्ञाम्' इत्यस्य स्थाने 'निरुणद्धि चेष्टाम्' इति कार्तिकः । अस्मिन् व्याख्याने स मांसतान इत्यस्यानन्तरं ख्यात इति द्रष्टव्यम् ॥ ५३ ॥ विदारी लक्षणमाह–सदाहतोदमित्यादि । वदन इति स्वरूपपरमिदम्, अन्तर्गल इत्यनेनैव वदनशब्दस्य लब्धत्वात् । पार्श्वे विशेषात् स तु येन शेते इति स पुरुषो येन पार्श्वेन विशेषाद्बाहुल्येन शेते तस्मिन्नेव पार्श्वे विदारी भवतीत्यर्थः । विशेषग्रहणादन्यस्मिन् पार्श्वेऽपि संभवोऽस्याः । विदारीसंज्ञा च मांसविदारणेन । भोजेऽप्युक्तं–"पित्तेन जातो वदने विकारः पार्श्वे विशेषात्स तु येन शेते । स्नायुप्रतानप्रभवो विशेषाद्दाहप्रपाकप्रचुरो विदारी" इति ॥ ५४ ॥ सर्वसरास्त्रयोऽभिधीयन्ते स्फोटैः सतोदैरित्यादिना । मुखदंतोष्ठादिसप्तस्थानव्यापकतया सर्वसरत्वं ज्ञेयम् ।

आतङ्कदर्पणव्याख्या ।

मतानवानिति विस्तारवान्, सुकष्टः महादुःखदायी ॥ ५३ ॥ न तु कृच्छ्रसाध्यः प्राणप्रणुदिति वचनात्, अथ वा पाकतः कष्टसाध्यः, समस्तगलोपरोधे तु प्राणप्रणुत् । प्राणप्रेरकः अवलंबी लंबनशीलः ॥ विदारीलक्षणमाह–सेति । पूतिविशीर्णमांसं दुर्गंधशटितमांसवदन इति स्वरूपपरमिदम् । अंतर्गलमित्यनेनैव वदनसंबन्धस्य लब्धत्वात् । पार्श्वे इत्यादि स पुरुषो येन पार्श्वेन विशेषणात् बाहुल्येन शेते तस्मिन् पार्श्वे । विशेषेण भवतीत्यर्थः । विशेषग्रहणादन्यपार्श्वेऽपि संभवोऽस्याः । विदारीसंज्ञा च मांसविदारणेन, भोजेप्युक्तम्–"पित्तेन जातो वदने विकारः पार्श्वैर्विशेषात् स तु येन शेते । स्नायुप्रतानप्रभवो विशेषाद्दाहप्रपाकप्रचुरो विदारी" इति ॥ ५४ ॥ सर्वसरास्त्रयोऽभिधीयंते । तत्र वातजं सर्वसरमाह–स्फोटैरिति । आचितं व्याप्तम् । मुखदंतौष्ठादिसप्तस्थानव्यापकतया तेषां

१ अयमेवमेव पाठमूरीकरोति ।

ओष्ठप्रकोपे वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः ॥
दन्तमूलेषु वर्ज्यौ च त्रिलिङ्गगतिशौषिरौ ॥ ५६ ॥
दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः ॥
जिह्वारोगे बलाशस्तु तालव्येष्वर्बुदं तथा ॥ ५७ ॥
स्वरघ्नो वलयो वृन्दो बलाशश्च विदारिका ॥
गलौघो मांसतानश्च शतघ्नी रोहिणी गले ॥ ५८ ॥
असाध्याः कीर्तिता ह्येते रोगा नव दशैव तु ॥
तेषु चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत् ॥ ५९ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने मुखरोगनिदानं समाप्तम् ॥ ५६ ॥

---

मधुकोशव्याख्या ।

स्फोटैरिति वदनमिति च उत्तरत्र संबन्धनीयम् । आचितं व्याप्तम् । सर्वसरा मुखपाका उच्यन्ते । केचिद्विदेहोक्तरक्तजसर्वसरलक्षणं पठन्ति । यथा—"रक्तेन पित्तोदित एव चापि कैश्चित्प्रयुक्तो मुखपाकसंज्ञः" इति । अयं च पैत्तिक एवान्तर्भूत इति नेह दर्शित इति ॥ ५५ ॥ ओष्ठप्रकोपादिष्वसाध्यानाह—ओष्ठप्रकोपे वर्ज्याः स्युरित्यादि । त्रिलिङ्गगतिशौषिराविति त्रिदोषजनाडी त्रिदोषजश्च महाशौषिरोऽसाध्यः । रोहिणी गल इति त्रिदोषजा रोहिणी ॥ ५६–५९ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां मुखरोगनिदानं समाप्तम् ॥ ५६ ॥

आतङ्कदर्पणव्याख्या ।

सर्वसरत्वं ज्ञेयम् । स्फोटैरिति वदनमिति चोत्तरत्र संबंधनीयम् ॥ पित्तं सर्वसरमाह—रक्तैरिति । सुगमम् ॥ कफसर्वसरमाह—अवेदनैरिति । सुगमम् ॥ सर्वसरा मुखपाका उच्यते । केचिद्विदेहोक्तरक्तजसर्वसरलक्षणं पठंति । तद्यथा—"रक्तेन पित्तोदित एव चापि कैश्चित्प्रदिष्टो मुखपाकसंज्ञः" इति । अयं च पैत्तिकसर्वसरे प्रदिष्ट एवेति नेह दर्शितः ॥ ५५ ॥ असाध्यानाह—ओष्ठेति । ओष्ठजास्त्रयः, दंतमूले द्वौ, दंतमवेषु त्रयः, जिह्वागतेष्वेकः, तालुन्यप्येक एव, स्वरघ्नादयो नव गले समुदायसंख्या नव दशैवेति । त्रिलिंगगतिशौषिराविति त्रिदोषजनाडी त्रिदोषजश्च महाशौषिरोऽसाध्यः सह दारिणेति । विदार्या सह, छंदोऽनुरोधाद्दारिणेति निर्देशः, रोहिणी गल इति त्रिदोषजा रोहिणी ॥ ५६–५९ ॥ इत्यातंकदर्पणे निदानव्याख्यायां मुखरोगनिदानम् ॥ ५६ ॥

---

१ "बलाशश्च विदारिका" इत्यत्र "बलाशः सह दारिणा" इति पाठा० ।

# अथ कर्णरोगनिदानम् ५७.

**समीरणः श्रोत्रगतोन्यथाचरन्समन्ततः शूलमतीव कर्णयोः ॥**
**करोति दोषैश्च यथास्वमावृतः स कर्णशूलः कथितो दुराचरः ॥ १ ॥**

मधुकोशव्याख्या ।

मुखरोगे जिह्वाश्रयरोगोऽभिहितः, जिह्वा चेन्द्रियाधिष्ठानम्, अत इन्द्रियाधिष्ठान-दुष्टिसाम्यात् कर्णरोगनिदानमुच्यते । कर्णशब्देन च कर्णशष्कुल्यवच्छिन्नमदृष्टोपगृहीतं श्रोत्रमुच्यते । तत्र यद्यप्येकदेशगतो रोगस्तथाप्यवयवेऽपि समुदायोपचारतः कर्णव्यपदेशः । तत्र कर्णशूलं कष्टत्वात् प्रागाह–समीरण इत्यादि । अत्रानयैव संप्राप्त्याऽर्थतो निदानसंचयाद्याक्षिप्तं, यतो निदानात् संचयः, संचयात् प्रकोपः, प्रकोपात् प्रसरः, प्रसरात् स्थानसंश्रयः, ततो व्यक्तिस्ततो भेद इति । कर्णशूलस्य च कष्टत्वं मूर्च्छाद्युपद्रवयोगात् । यदाह विदेहः–"मूर्च्छा दाहो ज्वरः कासो हृल्लासो वमथुस्तथा । उपद्रवाः कर्णशूले भवन्त्येते मरिष्यतः" इति । अन्यथाचरन्निति प्रतिलोमं चरन् । दोषैरिति कफपित्तरक्तैः, रक्तेऽपि रुजाकर्तृत्वात् सामान्येन दोषव्यपदेशः । यथास्वमावृत इति स्वनिदानजकुपितदोषैर्यथास्वीयलक्षणैरावृतो तु न कुपितेन वायुना, 'एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्' इति न्यायात् । यतः

आतङ्कदर्पणव्याख्या ।

मुखरोगे जिह्वाश्रया रोगा अभिहिताः, जिह्वा चेंद्रियाधिष्ठानम्, अत इंद्रियाधिष्ठानदुष्टिसाम्यात्कर्णरोगनिदानमुच्यते । कर्णशब्देन कर्णशष्कुल्यवच्छिन्नमदृष्टोपगृहीतं श्रोत्रमुच्यते । अत्र यद्यप्येकदेशे रोगः, तथाप्यवयवेपि समुदायोपचारात्कर्णरोगव्यपदेशः । अत्र कर्णशूलं कष्टसाध्यत्वात्प्रागाह–समीरण इति । अत्रानयैव संप्राप्त्याऽर्थतो निदानसंचयाद्याक्षिप्तं बोद्धव्यम् । यतो निदानात् संचयः, संचयात् प्रकोपः, प्रकोपात्प्रसरः, प्रसरात् स्थानसंश्रयः, ततो व्यक्तिः, ततो भेद इति । कर्णशूलस्य च कष्टत्वं मूर्च्छाद्युपद्रवयोगात् । यदाह विदेहः–"मूर्च्छा दाहो ज्वरः कासः कुत्साऽन्ने वमथुः सतृट् । उपद्रवाः कर्णशूले भवंत्येते मरिष्यतः ॥" इति । श्रोत्रगतः श्रोत्रं शष्कुलीपरिच्छिन्नमाकाशः, समीरणो वायुः, श्रोत्रगतः श्रोत्रप्राप्तोऽन्यथा चरन्निति प्रतिलोमं चरन् विमार्गग इति वा चरन् समंततः कर्णयोरतीव शूलं करोतीति संबंधनीयम् । कथंभूतो वायुः ? दोषैरिति पित्तकफरक्तैः, रक्तेपि रुजादिकर्तृत्वेन दोषसाम्याद्दोषव्यपदेशः । यथास्वमावृत इति यथास्वमव स्वस्य दोषस्यानतिक्रमेण यथास्वम्, तेन स्वनिदानकुपितैर्दोषैर्यथात्मीयलक्षणावृतो न तु कुपितेन वायुना कोपितैः, अथ वा यथास्वमिति शूलविशेषणम्, यथात्मीयमित्यर्थः । स तथाविधो रोगः कर्णशूलः कथितः, किंविशिष्टः ? दुरासदो दुर्वारः "दुराचरः"[१] इति पाठे दुःखेन

१ अस्यायमेवेष्टः पाठः ।

**कर्णस्रोतःस्थिते वाते शृणोति विविधान्स्वरान् ॥**
**भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते ॥ २ ॥**
**यदा शब्दवहं वायुः स्रोत आवृत्य तिष्ठति ॥**
**शुद्धः श्लेष्मान्वितो वापि बाधिर्यं तेन जायते ॥ ३ ॥**
**वायुः पित्तादिभिर्युक्तो वेणुघोषोपमं स्वनम् ॥**
**करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः स उच्यते ॥ ४ ॥**

---

मधुकोशव्याख्या ।

स्वतन्त्राः कुपिता दोषाः संसर्गभाजो भवन्ति, परतन्त्रकुपितास्त्वनुबन्धरूपा भवन्ति । अथवा यथास्वमिति शूलविशेषणं, यथास्वीयमित्यर्थः । दुराचर इति दुःखेनाचर्यते इति दुराचरः ॥ १ ॥ कर्णनादमाह—कर्णस्रोतःस्थित इत्यादि । यदा कर्णस्रोतसि विविधप्रकारेणावस्थितो वायुर्भवति तदा तस्य विविधाभिहननादुक्तविविधशब्दश्रवणं, भेरीमृदङ्गशंखानामित्युपलक्षणं, तेन भृङ्गारादिशब्दश्रवणं च भवति । यदुक्तं विदेहे—"शिरोगतो यदा वायुः श्रोत्रयोः प्रतिपद्यते । तदा तु विविधाञ्छब्दान्समीरयति कर्णयोः ॥ भृङ्गारक्रौञ्चनादं वा मण्डूककाकयोस्तथा । तन्त्रीमृदङ्गशब्दं वा सामतूर्यस्वनं तथा ॥ गीताध्ययनवंशानां निर्घोषं क्ष्वेडनं तथा । अपामिव पतन्तीनां शकटस्येव गच्छतः ॥ श्वसतामिव सर्पाणां सदृशः श्रूयते स्वनः" इति ॥ २ ॥ ३ ॥ कर्णक्ष्वेडमाह—वायुः पित्तादिभिर्युक्त इत्यादि । क्ष्वेडमेव व्याकरोति—वेणुघोषोपमं स्वनामात । ननु, कर्णनादात् कथमस्य भेदः ? उच्यते, कर्णनादे केवलानिलजे

आतङ्कदर्पणव्याख्या ।

चर्य्यते उपचर्यत इति दुराचरः ॥ १ ॥ कर्णनादमाह—कर्णेति । भेरीमृदंगशंखानामित्युपलक्षणम्, तेन भृंगारादिशब्दग्रहणं च भवति । यदुक्तं विदेहे—"शिरोगतो यदा वायुः श्रोत्रयोः प्रतिपद्यते । तदा तु विविधाञ्छब्दान्समीरयति कर्णयोः ॥ भृंगारक्रौञ्चनादं वा मंडूककाकयोस्तथा । तंत्रीमृदंगशब्दं वा सामतूर्यस्वनं तथा ॥ गीताध्ययनवंशानां निर्घोषं क्ष्वेडनं तथा । अपामिव पतंतीनां शकटस्येव गच्छतः ॥ श्वसतामिव सर्पाणां सदृशः श्रूयते स्वनः ॥". इति । प्रणादस्यापीडाकरत्वेपि रोगाख्याचिलकालकवन्मनोदुःखजनकत्वात् ॥ २ ॥ बाधिर्यमाह—यदेति । शब्दवहं स्रोतःकर्णशष्कुलीपरिच्छिन्नमाकाशम्, तद्गतधातजनितमत्र बाधिर्यम्, अपिशब्दाद्रक्तपित्तावरणयोरुपग्रह इति ॥ ३ ॥ कर्णक्ष्वेडमाह—वायुरिति । ननु कर्णनादकर्णक्ष्वेडयोः को भेदः? उच्यते,—कर्णनादे केवलानिलजे नाना शब्दान् शृणोति । अत्र तु वेणुशब्दमेव नियमेन तथायं पित्तादिसंसृष्टवातजन्यः । तथा च विदेहः—"मारुतः कफपित्ताभ्यां संसृष्टः शोणितेन च । कर्णक्ष्वेडं संजनये-

शिरोऽभिघातादथवा निमज्जतो जले प्रपाकादथवापि विद्रधेः
स्रवेद्धि पूयं श्रवणोऽनिलार्दितः स कर्णसंस्राव इति प्रकीर्तितः॥५॥
मारुतः कफसंयुक्तः कर्णकण्डूं करोति च ॥
पित्तोष्मशोषितः श्लेष्मा कुरुते कर्णगूथकम् ॥ ६ ॥
स कर्णगूथो द्रवतांगतो यदा विलायितो घ्राणमुखं प्रपद्यते ॥
तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकारः शिरसोऽर्धभेदकृत् ॥७॥

मधुकोशव्याख्या ।

नानाशब्दान् शृणोति, अत्र तु वेणुशब्दमेव नियमेन । तथायं पित्तादिसंसृष्टवातजन्य इति । तथाह विदेहः--"मारुतः कफपित्ताभ्यां संसृष्टः शोणितेन च । कर्णक्ष्वेडं संजनयेत्क्ष्वेडनं वेणुघोषवत्" इति ॥ ४ ॥ कर्णस्रावमाह--शिरोऽभिघातादित्यादि । स्रवेद्धि पूयमित्युपलक्षणं, तेन रक्तजले च स्रवत इति मन्तव्यं, शिरोऽभिघातजलमज्जनमात्रेण पूयस्यासंभवात् । अथवा प्रपाकादिति सर्वत्र संबन्धनीयम्, तर्हि न पाकात् पृथक् स्राव उक्तः स्यात्, सर्वत्र पाकस्य विशिष्टत्वादिति कार्तिकः । ननु, पाकात् विद्रधेः स्रावसंभवोऽस्तु, विद्रधौ तु वातेतरदोषस्यापि संभवात्, कथमनिलार्दित इत्युक्तम्, उच्यते, अतिस्रावेणात्रानिलकोपादनिलार्दितत्वं बोद्धव्यम् ॥ ५ ॥ ६ ॥ कर्णप्रतिनाहमाह—स कर्णगूथो द्रवतामित्यादि । विलायित इति स्नेहस्वेदाभ्यां विलीनीकृतः सन् । घ्राणमुखमिति द्वन्द्वैकवद्भावः; तेन घ्राणं च मुखं च प्रतिपद्यते इत्यर्थः । अन्ये घ्राणमुखादिति पठन्ति तदा घ्राणमुखात् नासा सकाशात् प्रतिपद्यते गच्छतीत्यर्थः । अयं कफजो विकारः, अथवा कर्णगूथशोषे मारुतपित्तव्यापा-

आतङ्कदर्पणव्याख्या ।

त्क्ष्वेडनं वेणुघोषवत् ॥" इति ॥ ४ ॥ कर्णस्रावमाह—शिरोभिघातादिति । अत्र पूयमित्युपलक्षणम्, तेन रक्तजले च स्रवत इति मंतव्यम् । अत्र प्रपाकादिति सर्वत्र संबध्यते, तर्हि न पाकात्पृथक् स्राव उक्तः स्यात्, सर्वत्र पाकस्याविशिष्टत्वादिति कार्त्तिकः । ननु पाकाद्विद्रधेः स्रावसंभवोऽस्तु, विद्रधौ तु वातेतरदोषस्यापि सद्भावात्तत्कथमनिलार्दित इत्युक्तम् ? उच्यते, अतिस्रावेणात्रानिलकोपादनिलार्दितत्वं बोद्धव्यम् । शिरोभिघातात्, अथ वा—जले निमज्जतः, अथ वा—विद्रधेः कर्णविद्रधेः प्रपाकादनिलार्दितः श्रवणः पूयं स्रवेत्, स कर्णसंस्रावाख्यो रोग उक्तः ॥ ५ ॥ कर्णकंडूमाह—मारुत इति । सुगमम् ॥ कर्णवर्चं आह—पित्तेति । सुगमम् ॥ ६ ॥ कर्णप्रतिनादमाह—स इति । यदा स कर्णगूथो विलायित इति स्नेहस्वेदाभ्यां विलीनीकृतो द्रवतां गतः सन् । घ्राणमुखमिति द्वंद्वैकवद्भावः, तेन घ्राणं मुखं च प्रतिपद्यत इत्यर्थः । अन्ये "घ्राणमुखाद्" इति

यदा तु मूर्च्छन्त्यथवापि जन्तवः
सृजन्त्यपत्यान्यथवापि मक्षिकाः ॥
तद्व्यञ्जनत्वाच्छ्रवणो निरुच्यते
भिषग्भिराद्यैः क्रिमिकर्णको गदः ॥ ८ ॥
पतङ्गाः शतपद्यश्च कर्णस्रोतः प्रविश्य हि ॥
अरतिं व्याकुलत्वं च भृशं कुर्वन्ति वेदनाम् ॥ ९ ॥

मधुकोशव्याख्या ।

रात्तयोरप्यनुबन्धोऽस्तीति, तेन सन्निपातजोऽयं, तथाच विदेहः—"कफाद्वा मारुताद्वापि सन्निपातेन वा पुनः" इति । शिरसोऽर्धभेदकृदिति अर्धावभेदशिरोरोगकृत् ॥ ॥ ७ ॥ क्रिमिकर्णकमाह—यदा तु मूर्च्छन्तीत्यादि । मूर्च्छन्ति उच्छ्रिता भवन्ति । जन्तवः क्रिमयः । क्रिमिमूर्च्छनं च मांसशोणितकोथे सति ज्ञेयम्, तदन्तरेण क्रिमीणामसंभवात् । अपत्यानीति डिम्भकान् । तद्व्यञ्जनत्वादिति क्रिमिलक्षणत्वात् । श्रवणो निरुच्यते इति । क्रिमिकर्णको गद इति । आश्रयाश्रितयोरभेदोपचाराच्छ्रवणः क्रिमिकर्णको गदो भण्यते । श्रवणशब्द पुँल्लिङ्गोऽप्यस्तीत्यस्मादेव निर्देशात् प्रतीयते । अयं विकारस्त्रिदोषजो मन्तव्यः । तथाच निमिः—"श्लेष्मपित्तजलोन्मिश्रे कोथे शोणितमांसजे । जायन्ते जन्तवस्तत्र कृष्णास्ताम्राः सितारुणाः ॥ भक्षयन्तीव ते कर्णं कुर्वन्तो विविधा रुजः । क्रिमिकर्णं तु तं विद्यात्सन्निपातप्रकोपजम्" इति ॥ ८ ॥ कर्णप्रविष्टपतङ्गकीटादिलिङ्गमाह—पतङ्गा इत्यादि । शतपद्य इति कार-

आतंकदर्पणव्याख्या ।

पठंति, तदा घ्राणमुखात्सकाशात्प्रतिपद्यते गच्छतीत्यर्थः । तदा स कर्णप्रतिनाहसंज्ञितो विकारो भवेत् । अयं कफजो विकारः । अथ वा—कर्णगूथशोथे मारुतपित्तव्यापारात्तयोरप्यत्र संबंधोस्ति, तेन संनिपातजोऽयम् । तथाहि विदेहः—"कफाद्वा मारुताद्वापि स च पित्तेन वा पुनः" इति । शिरसोऽर्द्धभेदकृदिति अर्द्धावभेदशिरोरोगकृत् ॥ ७ ॥ कृमिकर्णकमाह—यदेति । मूर्छंति उच्छ्रिता भवंति, जंतवः कृमयः, कृमिमूर्छनं च मांसशोणितकोथे सति ज्ञेयम, तमंतरेण कृमीणामसंभवात् । अपत्यानि डिंभकान्सूक्ष्मकृमीनिति यावत् । मक्षिका मम्मणाख्या नीलवर्णाः । आद्यैर्भिषग्भिर्विदेहादिभिः, तद्व्यञ्जनत्वादिति कृमिलक्षणत्वात्, आश्रयाश्रितयोरभेदोपचारात् श्रवणः कृमिकर्णको गदो भण्यते । श्रवणशब्दः पुँल्लिंगोप्यस्तीत्यस्मादेव निर्देशात्प्रतीयते । अयं विकारस्त्रिदोषजो मंतव्यः । तथा च निमिः—"श्लेष्मपित्तजलोन्मिश्रे कोथे मारुतमांसजे । जायंते जंतवस्तत्र कृष्णास्ताम्राः सितारुणाः ॥ भक्षयंतीव ते कर्णं कुर्वन्तो विविधा रुजः । कृमिकर्णं तु तं विद्यात्सन्निपातप्रकोपजम्" इति ॥ ८ ॥ कर्णप्रविष्टकीटपतंगादिलिंगमाह—पतंगा इति । शतपद्यः कार

कर्णौ निस्तुद्यते तस्य यथा फरफरायते ॥
कीटे चरति रुक् तीव्रा निष्पन्दे मन्दवेदना ॥ १० ॥
क्षताभिघातप्रभवस्तु विद्रधिर्भवेत्तथा दोषकृतोऽपरः पुनः ॥
सरक्तपीतारुणमस्रमास्रवेत्प्रतोदधूमायनदाहचोषवान् ॥ ११ ॥
कर्णपाकस्तु पित्तेन कोथविक्लेदकृद्भवेत् ॥
कर्णविद्रधिपाकाद्वा जायते चाम्बुपूरणात् ॥ १२ ॥
पूयं स्रवति वा पूति स ज्ञेयः पूतिकर्णकः ॥
कर्णशोथार्बुदार्शांसि जानीयादुक्तलक्षणैः ॥ १३ ॥

---

मधुकोशव्याख्या ।

ण्डिकाः । निष्पन्दे इति स्थिरे ॥ ९ ॥ १० ॥ कर्णविद्रधिमाह—क्षताभिघातप्रभवस्त्वित्यादि । क्षतप्रभवोऽभिघातप्रभवश्च क्षताभिघातप्रभवयोरागन्तुकत्वादेकत्वम्, एवं वातादिजस्यापि दोषजत्वादेकत्वम् । सरक्तपीतारुणमस्रमास्रवेदिति अस्रमास्रावं, सरक्तपीतारुणवर्णत्वं चास्रावस्य वातपित्तकफसंभवात् ॥ ११ ॥ कर्णपाकलक्षणमाह—कर्णपाक इत्यादि । कोथविक्लेदकृदिति कोथः पूतिभावः, विक्लेदः आर्द्रता । ननु, कर्णगूथनिदाने पित्तेन शोषणमुक्तं, तत्कथमार्द्रता ? नैवम्, एवं विकारजनककर्मसहकारिणा द्रवांशोद्रिक्तेन पित्तेनार्द्रता, तत्र त्वेतद्विपरीतेन शोषः ॥ १२ ॥ पूतिकर्णलक्षणमाह—पूयमित्यादि । पूयं स्रवति वा पूतीति क्रियाविशेषणं,

आतङ्कदर्पणव्याख्या ।

ड्काः ॥ ९ ॥ निस्तुद्यते प्राजनेनेव । अन्यत् सुगमम् ॥ १० ॥ कर्णविद्रधिमाह—क्षतेति । क्षतप्रभवश्चाभिघातप्रभवश्चक्षताभिघातप्रभवयोरागंतुकत्वादैक्यम् । एवं वातादिजस्यापि दोषजत्वादेकत्वम् । क्षतविद्रधेर्लक्षणमाह—सेति । अस्रम् आस्रावम्, रक्तपीतारुणवर्णत्वं चास्रावस्य वातपित्तरक्तसंभवत्वात् । धूमायनं धूमोद्गमनमिव वेदना विशेषः, चोष आच्चुष्यत इव वेदनाविशेषः । दोषविद्रधेर्लक्षणं तैरेव ज्ञातव्यम् ॥ ११ ॥ कर्णपाकलक्षणमाह—कर्णेति । कोथविक्लेदकृदिति कोथः पूतिभावः, विक्लेदः आर्द्रता, अथ वा कर्णविद्रधिपाकात्, अथवा अम्बुपूरणात् कर्णपाको जायते । ननु कर्णगूथलक्षणे पित्तेन शोषणमुक्तम्, तत्कथमार्द्रता ? नैवम्, एतद्विकारजनककर्मसहकारिणा, द्रवांशोद्रिक्तेन पित्तेनार्द्रता तत्र त्वेतद्विपरीतेन शोषः ॥ १२ ॥ पूतिकर्णलक्षणमाह—पूयमिति । पूतीति क्रियाविशेषणम् । वाशब्दोऽत्र समुच्चये, तेनावेदनत्वं

---

१ "पूयं स्रवति यः पूति" इति पाठान्तरम् ।

मधुकोशव्याख्या।

चाशब्दोऽत्र समुच्चये, तेनावेदनत्वं सवेदनत्वं वा घनस्रावित्वं च समुच्चीयते। घनस्रावनियमाच्च कर्णस्रावादस्य भेदः। तथा चोक्तं सुश्रुते—"स्रोतःस्थिते श्लेष्मणि पित्ततेजसा विलीयमाने भृशसंप्रतापिते। अवेदनो वाथ सवेदनो वा घनं स्रवेत्पूति च पूतिकर्णः" इति। पूतिमान् कर्णः पूतिकर्णः॥ इदानीं संख्यापूरणार्थं कर्णगतशोथार्बुदार्शसामतिदेशेन लक्षणमाह—कर्णशोथेत्यादिना। कर्णशोथाश्चत्वारो वातपित्तकफरक्तजत्वेन, एवमर्शश्चतुर्विधम्। सहजसन्निपातजार्शसोः सन्निपातागन्तुजशोथयोश्चात्रासंभूतिराधारप्रभावात्। अर्बुदं च सप्तविधं वातपित्तकफरक्तमांसमेदःशिरानिमित्तभेदात्; शिराजस्य वातजावरुद्धस्यात्र पृथग्गणनं शालाक्यशिद्धान्तसंवादादिति कार्तिकः। यदाह सुश्रुत एव कर्णरोगान्तरम्,—"दोषैस्त्रिभिस्तैः पृथगेकशश्च ब्रूयात्तथार्शांसि तथैव शोथान्। शालाक्यसिद्धान्तमवेक्ष्म चापि सर्वात्मकं सप्तममर्बुदं तु" इति नासारोगेऽभिधास्यति, तथेहापि युज्यते—तेन रक्तजस्य पित्तसमानलिङ्गत्वात् पित्तजेऽन्तर्भावः, आगन्तुजस्यापि रक्तपित्तलिङ्गत्वात् पित्तज एवान्तर्भावः, तेन शोथः सन्निपातजोऽत्र गणनीयः, एवं सहज रक्तजयोर्दोषज एवान्तर्भावात् सन्निपातजमर्शसः पृथग्गणनीयम्, अर्बुदं च सन्निपातजं सप्तममिति, एवमेभिः सहाष्टाविंशतिः सुश्रुतोक्ताः कर्णरोगा भवन्ति॥ १३॥

आतङ्कदर्पणव्याख्या।

सवेदनत्वं वा घनस्रावित्वं च समुच्चीयते। घनस्रावनियमाच्च कर्णस्रावादस्य भेदः। तथा चोक्तं सुश्रुते—"श्रोतःस्थिते श्लेष्मणि पित्ततेजसा विलीयमाने भृशसंप्रतापिते। अवेदनो वाप्यथ वा सवेदनो घनः स्रवेत्पूति स पूतिकर्णकः" इति। पूतिमान् कर्णः पूतिकर्णकः। कर्णगतशोफार्बुदार्शसामतीतावेक्षणेन लक्षणमाह—कर्णेति। यद्यपि शोफादयः प्राग् निर्दिष्टाः, तथापि कर्णरोगसंग्रहार्थं साध्यासाध्यविभागार्थं च पुनर्निर्दिष्टाः। कर्णशोफाश्चत्वारः, वातपित्तकफरक्तजत्वेनेति। एवमर्शश्चतुर्विधम्। सहजसन्निपातजार्शसोः सन्निपातजागंतुजशोफयोश्चात्रासंभूतिराधारस्य प्रभावात्। अर्बुदं च सप्तविधम्, वातपित्तकफरक्तमांसमेदःशिरानिमित्तभेदात्। शिराजन्यवातजावरुद्धस्यात्र पृथग्दर्शनं शालाक्यसिद्धांतसंवादादिति कार्त्तिकः। यदाह सुश्रुत एव कर्णरोगानंतरम्—"दोषैस्त्रिभिस्तैः पृथगेकशश्च ब्रूयात्तथार्शांसि तथैव शोफान्। शालाक्यसिद्धांतमवेक्ष्य चापि सर्वात्मकं सप्तममर्बुदं स्यात्॥" इति नासारोगेऽभिधास्यति, तथेहापि युज्यते; तेन रक्तजस्य पित्तलिंगत्वात् पित्तजेऽतर्भावः, आगंतुजस्य च रक्तपित्तलिंगत्वात् पित्तज एवांतर्भावः। तेन शोफः सन्निपातजोऽत्र गणनीयः। एवं सहजरक्तजयोर्दोषज एवांतर्भावात्। सन्निपातजमर्शसः पृथग्गणनीयम्। अर्बुदं च सन्निपातजं सप्तममिति, एवमेभिः सहाष्टाविंशतिः सुश्रुतोक्ताः कर्ण-

नादोऽतिरुक् कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणं च वातात् ॥
शोथः सरागो दरणं विदाहः सपीतपूतिस्रवणं च पित्तात् ॥१४॥
वैश्रुत्यकण्डूस्थिरशोथशुक्लस्निग्धस्रुतिः स्वल्परुजः कफाच्च ॥
सर्वाणि रूपाणि च सन्निपातात्स्रावश्च तत्राधिकदोषवर्णः॥ १५ ॥

सौकुमार्याच्चिरोत्सृष्टे सहसातिप्रवर्धिते ॥
कर्णशोथो भवेत्पाल्यां सरुजः परिपोटवान् ॥
कृष्णारुणनिभः स्तब्धः स वातात्परिपोटकः ॥ १६ ॥
गुर्वाभरणसंयोगात्ताडनाद्धर्षणादपि ॥
शोथः पाल्यां भवेच्छ्यावो दाहपाकरुजान्वितः ॥ १७ ॥
रक्तो वा रक्तपित्ताभ्यामुत्पातः स गदो मतः ॥
कर्णं बलाद्वर्धयतः पाल्यां वायुः प्रकुप्यति ॥ १८ ॥

---

मधुकोशव्याख्या ।

इदानीं चरकोक्तं कर्णरोगचतुष्टयं वातपित्तकफसन्निपातजभेदादाह–नादोऽतिरुगित्यादि । अश्रवणमिति अशब्दश्रुतिः । वैश्रुत्यमिति विरुद्धश्रवणम् ॥ १४ ॥ १५ ॥ कर्णावयवत्वात् कर्णपाल्यास्तद्विकारानाह—सौकुमार्यादित्यादि । सौकुमार्याद्धेतोश्चिरं वर्धनेन त्यक्ते सहसा च वर्धयितुमारब्धे कर्णे शोथः, परिपोटवान् मनाक्त्वगवदारणवानित्यर्थः ॥ १६ ॥ उत्पातलक्षणमाह–गुर्वित्यादि । श्यावत्वं व्याधिप्रभावात्, पित्तरक्तयोः श्यावत्वाजनकत्वात्, किंवा वातानुबन्धादत्र श्यावत्वम् ॥ १७ ॥ उन्मन्थकमाह–कर्णमित्यादि । स्तब्धत्वं वातकृतम्, कण्डूः कफात्, इति

आतङ्कदर्पणव्याख्या ।

रोगा भवंति ॥१३॥ इदानीं चरकोक्तकर्णरोगचतुष्टयं वातपित्तकफसन्निपातजभेदादाह–नाद इति । सुगमम्॥१४॥वैश्रुत्येति वैश्रुत्यं विरुद्धं श्रवणम्, स्रुतिः स्रावः स्निग्धा स्यात् ॥१५॥कर्णावयवत्वात् कर्णपाल्यास्तद्विकारानाह–सौकुमार्यादिति । सौकुमार्याद्धेतोश्चिरोत्सृष्टे चिरंवर्द्धनेन इत्युक्ते सहसा वा वर्द्धयितुमारब्धे कर्णे शोफः, परिपोटक इति परिपोटवान्, मनाक्त्वगवदरणवानित्यर्थः । अथ डल्हनाभिप्रायः–कर्णे चिरोत्सृष्टे बहुकालमुपेक्षिते सहसा तृडिति प्रवर्द्धिते सति सौकुमार्यात् पाल्यां शोफः सरुगित्यादिलक्षणयुक्तः स्यात्, स वातात्परिपोटको रोगः स्यात्, चिरोत्सृष्टत्वे सौकुमार्यं हेतुः ॥ १६ ॥ उत्पातलक्षणमाह–गुर्विति । श्यावत्वं व्याधेः प्रभावात्, पित्तरक्तयोः श्यावत्वजनकत्वाभावात् । किंच, वातानुबंधादत्र श्यावत्वम् ॥ १७ ॥ उन्मंथकमाह–कर्णमिति । कर्णं बलाद्वर्द्धयतः पाल्यां वायुः कोपं याति, स वायुः कुपितः सन् कफं संगृह्य

कफं संगृह्य कुरुते शोथं स्तब्धमवेदनम् ॥
उन्मन्थकः सकण्डूको विकारः कफवातजः ॥ १९ ॥
संवर्ध्यमाने दुर्विद्धे कण्डूदाहरुजान्वितः ॥
शोथो भवति पाकश्च त्रिदोषो दुःखवर्धनः ॥ २० ॥
कफासृक्क्रिमयः क्रुद्धाः सर्षपाभा विसर्पिणः ॥
कुर्वन्ति पाल्यां पिडकाः कण्डूदाहरुजान्विताः ॥ २१ ॥
कफासृक्क्रिमिसंभूतः स विसर्पन्नितस्ततः ॥
लिहेत्सशष्कुलीं पालीं परिलेहीति स स्मृतः ॥ २२ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने कर्णरोगनिदानं समाप्तम् ॥ ५७ ॥

---

## अथ नासारोगनिदानम् ५८.

आनह्यते यस्य विशुष्यते च प्रक्लिद्यते धूप्यति चापि नासा ॥
न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येदिह पीनसेन ॥
तं चानिलश्लेष्मभवं विकारं ब्रूयात्प्रतिश्यायसमानलिङ्गम् ॥ १ ॥

---

मधुकोशव्याख्या ।

वातकफलिङ्गम् ॥ १८ ॥ १९ ॥ परिलेहीमाह–कफासृगित्यादिना । स विसर्पन्निति स इति पिडकात्मको विकारः; विसर्पान्वित इति पाठान्तरे, विसर्पणान्वितः । लिहेदिति निर्मांसीं करोति आच्छादयेद्वा ॥ २०–२२ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां कर्णरोगनिदानं समाप्तम् ॥ ५७ ॥

इन्द्रियाधिकरणविकाराधिकारान्नासारोगनिदानम् । तत्रादौ पीनसमाह—आनह्यत इत्यादि । आनह्यत इत्याबध्यते, वातशोषितकफेन । प्रक्लिद्यते आर्द्रीभवति ।

आतङ्कदर्पणव्याख्या ।

स्तब्धं तथा अवेदनं शोफं कुरुते, स कफवातजः उन्मंथकाख्यो रोगः स्यात्, स किंलक्षणः ? सकंडूकः कंडूयुक्तः, स्तब्धत्वं वातकृतम्, कंडूः कफात्–इति वातकफलिंगम् ॥ १८ ॥ १९ ॥ दुःखवर्द्धनमाह–संवर्द्धमान इति । कर्णे दुर्विद्धे दैवकृतच्छिद्रमतिक्रम्य विद्धे संवर्द्धमाने सति कंड्वादियुक्तः शोफो भवति, पाकश्चात्र दोषत्रयोत्थः । दुःखवर्द्धनात् दुःखवर्द्धनको नाम रोगः ॥२०॥ परिलेहीमाह–कफेति । लिहेदिति निर्मांसीकरोति उत्सादयति वा, 'स विसर्पान्वितः'[१] इति पाठांतरे विसर्पेणान्वितः ॥ २१ ॥ २२ ॥ इत्यातंकदर्पणे निदानव्याख्यायां कर्णरोगनिदानम् ॥ ५७ ॥
इंद्रियाधिकरणाधिकारान्नासारोगनिदानारंभः । तत्रैकत्रिंशन्नासारोगाः, तत्र पीनसमाह–आनह्यत

---

१ एतच्च 'संवर्द्धमाने' इतिपाठाभिप्रायेण ।

**दोषैर्विदग्धैर्गलतालुमूले संमूर्च्छितो यस्य समीरणस्तु ॥**
**निरेति पूतिर्मुखनासिकाभ्यां तं पूतिनस्यं प्रवदन्ति रोगम् ॥ २ ॥**

मधुकोशव्याख्या ।

धूप्यतीति सन्तापमनुभवति, दिवादेराकृतिगणत्वात् धूप्यतीति रूपम् । गन्धरसानित्ति गन्धान् सुरभ्यसुरभीन्, आवद्धत्वेन नासायाः; नासारोगारम्भकदोषेण च रसनायाश्च दुष्टेः रसान् मधुरादीन् न वेत्ति । तं चानिलश्लेष्मभवमिति वातकफजम्। ननु, अन्यत्र पित्तकफजोऽसदृशलिङ्गश्च पठ्यते, तद्यथा—"मस्तुलुङ्गोचितः श्लेष्मा यदा पित्ताद्विदह्यते । तदासृक् पिच्छिलं नासा बहुसिंहाणकं स्रवेत् । सकण्डूदाहपाकं च तं तु विद्याद्धि पीनसम्" इति । तत् कथं न विरोधः? नैवं, संप्राप्तिविशेषेणास्य तथाभाव इति कार्तिकः । तन्त्रान्तरप्रत्ययात् पित्तसंबन्धो लिङ्गविशेषश्चात्र बोद्धव्य इत्यर्थः । गदाधरस्तु तत्संवादादनलश्लेष्मभवमिति पठित्वा श्लेष्मापित्तज एव न्याय्य इत्याह । प्रतिश्यायसमानलिङ्गमिति कफवातजप्रतिश्यायतुल्यलिङ्गम् ॥१॥ पूतिनस्यमाह—दोषैरित्यादि । दोषैरिति पित्तकफरक्तैः रक्तस्यापि दोषतुल्यरूपत्वाद्दोषत्वम् । विदग्धैरिति पित्तश्लेष्मणोः सरक्तयोरूष्मणा विरुद्धलवणाम्लरसपाकेन पूतिभावमापन्नैः । संमूर्च्छित इति उच्छ्रायं नीतः निरेतीति समीरण एव, अन्यस्य कर्तृपदस्याभावात् । तं पूतिनस्यमिति नासिकाभवो नस्यः, पूतिनस्यो वायुर्यत्र तं पूतिनस्यम् । इहैव विदेहः—"कफपित्तमसृङ्मिश्रं संचितं मूर्ध्नि देहिनाम् । विदग्धमूष्मणा गाढं रुजां कृत्वाक्षिशंखजाम् ॥ ततः प्रस्यन्दते घ्राणात्सरक्तं पूतिपीत-

आतङ्कदर्पणव्याख्या ।

इति । आनह्यते आवध्यते, विशुष्यते वातशोषितकफेन, प्रक्लिद्यते आर्द्रीभवति, धूप्यति संतापमनुभवति, गंधान् सुरभ्यसुरभीन्, आनद्धत्वेन नासायाः, नासारोगारंभकदोषेण रसनायाश्च दुष्टेः । रसान् मधुरादीन्न वेत्ति । तं चानिलश्लेष्मभवमिति वातकफजं ब्रूयात्।नन्वन्यत्र पित्तश्लेष्मजोऽन्यादृशश्च पठ्यते, तद्यथा—"मस्तुलुंगोचितः श्लेष्मा यदा पित्ताद्विदह्यते । तदासृक्पिच्छिलं नासा बहुसिंहाणकं स्रवेत् ॥ सकंडूदाहपाकं च तं तु विद्याद्धि पीनसम् ॥"इति, तत्कथं न विरोधः? नैवम्, संप्राप्तिविशेषेणास्य तथाभाव इति कार्त्तिकः । तंत्रांतरप्रत्ययात् पित्तसंबंधो लिंगविशेषश्च बोद्धव्य इत्यर्थः । प्रतिश्यायसमानलिंगमिति कफवातजप्रतिश्यायतुल्यलिंगम् ॥ १ ॥ पूतिनस्यमाह—दोषैरिति । दोषैः पित्तकफरक्तैः, रक्तस्यापि तुल्यदोषत्वाद्दोषत्वम्, अतो बहुवचनं विदग्धैरिति पित्तश्लेष्मणोः सरक्तयोरूष्मणा विरुद्धलवणाम्लरसपाकेन पूतिभावमापन्नैः । संमूर्च्छित उच्छ्रायं नीतः, निरेति निर्गच्छति, समीरण एव, तं पूतिनस्यमिति । नासिकाभवो नस्यः, पूतिर्नस्यो वायुर्यत्र । तथा च विदेहे—"कफपित्तमसृङ्मिश्रं संचितं मूर्ध्नि देहिनाम् । विदग्धमूष्मणा गाढं रुजां कृत्वाक्षिशंखजाम् ॥ तेन प्रस्यंदते घ्राणात्सरक्तं पूतिपीतकम् । पूतिनस्यं तु तं विद्याद् घ्रा-

घ्राणाश्रितं पित्तमरूंषि कुर्याद्यस्मिन्विकारे बलवांश्च पाकः॥
तं नासिकापाकमिति व्यवस्येद्विक्लेदकोथावथवापि यत्र ॥ ३ ॥
दोषैर्विदग्धैरथवापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तैः ॥
नासा स्रवेत्पूयमसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम् ॥ ४ ॥
घ्राणाश्रिते मर्मणि संप्रदुष्टो यस्यानिलो नासिकया निरेति ॥
कफानुजातो बहुशोऽतिशब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः ॥५॥
तीक्ष्णोपयोगादभिजिघ्रतो वा भावात्कटूनर्कनिरीक्षणाद्वा ॥
सूत्रादिभिर्वा तरुणास्थिमर्मण्युद्घाटितेऽन्यः क्षवथुर्निरेति ॥ ६ ॥

---

मधुकोशव्याख्या ।

कम् । पूतिनस्यं तु तं विद्याद् घ्राणकण्डुज्वरप्रदम्" इति ॥ २ ॥ नासापाकमाह—घ्राणाश्रितमित्यादि । अरूंषीति व्रणान् । यस्मिन् विकार इति यस्यां विकृतौ सत्याम् । व्यवस्येत् जानीयात् । विक्लेदः आर्द्रता, कोथः पूतिभावः ॥ ३ ॥ दोषागन्तुजं पूयरक्तमाह—दोषैरित्यादि । विदग्धैरिति पित्तरक्ताधिकत्वात् विरुद्धां परिणतिं प्राप्तैः, ललाटाभिघातेन वा पाकं प्राप्तैः । तैस्तैरिति प्रहारपीडनादिभिः ॥ ४ ॥ क्षवथुर्दोषागन्तुभेदाद्द्विविधो भवति । तत्र दोषजं प्रागाह—घ्राणाश्रित इत्यादि मर्मणीति शृङ्गाटके, नस्तकयोरिति पाठान्तरे नासापुटयोः, तदाश्रितः सन्निति शेषः ॥ ५ ॥ आगन्तुजमाह—तीक्ष्णोपयोगादित्यादि । तीक्ष्णोपयोगाद्राजिकादितीक्ष्णद्रव्यभक्षणात् । भावान् कटूनिति कटूनि द्रव्याणि । अभिजिघ्रतो भृशं जिघ्रतः । अर्कनिरीक्षणाद्वा कफविलयनकरात् । तरुणास्थिमर्मणीति तरुणास्थि नासावंशास्थि

आतङ्कदर्पणव्याख्या ।

णकंडूज्वरप्रदम्" इति ॥ २ ॥ नासापाकमाह—घ्राणाश्रितमिति । अरूंषि व्रणान्, यस्मिन्निति यस्मिन्विकारे दृष्टौ दर्शनं गतौ ॥ ३ ॥ दोषागंतुजं पूयरक्तमाह—दोषैरिति । विदग्धैरिति पित्तरक्ताधिकत्वाद्विरुद्धां गतिं प्राप्तैः ललाटाभिघातेन वा पाकं प्राप्तैः, तैस्तैरित्यादिभिः प्रहारपीडनादिभिः ॥ ४ ॥ क्षवथुर्दोषागंतुभेदाद् द्विविधो भवति, तत्र दोषजमाह—घ्राणाश्रित इति । मर्मणि शृंगाटकाख्ये, "नस्तकयोः" इति पाठांतरे । नासापुटयोः, तदास्थितः सन्निति शेषः ॥ ५ ॥ आगंतुजमाह—तीक्ष्णेति । तीक्ष्णोपयोगात् राजिकादिभक्षणात्, भावान् कटूनिति कटुद्रव्याणि, अभिजिघ्रतो भृशं जिघ्रतः, अर्कनिरीक्षणाद्वा कफविलयनकरत्वाद्, अथ वा सूत्रादिभिः, तरु-

---

१ "अथ वापि यत्र" इत्यत्र "अथ यत्र दृष्टौ" इति पा० ।

प्रभ्रश्यते नासिकया तु यस्य सान्द्रो विदग्धो लवणः कफस्तु ॥
प्राक्संचितो मूर्धनि सूर्यतप्तस्तं भ्रंशथुं रोगमुदाहरन्ति ॥ ७ ॥
घ्राणे भृशं दाहसमन्विते तु विनिःसरेद्धूम इवेह वायुः ॥
नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिं तु तं दीप्तमुदाहरंति॥ ८ ॥
उच्छ्वासमार्गं तु कफः सवातो रुन्ध्यात्प्रतीनाहमुदाहरेत्तम् ॥
घ्राणाद्घनः पीतसितस्तनुर्वा दोषः स्रवेत्स्रावमुदाहरेत्तम् ॥ ९ ॥
घ्राणाश्रिते स्रोतसि मारुतेन गाढं प्रतप्ते परिशोषिते च॥
कृच्छ्राच्छ्वसेदूर्ध्वमधश्च जन्तुर्यस्मिन्स नासापरिशोष उक्तः॥ १० ॥

मधुकोशव्याख्या ।

तदेव मर्म, अभिघातादिना मर्मवद्व्यथाजनकत्वात्; अथवा तरुणास्थ्नि च मर्मणि च शृङ्गाटके द्वन्द्वैकवद्भावनिर्देशात्।उद्धाटिते चालिते। अन्य आगन्तुजः॥६॥भ्रंशथुमाह–प्रभ्रश्यत इत्यादि । प्रभ्रश्यते गलति । विदग्धो लवण इति स्वरूपाख्यानं, विदग्धत्वादेव कफस्य लवणत्वसिद्धेः। प्राक्संचित इत्यनेन संचयपूर्वकं कोपं दर्शयति, हेतुभूयस्त्वेन चयमन्तरेणापि कोपदर्शनात् । यदुक्तं–"न केवलं चयं प्राप्य दोषाः कुप्यन्ति देहिनाम्। अन्यतोऽपि हि कुप्यन्ति हेतुबाहुल्यतो बलात्" इति॥७॥दीप्तमाह–घ्राणे भृशमित्यादि । प्रदीप्तेवेति प्रज्वलितेव॥८॥ प्रतीनाहमाह–उच्छ्वासमार्गमित्यादिना। नासास्रावमाह–घ्राणादित्यादि । दोष इति कफः॥९॥नासाशोषमाह–घ्राणाश्रिते स्रोतसीत्यादि । अत्र च वायुकृतस्रोतःशोषणेन तद्गतश्लेष्मशोषो बोद्धव्यः । प्रतप्त इत्यनेन पित्तमपि गम्यते, प्रतपनस्य पित्तमन्तरेणासंभवात् । तथाच कश्चित् पठति–"घ्राणा-

आतङ्कदर्पणव्याख्या ।

णास्थिममणीति तरुणास्थि नासावंशास्थि, तदेव मर्म, अभिघातादिना मर्मवद्व्यथाजनकत्वात्, उद्‌घाटितेऽर्द्धचालिते, अन्यः आगंतुजः, दोषजागंतुरेक एव गणनीयः ॥ ६ ॥ भ्रंशथुमाह–प्रभ्रश्यत इति । विदग्धो लवण इति स्वरूपाख्यानम्, विदग्धत्वादेव कफस्य लवणत्वसिद्धेः पित्ततप्त इति सुश्रुतपाठः ॥ ७ ॥ दीप्तमाह–घ्राण इति । प्रदीप्तेवेति प्रज्वलितेव, विदेहेऽस्य लक्षणम्–"धूमायते यदा नासा चलत्कुप्यति दीप्यते । निश्चरेत्तम उच्छ्वासं तं व्याधिं दीप्तमादिशेत् ॥" इति ॥ ८ ॥ प्रतीनाहमाह–उच्छ्वासमार्गमिति । दोष इति कफः । अस्य लक्षणं विदेहे–"स्रोतःशृंगाटके श्लेष्मा चितः क्लेदित ऊष्मणा । विशेषात्स्यंदते रात्रौ नासास्रावं तु तद्विदुः ॥" इति ॥ ९ ॥ नासाशोषमाह–घ्राणेति । नासाशोषस्तु वायुकृतस्रोतःशोषणेन तद्गतश्लेष्मशोषो ज्ञेयः । प्रतप्त

१ नासास्रावस्य ।

**शिरोगुरुत्वमरुचिर्नासास्रावस्तनुः स्वरः ॥**
**क्षामः ष्ठीवत्यथाभीक्ष्णमामपीनसलक्षणम् ॥ ११ ॥**
**आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जति ॥**
**स्वरवर्णविशुद्धिश्च परिपक्वस्य लक्षणम् ॥ १२ ॥**

---

मधुकोशव्याख्या।

श्रिते श्लेष्माणि मारुतेन पित्तेन गाढं परिशोषिते च" इति। प्रतप्त इत्यस्य स्थाने प्रदीप्त इति पाठान्तरे स एवार्थः। कृच्छ्राच्छ्वसेदूर्ध्वमधश्च यस्मिन्निति कष्टेनोच्छ्वासनिश्वासौ करोति यत्रेत्यर्थः ॥ १० ॥ चिकित्साभेदार्थं पीनसस्यामपक्वलक्षणमाह—शिरोगुरुत्वमित्यादि। तनुरघनः। स्वरः क्षाम इति अविस्पष्टं वचनम्। ष्ठीवत्यथाभीक्ष्णमिति मुहुर्मुहुर्नासिकया श्लेष्माणं निरस्यतीत्यर्थः। आमरसान्वितेन दोषेण शिरोगुरुत्वादयः। आमलिङ्गान्वितः श्लेष्मा घनः खेषु निमज्जतीत्यादि पक्वलक्षणम्। आमलिङ्गैः शिरोगुरुत्वादिभिरन्वितः श्लेष्मा निमज्जतीति लीनो भवति, अयमर्थः—श्लेष्मा तावल्लीनो भवति, आमलिङ्गान्यपि लीनानि भवन्ति, तथाच 'तनुत्वमामलिङ्गानाम्' इति सुश्रुतः। न सज्जतीति पाठान्तरे न सक्तो भवतीति न तिष्ठतीति यावत्। तदामलिङ्गान्वितः स्तोकेनामलिङ्गेना न्वितः। घनः स्त्यानः। खेषु नासारन्ध्रेषु, अत्र स्थित इति शेषः। व्यक्त्यपेक्षया बहुवचनम्। स्वरविशुद्धिः स्वरभेदाभावः, वर्णविशुद्धिः प्रकृतिसवर्णता ॥ ११ ॥ १२ ॥

आतङ्कदर्पणव्याख्या।

इत्यनेन च पित्तमपि गम्यते, प्रतपनस्य पित्तमंतरेणासंभवात्। प्रतप्त इत्यस्य स्थाने "प्रदीप्ते" इति पाठांतरे स एवार्थः, । कृच्छ्रोच्छ्वसितीति कष्टेनोच्छ्वसिति, श्वासं करोति यत्रेत्यर्थः। वैदेहेऽस्य लक्षणम्—"वातपित्तो यदा घ्राणकफरक्तं विशोषयेत्। तदा स्यादुच्छ्वसेन्नासा तस्य शुष्कं विधीयते ॥ भृशाच्छुष्कावचूर्णेन नासाशोषं विदुः" इति ॥ १० ॥ चिकित्साभेदार्थं पीनसस्य लक्षणं कथयन्नाह—शिर इति। तनुः अघनः, स्वरः क्षामः अविस्पष्टवचनः, ष्ठीवेत्तथाभीक्ष्णमिति मुहुर्मुहुर्नासया श्लेष्माणं निरस्यतीत्यर्थः ॥ ११ ॥ पक्वलक्षणमाह—आमेति। आमलिंगैः शिरोगुरुत्वादिभिरन्वितः श्लेष्मा, निमज्जतीति लीनो भवतीति, अयमर्थः—श्लेष्मा विलीनो भवति, आमलिंगान्यपि, तथा च—"तनुत्वं चामलिंगानाम्" इति सुश्रुते। "न सज्जति" इति पाठांतरे न सक्तो भवति, न तिष्ठतीति यावत्। स्वरविशुद्धिः स्वरभेदाभावः, वर्णविशुद्धिः प्रकृतिवर्णता ॥ १२ ॥

---

१ अस्यायमेवेष्टः पाठः।

२ एतच्च—"ष्ठीवेत्तथाभीक्ष्णम्" इति पाठाभिप्रायेण।

**संधारणाजीर्णरजोऽतिभाष्यक्रोधर्तुवैषम्यशिरोऽभितापैः ॥**
**प्रजागरातिस्वपनाम्बुशीतैरवश्यया मैथुनबाष्पधूमैः ॥**
**संस्त्यानदोषे शिरसि प्रवृद्धो वायुः प्रतिश्यायमुदीरयेत्तु ॥ १३ ॥**
**चयं गता मूर्धनि मारुतादयः पृथक् समस्ताश्च तथैव शोणितम्॥**
**प्रकुप्यमाणा विविधैः प्रकोपणैस्ततःप्रतिश्यायकरा भवन्ति हि १४**

मधुकोशव्याख्या ।

प्रतिश्यायः पञ्चविधो भवति, वातपित्तकफसन्निपातरक्तजभेदात्; तस्य निदानं द्विविधम्, एकं सद्योजनकं तच्च बलवत्त्वेन चयं नापेक्षत एव, अपरं चयादिक्रमेण जनकं, चयादिक्रमोत्पन्नश्च दोषो गरीयान्, सकलशरीरसंभावनया बद्धमूलत्वात् । तत्र सद्योजनकनिदानपूर्विकां तस्य संप्राप्तिमाह—संधारणेत्यादि । संधारणं पुरीषादिवेगधारणं, रजो धूलिः, शिरोऽभितापः शिरोऽभितप्यते येन स शिरोऽभितापो धूमादिः, रजोधूमादयश्च नासाप्रविष्टाः सन्तो हेतवः । अतिस्वपनं दिवास्वपनमित्यर्थः । अवश्यया तुषारेण । संस्त्यानदोषे शिरसीति घनीभूतश्लेष्मणि शिरसीति । सुश्रुतेनापि सद्योजनकं निदानं पठितं, तद्यथा—"नारीप्रसङ्गः शिरसोऽभितापो धूमो रजः शीतमतिप्रतापः । संधारणं मूत्रपुरीषयोश्च सद्यःप्रतिश्यायनिदानमुक्तम्" इति ॥१३॥चयादिक्रमेण जनकमपि दोषं दर्शयन्नाह—चयं गता इत्यादि । चयं गता इति सामर्थ्यात् स्वे-

आतङ्कदर्पणव्याख्या ।

एवं नासारोगा दश कंठोक्ताः कथिताः।प्रतिश्यायः पंचविधो भवति, वातपित्तकफसन्निपातरक्तजभेदात्, तस्य संप्राप्तिमाह—संधारणेति । निदानं द्विविधम् । एकं सद्योजनकम्, अपरं चयादिक्रियाजातम्, तत्रेदं सद्यो निदानम् । संधारणं पुरीषादिवेगविधारणम्, रजो धूलिः, शिरोभितापः शिरोभिताप्यते येन स शिरोभितापः धूमादिः, रजोधूमादयश्च नासाप्रविष्टाः प्रतिश्यायहेतवः, अतिस्वप्नं दिवास्वप्नमित्यर्थः । अवश्यया तुषारेण । संस्त्यानदोषे शिरसीति संहतकफे शिरसि । सुश्रुतेनापि सद्योजनकं निदानं पठितम् । तद्यथा—"नारीप्रसंगः शिरसोभितापो धूमो रजः शीतमतिप्रतापः । संधारणं मूत्रपुरीषयोश्च सद्यःप्रतिश्यायनिदानमुक्तम्" इति ॥ १३ ॥ चयादिक्रमजस्य निदानमाह—चयमिति । चयं गताः इति स्वेस्वे स्थाने संचयं प्राप्ताः "स्वस्थानवृद्धिर्दोषाणां चयः" इति वचनात् । मारुतादय इति वातपित्तश्लेष्माणः एते, तथैव शोणितमपि चयं गतं ततो मूर्ध्नि प्रतिश्यायकरं भवतीति योज्यम् । ननु, यदि स्वेस्वे स्थाने स्थिता दोषास्तत्कथं मूर्ध्नि प्रतिश्यायसंभवः ? इत्याह—प्रकोप्यमाणा विविधैः प्रकोपणैरिति बलवद्विग्रहादिभिः । क्रोधादिभिर्दिवास्व-

१ एतच्च—"प्रकोप्यमाणा विविधैः" इतिपाठाभिप्रायेण । अयमेव पाठो ज्यायान् अन्तर्भावितण्यर्थकल्पने गौरवात् ।

**क्षवप्रवृत्तिः शिरसोऽतिपूर्णता स्तम्भोऽङ्गमर्दः परिहृष्टरोमता॥**
**उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसराः स्मृताः १५**

मधुकोशव्याख्या।

स्वे स्थाने,'स्वस्थानवृद्धिर्दोषाणां चय इत्यभिधीयते'इति वचनात्। तथैव शोणितमिति चयं गतम्। ननु, यदि स्वस्थानस्थिता दोषाः, तत् कथं मूर्ध्नि प्रतिश्यायसंभवः?इत्याह—'प्रकुप्यमाना विविधैः प्रकोपनैः' इति। विविधैरिति बलवद्विग्रहदिवास्वप्नादिभिः प्रकोपविशेषश्च प्रसरः। यदुक्तम्—"कुपितानां तेषां किण्वोदकपिष्टसमवाय इवोद्गतानां प्रसरो भवति" इति। अत एव, 'चयप्रकोपप्रशमाः पित्तादीनां यथाक्रमम्' इत्यत्र प्रकोपमात्रमुपात्तम्। एतेन प्रसरेण शिरःसंप्राप्ता दोषाः प्रतिश्यायकराः। अन्ये तु चयं गता मूर्धनीति यथास्थितमेव योजयन्ति, उदानवायोरूर्ध्वगतित्वाच्छिरस्यपि संभवात्, त्वक्शिराश्रितत्वात् पित्तासृजोः, कफस्य च निसर्गतः शिरोवस्थितेः, शिरसि चय इति। तत इति प्रकोपविशेषात् प्रसरादनन्तरम्। प्रतिश्याय इति वातं प्रति अभिमुखं श्यायो गमनं कफादीनां यत्र स प्रतिश्यायः। 'श्यैङ्' गतौ, इत्यस्य प्रयोगः। तथाच चरकः—"घ्राणमूले स्थितः श्लेष्मा रुधिरं पित्तमेव वा। मारुताध्मातशिरसः श्यायते मारुतं प्रति" इति॥ १४॥ तस्य पूर्वरूपमाह—क्षवप्रवृत्तिरित्यादि। उपद्रवाश्चाप्यपरे इति उपद्रवास्तत्कालभाविनो रोगाः, नतु पारिभाषिकाः पश्चात् कालभाविनः; ते च घ्राणधूमायनमन्थादयः। यदाह विदेहः—

आतङ्कदर्पणव्याख्या।

मादिभिश्च कोपनैः प्रकोप्यमाणाः। प्रकोपविशेषश्च प्रसरः। यदुक्तम्—"कुपितानां दोषाणां किण्वोदकपिष्टसमवाय इवोद्गतानां प्रसरो भवति" इति। अत एवाह—"चयप्रकोपोपशमाः पित्तादीनां यथाक्रमम्" इति। अत एव प्रकोपमात्रमुपात्तम्। एवं न प्रसरणस्थानसंश्रयेण च शिरःसंप्राप्ता दोषाः प्रतिश्यायकराः। अन्ये तु चयं गता मूर्ध्नीति यथावस्थितमेव मन्यंते, उदानवायोरूर्द्ध्वगतित्वात्, शिरस्यपि वातसमुद्भवत्वात्। त्वक्शिरासृतत्वात्पित्ताश्रिजोः, कफस्य च निसर्गतः शिरोवस्थितेः शिरसि चय इति। अथ वा—सर्वशरीरचरास्तु वातपित्तश्लेष्माणः सरक्ताः सर्वत्रैतत्कार्यदर्शनात्। तत इति प्रकोपविशेषात् प्रसरादनंतरम्। प्रतिश्याय इति वातं प्रति अभिमुखं श्यायो गमनं कफादीनां यत्र स प्रतिश्यायः। 'श्यैङ्गतौ' इत्यस्य प्रयोगः। तथा चरकः—"घ्राणमूले स्थितः श्लेष्मा रुधिरं पित्तमेव च। मारुताध्मानशिरसः श्यायते मारुतं प्रति॥ प्रतिश्यायस्ततो घोरो जायते देहकर्षणः॥" इति॥ १४॥ तस्य पूर्वरूपमाह—क्षवेति। उपद्रवाः तत्कालभाविनो रोगाः। अपरे इति घ्राणधूमायनमंथादयः। यदुक्तं विदेहे—"पूर्वरूपाणि दृश्यंते प्रतिश्याये भविष्यति। घ्राणधूमायनं मंथः क्षवथुस्तालुदारणम्। कंठध्वंसो मुखस्रावः

आनद्धा पिहिता नासा तनुस्रावप्रसेकिनी ॥
गलताल्वोष्ठशोषश्च निस्तोदः शंखयोस्तथा ॥ १६ ॥
क्षवप्रवृत्तिरत्यर्थं वक्त्रवैरस्यमेव च ॥
भवेत्स्वरोपघातश्च प्रतिश्यायेऽनिलात्मके ॥ १७ ॥
उष्णः सपीतकः स्रावो घ्राणात्स्रवति पैत्तिके ॥
कृशोऽतिपाण्डुः संतप्तो भवेदुष्णाभिपीडितः ॥ १८ ॥
सधूममग्निं सहसा वमतीव स मानवः ॥
घ्राणात्कफः कफकृते शीतः पाण्डुः स्रवेद्बहुः ॥
शुक्लावभासः शुक्लाक्षो भवेद्गुरुशिरा नरः ॥ १९ ॥
कण्ठताल्वोष्ठशिरसां कण्डूभिरभिपीडितः ॥
भूत्वाभूत्वा प्रतिश्यायो यस्याकस्मान्निवर्तते ॥ २० ॥

---

मधुकोशव्याख्या ।

"पूर्वरूपाणि दृश्यन्ते प्रतिश्याये भविष्यति। घ्राणधूमायनं मन्थः क्षवथुस्तालुदारणम्॥ कण्ठध्वंसो मुखस्रावः शिरसः पूरणं तथा" इति । पुरःसरा इति पूर्वरूपाणि ॥ १५॥ वातादिप्रतिश्यायलिङ्गान्याह—आनद्धेत्यादि । आनद्धा विबद्धा । पिहिता सपिधानेव । निस्तोदः प्राजनव्यधनवद्व्यथा । शंखयोरिति भ्रूपुच्छान्तयोः ॥ १६ ॥ १७ ॥ सपीतक इति ईषत् पीतः । पित्तप्रतिश्यायवान् मानवः कृशो भवति । अतिपाण्डुर्धूसरः । उष्णाभिपीडित इति उष्णगुणेनाभिपीडित इत्यर्थः ॥ १८ ॥ १९ ॥ सन्निपातजमाह—भूत्वेत्यादि । भूत्वाभूत्वा इति वीप्सया पुनःपुनः संभवनं दर्शयति।

आतङ्कदर्पणव्याख्या ।

शिरसः पूरणं तथा" इति । पुरःसरा इति पूर्वरूपाणि ॥ १५ ॥ तेषु वातिकमाह—आनद्धेति । आनद्धा विबद्धा, आध्मानापूरितेवेति यावत् । पिहिता सपिधानेव, तथा गलताल्वोष्ठशोषादयो भवंति, निस्तोदः शूलव्यधनवद्व्यथा, शंखयोरिति भ्रूपुच्छांतयोः ॥ १६ ॥ १७ ॥ पैत्तिकमाह—सपीतक इति । ईषत्पीतकः । पित्तप्रतिश्यायवान्मानवः कृशो भवति । अतिपांडुर्धूसरः, उष्णाभिपीडित इति उष्णगुणेनाभिपीडितः ॥ १८ ॥ श्लैष्मिकमाह—शुक्लावभासः श्वेतवपुः, शूनाक्षः[1] उच्छूननयनः ॥ १९ ॥ सान्निपातिकमाह—भूत्वाभूत्वेति । वीप्सया पुनःपुनः संभवं दर्शयति । अन्यतमदोषस्य कालादिनानवधारितेन बलहानेर्निवृत्तिः, अकस्मात् प्रवृत्तिरपि, असम्यङ् निवृत्त-

---

१ एतच्च—"शुक्लावभासः शूनाक्षः" इतिपाठाभिप्रायेण ।

संपक्को वाप्यपक्को वा स सर्वप्रभवः स्मृतः ॥
प्रक्लिद्यते पुनर्नासा पुनश्च परिशुष्यति ॥ २१ ॥
पुनरानह्यते वापि पुनर्विव्रियते तथा ॥
निःश्वासो वातिदुर्गन्धो नरो गन्धान्न वेत्ति च ॥ २२ ॥

---

मधुकोशव्याख्या ।

अन्यतमदोषस्य कालादिनानवधारितेन बलहानेर्निवृत्तिः; अकस्मात् प्रवृत्तिरपि, असम्यङ्निवृत्तदोषस्य कालादिना बललाभात् । अत्र यद्यपि दोषत्रयलिङ्गानि नोक्तानि, तथापि सर्वप्रभवत्वात् प्रत्येतव्यानि । असाध्यश्चायं दुष्टतां गतः सन्-"नृणां दुष्टप्रतिश्यायस्त्वसाध्यः सर्वजः स्मृतः" इति विदेहवचनात् ॥ एकदोषस्यापि दुरुपचाराद्दोषद्वयानुबन्धेन दुष्टतां गतस्य दोषत्रयसंबन्धसाम्येन सन्निपातजानन्तरं लिङ्गमाह-प्रक्लिद्यते पुनर्नासेत्यादि । आनह्यत इति विद्ध्यते । विव्रियत इति विगतावरणा भवतीत्यर्थः । क्लेदशोषपिधानविवरणानि नैककालं भिन्नदोषजानि बोद्धव्यानि, तेन विरोधो नोद्भावनीयः । एवमिति इत्थम्भूतलिङ्गं दुष्टप्रतिश्यायं परस्परविरुद्धोपक्रमदोषसंबन्धात् कृच्छ्रसाध्यं जानीयात् । अयं च पञ्चानामेवावस्थान्तरतया अनन्यत्वान्न षष्ठः । ननु, अवस्थान्तरत्वेऽपि अभिष्यन्दादधिमन्थ इव भिन्नो भविष्यति; न, तद्वद्वातादिजत्वेनानिर्देशात् ॥ रक्तजलिङ्गमाह-रक्तज इत्यादि । उरोघातप्रपीडित इति उरोघातः तन्त्रान्तरपठितलक्षणः, तेन प्रकर्षेण पीडितः । तद्यथा-"उरःक्षतमुरस्तम्भः पूतिकर्णकफोरसः । सकासः सज्वरो ज्ञेय उरोघातः सपीनसः" इति । अत्र पित्तप्रतिश्यायलिङ्गान्यपि बोद्धव्यानि, तुल्यत्वात् पित्तरक्तयोः । तथाच क्वचित् पठ्यते-"पित्तप्रतिश्यायकृतैर्लिङ्गैश्चापि

आतंकदर्पणव्याख्या ।

दोषस्य कालादिना बललाभात् । अत्र यद्यपि दोषत्रयलिंगानि नोक्तानि, तथापि सर्वप्रभवत्वात् प्रत्येतव्यानि । केचित् "सर्वप्रभवः स्मृतः" इत्यस्याग्रेऽधिकं पादद्वयं पठंति, तच-"लिंगानि चैव सर्वेषां पीनसानां च सर्वजे" इति सर्वजे प्रतिश्याये सर्वेषां वातादीनां पीनसानां लिंगानि भवंतीति योज्यम् । असाध्यश्चायं दुष्टतां गतः सन्-"नृणां दुष्टप्रतिश्यायस्त्वसाध्यः सर्वजः स्मृतः" इति विदेहवचनात् । एकदोषस्यापि दुरुपचाराद् दोषद्वयानुबंधेन दुष्टिं गतस्य दोषत्रयसंबंधसाम्येन सन्निपातजानंतरं दुष्टप्रतिश्यायलिंगमाह-प्रक्लिद्यत इति । आनह्यत इति विबध्यते, विव्रियत इति विगतावरणा भवति, क्लेदशोषपिधानविवरणानि नैककालभिन्नदोषजानि बोद्धव्यानि । तेन विरोधो नोद्भावनीयः । इत्थंभूतलिंगं दुष्टप्रतिश्यायं परस्परविरुद्धोपक्रमदोषसंबंधात् कृच्छ्रसाध्यं जानीयात् । अयं च पंचानामेवावस्थांतरतयाऽनन्यत्वान्न षष्ठो गणनीयः । नन्ववस्थांतरत्वेपि अभिष्यंदादधिमंथ इव भिन्नो भविष्यतीति तद्वद्वातादिजत्वेनानिर्देशात्॥२०-२२॥

एवं दुष्टप्रतिश्यायं जानीयात्कृच्छ्रसाधनम् ॥
रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्तते ॥ २३ ॥
ताम्राक्षश्च भवेज्जन्तुरुरोघातप्रपीडितः ॥
दुर्गन्धोच्छ्वासवदनो गन्धानपि न वेत्ति सः ॥ २४ ॥
सर्व एव प्रतिश्याया नरस्याप्रतिकारिणः ॥
दुष्टतां यान्ति कालेन तदासाध्या भवन्ति हि ॥ २५ ॥
मूर्च्छन्ति चात्र क्रिमयः श्वेताः स्निग्धास्तथाणवः ॥
क्रिमितो यः शिरोरोगस्तुल्यं तेनास्य लक्षणम् ॥ २६ ॥
बाधिर्यमान्ध्यमघ्रत्वं घोरांश्च नयनामयान् ॥
शोथाग्निसादकासांश्च वृद्धाः कुर्वन्ति पीनसाः ॥ २७ ॥

मधुकोशव्याख्या ।

समन्वितः" इति ॥ २०-२४ ॥ अप्रतिक्रियया कालान्तरेण सर्व एव दुष्टप्रतिश्यायो भवति, स चासाध्य इत्याह-सर्व एवेत्यादि । मूर्च्छन्ति चात्र क्रिमय इति, अत्रेति एषु, बहुवचनान्तात्रल्प्रत्ययविधिः; अन्ये तु प्रत्यासन्नत्वात् रक्तज एव क्रिमिमूर्च्छनं वदन्ति । श्वेता इति कफाधिकत्वात् प्रतिश्यायस्य सर्वत्र कफजा एव श्वेतक्रिमयो भवन्ति । क्रिमितो यः शिरोरोगस्तुल्यं तेनास्य लक्षणमिति, क्रिमिजशिरोरोगेणेह तुल्यं लिङ्गं, तच्च 'निस्तुद्यते यस्य शिरोऽतिमात्रम्' इत्यादिना वक्ष्यमाणम् ॥ २५ ॥ २६ ॥ अतःपरमपरान् विकारान् यानन्यान् प्रवृद्धाः प्रतिश्यायाः कुर्वन्ति तानाह-बाधिर्यमित्यादि । घोरान् नयनामयानित्यभिधानादेवान्ध्ये लब्धे

आतंकदर्पणव्याख्या ।

रक्तजप्रतिश्यायलिंगमाह-रक्तज इति । उरोघातः तंत्रांतरपठितलक्षणः, तेन प्रकर्षेण पीडितः, तद्यथा-"उरः क्षतमुरस्तम्भः पूतिकर्णकफोरसः । सकासः सज्वरो ज्ञेय उरोघातः सपीनसः" इति । अत्र पित्तप्रतिश्यायलिंगान्यपि बोद्धव्यानि, तुल्यत्वात्पित्तरक्तयोः । तथा च कश्चित् पठ्यते- "पित्तप्रतिश्यायकृतैर्लिंगैश्चापि समन्वितः" इति ॥ २३ ॥ २४ ॥ सर्व एव प्रतिश्यायाः अप्रतिक्रियमाणाः कालांतरेण दुष्टतां यांति, ते चासाध्या भवंतीत्यत आह-सर्व इति । अत्र एषु प्रतिश्यायेषु बहुवचनान्तात्रल् । अन्ये तु प्रत्यासन्नत्वात् रक्तज एव क्रिमिमूर्च्छनं वदन्ति । श्वेत इति कफाधिकत्वात् । प्रतिश्यायस्य सर्वत्र कफजा एव श्वेताः कृमयो भवंति । क्रिमिजो य इत्यादि क्रिमिजशिरोरोगेण तुल्यं लिंगमित्यर्थः । तल्लक्षणम्-"निस्तुद्यते यस्य शिरोतिमात्रम्"इत्यादि शिरोरोगनिदाने वक्ष्यमाणम् ॥ २५ ॥ २६ ॥ अतः परमपरान् यान् विकारान् प्रवृद्धाः प्रतिश्यायाः कुर्वंति तानाह-बाधिर्य्यमिति । घोरनयनामयाभिधानादेवांध्ये लब्धे विशेषेण तत्करत्वप्रतिपादनार्थमांध्य-

१ एतच्च-"कृमिजो यः शिरोरोगः" इतिपाठाभिप्रायेण ।

**अर्बुदं सप्तधा शोथाश्चत्वारोऽर्शश्चतुर्विधम् ॥**
**चतुर्विधं रक्तपित्तमुक्तं घ्राणेऽपि तद्विदुः ॥ २८ ॥**

**इति श्रीमाधवकरविरचिते माधवनिदाने नासारोगनिदानं समाप्तम् ॥५८॥**

---

मधुकोशव्याख्या ।

विशेषेण तत्करत्वप्रतिपादनार्थमान्ध्यग्रहणम् । अघ्रत्वमिति न जिघ्रतीत्यघ्रस्तस्य भावोऽघ्रत्वम् । 'घ्रा' गन्धोपादाने, इत्यस्मात् 'सुपि स्थः' इत्यत्र योगविभागात् कप्रत्ययः ॥ २७ ॥ सुश्रुते नासारोगा एव एकत्रिंशदुक्ताः । तत्र पीनसमारभ्य प्रतिश्यायपर्यन्तेन पञ्चदशोक्ताः, अपरान् षोडशसंख्यापूरणाय नासारोगानाह—अर्बुदं सप्तधेत्यादि । एकैकदोषरक्तमांसभेदः संभवत्वेन षडर्बुदानि, शालाक्यसिद्धान्तेन सन्निपातजमधिकम्, एवं सप्त । तथाच विदेहः—"सर्वलिङ्गं रुजायुक्तमर्बुदं विद्धि सर्वजम्" इति । शोथाश्चत्वारो वातपित्तकफसन्निपातजभेदात्, एवमर्शो हि चतुर्विधं रक्तपित्तमपि चतुर्विधं, तच्च रक्तपित्तं चतुर्विधमपि रक्तपित्तत्वसामान्यादेकत्वेन गणनीयं, तेन संख्यातिरेकः । अर्बुदादीनां तत्रतत्रोक्तानामत्राभिधानं शालाक्योक्तसंख्यापूरणार्थमाश्रयप्रभावेणातिरिक्तलिंगादिख्यापनार्थं च ॥ २८ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां नासारोगनिदानं समाप्तम् ॥ ५८ ॥

आतङ्कदर्पणव्याख्या ।

ग्रहणम् । अघ्रत्वमिति न जिघ्रतीत्यघ्रः, तस्य भावोऽघ्रत्वम् । 'घ्रा—गंधोपादाने' इत्यस्मात् "सुपि स्थः" इत्यत्र "सुपि" इति योगविभागात् कप्रत्ययः॥२७॥सुश्रुते नासारोगा एकत्रिंशदुक्ताः । तत्र पीनसमारभ्य प्रतिश्यायपर्यंतेन पंचदशोक्ताः, अपरान् षोडशसंख्यापूरणाय नासारोगानाह—अर्बुदमिति । वातपित्तकफशोणितमांसमेदोजत्वेन षड्विधमर्बुदम्, शालाक्यसिद्धांतेन विदेहेन सन्निपातजमधिकमुक्तम्, एवं सप्त शोथाश्चत्वारो वातपित्तकफसन्निपातभेदात्, एवमर्शो रक्तमपि चतुर्विधं सहजरक्तजयोरर्शसोर्दोषजे पित्तजेंतर्भावः । रक्तपित्तं चतुर्विधमपि रक्तपित्तत्वसामान्यादेकत्वेन गणनीयम्, तेन न संख्यातिरेकः । अर्बुदादीनामुक्तानामप्यत्राभिधानं शालाक्योक्तसंख्यापूरणाय, आश्रयप्रभावेणातिरिक्तलिंगादिख्यापनार्थं च । घ्राणार्शोर्बुदयोर्ग्रंथांतरे भेद उक्तः, तद्यथा—"शिरोरुलादतालूनां गौरवं दुःखनिद्रता । अर्शसामर्बुदानां च दोषैः शोषाकृतिः समा ॥ अर्शांसि गोस्तनाकाराण्यर्बुदं कोलसंमितम् ॥" इति ॥ २८ ॥ इत्यातंकदर्पणे निदानव्याख्यायां नासारोगनिदानम् ॥

# अथ नेत्ररोगनिदानम् ५९.

**उष्णाभितप्तस्य जले प्रवेशाद्दूरेक्षणात्स्वप्नविपर्ययाच्च ॥
स्वेदाद्रजोधूमनिषेवणाच्च छर्देर्विघाताद्वमनातियोगात् ॥ १ ॥**

मधुकोशव्याख्या ।

इन्द्रियाधिष्ठानगतविकारपारिशेष्यान्नेत्ररोगनिदानम् । एते च नयनरोगा वात पित्तकफरक्तसन्निपातागन्तुजाः सन्तः षट्सप्ततिः । यदाह सुश्रुतः-"तैस्त्रिभिस्त्रिंशदुक्तास्ते कफेनात्यधिकास्त्रयः । रक्तजाः षोडश प्रोक्ताः सर्वजाः पञ्चविंशतिः । बाह्यौ पुनर्द्वौ च तथा रोगाः षट्सप्ततिः स्मृताः" इति । षट्सप्ततिश्चैते रोगा आश्रयभेदेन सुश्रुतेनैव विभक्ताः । यदाह-"नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः । शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः ॥ सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव द्वौ च बाह्याश्रयावन्यावनिमित्तनिमित्तजौ ॥ षट्सप्ततिर्नेत्ररोगाः संग्रहेण प्रकीर्तिताः" इति । नेत्रप्रमाणं च सुश्रुतेनैवोक्तम्-"विद्याद्द्व्यंगुलबाहुल्यं स्वांगुष्ठोदरसंमितम् । द्व्यंगुलं सर्वतः सार्धं भिषङ्नयनबुद्बुदम्" इति । द्व्यंगुलबाहुल्यं विस्तारेण, अन्तःस्वांगुष्ठोदरसंमितं, द्व्यंगुलं सर्वतः सार्धमायामेन । अन्ये द्व्यंगुलबाहुल्यमिति यदुक्तं तत्र द्व्यंगुलमाननियमं स्वांगुष्ठोदरसंमितमित्यनेनाहुः । अयमर्थः-स्वेनांगुष्ठोदरेण संमित यत् द्व्यंगुलबहुलं, द्व्यंगुलं सर्वतः सार्धमिति च आयामविस्ताराभ्यां बोद्धव्यमिति । ननु, यद्यर्धतृतीयांगुलायामं नेत्रं तर्हि 'द्व्यंगुलायतनं च नयनम्' इत्यातुरोपक्रमणीयोक्तं विरुध्यते ? नैवं, वर्त्ममण्डलं गृहीत्वा गणनयाऽर्धतृतीयांगुलं तद्विरहात् द्व्यंगुलायतनमिति न विरोधः । नयनरोगहेतुमाह-उष्णाभितप्तस्येत्यादि ।

आतङ्कदर्पणव्याख्या ।

इंद्रियाधिष्ठानगतविकारपारिशेष्यान्नेत्ररोगनिदानम् । एते च नयनरोगा वातपित्तकफरक्तसन्निपातागंतुजाः षट्सप्ततिः । यदाह-सुश्रुतः-"तैस्त्रिभिस्त्रिंशदुक्तास्ते कफेनाभ्यधिकास्त्रयः । रक्तजाः षोडश ज्ञेयाः सर्वजाः पंचविंशतिः ॥ बाह्यौ पुनर्द्वौ च तथा रोगाः षट्सप्ततिः स्मृताः" इति । षट्सप्ततिश्च रोगा आश्रयभेदेन सुश्रुतेनैव विभक्ताः । यदाह-"नव संध्याश्रयास्ते स्युर्वर्त्मजास्त्वेकविंशतिः । शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः ॥ सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु । द्वौ च बाह्याश्रयावन्यावनिमित्तनिमित्तजौ ॥ षट्सप्ततिर्नेत्ररोगाः संग्रहेण प्रकीर्तिताः" इति । तत्र नयनरोगहेतुमाह-उष्णाभितप्तस्येति । उष्णेनातपादिना संतप्त देहस्य जलावगाहनात् । तदूष्मणोर्ध्वगतेन तेजसोभिभवाच्चक्षूरोगादयः यथा मध्यंदिनोल्कापातः सौरकिरणेनाभिभूयते । दूरेक्षणात् दूरावलोकनात्, स्वप्नविपर्ययात् रात्रिजागरणाद्दिवास्वप्नात्, स्वेदादित्यादि धर्मरजोधूमानां नयनसंबद्धानां हेतुत्वम् । छर्देर्विघातात् वांतिवेगविधारणात्, वमनातियोगादतिवांतेः ॥ १ ॥

द्रवात्तथान्नान्निशि सेविताच्च विण्मूत्रवातक्रमनिग्रहाच्च ॥
प्रसक्तसंरोदनशोककोपाच्छिरोऽभिघातादतिमद्यपानात् ॥ २ ॥
तथा ऋतूनां च विपर्ययेण क्लेशाभिघातादतिमैथुनाच्च ॥
बाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च नेत्रे विकाराञ्जनयन्ति दोषाः॥ ३ ॥
वातात् पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः ॥
प्रायेण जायते घोरः सर्वनेत्रामयाकरः ॥ ४ ॥

---

मधुकोशव्याख्या ।

उष्णेनातपादिना सन्तप्तदेहस्य जलावगाहनात्, तदुष्मणोऽर्ध्वगेन नयनतेजसोऽभिभवाच्चक्षूरोगोदयः । स्वेदाद्रजोधूमनिषेवणाच्चेति घर्मरजोधूमानां नयनसंबन्धानां हेतुत्वम् । छर्देर्विघातात् वान्तिवेगविघातात् । वमनातियोगादतिवान्तेः ॥ १ ॥ विण्मूत्रवातक्रमनिग्रहात् विण्मूत्रवातानां क्रमेण शनैः शनैर्निग्रहात् वेगविधारणात् । प्रसक्तसंरोदनशोककोपादिति प्रसक्तं निरन्तरं कृतसंरोदनादेरित्यर्थः ॥ २ ॥ ऋतुविपर्ययेण एकर्तुचर्यान्यर्तुकरणेन । क्लेशाभिघातात् क्लेशः कायादिदुःखम्, तेनाभिसंबन्धात् । बाष्पनिग्रहात् अश्रुवेगधारणात् । नयनरोगसंप्राप्तिश्च सुश्रुते पठ्यते—"शिरानुसारिभिर्दोषैर्विगुणैरूर्ध्वमाश्रितैः । जायन्ते नेत्रभागेषु रोगाः परमदारुणाः" इति ॥ ३ ॥ सामान्यपूर्वकत्वात् विशेषस्य, तथा सर्वनयनरोगहेतुत्वाच्च, आदौ सर्वनयनगतमभिष्यन्दमाह—वातादित्यादि । घोर इति दुःसहवेदनः । सर्वनेत्रामयाकर इति सर्वेषां नेत्ररोगाणामधिमन्थादीनामाकर उत्पत्तिकरत्वादाकरः स्थानम् । अत एवाह सुश्रुतः—"प्रायेण सर्वे नयनामयास्ते भवन्त्यभिष्यन्दनिमित्तमूलाः" इति॥४॥

आतङ्कदर्पणव्याख्या ।

विण्मूत्रवातक्रमनिग्रहात् । विण्मूत्रवातानां क्रमेण शनैःशनैर्ग्रहात् । वेगधारणात् । प्रसक्तसंरोदनशोककोपात् प्रसक्तं निरंतरं कृतसंरोदनादित्यर्थः ॥ २ ॥ क्लेशाभिघातात् क्लेशः कामादिदुःखम्, तेन संबंधात्, बाष्पग्रहात् बाष्पं नेत्रांबु, तद्वेगविधारणात्, सूक्ष्मवस्त्ववलोकनात्, एतैर्हेतुभिर्नेत्ररोगा जायंते । नयनरोगसंप्राप्तिः सुश्रुते पठिता । तद्यथा—"शिरानुसारिभिर्दोषैर्विगुणैरूर्ध्वमार्गगैः । जायंते नेत्रभागेषु रोगाः परमदारुणाः" इति ॥ ३ ॥ सामान्यपूर्वकत्वाद् विशेषस्य, सर्वनयनरोगहेतुत्वाच्चादौ सर्वनयनगतमभिष्यंदमाह--वातादिति । घोरः दुःसहवेदनः सर्वनेत्रामयाकर इति सर्वेषामेव नेत्ररोगाणामधिमंथादीनामाकरः स्थानम्, उत्पत्तिकरत्वात् । अत एवाह सुश्रुतः—" प्रायेण सर्वे नयनामयास्ते भवंत्यभिष्यंदनिमित्तमूलाः " इति ॥ ४ ॥

निस्तोदनस्तम्भनरोमहर्षसंघर्षपारुष्यशिरोऽभितापाः ॥
विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति॥५॥
दाहप्रपाकौ शिशिराभिनन्दा धूमायनं बाष्पसमुच्छ्रयश्च ॥
उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति ॥६ ॥
उष्णाभिनन्दा गुरुताक्षिशोथः कण्डूपदेहावतिशीतता च ॥
स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति॥७॥
ताम्राश्रुता लोहितनेत्रता च नाड्यः समन्तादतिलोहिताश्च ॥
पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति८
वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् ॥
तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः ॥ ९ ॥

मधुकोशव्याख्या ।

वाताभिष्यन्दरूपमाह–निस्तोदनेत्यादि । निस्तोदनं प्राजनव्यधनवद्व्यथा, स्तम्भनं जडिमा, संघर्षः करकरिका, पारुष्यं रूक्षता, शिरोऽभितापः शिरोव्यथा । विशुष्कभावो दूषिकारहितत्वं, न त्वास्रावरहितत्वं, शिशिराश्रुतेत्युक्तेः ॥ ५ ॥ पैत्तिकलक्षणमाह–दाहप्रपाकावित्यादि । प्रपाकः प्रकृष्टपाकः । शिशिराभिनन्दा शीतेच्छा । धूमायनं धूमस्योद्गमनम् । बाष्पसमुच्छ्रयो बाष्पबाहुल्यम् ॥ ६ ॥ कफजलिङ्गमाह–उष्णाभिनन्देत्यादि । उपदेहः पिच्चटबाहुल्यम् । शीतता नेत्रस्य । पिच्छिल इति स्रावविशेषणम् । कफाभिपन्ने कफयुक्ते । नयने चक्षुषि । भवन्ति जायन्ते ॥ ७ ॥ रक्ताभिष्यन्दलक्षणमाह–ताम्राश्रुतेत्यादि । पित्तस्य लिङ्गानीति पित्ताभिष्यन्दलिङ्गानि ॥ ८ ॥ अधिमन्थानामभिष्यन्दजत्वमाह–वृद्धैरित्यादि । तावन्त इति, अभिष्यन्दैर्वातपित्तकफरक्तजैश्चत्वारोऽधिमन्थाः प्रत्येतव्याः । तीव्रवेदना इति सामान्य-

आतङ्कदर्पणव्याख्या ।

वाताभिष्यंदमाह–निस्तोदनं शूलं तद्वद् व्यथा, स्तंभनं जडिमा, संघर्षः वालुकापूरिता इव करकरिका, पारुष्यं रूक्षत्वम्, शिरोभितापः शिरोव्यथा, विशुष्कभावो दूषिकारहितत्वं नेत्रास्रावरहितत्वं तु शिशिराश्रुतेत्युक्तं न घटते ॥ ५ ॥ पित्तजमाह–दाहेति । शिशिराभिनंदा शिशिरेच्छा, धूमायनं धूमस्येवोद्गमनम्, बाष्पसमुच्छ्रयः बाष्पबाहुल्यम् ॥ ६ ॥ कफजमाह–उष्णेति । सुगमम् ॥ ७ ॥ रक्तजमाह । पित्तस्यापि लिंगानि पित्ताभिष्यंदस्यापि लिंगानि ॥ ८ ॥ अधिमंथानामभिष्यंदजत्वमाह–वृद्धैरिति । वृद्धिं गतैः अप्रतिक्रियमाणत्वात् । तावंत इति अभिष्यंदैर्वातपित्तकफरक्तजैश्चतुर्भिश्चत्वारोधिमंथाः तीव्रा वातजा एव सर्वनिस्तोदादिवेदना एवं पित्तकफ-

उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा ॥
शिरसोऽर्धं च तं विद्यादधिमन्थं स्वलक्षणैः ॥ १० ॥
हन्याद्दृष्टिं श्लैष्मिकः सप्तरात्रादधिमन्थो रक्तजः पञ्चरात्रात् ॥
षड्रात्राद्वातिको वै निहन्यान्मिथ्याचारात् पैत्तिकः सद्य एव ११॥
उदीर्णवेदनं नेत्रं रागशोथसमन्वितम् ॥
घर्षनिस्तोदशूलाश्रुयुक्तमामान्वितं विदुः ॥ १२ ॥

---

मधुकोशव्याख्या ।

लक्षणम् । वेदनाशब्दश्चात्र व्यथामात्रवाची, तेन वातिकाभिष्यन्दाद्वातिक एव अधिमन्थः तीव्रवातजनिततोदादिसकलवेदनः । एवं पित्तजकफजरक्तजाश्चाधिमन्थाः प्रत्येतव्याः ॥ ९ ॥ अस्यापरं सामान्यलक्षणमाह—उत्पाट्यत इवात्यर्थमित्यादि । शिरसोऽर्धं चेत्यत्र पूर्वक्रिये संबध्येते, तेन शिरसोऽर्धमुत्पाट्यते तथा निर्मथ्यते चेत्यर्थः । शिरसोऽर्धे च वेदना व्याधिप्रभावात् । स्वलक्षणैरिति यथोक्तवाताद्यभिष्यन्दलक्षणैः । स चाधिमन्थस्तदात्मकः ॥ १० ॥ यावत्कालेन मिथ्याचाराद्दृष्टिं हन्ति तानाह—हन्याद्दृष्टिमित्यादि । सद्य एवेति श्लेष्मणि सप्तरात्रस्योक्तत्वात्, सद्यःशब्देनात्र त्रिरात्रमुक्तं, वैद्यके हि सद्यःशब्दस्य त्रिरात्रसप्तरात्रवाचित्वेन दृष्टत्वात् । कालावधिरत्र व्याधिस्वभावात् ॥ ११ ॥ लंघनप्रलेपादिविधानार्थम्, अञ्जनादिनिषेधार्थं च, नेत्ररोगस्य सामत्वलक्षणमाह—उदीर्णवेदनमित्यादि । उदीर्णवेदनमुद्गतबहुवेदनम् । घर्षः करकरिका । लंघनादिविधानार्थमञ्जनादिनिषेधार्थं च तन्त्रान्तरम्—"स्वेदः प्रलेपस्तिक्तान्नं धूमो दिनचतुष्टयम् । लंघनं चाक्षिरोगाणामामानां पाचनानि षट् ॥ अञ्जनं सर्पिषः पानं कषायं गुरुभोजनम् ।

आतङ्कदर्पणव्याख्या ।

रक्तजाश्चाधिमंथाः प्रत्येतव्याः ॥ ९ ॥ अस्यापरं सामान्यलक्षणमाह—उत्पाट्यत इति । शिरोर्द्धे वेदना व्याधिप्रभावात् । स्वलक्षणैरिति यथोक्तवाताभिष्यंदलक्षणैः, स चाधिमंथस्तदात्मकः ॥ १० ॥ यावता कालेन मिथ्याचाराद् दृष्टिं हरति, तदाह—हन्यादिति । श्लेष्मणि सप्तरात्रस्योक्तत्वात् । कालावधिस्तु व्याधिस्वभावात् ॥ ११ ॥ लंघनप्रलेपनादिविधानार्थमंजनादिनिषेधार्थं च नेत्ररोगस्य सामान्यलक्षणमाह—उदीर्णेति । उदीर्णवेदनम् उद्गतवेदनम् । घर्षः करकरिकाविशेषः । लंघनादिविधानार्थमंजनादिनिषेधार्थं च तंत्रांतरे उक्तम्—"स्वेदः प्रलेपस्तिक्तान्नं

मन्दवेदनता कण्डूः संरम्भाश्रुप्रशान्तता ॥
प्रशस्तवर्णता चाक्ष्णोः संपक्कदोषमादिशेत् ॥ १३ ॥
कण्डूपदेहाश्रुयुतः पक्कोदुम्बरसन्निभः ॥
संरम्भी पच्यते यस्तु नेत्रपाकः सशोथजः ॥
शोथहीनानि लिङ्गानि नेत्रपाके त्वशोथजे ॥ १४ ॥
उपेक्षणादक्षि यथाधिमन्थो वातात्मकः सादयति प्रसह्य ॥
रुजाभिरुग्राभिरसाध्य एष हताधिमन्थः खलु नाम रोगः ॥१५॥

---

मधुकोशव्याख्या ।

नेत्ररोगेषु सामेषु स्नानं चापि विवर्जयेत्" इति ॥ १२ ॥ निरामलक्षणमाह— मन्देत्यादि । संरम्भाश्रुप्रशान्ततेति संरम्भः शोथः, तस्याश्रुणो नेत्रनलस्य च प्रशमः ॥ १३ ॥ सशोथपाकलिङ्गमाह—कण्डूपदेहाश्रुयुत इत्यादि । पक्कोदुम्बरसन्निभ इति लोहितः । संरम्भीति शोथवान्, कार्तिकस्तु महारम्भवानित्याह । शोथस्त्वनुक्तोऽपि गम्यते तत्प्रधानत्वात् पाकस्य, उत्तरत्र शोथहीनानीत्यस्याभिधानाच्च । अयं त्रिदोषजः, एवमशोथपाकश्च ॥ १४ ॥ हताधिमन्थलक्षणमाह—उपेक्षणादक्षीत्यादि । अयं रोगो विदेहे दृष्ट्युत्क्षेपलक्षण एकः, अन्यः सकलनयनशोषलक्षणः पठ्यते । तद्यथा—"अन्तर्गतः शिराणां तु यदा तिष्ठति मारुतः । स तदा नयनं प्राप्य शीघ्रं दृष्टिं निरस्यति ॥ तस्यां निरस्यमानायां निर्मन्थन्निव मारुतः । नयनं निर्वमत्याशु शूलतोदादिमन्थनैः" इति । इदं दृष्टिनिर्गमलक्षणम् । अत एवैतस्मिन्नर्थे सुश्रुते केचित् पठन्ति—"अन्तः शिराणां श्वसनः स्थितो दृष्टिं प्रतिक्षिपन् । हताधिमन्थं जनयेत्तमसाध्यं विदुर्बुधाः" इति । विदेह एव सकलाक्षिशोषः पठ्यते—

आतङ्कदर्पणव्याख्या ।

धूमो दिनचतुष्टयम् । लंघनं चाक्षिरोगाणामामानां पक्तिरिष्यते ॥" ॥ १२ ॥ निरामलक्षणमाह— मंदेति ॥ १३ ॥ नेत्रपाकमाह—कंडूिति । पक्कोदुंबरसन्निभ इति लौहित्येन । संरंभी शोथवान् । कार्तिकस्तु महारंभः इति पठितवान् । शोथस्त्वनुक्तोऽपि गम्यते, तत्प्रधानत्वात् पाकस्य उत्तरत्र शोथहीनानीत्यभिधानाच्चायं त्रिदोषजः । अशोथमाह—शोथेति । अत्र शोथरहितानि नेत्रपाकलक्षणानि जानीयात् ॥ १४ ॥ हताधिमंथलक्षणमाह—उपेक्षणादिति । सादयति शोषयति, रुजाभिरिति सतोदरुजाभिः । विदेहेऽयं रोगो दृष्ट्युत्क्षेपणलक्षण एकः, अन्यः सकलनयनशोषलक्षणः पठितः । तद्यथा—"अंतर्गतः शिराणां तु यदा तिष्ठति मारुतः । स तदा नयनं प्राप्य शीघ्रं दृष्टिं निरस्यति ॥ तस्यां निरस्यमानायां निर्मंथन्निव मारुतः । नयनं निर्वमत्याशु शूलतोदोऽभि-

वारंवारं च पर्येति भ्रुवौ नेत्रे च मारुतः ॥
रुजश्च विविधास्तीव्राः स ज्ञेयो वातपर्ययः ॥ १६ ॥
यत्कूणितं दारुणरूक्षवर्त्म संदह्यते चाविलदर्शनं यत् ॥
सुदारुणं यत् प्रतिबोधने च शुष्काक्षिपाकोपहतं तदक्षि ॥ १७ ॥
यस्यावटुकर्णशिरोहनुस्थो मन्यागतो वाप्यनिलोऽन्यतो वा ॥
कुर्याद्रुजं वै भ्रुवि लोचने च तमन्यतोवातमुदाहरन्ति ॥ १८ ॥

---

मधुकोशव्याख्या ।

"अथवा शोषयेदक्षि क्षीणतेजोबलादयम् । तत्पक्ष्ममिव संशुष्कमवसीदति लोचनम् । हताधिमन्थं तं विद्यादसाध्यं वातकोपतः" इति । अतः शोषार्थे उपेक्षणादक्षीत्यादि-श्लोकोऽवगन्तव्यः । सादयतीति शोषयति । रुजाभिरुग्राभिरिति रुजाभिस्तोदादिभि-र्महतीभिरुपलक्षितः ॥ १५ ॥ वातपर्यायलिङ्गमाह—वारंवारं च पर्येतीत्यादि । पर्या-येण क्रमेण कदाचिद् भ्रुवि, कदाचित् लोचने, वायुस्तीव्रां रुजां करोतीति वातप-र्यायार्थः ॥ १६ ॥ शुष्काक्षिपाकमाह—यत्कूणितमित्यादि । कूणितमिति निमीलि-तम् । दारुणं कठिनं रूक्षं च वातशोषात् वर्त्म यस्य तद्दारुणरूक्षवर्त्म । संदह्यते सदाहं भवति । आविलदर्शनमाकुलदर्शनम् । सुदारुणं कृच्छ्रोन्मीलनम् । प्रतिबो-धने उन्मेषणे । सुदारुणं सुकठिनमिति गदाधरः । शुष्काक्षिपाकोपहतं तदक्षीति तच्छुष्केणाक्षिपाकेन उपहतमक्षीत्यर्थः । अयं रोगः सरक्तवातजन्यः । यदाह करालः—"कूणितं खरवर्त्माक्षिकृच्छ्रोन्मीलाविलेक्षणम् । सदाहं सास्रजो वाताच्छु-ष्कपाकान्वितं वदेत्" इति ॥ १७ ॥ अन्यतोवातमाह—यस्यावटुकर्णेत्यादि । अवटु-र्घाटा । मन्ये ग्रीवापार्श्वशिरे । अन्यतो वेति उक्तप्रदेशादितरत्र पृष्ठे, सप्तम्यर्थे तसिः।

आतङ्कदर्पणव्याख्या ।

मंथनैः ॥" इत्यनं दृष्टिनिर्गमलक्षणः, सकलाक्षिशोषो मंथः । विदेहोऽप्याह—"अथ वा शोषये-दक्षि क्षीणतेजोबलादयम् । तत्पक्ष्ममिव संशुष्कमवसीदति लोचनम् ॥ हताधिमंथं तं विद्याद-साध्यं वातकोपजम्" इति ॥ १५ ॥ वातपर्यायलक्षणमाह—वारंवारमिति । पर्यायेण क्रमेण कदा-चित् भ्रुवि कदाचिल्लोचने वायुः तीव्रां रुजं करोतीति तात्पर्यार्थः ॥ १६ ॥ शुष्काक्षिपाक-माह—यदिति । कुणितं मीलनम् । दारुणं कठिनं रूक्षं च वातशोषणाद्वर्त्म यस्य तत् । दारुणं सुकठिनमिति गदाधरः । शुष्काक्षिपाकोपहतमिति शुष्केणाक्षिपाकेनोपहतमक्षीत्यर्थः । अयं रोगः सरक्तवातजन्यः । यदाह करालः—"कूणितं खरवर्त्माक्षि कृच्छ्रोन्मीलाविलेक्षणम् । सदाहं सास्रजो वाताच्छुष्कपाकान्वितं वदेत् ॥" इति ॥ १७ ॥ अन्यतोवातमाह—यस्येति । अवटु-र्घाटा, मन्ये ग्रीवापार्श्वशिरे । अन्यतो वेति उक्तप्रदेशादितरत्र पृष्ठे. अन्यत्र वातस्य कारणस्या-

श्यावं लोहितपर्यन्तं सर्वं चाक्षि प्रपच्यते ॥
सदाहशोथं सास्रावमम्लाध्युषितमम्लतः ॥ १९ ॥
अवेदना वापि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः ॥
मुहुर्विरज्यन्ति च याः स तादृग् व्याधिः शिरोत्पात इति प्रदिष्टः २०
मोहाच्छिरोत्पात उपेक्षितस्तु जायेत रोगस्तु शिराप्रहर्षः ॥
ताम्राभमस्रं स्रवति प्रगाढं तथा न शक्नोत्यभिवीक्षितुं च ॥ २१ ॥
निमग्नरूपं तु भवेद्धि कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै ॥
स्रावं स्रवेदुष्णमतीव यच्च तत्सव्रणं शुक्रमुदाहरन्ति ॥ २२ ॥

मधुकोशव्याख्या ।

अन्यत्र वातस्य कारणस्यावस्थानम्, अन्यत्र लोचने भ्रुवि च रुजां करोतीत्यन्यतो-वातः । विदेहेऽप्युक्तम्—"मन्यानामन्तरे वायुरुत्थितः पृष्ठतोऽपि वा । करोति भेदं निस्तोदं शङ्खे चाक्ष्णोर्भ्रुवस्तथा । तमाहुरन्यतोवातं रोगं दृष्टिविदो जनाः" इति १८॥ अम्लाध्युषितमाह—श्यावमित्यादि । श्यावमीषन्नीलम् । अम्लत इत्यम्लभोजनात् । अम्लाध्युषितमिति पित्ताध्युषितं, कारणे कार्योपचारात् ॥ १९ ॥ शिरोत्पातमाह—अवेदना वापीत्यादि । अक्षिराज्य इति अक्षिशिराः । विरज्यन्तीति विरक्ता भवन्ति, विशेषरक्ता भवन्तीत्यर्थः । रक्तजोयम् ॥२०॥ शिराप्रहर्षमाह—मोहादित्यादि ॥२१॥ सन्धिवर्त्मशुक्लकृष्णदृष्टिगतेषु मध्ये प्राधान्याद्दृष्टिगतेषु वक्तुमुचितेषु स्वल्पवक्तव्य-तया दृष्टिमण्डलप्रत्यासत्त्या कृष्णगतविकाराभिधानम् । तत्र सव्रणशुक्ललक्षणमाह—निमग्नरूपमित्यादिना।रूपग्रहणमाभासनिषेधार्थं,तेन निमग्नरूपमेव यत् सूच्येवेत्युपमानं

आतङ्कदर्पणव्याख्या ।

वस्थानम्, अन्यत्र लोचने भ्रुवि च रुजां करोति—इत्यन्यतोवातः । विदेहेऽप्युक्तः—"मन्या-नामंतरे वायुरुत्थितः पृष्ठतोपि वा । करोति भेदं निस्तोदं शोथं चाक्ष्णोर्भ्रुवोस्तथा । तमाहुरन्यतो-वातं दृष्टिरोगविदो जनाः" इति ॥ १८ ॥ अम्लाध्युषितमाह—श्यावमिति । पित्तजोऽयं व्याधिः ॥ १९ ॥ शिरोत्पातमाह—अवेदना वेति । अक्षिराज्यः अक्षिशिराः, विरज्यंति विरक्ता भवंति, विशेषरक्तवर्णा भवन्तीत्यर्थः, रक्तजोयं विकारः ॥ २० ॥ शिराप्रहर्षमाह—मोहादिति । ताम्रम् अरुणम्, अच्छं निर्मलम् । प्रगाढमित्यतिशयेन अभिवीक्षितुं द्रष्टुं न शक्नोतीत्यर्थः ॥ इति सर्वनेत्रगताः ॥ २१ ॥ अथ कृष्णगताश्चत्वारः । [1] दृष्टिमंडलप्रत्यासन्नतया कृष्णगतविका-राभिधानम्, तत्र सव्रणशुक्रमाह—निमग्नरूपमिति । रूपग्रहणम् आभासनिषेधार्थम्, तेन निमग्नरू-

१ "एतच्च—ताम्राच्छमस्रम्" इतिपाठाभिप्रायेण ।

**दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न च संस्रवेद्धि ॥**
**अवेदनं वा न च युग्मशुक्लं तत् सिद्धिमायाति कदाचिदेव॥२३॥**
**स्यन्दात्मकं कृष्णगतं सचोषं शंखेन्दुकुन्दप्रतिमावभासम् ॥**
**वैहायसाभ्रप्रतनुप्रकाशमथाव्रणं साध्यतमं वदन्ति ॥ २४ ॥**

मधुकोशव्याख्या।

वर्तुलत्वख्यापनाय सूचीव्यधनवद्वेदनादर्शनाय च। स्रावं स्रवेदुष्णमिति स्रवेदुष्णमित्येतावतैव लब्धे स्रावे पुनः स्रावग्रहणं निरन्तरस्रावं लक्षयति। अतिशब्दस्तूष्णेन संबध्यत इति कार्त्तिकः। उष्णस्रावता रक्तात्मकत्वात्। शुक्लस्यात्र चात्यन्तरुक् बोद्धव्या सव्रणत्वात्। यदाह अव्रणलक्षणे सुश्रुतः—"नातिरुगश्रुयुक्तम्" इति। तत् स्रवणं सक्षतं, क्षते तु रुजा युक्तैव, नयने तु सुकुमारे विशेषेणोदाहरन्ति विदेहप्रभृतयः। विदेहेऽप्युक्तम्—"रक्तराजीनिभं कृष्णे छिन्नाभं यच्च लक्ष्यते। सूच्यग्रेणेव तच्छुक्लमुष्णाश्रुस्रावि सव्रणम्" इति ॥ २२ ॥ अस्यासाध्यतया निर्दिष्टस्यावस्थावशेन पाक्षिकीं सिद्धिमाह—दृष्टेः समीप इत्यादि। क्षतं हि स्वभावत एव संश्रयोपघातकरम्, अतो दृष्टिसमीपे न साध्यम्। उक्तविपर्ययात्तु दृष्टिसमीपेऽपि सुखसाध्यमव्रणम्। न चावगाढमेकत्वग्गतम्। विपर्ययात्त्ववगाढमप्यव्रणं सिध्यति। अत एव व्रणे वक्ष्यति—गम्भीरजातमिति। न च संस्रवेदिति न चात्यर्थं स्रवेत्, संशब्दस्यातिशयार्थत्वात्। अवेदनं मन्दवेदनम्, रक्तस्य कफानुगमात्; वातानुगमादतिवेदनं तु न सिध्यति। युग्मं च क्षतशुक्लं कदापि न सिध्यति ॥ २३ ॥ इदानीमव्रणशुक्ललक्षणमाह—स्यन्दात्मकमित्यादिना। स्यन्दात्मकमभिष्यन्दनिमित्तकं, सर्वेषामाक्षिरोगाणामभिष्यन्द-

आतङ्कदर्पणव्याख्या।

रूपमेव यत् सूच्या विद्धमिव प्रतिभाति, सूच्येवेत्युपमा वर्तुलत्वख्यापनाय, सूचीविद्धवेदनादर्शनाय च। स्रावं स्रवेदुष्णमिति स्रवेदुष्णमेतावतैव लब्धे स्रावे स्रावग्रहणं निरंतरं स्रावं बोधयति। अतिशब्दस्तूष्णेन संबध्यत इति कार्त्तिकः। विदेहेऽप्युक्तम्—"रक्तराजीनिभं कृष्णे छिन्नाभं यच्च लक्ष्यते। सूच्यग्रेणेव तच्छुक्लमुष्णाश्रुस्रावि सव्रणम् ॥" इति ॥ २२ ॥ अस्यासाध्यावस्थाविशेषेण पाक्षिकी सिद्धिमाह—दृष्टेरिति। क्षतं स्वभावत एवाश्रयोपघातकरम्, अतो दृष्टिसमीपे न साध्यम्। उक्तविपर्ययात्तु दृष्टिसमीपेऽपि सुखसाध्यावस्थमव्रणम्। न चावगाढमेकत्वग्गतं विपर्ययोत्थमवगाढमप्यव्रणं सिद्ध्यति। अत एवाव्रणे वक्ष्यति—गंभीरजातमिति। न संस्रवेदिति न चात्यर्थं स्रवेत्। अत्र संशब्दस्यातिशयार्थत्वात्। अवेदनं मन्दवेदनम्, रक्तस्य कफानुगमात्, वातानुगमादतिवेदनं तु न सिद्ध्यति ॥ युग्मशुक्लमिति क्षतशुक्लं, तत् कदाचित् न सिद्ध्यति ॥ २३ ॥ इदानीमव्रणशुक्ललक्षणमाह—स्यंदात्मकमिति। अभिष्यंदनिमित्तजा-

**गम्भीरजातं बहुलं च शुक्लं चिरोत्थितं चापि वदन्ति कृच्छ्रम् ॥**
**विच्छिन्नमध्यं पिशितावृतं वा चलं शिरासूक्ष्ममदृष्टिकृच्च ॥**
**द्वित्वग्गतं लोहितमन्ततश्च चिरोत्थितं चापि विवर्जनीयम्॥२५॥**

---

मधुकोशव्याख्या ।

निमित्तत्वेऽपि चास्य नियमप्रतिपादनार्थमभिधानम् । वैहायसाभ्रप्रतनुप्रकाशमिति विहायसि स्थितं वैहायसं, 'तस्य निवासः' इत्यण्, विहायो नभः, आकाशस्थिताभ्रवत् प्रतनुप्रकाशमित्यर्थः । एतेनाच्छत्वं प्रतिपाद्यते । शुक्लत्वं तु शंखेन्दुकुन्दप्रतिमावभासमित्यनेनैव लब्धं, वैहायसाभ्रग्रहणं सजलाभ्रव्यवच्छेदार्थं, तद्धि प्रायः पार्वतं भवतीति कार्तिकः । साध्यतमं सुखसाध्यम् । ननु, गम्भीरजातमित्यादिना कृच्छ्राभिधानेनैव तदुक्तिविपर्ययेण सुखसाध्यत्वावगतिः सेत्स्यति, तत् किं साध्यतमाभिधानेन? नैवम्, असत्यत्र साध्यतमाभिधाने उभयत्रापि कृच्छ्रत्वभ्रान्तिः स्यादतस्तदभिधानम् ॥ २४ ॥ अव्रणस्यैवावस्थाभेदेन कृच्छ्रत्वमाह—गम्भीरजातमित्यादि । गम्भीरजातं द्वित्रित्वग्गतम् । बहुलं प्रतनुनोऽभ्राद्घनम् । अव्रणस्यैवावस्थाभेदेनासाध्यत्वमाह—विच्छिन्नमध्यं विदीर्णमांसत्वात् सच्छिद्रं, निम्नमिति यावत्, तद्विपर्ययं तु पिशितावृतमुन्नतमांसरूपतया । चलमित्यनवस्थितम् । शिरासूक्ष्ममिति शिरावृतत्वात् सूक्ष्मम्; अन्ये शिरासक्तमिति पठन्ति, व्याचक्षते च शिरासक्तं च यतस्ततश्चलम्, शिरा हि मत्स्यवत् परिवर्तमाना मुहुर्मुहुश्चलन्ति; अन्ये शिराशुक्लमिति पाठान्तरं व्याचक्षते, शिराभिः शुक्लं शिराशुक्लं शिराशुक्लत्वहेतुकं, न हि शिराभवनं शुक्लत्वे हेतुरिति गदाधरः । अदृष्टिकृदिति दर्शनाभावकारि, दृष्टेः समीपे न भवेदित्यस्य विपर्ययोऽयम् । द्वित्वग्गतं द्विपटलाश्रितमेतदपरलिङ्ग-

आतङ्कदर्पणव्याख्या ।

तम् । सर्वेषामक्षिरोगाणामभिष्यंदनिमित्तत्वेऽप्यस्य नियमप्रतिपादनार्थमभिधानम् । वैहायसाभ्रप्रतनुप्रकाशमित्यनेन स्वच्छत्वं प्रतिपाद्यते, शुक्लत्वं तु शंखेंदुकुंदप्रतिमावभासत्वेनैव लब्धम्, वैहायसाभ्रग्रहणं सजलाभ्रव्यवच्छेदार्थम् । साध्यतमं सुखसाध्यम् ॥ २४ ॥ अव्रणस्यैवावस्थाभेदेन कृच्छ्रतामाह—गंभीरजातमिति । गंभीरजातं द्वित्रित्वग्गतम्, बहुलं प्रतनुनोऽभ्राद् घनम् । अव्रणस्यैवावस्थातोऽसाध्यत्वमाह—विच्छिन्नेति । विच्छिन्नमध्यं विशीर्णमांसत्वात् सच्छिद्रं, निम्नमिति यावत् । तद्विपर्ययं तु पिशितावृतमुन्नतमांसरूपतया । चलम् अनवस्थितम्, शिरासूक्ष्ममिति शिराकृतत्वात् सूक्ष्मम्, अन्ये "शिरासक्तम्" इति पठंति । शिरासक्तं यतस्ततश्चलम्, शिरा हि मत्स्यवत् परिवर्त्तमाना मुहुर्मुहुश्चलंति । तदाश्रितं शुक्लमपि चलमेव अदृष्टिकृदिति दर्शनाभावकारि । द्वित्वग्गतं द्विपटलाश्रितम्, एतदपरलिंगसहितमसाध्यम्, न केवलं द्वित्व-

**उष्णाश्रुपातः पिडका च नेत्रे यस्मिन् भवेन्मुद्गनिभं च शुक्रम् ॥**
**तदप्यसाध्यं प्रवदन्ति केचिदन्यच्च यत्तित्तिरिपक्षतुल्यम् ॥ २६ ॥**
**श्वेतः समाक्रामति सर्वतो हि दोषेण यस्यासितमण्डलं च ॥**
**तमक्षिपाकात्ययमक्षिरोगं सर्वात्मकं वर्जयितव्यमाहुः ॥ २७ ॥**

मधुकोशव्याख्या ।

सहितमसाध्यं, न तु केवलं; द्वित्वग्गतस्य कृच्छ्रत्वाभिधानात् । लोहितमन्तश्चेति, अन्ते लोहितं व्रणाकारेण ॥२५॥ न केवलमेवंविधं परमसाध्यं किंत्वन्यादृशमपीत्यत आह—उष्णाश्रुपात इत्यादि । पिडका च नेत्र इत्यन्तं द्वित्वग्गतशुक्रे । तथाह विदेहः "एकत्वग्गतमेवं स्यात् द्वित्वग्गतमिदं भवेत् । चोषोष्णस्रावदाहास्तु तृष्णा च पिडकोद्गमः" इति । मुद्गनिभं च शुक्रमित्याकारेण, एतद्द्वित्वग्गतम् । तथाच विदेहः— "व्यक्तमुद्गफलाकारं शुक्रं द्वित्वग्गतं भवेत्" इति । द्वित्रित्वग्गतस्याव्रणस्य कृच्छ्रत्वे एतत् पिडकोद्गममुद्गफलाकारत्वेनैवासाध्यत्वं बोध्यम् । अन्ये पुनः सव्रणशुक्रस्य विच्छिन्नमध्यमित्यादिकमसाध्यलक्षणं वर्णयन्ति । अत्र पक्षे द्वित्वग्गतमिति केवलमेवासाध्यलक्षणम्, एतन्न चावगाढमित्यस्य विपर्ययः । लोहितमन्ततः । उष्णाश्रुपातः पिडका चेत्यादि द्वित्वग्गतशुक्रलक्षणमिति । किंत्वियमत्रासङ्गतिः—विच्छिन्नमध्यं सच्छिद्रमध्यं, यद्यदि सच्छिद्रत्वं सव्रणशुक्रस्याभ्युपगम्यते, तदा निमग्नरूपमित्यनेनैव सिध्यत्वात् पुनरुक्तं स्यात्, किंच सव्रणशुक्रानन्तरमस्य पाठो विफलः स्यात् । अन्ये तु सव्रणाव्रणशुक्रविषयं सामान्यमसाध्यलक्षणमेतदाहुः । यथायोग्यतया कचिल्लिङ्गान्तरयोगेन च व्यवस्थेतिं च वर्णयन्ति । असाध्यत्वं विदेहादन्येषां मतेनाह—केचिदित्यादि । तित्तिरिपक्षतुल्यमिति शबलं, एतच्चानिषेधादनुमतम् २६ इदानीमक्षिपाकात्ययमाह—श्वेत इत्यादि । दोषेण यः कृतः श्वेतः स समाक्रामति ।

आतङ्कदर्पणव्याख्या ।

ग्गतस्य कृच्छ्राभिधानात्, सव्रणं त्रित्वग्गतं चासाध्यमिति ज्ञेयम् । लोहितमंतत इति प्रांतेषु लोहितं व्रणाकारेण । चिरोत्थितं चिरकालजम् ॥ २५ ॥ न केवलमेवंविधं परमसाध्यं, किंत्वन्यादृशमपीत्याह—उष्णाश्रुपात इति । पिडका च । नेत्र इत्यत्र द्वित्वग्गते शुक्ले । यदुक्तं विदेहे—"एकत्वग्गतमेवं स्याद्द्वित्वग्गतमिदं भवेत् । चोषोष्णस्रावदाहास्तु तृष्णा च पिडकोद्गमः ॥" इति । मुद्गनिभं च । शुक्लमिति आकारेण, एतद्द्वित्वग्गतं स्यात् । तथा च विदेहः—"व्यक्तमुद्गफलाकारं शुक्लं द्वित्वग्गतं भवेत्" इति ॥ द्वित्रित्वग्गतस्याव्रणशुक्लस्य कृच्छ्रत्वे एतत् पिडकोद्गममुद्गफलाकारत्वेनैवासाध्यत्वं बोद्धव्यम् । असाध्यत्वं विदेहादन्येषां मतेनाह—केचिदित्यादि । अन्यत् तित्तिरिपक्षितुल्यमिति शबलम् । एतच्च । निषेधादनुमतम् ॥ २६ ॥ इदानीमक्षिपाकात्ययमाह—श्वेत इति । दोषेण कृतो यः श्वेतः, कृष्णमंडलं सर्वतः समाक्रामति ।

**अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलास्रः ॥**
**विगृह्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत् २८॥**
**प्रथमे पटले दोषा यस्य दृष्ट्यां व्यवस्थिताः ॥**
**अव्यक्तानि स रूपाणि कदाचिदथ पश्यति ॥ २९ ॥**

मधुकोशव्याख्या ।

सर्वात्मकं त्रिदोषजम्; अन्ये तु स्यन्दात्मकमिति पठित्वा अभिष्यन्दात्मकमाहुः । तदा सर्वेषामभिष्यन्दमूलत्वाद्विशेषार्थमभिधानम् ॥ २७ ॥ अजकाजातमाह—अजापुरीषप्रतिम इत्यादि । अजापुरीषप्रतिमः शुष्काजपुरीषतुल्यः । सलोहित ईषल्लोहितः विगृह्य कृष्णमिति स्वोच्छ्रायेण कृष्णदेशं महत्त्वाद्विच्छिद्य । प्रचय इति प्रकृष्टश्चयः उद्गम इति यावत् । अजकाया मेदोवत् संश्रयस्तृतीयत्वग्गतत्वेन मेदसः प्रचयो बोद्धव्यः । तथाच विदेहः—"कृष्णेऽक्ष्णोर्यद्भवेच्छुक्लं छागलीविट्समप्रभम् । सान्द्रपिच्छिलरक्तास्रं त्रित्वग्गमजकेति सा" इति ॥ २८ ॥ इति कृष्णजाः । कृष्णाश्रितत्वाद् दृष्टिमण्डलस्य दृष्टिजा उच्यंते । दृष्टिप्रमाणं तु सुश्रुतेनोक्तम्—"मसूरदलमात्रां तु पञ्चभूतप्रसादजाम्" इति । अत्र मसूरदलमात्रामिति मसूरार्धदलमात्रां, तथाच निमिः—"पञ्चभूतात्मिका दृष्टिर्मसूरार्धदलोन्मितिः" । ननु, एवं तर्हि विरुध्यते, यदाह स एव पुनः—"नेत्रायामत्रिभागं च कृष्णमण्डलमुच्यते । कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविदो जनाः" इत्यत्र कृष्णसप्तमभागत्वेन दृष्टेरुक्तत्वात् । उच्यते, कृष्णसप्तमभागत्वेनैव मसूरार्धदलप्रमाणा दृष्टिरित्येक एवार्थः । ननु, एवमातुरोपक्रमणीयोक्तं 'द्व्यंगुलायतनं च नयनं, नयनत्रिभागपरिमाणा तारका, तारकानवमो भागो दृष्टिमण्डलम्' इति विरुद्धम् । उच्यते, तत्र मण्डलाभिधानेन मण्डलस-

आतङ्कदर्पणव्याख्या ।

सर्वात्मकं त्रिदोषजम्, अन्ये "स्यंदात्मकम्" इति पठित्वा अभिष्यंदात्मकमाहुः ॥ २७ ॥ अजकाजातमाह—अजेति । अजापुरीषप्रतिमः शुष्कच्छागलीपुरीषतुल्यः । सलोहित इति ईषल्लोहितः, विगृह्य कृष्णमिति श्वोच्छ्रायेण कृष्णदेहं महत्त्वाद्विच्छिद्य, विदार्य्येति यावत् । प्रचय इति प्रकृष्टश्चयः, उद्गम इति यावत् । अभ्युपैति समंतादागच्छति । अजकाया मेदोवत्संश्रयस्तृतीयत्वग्गतत्वेन मेदसः प्रचयो बोद्धव्यः । यदुक्तं विदेहे—"कृष्णेक्ष्णोर्यद्भवेच्छुक्लं छागलीविट्समप्रभम् । सांद्रपिच्छिलरक्तास्रं त्रित्वग्गमजकेति सा ॥" इति । स व्रणशुक्लः अक्षिपाकात्ययः अजकाजातः । एवं कृष्णगते चक्षुरोगाश्चत्वार इति कृष्णजाः ॥ २८ ॥ कृष्णाश्रितत्वाद् दृष्टिमंडलस्य दृष्टिजा उच्यन्ते । दृष्टिप्रमाणं तु सुश्रुतेनोक्तम् । तद्यथा—"मसूरदलमात्रां तु पंचभूतप्रसादजाम्" इति । मसूरमात्रां मसूरार्द्धदलमात्राम् तथा च निमिः—"पंचभूतात्मिका दृष्टिर्मसूरार्द्धदलोन्मिता" इति । दृष्ट्या चत्वारि

मधुकोशव्याख्या ।

हिताया दृष्टेरुक्तिः, अत्र तु मण्डलराहिताया इति । मतभेदाद्वा न विरोधः, तारकानवमांशदृष्टिवचनं शल्यसिद्धान्तेन, एतत्तु शालाक्यसिद्धान्तेन । ननु, एवं तर्हि 'दृष्टिश्च रोमकूपाश्च न वर्धन्ते' इति शारीरोक्तं विरुध्यते, यतः कृष्णसप्तमभागत्वेन दृष्टेरुक्तत्वात् कृष्णवृद्ध्या तद्वृद्धेः संभवात् । नैवम्, अङ्गान्तरवत् न बहु वर्धत इत्यभिप्रायेणोक्तं दृष्टिर्न वर्धत इति । दृष्ट्यां च चत्वारि पटलानि । रसरक्ताश्रयं बाह्यं, द्वितीयं मांससंश्रयम्, तृतीयं मेदःसंश्रयं, चतुर्थं कालकास्थिसंस्थितम् । तथाच सुश्रुतः—"तेजोजलाश्रितं बाह्यं तेष्वन्यत् पिशिताश्रितम् । मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम् । पञ्चमांशसमं दृष्टेस्तेषां बाहुल्यमिष्यते" इति । अत्र तेजःशब्देन रक्तं जलशब्देन रसो व्याख्यातः । तेषु पटलेषु बाह्यादिभेदेनाधिष्ठानविशेषप्रभावात् दोषाणां लिङ्गविशेषमाह—प्रथमे पटल इत्यादि । प्रथमे पटले सर्वाभ्यन्तरे पटले कालकास्थिसंश्रये; न तु बाह्ये, तत्र प्रथमं दोषलिङ्गानुपलब्धेः । यदि तु कुष्ठादिवद्बाह्यं प्रथमं प्रदूष्याभ्यन्तरे दोषानुप्रवेशः स्यात्तदा प्रागेव रोगस्तत्रोपलभ्येत, न चैवं दृश्यते । तथाच विदेहः--"दृष्टेरन्तरमाद्यं तु पटलं समभिद्रुताः" इत्यारभ्य 'एकैकमनुपद्यन्ते पर्यायात् पटलान्तरम्' इति । प्रथमे पटल इत्यादिग्रन्थात् पूर्वं केचित् 'शिराभिरभिसंप्राप्य विगुणोऽभ्यन्तरे भृशम्' इति श्लोकार्धं संप्राप्तिरूपं पठन्ति सुश्रुते, तच्च 'शिरानुसारिभिर्दोषैः' इत्यनेनैव गतार्थमित्यनार्षं टीकाकारैर्व्याख्यातम् । रूपाणीति रूपवन्ति द्रव्याणि । कदाचिदथ पश्यतीत्यनेनात्राधिष्ठानविशेषात् दोषस्याल्पबलता उक्ता भवति । अव्यक्तरूपाण्यपि वक्ष्यमाणभ्रमणारुणवर्णादियुक्तानि वातेन, पित्तेनादित्यखद्योतादिपीतनीलवर्णानि, कफेन सितवर्णानि, रक्तेन रक्तवर्णानि, सन्निपातेन चित्रवर्णानि, एवं द्वितीयतृतीयचतुर्थपटलेष्वपि

आतङ्कदर्पणव्याख्या ।

पटलानि—रसरक्ताश्रयं बाह्यम्, द्वितीयं मांसरक्ताश्रयं, तृतीयं मेदःसंश्रयम्, चतुर्थं कालकास्थिश्रितमिति । यदुक्तं सुश्रुते—"तेजोजलाश्रितं बाह्यं तेष्वन्यत्पिशिताश्रितम् । मेदस्तृतीयं पटलमाश्रितं त्वस्थि चापरम् ॥ पंचमं सप्तमं दृष्टेस्तेषां बाहुल्यमिष्यते" इति । अत्र तेजःशब्देन रक्तम्, जलशब्देन रसो व्याख्यातः । तेषु पटलेषु बाह्यादिभेदेनाधिष्ठानभावाद्दोषाणां लिंगविशेषमाह—प्रथम इति । प्रथमे सर्वाभ्यंतरे पटले कालकास्थिसंश्रये, न तु बाह्ये । तथा च विदेहः—"यथा दोषाः प्रकुपिताः प्राप्यरूपवहे शिरे । दृष्टेरन्तरमाद्यं तु पटलं समभिद्रुताः ॥ एकैकमनुपद्यंते पर्यायात्पटलांतरम् ॥" रूपाणीति रूपवंति द्रव्याणि । कदाचिदथ पश्यतीत्यनेनात्राधिष्ठानविशेषाद्दोषस्याल्पबलतोक्ता । अव्यक्तानीति रूपाण्यपि वक्ष्यमाणभ्रमणारुणवर्णादियुक्तानि वातेन, पित्तेनादित्यखद्योतादिपीतनीलवर्णानि, कफेन श्वेतचामरगौरवर्णानि, रक्तेन रक्तवर्णानि, सन्निपातेन चित्राणीति । एवं द्वितीयतृतीयचतुर्थ-

दृष्टिर्भृशं विह्वलति द्वितीयं पटलं गते ॥
मक्षिकामशकांश्चापि जालकानि च पश्यति ॥ ३० ॥
मण्डलानि पताकांश्च मरीचीन्कुण्डलानि च ॥
परिप्लवांश्च विविधान् वर्षमभ्रं तमांसि च ॥ ३१ ॥
दूरस्थानि च रूपाणि मन्यते स समीपतः ॥
समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् ॥
यत्नवानपि चात्यर्थं सूचीपाशं न पश्यति ॥ ३२ ॥
ऊर्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते ॥
महान्त्यपि च रूपाणि छादितानीव चाम्बरैः ॥ ३३ ॥

---

मधुकोशव्याख्या ।

व्याख्येयम् ॥ २९ ॥ द्वितीयपटलगतस्य लिङ्गमाह—दृष्टिर्भृशं विह्वलतीत्यादि । विह्वलति पुनःपुनरसम्यग्रूपं गृह्णाति, तथा अविद्यमानान् मक्षिकादीन् पश्यति । अथवा मक्षिकेत्यादिना विह्वलत्वमेव व्याक्रियते । जालकानि जालान्येव । मरीचीनिति रश्मीन् । परिप्लवानिति मण्डूकादीनां परि सर्वतः प्लवान् गतीः । विविधानिति ऊर्ध्वाधस्तिर्यग्गतश्लेष्मादिदोषवर्णेन च नानाविधान्, अन्ये परिप्लवान् विविधानिति नानावर्णान् जलप्लवानित्याचक्षते । गोचरविभ्रमादिति विषयभ्रान्तः । सूचीपाशं न पश्यतीति सतोऽपि सूक्ष्मस्यानुपलम्भः, सूचीपाशं सूचीरन्ध्रं, पाशं वा गुणम् ॥ ॥ ३० ॥ ३२ ॥ तृतीयपटलगतस्य लिङ्गमाह—ऊर्ध्वं पश्यतीत्यादि । ऊर्ध्वदर्शनाभिधानादधोदर्शनस्य निषेधसिद्धौ तदभिधानं स्वरूपानुवादार्थम् । ननु, पार्श्वयोरीष दर्शनार्थं किमित्येतन्न भवति ? उच्यते, ऊर्ध्वाधोगतत्वेनैव पार्श्वस्य परिग्रहादिति कार्तिकः । यदेतद्रूपं पश्यति तत् कीदृशमित्यत आह—महान्त्यपीत्यादि । छादितानीव

आतङ्कदर्पणव्याख्या ।

पटलेष्वपि व्याख्येयम् ॥ २९ ॥ द्वितीयपटलगतमाह—दृष्टिरिति । द्वितीयं पटलं मांसरक्ताश्रयम् । विह्वलति पुनःपुनरसम्यग्रूपं गृह्णाति, तथा मक्षिकादीन्यप्यसंति यथा दोषवर्णानि पश्यति, जालकानि जालान्येव । मरीचीन् रश्मीन्, परिप्लवान् विविधान्नानाविधान् जलप्लवान् । अथ वा विविधानिति ऊर्ध्वाधस्तिर्य्यग्गतत्वेन दोषवर्णत्वेन च । वर्षं वृष्टिः, अभ्रो मेघः, तमोऽन्धकारः, गोचरविभ्रमात् विषयभ्रान्तेः, यत्नवान् कृतयत्नोपि, सूचीपाशं सूचीरंध्रं सतोपि सूक्ष्मस्यानुपलंभः ॥ ३० ॥ ३१ ॥ ३२ ॥ तृतीयपटलमाह—ऊर्द्ध्वमिति । "अंबरे" इति पाठे तत्राकाशे छादितानीव विकृतानीवेति, छिन्नकर्णनासादीनि । अत्र रागसंप्राप्तिमाह—यथेति । यथायथं दोषवर्णैररुण-

कर्णनासाक्षिहीनानि विकृतानीव पश्यति ॥
यथादोषं च रज्येत दृष्टिर्दोषे बलीयसि ॥ ३४ ॥
अधःस्थिते समीपस्थं दूरस्थं चोपरिस्थिते ॥
पार्श्वस्थिते तथा दोषे पार्श्वस्थं नैव पश्यति ॥ ३५ ॥
समन्ततः स्थिते दोषे संकुलानीव पश्यति ॥
दृष्टिमध्यस्थिते दोषे महद्ध्रस्वं च पश्यति ॥ ३६ ॥
द्विधा स्थिते द्विधा पश्येद्बहुधा चानवस्थिते ॥
दोषे दृष्ट्याश्रिते तिर्यक् स एकं मन्यते द्विधा ॥ ३७ ॥

---

मधुकोशव्याख्या ।

चाम्बरैरिति आवृतानीव वस्त्रैः, अम्बरे इति पाठान्तरे आकाशे छादितानि केनापि । विकृतानीवेति छिन्नकरपादादीनि । अत्र रागप्राप्तिमाह–यथादोषं च रज्येत दृष्टिर्दोषे बलीयसीति, अस्यार्थः–यथायथं दोषवर्णैररुणपीतसितादिभिर्युज्येत दृष्टिः, रागश्चात्र वर्णमात्रवचनः । अत एव वक्ष्यति–कफात् सितः शोणितजः सरक्त इति । दोषे बलीयसीति रक्तमांसमेदःसहाये बलवति दोषे, अन्यथा तु तृतीयेऽपि रागो न भवतीति व्यभिचारः सूच्यत इति गदाधरः । ननु, तृतीये कथं रागवर्णनं, बाह्यपटलेनावृते दर्शनासंभवात् ? न चाश्मरीवर्णाभिधानवदायुर्वेदप्रामाण्यार्थं भविष्यतीति, अश्मर्या उत्तरकालमाकृष्टौ तथा प्रतीतेः, इह तु न तादृक् । उच्यते, तृतीयपटलगतस्य दोषस्य तथास्वभावाद्बाह्ये रागोपलब्धिः, तृतीयपटलादारभ्य रागोदयः । यदाह विदेहः–"यथास्वं रज्यते दृष्टिर्दोषैस्त्रिपटलस्थितैः । चतुर्थपटलप्राप्तैर्मण्डलं रज्यते तु तैः" इति ॥ ३३ ॥ ३४ ॥ अधुनाध ऊर्ध्वमेवं यथाप्रदेशं दृष्टौ दोषावस्थाने यथा न पश्यति यादृग्वा पश्यति तथा दर्शयितुमाह–अधःस्थित इत्यादि । समीपस्थं दूरस्थं चेति नैव पश्यतीति संबन्धः । समन्तत इति सर्वतः । संकुलानी-

आतङ्कदर्पणव्याख्या ।

पीतसितादिभिर्युज्येत दृष्टिः, दोषे बलीयसि रक्तमांसमेदःसहाये च भवति । तृतीयपटलगतस्य दोषस्य तथास्वभावाद्वा रागोपलब्धिः । तृतीयपटलादारभ्य रागोदय इत्यर्थः । यदाह विदेहः– "यथास्वं रज्यते दृष्टिर्दोषैस्त्रिपटलस्थितैः । चतुर्थपटलप्राप्तैर्मंडलं रज्यते तु तैः" इति ॥ ३३ ॥ ३४ ॥ अधुनाध ऊर्ध्वमेव यथाप्रदेशं दृष्टौ दोषाधिष्ठाने यथा न पश्यति यादृग्वा पश्यति । तथा दर्शयितुमाह–अधःस्थित इति । दृष्टिमंडलाधोभागस्थिते दोष इत्यर्थः । समीपस्थं नैव पश्यति । तथोपरिस्थिते दोषे दूरस्थं च नैव पश्यतीति संबंधः । समंतत इति सर्वतः । स्थिते दोषे संकु-

तिमिराख्यः स वै दोषश्चतुर्थं पटलं गतः ॥
रुणद्धि सर्वतो दृष्टिं लिङ्गनाशमतः परम् ॥ ३८ ॥
अस्मिन्नपि तमोभूते नातिरूढे महागदे ॥
चन्द्रादित्यौ सनक्षत्रावन्तरिक्षे च विद्युतम् ॥
निर्मलानि च तेजांसि भ्राजिष्णून्यथ पश्यति ॥ ३९ ॥
स एव लिङ्गनाशस्तु नीलिका काचसंज्ञितः ॥
वातेन चापि रूपाणि भ्रमन्तीव च पश्यति ॥ ४० ॥

---

मधुकोशव्याख्या ।

वोति अन्यान्यरूपेणैव मिश्राणि । अनवस्थित इति अनियतावस्थान इत्यर्थः ॥ ॥ ३५-३७ ॥ चतुर्थपटलगतमाह—तिमिराख्य इत्यादि । आन्ध्योत्पादकतया तिमिरसाधर्म्यात्तिमिराख्य; दोषो रोगः, 'दोषा अपि रोगाख्यां लभन्ते' इत्यागमात्; स एव रोगः सर्वतो दृष्टिरोधाल्लिङ्गनाश उच्यते । लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गमिन्द्रियं दर्शनशक्तिः, तन्नाशोऽस्मिन्निति लिङ्गनाशः । लिङ्गनाशमित्यतः परतो वदन्तीति शेषः ॥ ३८ ॥ अस्मिन्नपि तमोभूत इति भूतशब्दः सादृश्ये, रूपस्यानुपलम्भादन्धकारसदृशे । नातिरूढे, नातिवृद्धे अतश्चन्द्रादित्यादीनि भास्वन्ति वस्तूनि पश्यति । अन्तरिक्षे चेत्यस्योपादानं भूमेस्तमोमयत्वात्, तत्र च तमोऽभिभवात् तादृशस्य चक्षुषो दर्शनाशक्तेः ॥ ३९ ॥ तस्यैव लिङ्गनाशस्य संज्ञान्तरमाह—स एव लिङ्गनाशस्त्वित्यादि । यस्तृतीयपटलस्थितः

आतङ्कदर्पणव्याख्या ।

लानि अन्योन्यरूपेण विमिश्राणि, अनवस्थित इति अनियतावस्थान इत्यर्थः ॥ ३५-३७ ॥ चतुर्थपटलगतमाह—तिमिराख्य इति । चतुर्थकालकास्थिश्रितस्तिमिरसाधर्म्यात्तिमिराख्यः, दोषो रोगः, दोषा अपि रोगाख्यां लभंते इत्यागमात्, स एव रोगः सर्वतो दृष्टिरोधाल्लिंगनाश उच्यते । लिंग्यते ज्ञायते इत्यनेनेति लिंगम् इंद्रियशक्तिः, तस्य नाशो यस्मिन्निति लिंगनाशः । लिंगनाशमतः परमित्यतः परतो वदंतीति शेषः ॥ ३८ ॥ अस्मिन्नपि तमोभूत इति । भूतशब्दः सादृश्ये, रूपस्यानुपलंभादंधकारभूते, नातिरूढे नातिवृद्धे, अतश्चंद्रादित्यादीनि भास्वंति पिंडीभूतानि ज्वलंतीव पश्यति । अंतरिक्षे चेत्यस्योपादानं भूमेस्तमोमयत्वात्तादृशस्य चक्षुषो दर्शनाशक्तेः ॥ ३९ ॥ तस्यैव लिंगनाशस्य लिंगान्तरमाह—स इति । यस्तृतीयपटलगतः काचसंज्ञितो दोषः, स एव चोपेक्षया चतुर्थपटले पुनर्लिंगनाशो नीलिकासंज्ञः । तुशब्दः पुनरर्थे यथोवाच निमिः—"काच इत्येष विज्ञेयो याप्यस्त्रिपटलस्थितः । चतुर्थपट-

मधुकोशव्याख्या ।

काचसंज्ञितो दोषः स एवोपेक्षया चतुर्थे पटले पुनर्लिङ्गनाशो नीलिका च । तुशब्दः पुनरर्थे । कुतः पुनरयमृजुरेव ग्रन्थो न लगति नीलिकाकाचाभ्यां पर्यायाभ्यां संज्ञितो नीलिकाकाचसंज्ञित इति; नैवम्, तन्त्रान्तरे तृतीयपटलस्थिते दोषे काचाभिधानात् यदाह निमिः—"काच इत्येष विज्ञेयो याप्यस्त्रिपटलोत्थितः । चतुर्थपटलप्राप्तो लिङ्गनाशः स उच्यते । प्रत्याख्येयश्च कफजो व्याधिः साध्यस्तु तद्विदा"—इति । अत्रापि तत्प्रत्ययात् तृतीयपटलस्थस्य काचसंज्ञा,चतुर्थपटलप्राप्तस्य प्रत्याख्येयत्वं प्रत्येतव्यम् । यत्पुनर्लिङ्गनाशोपादानं तत्सकलपर्यायज्ञापकार्थम् । गदाधरस्तु नीलिकाविशेषिता काचसंज्ञा नीलिकाकाचसंज्ञा इत्याह । एतेन तृतीयपटलस्थदोषे काचसंज्ञा, चतुर्थे तु सा नीलिकया विशिष्यते इति फलति । एकजातीयतया त्रिचतुःपटलयोरपि रोगाणां षट्त्वमेव, नतु द्वादशत्वम्; तेन न संख्यातिरेकः । इदमिदानीं चिन्त्यते,— तृतीयपटलस्थे दोषे काचसंज्ञा तिमिरसंज्ञा च, तर्हि कथं न षट्संख्याहानिः ? काचात्तिमिरस्य भिन्नत्वात्, उक्तं च 'षड्लिङ्गनाशाः' इति, अथ मन्यसे, तिमिरात् काचो न भिद्यते, तस्यावस्थान्तरत्वादिति; न, तद्विपरीतसाधकत्वाद्धेतोः; यतोऽभिष्यन्दशिरोत्पाताभ्यामधिमन्थशिराहर्षयोरवस्थान्तरत्वेऽपि भिन्नत्वं प्रतीयते । उच्यते, भवत्येवं, यद्यवस्थान्तरत्वेऽपि विशिष्टनामप्राप्तिस्तयोरिवास्य प्रथमनामपरित्यागात्

आतङ्कदर्पणव्याख्या ।

लप्राप्तो लिंगनाशः स उच्यते ॥ प्रत्याख्येयश्च कफजो व्याधिः साध्यस्तु तद्विदा ।" इति । अत्रापि तत्प्रत्ययात्तृतीयपटलस्थस्य काचसंज्ञा, चतुर्थपटलप्राप्तस्य च प्रत्याख्येयत्वं प्रत्येतव्यम् । गदाधरस्तु नीलिकाविशेषिता काचसंज्ञा संजाता यस्य स नीलिकाकाच इत्याह, एतेन तृतीयपटलस्थे दोषेपि काचसंज्ञा, चतुर्थे तु सा नीलिकया विशिष्यत इति फलति । एकजातीयतया तृतीयचतुर्थपटलगतानां रोगाणां तिमिरकाचनीलकाचसंज्ञा तद्गतामपि षट्त्वमेव, न तु द्वादशत्वम् । यथा सत्यपि यौवनत्वे यज्ञदत्तस्य नात्मनामहानिः, अतो न संख्यातिरेकः, संख्यातिरेकणैव षड्लिंगनाश इति । दोषविशेषेण रूपदर्शनत्वमाह—तत्रेति । व्याविद्धानि कुटिलानि । पित्तेन रूपदर्शनमाह—पित्तेनेति । खद्योतो ज्योतिरिंगणः, शक्रचाप इंद्रधनुः, गुणानिति रूपाणीत्यर्थः । शिखिनो मयूरान् । कफेन रूपमाह—गौरेति । श्वेतचामरशुभ्राणि, शुभ्रमेघसदृशानि । असूक्ष्माणि स्थूलानि । व्यभ्रे चैवाभ्रसंप्लवमिति अनभ्रे आकाशे मेघोन्नतिं पश्यति ॥ सलिलप्लावितानि स्तिमितानीत्यर्थः । रक्तेन रूपमाह—पश्येदिति । ननु रक्तेन कथं ससितानीत्युच्यते ? श्लेष्मणः सितरूपस्य दर्शितत्वात् । मैवम्, सितान्यपि कृष्णानि पीतानि च पश्यतीति व्याख्यानाददोषः । रक्तेन कृष्णपीतदर्शनं पित्तसधर्मकत्वाद्रक्तस्य । सन्निपातरूपमाह—सन्निपाते-

१ एतच्च—"तत्र वातेन रूपाणि" इतिपाठाभिप्रायेण ।

आविलान्यरुणाभानि व्याविद्धानीव मानवः ॥
पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान् ॥ ४१ ॥
नृत्यतश्चैव शिखिनः सर्वं नीलं च पश्यति ॥
गौरचामरगौराणि श्वेताभ्रप्रमितानि च ॥ ४२ ॥
कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च ॥
पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रमेवाभ्रसंप्लुवम् ॥ ४३ ॥
सलिलप्लावितानीव परिजाड्यानि मानवः ॥
पश्येद्रक्तेन रक्तानि तमांसि विविधानि च ॥ ४४ ॥
स सितान्यपि कृष्णानि पीतान्यपि च मानवः ॥
सन्निपातेन चित्राणि विप्लुतानीव पश्यति ॥ ४५ ॥
बहुधा च द्विधा चापि सर्वाण्येव समन्ततः ॥
हीनाधिकाङ्गान्यपि वा ज्योतींष्यपि च भूयसा ॥ ४६ ॥

---

मधुकोशव्याख्या ।

स्यात्, न चैवं, 'तिमिराख्यः स वै दोषः' इत्यभिधानात्, तथाच 'तिमिरे रागिणि'—इति वचनात्; तस्मान्नास्यावस्थान्तरे पूर्वनामपरित्यागः; ततस्तिमिरात् काचस्यावस्थान्तरत्वेऽपि अनन्यत्वं साधु, यथा—सत्यपि यौवनत्वे यज्ञदत्तस्य न स्वाभिधेयहानिः' अतो न संख्यातिरेकप्रसंगः इति॥४०॥दोषविशेषेण रूपविशेषदर्शनमाह—वातेनेत्यादि। अविशेषेण यदुक्तमेतत् वाते तत् सर्वपटलेषु संबध्यते, तुल्यत्वान्न्यायस्य। व्याविद्धानीव कुटिलानीव।खद्योतो ज्योतिरिङ्गणः, शक्रचाप इन्द्रधनुः,गुणान् रूपाणि,आदित्यादीनां रूपाणीत्यर्थः। शिखिनो मयूरान्। सलिलप्लावितानीव परिजाड्यानीति सलिलप्लवनेनैव स्तिमितानीत्यर्थः।ससितानीति श्वेतानि। ननु, रक्तेन कथं सितानीत्युच्यन्ते? श्लेष्मणा सितरूपस्य दर्शितत्वात् । नैवं, सितान्यपि कृष्णानि पीतानि पश्यतीति व्याख्यानाददोष'; स इति मानवः । रक्तेन कृष्णपीतदर्शनं पित्तसधर्मकत्वाद्रक्तस्य । चित्राणीति नानावर्णानि । विप्लुतानीवेति विपरीतानि । विपरीतत्वमेव विवृणोति—बहुधेत्यादि । अयमर्थः—सन्निपातेन पूर्वप्रकारेण बहुविधानि द्विविधानि वा सर्वाणि

आतङ्कदर्पणव्याख्या ।

नेति । चित्राणि नानावर्णानि, विप्लुतानि विपरीतानि, विपरीतत्वमेव विवृणोति । बहुधा चेत्यादि । अयमर्थः—बहुधा द्विधा वा सर्वाणि द्रव्याणि पश्यति, तृतीयपटलगतानि हीनाधिकांगान्य-

**पित्तं कुर्यात्परिम्लायि मूर्च्छितं पित्ततेजसा ॥**
**पीता दिशस्तु खद्योतान्भास्करं चापि पश्यति ॥ ४७ ॥**
**विकीर्यमाणान्खद्योतैर्वृक्षांस्तेजोभिरेव वा ॥**
**वक्ष्यामि षड्विधं रागैर्लिङ्गनाशमतः परम् ॥ ४८ ॥**

मधुकोशव्याख्या ।

द्रव्याणि पश्यति, तृतीयपटले हीनाधिकाङ्गान्यपीति गदाधरः ॥ ४१–४६ ॥ पित्तेनापरं परिम्लायिसंज्ञकं तिमिरमाह–पित्तं कुर्यादित्यादि । परिम्लायीति परिम्लायि तिमिरं, एतच्च रक्तमूर्च्छितपित्तकृतं पीतं नीलं बोद्धव्यम् । यदाह सात्यकिः–"एवमेव तु विज्ञेया नीलाः पित्तसमुत्थिताः । रक्तपित्तोत्थिताः पीताः" इति । अत्र वचने काच इति विशेष्यत्वेन बोद्धव्यम् । मूर्च्छितं पित्ततेजसेति पित्तस्य तेजो रक्तं, प्रसादरूपत्वात्; तेन मिश्रितम् । अन्ये तु रक्ततेजसेति पठन्ति रक्तस्य तेजो बलं रक्ततेजः; कश्चिद्भक्ततेजसेति पठन्ति, भक्तस्य अन्नस्य तेजसा प्रसादेन रसेनेत्यर्थः । रक्ततेजसेत्यत्रापि रक्तार्थं तेजो रक्ततेजः, रस एवाभिधातुं शक्यते; पित्ततेजसेत्यत्रापि पित्तार्थं तेजः पित्ततेजः,पित्तशब्देन समानत्वेन तत्प्रसादत्वेन च रक्तमभिधाय पूर्व एवार्थः कर्तुं शक्यते । तथाच विदेहः–"पित्तं रक्तप्रसादेन मूर्च्छयित्वा तु मारुतम्" इत्यारभ्य "एष याप्यः स्मृतः काचो म्लायी नाम्ना शरीरिणाम्" इति । इदं त्वन्यत्र रक्तपित्ताभ्यां पठ्यते यदुक्तम्–"विदधाति परिम्लायि पित्तं रक्तेन संगतम् । तेन पीता दिशः पश्येदुद्यन्तमिव भास्करम्" इति । अत्रापि यदि रक्तशब्देन रक्तार्थं यत्तद्रक्तमिति कुसृष्ट्या रसोऽभिधीयते, तदा पूर्वेण सह समानार्थमेवैतद्वचनं स्यादिति । परिम्लायिरोगे तिमिरवतः पुंसो रागग्रहणे लिङ्गमाह–पीता दिश इत्यादि ॥ ४७ ॥ विकीर्यमाणानिति आच्छाद्यमानान् । याप्यश्चायं, तथाहि सात्यकिः–"तृतीयं पटलं

आतङ्कदर्पणव्याख्या ।

पीति ॥ ४०–४६ ॥ पित्ते ( त्तरक्ते ) न चापरं परिम्लायिसंज्ञितं तिमिरमाह–पित्तमिति। परिम्लायि तिमिरं कुर्यात् । एतच्च रक्तमूर्च्छितं पीतं नीलं बोद्धव्यम् । यदाह सात्यकिः–"एवमेव तु विज्ञेया नीलाः पित्तसमुद्भवाः । रक्तपित्तोत्थिताः पीताः" इति । मूर्च्छितं पित्ततेजसेति पित्तस्य तेजो-रक्तम्, तस्य प्रसादरूपत्वात्, तेन संश्रितम् । अन्ये रक्ततेजसेति पठंति, रक्तस्य तेजोबलं रक्ततेजः, तेन रक्ततेजसा रक्तप्रसादेन । कश्चिद्भक्ततेजसेति पठति, भक्ततेजसा आहारप्रसादेन रसेनेत्यर्थः। रक्ततेजसेत्यत्र रक्तार्थं तेजो रक्ततेजः, इदं त्वन्यत्र रक्तपित्ताभ्यां पठ्यते । यदुक्तम्–"विदधाति परिम्लायि पित्तं रक्तेन संगतम् । तेन पीता दिशः पश्येदुद्यंतमिव भास्करम्" इति । तस्मिन् रूपग्रहणलिंगमाह–पीता दिश इत्यादिना ॥ ४७ ॥ विकीर्यमाणान् आच्छाद्यमानान्,

**रागोऽरुणो मारुतजः प्रदिष्टो म्लायी च नीलश्च तथैव पित्तात् ॥**
**कफात्सितः शोणितजः सरक्तः समस्तदोषप्रभवो विचित्रः॥४९ ॥**
**अरुणं मण्डलं दृष्ट्यां स्थूलकाचारुणप्रभम् ॥**
**परिम्लायिनि रोगे स्यान्म्लायि नीलं च मण्डलम् ॥ ५० ॥**

---

मधुकोशव्याख्या ।

प्राप्ते तिमिरे रागि जायते । अरागि तिमिरं साध्यमाद्यं पटलमाश्रितम् । कृच्छ्रं द्वितीये पटले तृतीये याप्यमुच्यते" इति ॥ वातादिभेदेन षड्विधं तिमिरमभिधाय रागैः षड्विधमाह-वक्ष्यामि षड्विधं रागैरित्यादि । सर्वानुगां तिमिरसंज्ञां विहाय लिङ्गनाशसंज्ञया कीर्तनं रागप्रकर्षप्राप्तेः ॥ ४८ ॥ वातादिरागोद्देशमाह-रागोऽरुण इत्यादिना । म्लायी च नीलश्च तथैव पित्तादिति म्लायी पीतनीलो वर्णः । ननु, शेषे परिम्लायि पठितं तत् कथमधुना वातरोगस्यानन्तरोक्तिः । नैवं, रागकाले वायुरप्यत्रांशेन व्याप्रियते इति प्रतिपादनार्थमिति कार्तिकः । पैत्तिकरूपद्वयस्यैकत्राभिधानेन लाघवं स्यादिति युक्तं, यत् तु प्रागेव न कृतं, तदेकविकारशंकानिरासार्थम् ॥ ॥ ४९ ॥ उद्देशक्रमेण वातिकरागस्यैव विशिष्टलक्षणमाह-अरुणं मण्डलमित्यादि । अरुणं मण्डलं कीदृशं भवतीत्यत आह-स्थूलकाचारुणप्रभमिति । स्थूलकाचस्येव अरुणा प्रभा यस्य तत्तथा; एतेन बाहुल्यमरुणत्वं च प्रतिपाद्यते । काचोऽत्रारुणो विवक्षितः ॥ परिम्लायिनो विशिष्टलिङ्गमाह-परिम्लायिनीत्यादिना । अत्र गदाधरस्तु 'रक्तजं मण्डलं दृष्ट्यां स्थूलकाचानलप्रभम्' इति पठित्वा एतदपि परिम्लायिलक्षणमाह, व्याचष्टे च-बाहुल्येन स्थूलकाचस्येव ( वर्णेन ) अनलस्येव प्रभा यस्य तत्तथेति, अनलप्रभत्वेन पीतं मण्डलं भवति, पीतं चेषन्नीलं बोद्धव्यं, 'म्लायि नीलं च मण्डलम्' इत्यभिधानात्, तथा 'पित्तान्मण्डलमानीलं कांस्याभं पीतमेव च'

आतङ्कदर्पणव्याख्या ।

याप्यश्चायं विकारः, तथाहि सात्यकिः-"तृतीयं पटलं प्राप्ते तिमिरे रागि जायते । अरागि तिमिरं साध्यमाद्यं पटलमाश्रितम् ॥ कृच्छ्रं द्वितीये पटले तृतीये याप्यमुच्यते" इति । वातादिभेदेन षड्विधं तिमिरमभिधाय रागैः षड्विधमाह-वक्ष्यामीति । सर्वानुगां तिमिरसंज्ञां विहाय लिंगनाशसंज्ञाया; संकीर्तनं रागप्रकर्षप्राप्तेः ॥ ४८ ॥ वातादिरागोद्देशमाह--राग इति । म्लायी पीतनीलो वर्णः विचित्रोऽतो नानावर्णः, ननु, शेषे परिम्लायि पठितं तत्कथमधुना वातरोगानंतरं तस्योक्तिः? नैवम्, रागकाले वायुरप्यत्रांशेन व्याप्रियत इति प्रतिपादनार्थमिति कार्त्तिकः ॥ ४९ ॥ परिम्लायितिमिररोगमाह-अरुणमिति । स्थूलकाचस्येवारुणा प्रभा यस्य

**दोषक्षयात्स्वयं तत्र कदाचित्स्यात्तु दर्शनम् ॥**
**अरुणं मण्डलं वाताच्चञ्चलं परुषं तथा ॥ ९१ ॥**
**पित्तान्मण्डलमानीलं कांस्याभं पीतमेव च ॥**
**श्लेष्मणा बहुलं पीतं शंखकुन्देन्दुपाण्डुरम् ॥ ९२ ॥**

---

मधुकोशव्याख्या ।

इत्युक्तम्, आनीलमीषन्नीलमित्यर्थः । म्लायीति क्षयि, (?) म्लानमिति कार्तिकः ॥ ॥ ९० ॥ दोषक्षयादिति कर्मक्षयात्, सत्यपि दोषरूपत्वे दर्शनसद्भावात् । ननु, किं तर्हि दोषरूपं तादृशमेवावतिष्ठते उत क्षीणं वा ? तत्र न तावदाद्यः पक्षः, दोषाणां कृतकार्याणां तथात्वे दर्शनस्यासंगतत्वात्; अथ द्वितीयस्तदा दोषस्यैव क्षयादित्यापातितम्; किमिति कर्मक्षयादिति स्वीक्रियते ? नैवं, विना दोषप्रतीकारं दर्शनोदयात्, अत्र परमेवं विकारस्वभावादिति कार्तिकः । अन्ये तु कालवशात् वातादिदोषस्यैव क्षयात् कदाचिद्दर्शनं स्यादित्याहुः, यतः कालादिजमपि विशेषं क्वचिल्लक्षणत्वेन पठत्येव, दोषशब्देन च कर्मणोऽभिधानमप्रसिद्धं; किंवा दोषक्षये एव कदाचित् कर्मक्षयो हेतुरिष्यतां कर्मणश्च कदाचित् क्षयो वैचित्र्यात् । अथात्रैव कुत एवम् ? उच्यते; अस्यैवंविधकर्मजन्यत्वादिति।गदाधरपाठे रक्तजमित्यत्र रक्तमित्युपलक्षणं;तेन रक्तपित्तरागोऽरुणो मारुतज इत्यादि सूत्रं पूर्वोक्तं विवृणोति—अरुणं मण्डलं वातादित्यादि ॥ ९१ ॥ पित्तान्मण्डलमानीलमिति । आनीलमीषन्नीलं पीतमेव, तेन रक्तसंबन्धे सति कांस्याभम् । पीतमेव चेति रससंबन्धे पीतमेव, कांस्याभमापाण्डुपीतमित्यर्थः । केचिदत्र कफज पठन्ति,—"संकुचत्यातपेऽत्यर्थं छायायां विस्तृतो भवेत्"—इति । शोणितजे प्रवालेत्यादौ प्रवालं स्वनामख्यातं तदाभं, पद्मपत्राभं च रक्तपद्मपुष्पदलाभम् । त्रिदोषजे चित्र इत्यत्र यथास्वं वातादिवर्णविभेदेन चित्रत्वं बोद्धव्यं, यथास्वमित्यस्य वक्ष्यमाणस्यात्रापि संबन्धात्; तेनायमर्थः—यथायथं वातादीनां वर्णभेदेन चित्रवर्णो भवति, उद्देशोक्तवर्णचित्रत्वे साक्षादेतादृशविवरणाभाव इति

आतङ्कदर्पणव्याख्या ।

तत्तथा । काचोऽत्रारुणो विवक्षितः ॥ ९० ॥ परिम्लायिनि तिमिरे दोषक्षयात् कदाचित्तत्र दर्शनं भवतीत्याह—दोषक्षयादिति । कालादिना वातादिदोषस्यैव क्षयात् । अन्ये कर्मसहचरितवातादिदोषक्षयात् । तेषामेव मंडलगतरागमाह—अरुणमिति ॥ ९१ ॥ कांस्याभम्, आपांडु ईषत्पीतमित्यर्थः । सर्वं चैतत्पित्तम्लायिविषयम् । श्लेष्मणा बहुलमित्यादिकफलक्षणे बहुलं घनम् ॥ ९२ ॥

---

१ स्निग्धमिति पाठान्तरम् ।

चलत्पद्मपलाशस्थः शुक्लो बिन्दुरिवाम्भसः ॥
( संकुचत्यातपेऽत्यर्थं छायायां विस्तृतो भवेत् )
मृज्यमाने च नयने मण्डलं तद्विसर्पति ॥ ५३ ॥
प्रवालपद्मपत्राभं मण्डलं शोणितात्मकम् ॥
दृष्टिरागो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे ॥
यथास्वं दोषलिङ्गानि सर्वेष्वेव भवन्ति हि ॥ ५४ ॥
(तथा नरः पित्तविदग्धदृष्टिः कफेन चान्यस्त्वथ धूमदर्शी ।
यो ह्रस्वजात्यो नकुलान्धता च गम्भीरसंज्ञाच्च तथैव दृष्टिः ) ॥
षड् लिङ्गनाशाः षडिमे च रोगा दृष्ट्याश्रयाः षट् च षडेव वाच्या॥
पित्तेन दुष्टेन सदा तु दृष्टिः पीता भवेद्यस्य नरस्य किंचित्॥५५॥

मधुकोशव्याख्या ।

विशेषः । यथास्वं दोषलिङ्गानीत्यस्याभिधानं न्यायसिद्धस्यैवार्थस्य द्योतनार्थम् । दोषलिङ्गानि वातादीनां क्रमेणारुणादिलिङ्गान्युक्तेषु ज्ञातव्यानि ॥ ५२---५४ ॥ अतःपरमुक्तवक्ष्यमाणविकारयोः संख्याभिधानार्थमाह—षड् लिङ्गनाशाः षडिमे च रोगा दृष्ट्याश्रयाः षट् च षडेव वाच्या इति, षड् लिङ्गनाशा इत्युक्तानुवादोऽयं, षडिमे च रोगा इति पित्तविदग्धदृष्ट्यादयो वक्ष्यमाणाः । ननु, उक्तानुवादो युक्तः, वक्ष्यमाणानां पुनः किमर्थं संख्योक्तिः ? नैवम्, पित्तकफविदग्धदृष्ट्यावस्थान्तराभ्यां दिवान्धरात्र्यन्धाभ्यां संख्याधिक्यनिरासार्थं, अतएव षडेव चेत्यवधारणं कृतं, षट् च षडेव इति मिलित्वा द्वादश, अमुं च ग्रन्थं केचिदत्र संग्रहे पठन्त्येव ॥ पित्तविदग्धदृष्टिलिङ्गमाह—पित्तेन दुष्टेनेत्यादिना । दृष्टिः पीता भवेदिति प्रथमद्वितीययोः पटलयोरिति गम्यते, यतः परतः 'प्राप्ते तृतीयं पटलम्'—इत्यभिधास्यति । ननु

आतङ्कदर्पणव्याख्या ।

कमलपत्रस्थजलबिंदुसदृशम्, आतपेत्यर्थं संकुचति, छायायां विस्तृतो भवेत्, मृज्यमाने नेत्रे तन्मंडलं प्रसरति ॥ रक्तजमाह—प्रवालेति । प्रवालं स्वनामाख्यातं तदाभम्, पद्मपत्राभं रक्तकमलदलभम् । त्रिदोषजमाह—दृष्टिराग इति । यथास्वमित्यस्य वक्ष्यमाणस्यात्रापि संबन्धः तेनायमर्थः—यथायथं वातादिना चित्रो वर्णो भवति ॥ उद्देशेन सर्वेषां लक्षणमाह—यथास्वमिति । वातादीनां क्रमशारुणादिलिंगान्युक्तेषु ज्ञातव्यानि ॥ ५४ ॥ अतः परमुक्तवक्ष्यमाणविकारयोः संख्याभिधानमाह—तथेति । पित्तविदग्धदृष्टिः इत्यादिना दिवांधः, कफेन चान्य इति रात्र्यंधः, तथा धूम-

**पीतानि रूपाणि च तेन पश्येत्स वै नरः पित्तविदग्धदृष्टिः ॥**
**प्राप्ते तृतीयं पटलं तु दोषे दिवा न पश्येन्निशि चेक्षते सः ॥५६॥**
**रात्रौ च शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत् ॥**
**तथा नरः श्लेष्मविदग्धदृष्टिस्तान्येव शुक्लानि तु मन्यते सः॥५७॥**
**त्रिषु स्थितोऽल्पः पटलेषु दोषो नक्तान्ध्यमापादयति प्रसह्य ॥**
**दिवा स सूर्यानुगृहीतदृष्टिः पश्येत्तु रूपाणि कफाल्पभावात् ५८॥**
**शोकज्वरायासशिरोऽभितापैरभ्याहता यस्य नरस्य दृष्टिः ॥**
**धूम्रांस्तथा पश्यति सर्वभावान्स धूमदर्शीति नरः प्रदिष्टः॥ ५९ ॥**

मधुकोशव्याख्या ।

यद्येवं कथं तिमिरादस्याः पार्थक्यम्? उच्यते, तृतीयपटलप्राप्तिमन्तरेण वर्णासङ्गावात्। एतच्च सति वर्णे पटलान्तरगतदोषलिङ्गाभावात् प्रत्येतव्यम्। अस्मिन्नेव व्यवस्थाने तादृक् स्वरूपो दोषः कथमन्यविकारं करोतीति नाशङ्कनीयं, तज्जनककर्मणो भिन्नत्वेन सामग्रीभेदात्। अयं दिवान्धः, दिवा न पश्येदिति वचनात्। तानीति रूपाणि। दोषे पित्ते ॥ श्लेष्मविदग्धदृष्टिलिङ्गमाह—तथा नरः श्लेष्मविदग्धदृष्टिरित्यादिना। एतां च प्रथमद्वितीयपटलाश्रितः श्लेष्मा जनयति, परतास्त्रिष्विन्त्युक्तेः। तानीति रूपाणि। एषु स्थितोऽल्प इत्यनेन दिवादर्शनं प्रत्यानुकूल्यं ख्याप्यते, यदि हि अनल्पदोषः स्यात्तदा दिवापि दर्शनं न भवेदेव। दोषोऽत्र कफः, तस्यैव प्रक्रान्तत्वात्; अयं नक्तान्धः ॥ ५५—५८ ॥ धूमदर्शिनो लिङ्गमाह—शोकज्वरायासेत्यादिना। शोकादिभिः कारणैः कुपितेन पित्तेनाभ्याहता उपहता

आतङ्कदर्पणव्याख्या ।

दर्शी ह्रस्वजात्यनकुलांधगंभीरसंज्ञेति। दृष्टिरोगाः वक्ष्यमाणाः पूर्वोक्ताः षट्, लिंगनाशा दिवांधादयो वक्ष्यमाणाः षट् विकाराः, एवं दृष्ट्याश्रया रोगा द्वादश ज्ञेयाः। षड्वेत्येवकारेण विह्नविदग्धदृष्टेरवस्थांतराभ्यां दिवारात्र्यंधाभ्यां संख्याधिक्यनिरासार्थम्। पित्तविदग्धदृष्टिलक्षणमाह—पित्तेनेति। दृष्टिः पीता भवेदिति प्रथमद्वितीयपटलयोर्दोषगतिरवगम्यते। यतः परस्तः 'प्राप्ते तृतीयं पटलम्' इत्यभिधास्यांति। पित्तविदग्धदृष्टेरवस्थांतरं दिवांधमाह—प्राप्त इति। 'अयं दिवांधो दिवा न पश्येत्' इति वचनात्, दोषे पित्ते तु शीतानुग्रहात् रूपाणि पश्येत्॥ श्लेष्मविदग्धदृष्टिमाह—तथेति। यः श्लेष्मविदग्धदृष्टिः स तानि रूपाणि शुक्लानि पश्यति, अत्रापि प्रथमद्वितीयपटलाश्रितत्वं बोद्धव्यम्॥ ५५—५७॥ अवस्थांतरं रात्र्यंधमाह—त्रिष्विति। त्रिषु पटलेषु स्थितोऽल्पदोषो नक्तांध्यं जनयति, रात्रौ न पश्यतीत्यर्थः। सूर्यानुग्रहात् कफाल्पभावात् स दिवानुपश्यति ॥ ५८ ॥ धूमदर्शिनमाह—शोकेति। शोकादिभिः कारणैः कुपितेन पित्तेनाभ्याहता

**यो ह्रस्वजाड्यो दिवसेषु कृच्छ्राद्ध्रस्वानि रूपाणि च तेन पश्येत्॥**
**विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत् ॥**
**चित्राणि रूपाणि दिवा स पश्येत्स वै विकारो नकुलान्ध्यसंज्ञः ६०**

मधुकोशव्याख्या ।

दृष्टिरिति प्रत्येतव्यम्, अस्य सुश्रुते रोगसंग्रहे पैत्तिकगणेऽभिधानात् । अयं च रोगो बाह्यपटलस्थेन दोषेण जन्यत इति गदाधरः, तृतीयपटलाश्रितदोषेणेति कार्त्तिकः । दिवा धूमान् पश्यति, न तु नक्तं; तदा पित्तस्य क्षीणत्वादिति व्याख्यानयन्ति ॥५९॥ ह्रस्वजाड्यलक्षणमाह--यो ह्रस्वजाड्य इत्यादि । तेनेति ह्रस्वजाड्येन ह्रस्वानि रूपाणि दिवा पश्येत् यः स ह्रस्वजाड्य इति योजना । अत्र दोषो दृष्टिमध्यगतः। यदुक्तम्,-"दृष्टिमध्यगते दोषे महत् ह्रस्वं च पश्यति"-इति । अयं पैत्तिकः नकुलान्ध्यसंज्ञमाह-विद्योतते यस्येत्यादिना । नकुलस्य यद्वत् यथा दृष्टिर्विद्योतते वर्णेन प्रतिभासते तथास्येत्यर्थः । अतः सर्वदृष्टिमण्डलगतो रागः सर्वदोषवर्णश्च, दोषाभिपन्नेत्यत्र दोषशब्दस्याविशेषित्वात् अभिशब्दस्याभिव्याप्त्यर्थस्य प्रयोगात् । एतौ ह्रस्वजाड्यनकुलान्धौ चतुष्पटलस्थितदोषजन्यौ सरागौ न साध्यौ । तथाच विदेहः,-"नक्तमन्धास्तु चत्वारो ये पुरस्तात्प्रकीर्तिताः । तेषामसाध्यो नकुलो ह्रस्वजाड्यस्तथैव च ॥ विशेषेण भवेयातां द्वौ चतुष्पटलाश्रितौ । तौ च संप्राप्त रागत्वादसाध्यौ परिकीर्तितौ" इति । एतौ च राज्यन्धौ प्रत्येतव्यौ । दिवाह्रस्वचित्ररूपदर्शनाभिधानेन रात्रावदर्शनप्रतीतेः, विदेहेन तु नक्तान्ध्ये त्रित्वेऽपि चत्वार इत्युक्तम् । नक्तान्ध्यबाहुल्येन दिवान्ध्येऽपि तत्प्रयोगात्; छत्रिणो

आतङ्कदर्पणव्याख्या ।

उपहता दृष्टिरिति प्रत्येतव्यम् । स संधूमकान्[1] धूमेन सह वर्त्तत इति सधूमकास्तान् पदार्थान् पश्यति । अयं च रोगो वाह्येन पटलस्थेन दोषेण जन्यत इति गदाधरः । द्वितीयपटलाश्रितेन दोषेणेति कार्त्तिकः । दिवा धूमान् पश्यति, न तु रात्रौ पित्तस्य क्षीणत्वात् इति व्याख्यानयंति ॥ ५९ ॥ ह्रस्वजाड्यमाह-यइति । तेन ह्रस्वजाड्येन ह्रस्वानि रूपाणि दिवा पश्येद् यः स ह्रस्वजाड्य इति योजना । अत्र दोषो दृष्टिमध्यगः । यदुक्तं-"दृष्टिमध्यस्थिते दोषे महद्ध्रस्वं च पश्यति" इति । नकुलांध्यमाह-विद्योत इति । नकुलस्य दृष्टिः विद्योतते प्रतिभासते वर्णेन यथा तथा यस्येत्यर्थः । अत्र सर्वदृष्टिमंडलगतो रागः सर्वदोषवर्णश्च अभिपन्नेति । अभिशब्दस्याभितः प्राप्त्यर्थस्य प्रयोगात् दिवा पश्येदित्युक्तत्वात् रात्रौ न पश्यतीत्यवगंतव्यम्।एतौ ह्रस्वजाड्यनकुलांधौ चतुष्पटलस्थितदोषजन्यौ सरागौ न साध्यौ च, तथा विदेहः-"नक्तमंधास्तु चत्वारः पुरस्तात्प्रकीर्तिताः । तेषामसाध्यो नकुलो ह्रस्वजाड्यस्तथैवच ॥ विशेषेण भवेयातां तौ चतुष्पटला-

१ "धूम्रांस्तथा" इत्यत्र "सधूमकान्" इति पाठा० ।

**दृष्टिर्विरूपा श्वसनोपसृष्टा संकोचमभ्यन्तरतस्तु याति ।**
**रुजावगाढा च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञाः ॥६१॥**
**बाह्यौ पुनर्द्वाविह संप्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च ॥**
**निमित्ततस्तत्र शिरोऽभितापाज्ज्ञेयस्त्वभिष्यन्दनिदर्शनैः सः ६२**

मधुकोशव्याख्या ।

गच्छन्तीतिवत् ॥ ६० ॥ गम्भीरिकालक्षणमाह--दृष्टिर्विरूपेत्यादि । विरूपा विकृता । श्वसनोपसृष्टा वातोपगता, संकोचमभ्यन्तरतस्तु यातीति अन्तःसंकोचमेति निमज्जतीत्यर्थः । संकुच्यतेऽभ्यन्तरतस्तु यातीति पाठान्तरेऽप्ययमेवार्थः, इयमविशेषोक्तिः । सकलपटलगतवातजन्या असाध्या, सुश्रुते गम्भीरिका तथेति निर्देशात् ॥ ॥ ६१ ॥ तदेवं शारीरान् द्वादशदृष्टिगतविकारानभिधाय निमित्तानिमित्तभेदादागन्तुबाह्यजौ नयनविकारौ दर्शयन्नाह—बाह्यौ पुनर्द्वाविहेत्यादि । संप्रदिष्टौ कथितावौपद्रविकाध्याये 'बाह्यजौ च विज्ञेयौ' इत्यादिना । बहिर्भवौ बाह्यौ; आगन्तू इत्यर्थः । तत्र निमित्तं दर्शयन्नाह--निमित्ततस्तत्रेत्यादि । शिरोऽभितापादिति सर्वतस्तप्यते येन विषकुसुमगन्धवाहिपवनस्पर्शेन स शिरोऽभितापस्तस्मात्, तेन समस्तशिरस उपतापान्नयनगतरुधिराधिककोपः दृष्टेरपि शक्तेर्व्याघातः । अभिष्यन्दनिदर्शन इति रक्ताभिष्यन्दलिङ्ग इति गदाधरः, सुश्रुते रोगसंग्रहे सर्वजगणे द्वयोरप्येतयोः पाठात् सन्निपातजाभिष्यन्दलक्षण इति कार्तिकः । अनिमित्तमाह—सुरर्षिगन्धर्वेत्यादि ।

आतङ्कदर्पणव्याख्या ।

श्रितौ। तौ च संप्राप्तरागत्वात्तस्मादेतौ न सिद्ध्यतः॥" ॥ इति ॥ ६० ॥ गंभीरिकामाह—दृष्टिरिति । विरूपा विकृता । श्वसनोपसृष्टा वातोपद्रुता । अंतः संकुच्यत इति अंतः संकुच्यते निमज्जतीत्यर्थः । 'संकोचमभ्यंतरतस्तु याति' इति पाठांतरम् । तत्रापि स एवार्थः ॥ ६१ ॥ एवं दृष्टिगता द्वादश कथिता, बाह्यौ सनिमित्तानिमित्तभेदाद् ( संज्ञौ ) लिंगनाशावाह—बाह्याविति । तत्र तयोर्मध्ये निमित्ततः कथ्यत इत्यर्थः । शिरोभितप्यते येन विषकुसुमगंधवाहिपवनस्पर्शेन शिरोभितापः, तस्मात् तेन समस्तमस्तकस्योपघातान्नयनगतरक्तकोपः दृष्टेरपि शक्तिव्याघातः । अभिष्यंदनिदर्शनैरिति । रक्ताभिष्यंदलक्षणैरिति गदाधरः । सन्निपाताभिष्यंदलक्षणैरिति कार्तिकः । अभिघातजमाह—विदीर्यत इति । विदीर्यते द्विधा भवति, सीदति म्लानीभवति, हीयते हीनाभवति, अभिघातो लगुडलोष्टादिजः ॥ अनिमित्तजमाह—सुरर्षीति । एतेषां संदर्शनेन हन्येत व्याहन्येत ।

१ अस्य "संकुच्यतेऽभ्यन्तरतस्तु याति" इत्येव मुख्यः पाठः ।

२ तृतीयान्त एवास्येष्टः पाठः ।

( विदार्यते सीदति हीयते वा नृणाममीघातहता च दृष्टिः ॥ )
सुरर्षिगन्धर्वमहोरगाणां संदर्शनेनापि च भास्करस्य ॥ ६३ ॥
हन्येत दृष्टिर्मनुजस्य यस्य स लिङ्गनाशस्त्वनिमित्तसंज्ञः ॥
तत्राक्षि विस्पष्टमिवावभाति वैदूर्यवर्णा विमला च दृष्टिः ॥६४॥
प्रस्तार्यर्म तनु स्तीर्णं श्यावं रक्तनिभं सिते ॥
सश्वेतं मृदु शुक्लार्म शुक्ले तद्वर्धते चिरात् ॥ ६५ ॥

मधुकोशव्याख्या ।

अनुपलभ्यमानसुरादिदर्शननिमित्तमाह— । संदर्शनेन सम्यग्दर्शनेन, हन्येत हन्तुं संभाव्येत, न त्ववश्यं हन्येत इत्यभिप्रायः । दृष्टिरिति दर्शनमुपलब्धिरित्यर्थः, न तु दृष्टिमण्डलम्, अस्यादृष्टिगतविकारत्वात् । लिङ्गनाशप्रयोगश्चात्र रूपग्रहणाभावसामान्यान्न तु रूढ्या, तस्य चतुर्थपटलस्थतिमिर एव रूढत्वात् । तच्चेदं दर्शनं किमभिष्यन्दवत् सकलगोलकोपघातकं तिमिरत्वाद् दृष्टिमात्रोपघातकं वेति शंकानिरासार्थमाह—तत्राक्षीत्यादि । विस्पष्टमिवेति पूर्वावस्थातो विशेषेण प्रसन्नमिव गोलकावच्छिन्नं चक्षुरवभासते । दृष्टिरपि वैदूर्यवर्णा श्यावा दृष्टिः प्रकृतिवर्णेत्यर्थः । विमलेति विगतकाचादिमला । अयं तात्पर्यार्थः—पूर्वावस्थातः शक्तिमात्रमुपहन्यते, यतो देवादयो हि अवयवमदूषयन्त एव शक्तिमात्रमुपघ्नन्ति । यदुक्तं चरके—"देवाद्योऽष्टौ हि महानुभावा न दूषयन्तः पुरुषस्य देहम् । विशन्त्यदृश्यास्तरसा यथैव छायातपौ दर्पणसूर्यकान्तौ" इति । एतौ च बाह्यजौ दृष्ट्याधानविरूपणीयतया दृष्टिगतावेव, अत एव तदधिकारनिर्दिष्टौ, शारीराभिप्रायेण द्वादशविधमुक्तं, तेन न संख्यातिरेकः, द्वावप्येतावसाध्यौ ॥ ६२–६४ ॥ अथ मण्डलगतनिदानाभिधानपारिशेष्याद् दृष्टिगतानन्तरं शुक्लमण्डलवर्त्मपक्ष्ममण्डलगतानां निदानाभिधानावसरप्राप्तौ वर्त्मादिमण्डलप्रतियोगितया शुक्लमण्डलस्यान्तर्गतत्वात् सौकुमार्येणानन्तरं कृत्वा च निदानोद्देशारम्भः । तत्र प्रस्तारिशब्दाभिधानस्य अर्मणो लक्षणमाह—प्रस्तारीत्यादि ।

आतङ्कदर्पणव्याख्या ।

नयनोपघातमंतरेण दर्शनशक्तिमात्रमुपहतमिति दर्शयन्नाह—तत्राक्षीत्यादि विस्पष्टं प्रसन्नम् । वैदूर्यवर्णा श्यामप्रकृतिवर्णा इत्यर्थः । विमला दोषजनिततिमिररागजनितकाचादिरहिता । ननु, कथम् इंद्रियस्य भौतिकस्यादुष्टस्यापि शक्तिनाशः ? उच्यते,—देवादयोष्टौ भौतिकेंद्रियमदूषयत एव शक्तिमुपघ्नंति । यदुक्तं चरके—"देवादयोऽष्टौ हि महाप्रभावा न दूषयंतः पुरुषस्य देहम् । विशंत्यदृश्यास्तरसा यथैव छायातपौ दर्पणसूर्यकान्तौ ॥" इति । वातिकः, पैत्तिकः, श्लैष्मिकः, रक्तजः, सान्निपातिकः, विम्लायि, एवं षड्लिंगनाशाः । दिवांधः, रात्र्यंधः, धूमदर्शी ह्रस्वजाड्यः, नकुलांधः, गंभीरिका, एवमपरे दृष्टिरोगाः, एवं द्वादश । बाह्यावपरौ द्वौ सनिमित्तानिमित्तजौ, एवं चतुर्दश दृष्टिरोगाः ॥ ६२–६४ ॥ चतुर्दशदृष्टिजानंतरमदूरत्वेन शुक्लजा उच्यंते, तत्र प्रस्तारितलक्षणमाह—प्रस्तारीति । तनु अबहलम्, विस्तीर्णं प्रस्तारि, प्रसरयुक्तमित्यर्थः ।

पद्माभं मृदु रक्तार्म यन्मांसं चीयते सिते ॥
पृथु मृद्वधिमांसार्म बहुलं च यकृन्निभम् ॥
स्थिरं प्रस्तारि मांसाढ्यं शुष्कं स्नाय्वर्म पञ्चमम् ॥ ६६ ॥

---

मधुकोशव्याख्या ।

प्रस्तारीति लक्ष्यम्, शेषं लक्षणम् । तनु अबहलम् । स्तीर्णं विततम् । श्यावमीषन्नीलम् । रक्तनिभं रक्तवर्णम् । अत्र श्यावरक्तयोर्विरोधात् समुच्चयाभावेन विकल्पः । अत एवाह निमिः—"समन्ताद्विसृतः श्यावो रक्तो यो मांससंचयः । सन्निपातेन दोषाणां प्रस्तार्यर्म तदुच्यते" इति । गदाधरेण ईषन्नीललोहितवर्णसमुच्चय एव दर्शितः । सिते शुक्लभागे ॥ शुक्लार्ममाह—सश्वेतमित्यादि । सश्वेतं किंचित् श्वेतम् । मृदु कोमलम् । अत्र अपरतो वक्ष्यमाणं मांसमिति पदं सिंहावलोकनन्यायेन संबन्धनीयम् । सशब्दस्याधिकस्योपादानं सम्यक्श्वेतत्वप्रतिपादनार्थमिति कार्तिकः । शुक्ले शुक्लमण्डले । चिरात् चिरकालेन तद्वर्धते, कफजत्वात् ॥ ६५ ॥ रक्तार्मलक्षणमाह—पद्माभमित्यादि । पद्माभम् अरुणपद्मपत्रनिभम् । मृदु कोमलं, सिते शुक्लमण्डले । चीयते वृद्धिमुपैति, एतद्रक्तजम् ॥ अधिमांसार्मलक्षणमाह—पृथ्वित्यादि । पृथु विततं, विस्तीर्णमित्यर्थः । बहुलं स्थूलम् । लोहितत्वेन यकृन्निभं, श्याववर्णसंबन्धोऽप्यत्र ज्ञेयः, यथाह सुश्रुतः—"विस्तीर्णं मृदु बहुलं यकृत्प्रकाशं श्यावं वा तमधिकमांसजार्म विद्यात्" इति । अत्र श्यावं वेति वाशब्दः समुच्चये, तेन श्यावं च लोहितं चेत्यर्थः । एतच्च त्रिदोषजं, सुश्रुते त्रिदोषजप्रकरणे पठितत्वात् ॥ स्नाय्वर्मलक्षणमाह—स्थिरमित्यादि । स्थिरं कठिनम् । मांसाढ्यं बहुमांसम् । शुष्कमविस्रावि । इदं च प्रस्तार्यर्मोद्भवम् । तथा च निमिः—"प्रस्तारिणोऽर्मणः

आतङ्कदर्पणव्याख्या ।

श्यावं सशुक्लं कृष्णं, रक्तमीषल्लोहितम्, सिते शुक्ले अर्थान्नयनस्येति पूरणीयम् । शुक्लार्मलक्षणमाह—सश्वेतमिति । सश्वेतं चिरेण वर्द्धत इति कफजत्वात् शुक्लार्म तस्य नाम ॥ ६५ ॥ रक्तार्मलक्षणमाह—पद्माभमिति । रक्तपद्माभम् । मृदु कोमलम् । यन्मांसं चीयत इति मांसमुपचयमुपैति । एतद्रक्तजमिति । नयनस्य शुक्लभागे ॥ अधिमांसार्मलक्षणमाह—पृथ्विति । पृथु विस्तीर्णम, बहलं स्थूलम्, यकृन्निभमिति ईषन्नीललोहितमित्यर्थः । एतत्त्रिदोषजम् ॥ स्नाय्वर्मलक्षणमाह—स्थिरमिति । स्थिरं कठिनम्, शुष्कम् विस्रावि । इदं च प्रस्तार्यर्मोद्भवम् । तथा विदेहः—"प्रस्तारिणोऽर्मणः स्रावं निरुणद्धि यदानिलः । विना स्रावं विशुष्कं च यत्स्नाय्वर्मेति तद्विदुः" इति ।

श्यावाः स्युः पिशितनिभाश्च बिन्दवो ये
शुक्त्याभाः सितनियताः स शुक्तिसंज्ञः ॥
एको यः शशरुधिरोपमश्च बिन्दुः
शुक्लस्थो भवति तमर्जुनं वदन्ति ॥ ६७ ॥
श्लेष्ममारुतकोपेन शुक्ले पिष्टं समुन्नतम् ॥
पिष्टवत्पिष्टकं विद्धि मलाक्तादर्शसन्निभम् ॥ ६८ ॥

मधुकोशव्याख्या ।

स्रावं निरुणद्धि यदानिलः । विना स्रावं हि शुष्कं तत्साध्यमेति प्रकीर्तितम्" इति । इदं तु सन्निपातजमपि साध्यम् ॥ ६६ ॥ शुक्तिकालक्षणमाह—श्यावा इत्यादि । श्यावाः पाण्डुश्यामाः, पिशितनिभा इति नियमेन भणिताः तेन पिशितस्येव नियमेन भा दीप्तिर्येषां ते तथा, सा च प्रभा श्यावा इति समभिव्याहारेण श्याववर्णैव, न त्वत्र मांसस्योपमानत्वं पिशितनिभशब्दोऽभिधत्ते, वक्ष्यमाणार्जुने रुधिरोपमशब्दवत्; मांसात्मकत्वादेव शुक्तिकायाः । सितनियता इति सिते शुक्लमण्डले नियताः । शुक्त्याभा जलशुक्तिनिभाः, वर्णसाम्यात्; अत एव शुक्तिसंज्ञः, अयं पित्तजः । अत्र वाग्भटः—"पित्तं कुर्यात् सिते बिन्दूनसितश्यावपीतकान् । मलाक्तादर्शतुल्यं वा सर्वशुक्लं सदाहरुक् । रोगोऽयं शुक्तिकासंज्ञः सशकृद्भेदतृड्ज्वरः" इति ॥—अर्जुनलक्षणमाह—एको य इत्यादि । एक एव सन् यः शशरुधिरवल्लोहितो बिन्दुरूपश्च विकारः तमर्जुनं वदन्तीत्यर्थः । उक्तं च कल्याणविनिश्चये,—"शक्रगोपनिभं शुक्लेऽर्जुनं रक्तप्रकोपतः" इति । एतेन बिन्दुरूपत्वे नियमो नास्तीति ज्ञेयम् । अत एव रविगुप्ते—"कृष्णभागे सितं बिन्दुं शुक्रं विद्यात्कफात्मकम् । रक्तं च शुक्लभागस्थमर्जुनं शोणितोद्भवम्" इति ॥ ६७ ॥ पिष्टकलक्षणमाह—श्लेष्ममारुतकोपेनेत्यादि । पिष्टमिति लक्षणपदं, पिष्टवदिति आलेपनपिष्टतुल्यं श्वेतत्वेन । पुनः पिष्टकमिति लक्ष्यपदम् ।

आतङ्कदर्पणव्याख्या ।

इदं सन्निपातजम् ॥ ६६ ॥ शुक्तिकालक्षणमाह—श्यावाः स्युरिति । श्यावाः पांडुश्यामाः, पिशितनिभाः पिशितस्येव नियमेन भा दीप्तिर्येषां ते तथा, शुक्त्याभाः जलशुक्तिनिभाः, तत्साम्यात् । असितसिताः असिताश्च सिताश्चासितसिताः अयं पित्तजः । अर्जुनमाह—एक इति । इदं शोणितजम् ॥ ६७ ॥ पिष्टकमाह—श्लेष्मेति । पिष्टकमिति लक्षणपदम् । पिष्टवदिति आलेपनपिष्टतुल्यम्, श्वेतत्वेन । पुनः पिष्टकमिति लक्ष्यपदम् । मलाक्तादर्शसंनिभमिति धूल्या-

१ "असितनियताः" इत्यत्रैतादृशपाठाभि० ।

जालाभः कठिनशिरो महान् सरक्तः
संतानः स्मृत इह जालसंज्ञितस्तु ॥
शुक्लस्थाः सितपिडकाः शिरावृता या-
स्ता ब्रूयादसितसमीपजाः शिराजाः ॥
कांस्याभोऽमृदुरथ वारिबिन्दुकल्पो
विज्ञेयो नयनसिते बलाससंज्ञः ॥ ६९ ॥

मधुकोशव्याख्या ।

समुन्नतमुच्छूनम् । मलाक्तादर्शनिभमिति धूल्यादिम्रक्षितदर्पणतुल्यम् । अयं कफवातजः अतः, कफेनाच्छतया, वातेन किंचित् श्यावतया मलाक्तदर्पणनिभत्वमस्येत्यर्थः ॥ ६८ ॥ शिराजाललक्षणमाह—जालाभ इत्यादि । अनुलोमविलोमशिरानिचयरचितनिरन्तरविवरगवाक्षिभावात्, जालस्येव आभा आकृतिर्यस्य स तथा । कठिनशिर इत्यनेन शिराणामेव संतानोऽयं विकार इति दर्शयति । सरक्त ईषल्लोहितः, संतनोति आच्छादयतीति संतानः, बहुलवचनात् कर्तरि घञ् । अत्र बिन्दुशब्दोऽनुवर्तनीयः स सर्वत्र विशेष्यः । जालसंज्ञित इत्यत्र शिरापूर्व इति शेषः, तेन शिराजालसंज्ञित इत्यर्थः । अयं च रक्तजः ॥—शिराजपिडकालक्षणमाह—शुक्लस्था इत्यादि । सितपिडका इति सितवर्णाः पिडकाः । शिरावृताः शिराव्याप्ताः । असितसमीपजा कृष्णभागाभ्यर्णशुक्लजाः शिरापरिवृतत्वाच्छिराजाः, न तु साक्षाच्छिराजाता इति गदाधरः । अयं च त्रिदोषजः, त्रिदोषजसाध्यप्रकरणे सुश्रुतेन पठितत्वात् ॥ बलासग्रथितलक्षणमाह—कांस्याभ इत्यादि । कांस्यस्येवाभा दीप्तिर्यस्य स तथा सित इत्यर्थः, वारिबिन्दुरिवोच्छूनत्वात् । अमृदुः कठिनः, कफानिलजत्वात् । तथा च विदेहः,—"मारुतोत्पीडितः श्लेष्मा शुक्लभागे व्यवस्थितः । जलबिन्दुरिवोच्छूनो ह्यमृदुः कफसंभवः । बलासग्रथितं नाम तं शोथं वृत्तमादिशेत्" इति । कोषाभ इति कश्चित् पठति,

आतंकदर्पणव्याख्या ।

दिम्रक्षितदर्पणतुल्यम् । अयं वातकफजः साध्यश्च ॥ ६८ ॥ शिराजालमाह—जालाभ इति । अनुलोमविलोमस्थितशिराविरचितबहुविवरत्वेन जालस्येव आभा यस्य स तथा, कठिनशिर इत्यनेन शिराणामेवं संतानोयं विकार इति दर्शयति । सरक्त इति ईषल्लोहितः । जालसंज्ञित इत्यत्र शिरापूर्व इति शेषः, तेन शिराजालसंज्ञित इत्यर्थः ॥ शिराजमाह—शुक्लस्था इति । शिराभिरावृताः, वास्तुस्थितशिरापरिवृतत्वेन शिराजाः । असितसमीपजा इति कृष्णभागांतः शुक्लजाः शिराजाः, पिडका इति शेषः । एष संनिपातजः साध्यश्च ॥ बलासग्रथितमाह—कांस्याभ इति । अमृदुः कठिनः, वारिबिंदुकल्प इत्यनेन मनागुच्छूनता प्रतिपाद्यते । "कोषाभः" इति

**पक्वः शोथः सन्धिजो यः सतोदः स्रवेत्पूयं पूति पूयालसाख्यः ॥**
**ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी कण्डूप्रायो नीरुजस्तूपनाहः ७० ॥**

मधुकोशव्याख्या ।

कोषो मांसकुड्मलं तदाभस्तदाकारः; एतावतोऽत्यर्थमुच्छूनत्वं प्रतिपाद्यते, वारिबिन्दुकल्प इति च ईषदुच्छूनतापि । ननयसिते शुक्लभागे इत्यर्थः । बलासरूप इत्यत्र ग्रथितशब्दलोपः, तेन बलासग्रथित इति संज्ञा । अत्र शिरोत्पातशिराहर्षौ वाग्भटेन पठितौ । तथाहि—"रक्तराजीनिभं शुक्ले उष्यतेऽपि सवेदनम् । सशोथाश्रूपदेहं च शिरोत्पातः सशोणितात् ॥ उपेक्षितः शिरोत्पातो राजीस्ता एव वर्धयन् । कुर्यात् सास्रं शिराहर्षं तेनाक्ष्युद्वीक्षणाक्षम्" इति ॥ ६९ ॥ इति शुक्लजाः ॥ अथ मण्डलगतनिदानाभिधानपारिशेष्याद्वर्त्ममण्डलगतनिदानाभिधाने प्राप्ते कनीनिकासन्ध्यादीनां वर्त्ममण्डलाभियोगितयान्तर्गतत्वेनान्तरङ्गत्वात् सन्धिगतनिदानोद्देशारम्भः । ते च सन्धयः षट् । यदाह सुश्रुतः,—"पक्ष्मवर्त्मगतः सन्धिर्वर्त्मशुक्लगतोऽपरः । शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतस्तथा ।: कनीनिकागतो ज्ञेयः षष्ठश्चापाङ्गगः स्मृतः"—इति । नासासमीपनेत्रान्तः कनीनिका । चक्षुः पुच्छस्याधो नेत्रान्तोऽपाङ्गः । तत्र पूयालसलक्षणमाह—पक्व इत्यादि । सन्धिज इति कनीनिकासन्धिजः । यदाह विदेहः—"शोथक्लेदसमाविष्टं तोदभेदसमाकुलम् । पूयालसं तु तं विद्यात्सन्धौ कानीनिके नृणाम्" इति । अयं त्रिदोषजः, सुश्रुतेन साध्यत्रिदोषजप्रकरणे पठितत्वात् ॥ श्लेष्मोपनाहलक्षणमाह—ग्रन्थिरित्यादि । नाल्प इति महान्, अपाकी ईषत्पाकः;

आतंकदर्पणव्याख्या ।

पाठांतरम् । तत्र कोषो मांसकुड्मलं तदाभः, एतेनात्युच्छूनत्वं प्रतिपाद्यते । अयमर्थः—अत्युच्छूनो वा मनागुत्सन्नो वा शुक्लत्वं कफजत्वादेव लभ्यते । बलाससंज्ञ इत्यत्र पदेऽपि पदैकदेशप्रवृत्तेर्ग्रथिताऽनभिधानम् । अयं च कफजः, तथा च विदेहः—"मारुतोत्पीडितः श्लेष्मा शुक्लभागे व्यवस्थितः । जलबिंदुरिवोच्छूनो मृदुः स कफसंभवः ॥ बलासग्रथितं नाम तं शोफं वृत्तमादिशेत् ॥" इति । एवं प्रस्तार्य १ शुक्लार्म, २ रक्तार्म ३ अधिमांसार्म ४ स्नाय्वर्म ५ शुक्तिका ६ अर्जुनः ७ पिष्टकः ८ शिराजालः ९ शिराजः १० बलासग्रथितः ११ इत्येकादश नयनामयाः शुक्लभागजा रोगाः । एवं शुक्लजा एकादश ॥६९॥ कनीनिकादिसंधीनां शुक्लभागप्रत्यासत्त्यानंतरं तद्गतरोगाणामभिधानम् । तत्रादौ पूयालसकमाह—पक्व इति । संधिज इति कनीनिकासंधिजः । तथा च निमिः—"शोथक्लेदसमाविष्टं तोदभेदसमाकुलम् । पूयालसं तु तं विद्यात्संधौ कानीनिके नृणाम्" इति । कनीनिकासंधिश्च नासामनुनेत्रांतः ॥ कफोपनाहमाह—ग्रंथिरिति । नाल्पः महान्, अपाकी ईषत्पाकः, अत एव नीरुजो ज्ञेयः । यदुक्तं विदेहेन—"वायुः श्लेष्माणमादाय

**गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्युः स्रावाँल्लक्षणैः स्वैरुपेतान् ॥**
**तं हि स्रावं नेत्रनाडीति चैके तस्या लिङ्गं कीर्तयिष्ये चतुर्धा७१॥**
**पाकीसन्धौ संस्रवेद्यस्तु पूयं पूयास्रावोऽसौ गदः सर्वजस्तु ॥**
**श्वेतं सान्द्रं पिच्छिलं यः स्रवेत्तु श्लेष्मास्रावोऽसौ विकारो मतस्तु७२**

मधुकोशव्याख्या ।

अत एव सुश्रुतेऽल्पस्रावः पठितः। दृष्टिसन्धाविति कृष्णदृष्टिमण्डलयोः सन्धावित्यर्थः। कण्डूप्रायः कफप्राबल्यात् । नीरुजोऽल्परुज इत्यर्थः । तथाच विदेहः—"वायुः श्लेष्माणमादाय दृष्टिसन्धौ व्यवस्थितः । अरुणं कठिनं ग्रन्थिं जनयेदल्पवेदनम् । श्लेष्मोपनाहं तं विद्यात्स्रावान् वक्ष्याम्यतः परम्" इति । वातश्लेष्मजन्यत्वेऽपि श्लेष्मप्राबल्यात् श्लेष्मोपनाहव्यपदेशः । आश्रयप्रभावादरुणत्वमत्र ॥ ७० ॥ चतुर्णां स्रावाणां संप्राप्तिमाह—गत्वा सन्धीनित्यादि । सन्धीनिति बहुवचननिर्देशात्सर्वनेत्रान्तर्गताश्चत्वारः सन्धयो गृह्यन्ते । अश्रुमार्गेणेति अश्रुवाहिन्यो धमन्यौ अश्रुमार्गः 'द्वे चाश्रुवाहिन्यौ'—इति सुश्रुतः, अश्रुवहधमनीभ्यामित्यर्थः । ननु, यद्यश्रुवहधमनीभ्यां गत्वा दोषाः स्रावानापादयन्ति, तत्कथं शिरानुसारिभिर्दोषैरित्याद्युक्ता संप्राप्तिर्न बाध्यते, शिराधमन्योरन्यत्वात् ? उच्यते, सामान्यविशेषत्वात् संप्राप्त्यभिधानद्वयस्य पूर्वा संप्राप्तिः सामान्यमितरा च विशेष इति न विरोधः । अथवा 'शिराधमनीस्रोतसामविभागः' इति परकीयमतेन शिराधमन्योरैक्यादविरोधः । अस्मिन्नर्थे संप्राप्त्युक्त एवार्थो निष्पन्नीक्रियते । नेत्रनाडीति चैक इति वदन्तीति शेषः, अनिषेधादनुमतमिदम् । दोषाः सन्निपातश्लेष्मरक्तपित्तात्मकाः । लक्षणैर्दोषलक्षणैः । उपेतान् परीतानिति । गदाधरेण लक्षणैरित्यस्य स्थाने सर्वत इति पठितं दोषाः परीतान् स्वलक्षणैरित्यर्थविशेषादधिगन्तव्यम् । चतुर्धेति सान्निपातिककफजरक्तजपित्तजत्वभेदात् । वातजस्तु स्रावो नास्त्येव, व्याधिस्वभावात्; पित्तजगलगण्डवत् ॥ ७१ ॥ चतुर्विधस्रावमध्ये पूयस्रावलक्षणमाह—पाकीत्यादि । सर्वजस्त्रिदोषज इत्यर्थः । अस्य

आतङ्कदर्पणव्याख्या ।

दृष्टिसन्धौ व्यवस्थितः । अरुणं कठिनं ग्रंथिं जनयत्यल्पवेदनम् ॥ श्लेष्मोपनाहं तं विद्यात्स्रावान्वक्ष्याम्यतः परम् ॥" इति । वातश्लेष्मजन्यत्वेपि श्लेष्मोद्रेकात् श्लेष्मोपनाहव्यपदेशः ॥७० ॥ स्रावाणां संप्राप्तिमाह—गत्वेति । संधीनिति बहुवचननिर्देशात्सर्वत्र च नेत्रांतर्गताश्चत्वारः संधयो ग्राह्याः । अश्रुमार्गेणेति । अश्रुवाहिन्यौ धमन्यावश्रुमार्गः । कानीनानिति कनीनसंधिजान् कनीनसंधियश्च नासामनुनेत्रांतः । तं नेत्रनाडीमित्येव इति मतांतरं नेत्रनाडीति ॥ ७१ ॥ तत्रादौ सन्निपातजस्रावमाह—पाकीति । पाकवान् शोथः संस्रवेदित्यर्थः । पाकस्य क्रियामात्र-

१ "तं कानीनान्" इति पाठा० ।

**रक्तस्रावः शोणितोत्थो विकारः स्रवेद्दुष्टं तत्र रक्तं प्रभूतम् ॥**
**हरिद्राभं पीतमुष्णं जलाभं पित्तास्रावः संस्रवेत्सन्धिमध्यात्॥७३॥**

मधुकोशव्याख्या ।

प्रत्याख्येयत्वादग्रेऽभिधानं, यद्यप्यन्येऽपि स्रावा असाध्यत्वेनोक्तास्तथाऽपि याप्या बोद्धव्याः। पाक इति पाठे पाकः संस्रवेत् पाकवाञ्शोथः स्रवेदित्युपचारात्, पाकस्य क्रियामात्रत्वात् ॥-श्लेष्मस्रावलक्षणमाह- श्वेतमित्यादि । सान्द्रं घनम् ॥ ७२ ॥ रक्तस्रावलणमाह-रक्तस्राव इत्यादि । रक्तकृतस्रावो रक्तस्रावः ( रक्तस्राव इत्यनेनैव स्रवेदित्यस्य लब्धत्वात्तदुक्तिर्निरन्तरस्रावप्रतिपादनार्थमिति कार्तिकः न चैतत् प्रभूतमित्यनेन गतार्थम्, अनिरन्तरतयापि प्रभूतस्रावसंभवात् ) । रक्तस्राव इत्यनेनैव रक्तजत्वे सिद्धे शोणितजो विकार इति यदुच्यते तदत्यन्तकुपितरक्तजत्वप्रतिपादनार्थम् । कार्तिकस्त्वाह-पित्तलिङ्गपरिग्रहार्थं, पित्तेन सह तुल्यत्वात् रक्तस्य । तथाच क्वचित् पाठः 'रक्तस्रावः पित्तलिङ्गैरुपेतः' इति ॥-जलस्रावपर्यायस्य पित्तस्रावस्य लक्षणमाह-हरिद्राभमित्यादि । हरिद्राभं पीतलोहितं बोद्धव्यं, परतः पीतमित्यस्योक्तेः ( जलाभमिति जलवत् स्वच्छम् । उष्णमिति सर्वत्रैव संबध्यते । केचित् पीतमित्यस्य स्थाने नीलमिति पठन्ति । यत्तु जलाभमित्यस्य स्थाने जलं वेति तदसंगतं, सुश्रुतेनोद्देशावसरे जलस्रावनामतयास्योद्देशात्, तद्धि नाम जलवदास्रावोऽस्येति योगतः समावेशितम् । यदा तु जलं वेति पाठः स्यात्तदा कदाचित् जलाभता स्यादिति न सर्वत्र योगव्याप्तिरिति सन्धिमध्यादिति अविशेषोक्तेः सर्वसन्धिमध्यादिति बोद्धव्यम् । ननु, वातजस्रावः कुतो नोक्तः, वातेन स्रावाभावादिति चेत्; नैवम्, वाताभिष्यन्दे शिशिराश्रुतेत्युक्तेर्वातजोऽपि स्रावो दर्शितः । उच्यते, विशिष्टे अक्षिप्रदेशे केवलवायोः स्रावजनकत्वं संबन्धितव्यमभिधानात् । विदेहेऽपि चत्वार एवो

आतङ्कदर्पणव्याख्या ।

त्वात् ॥ कफस्रावमाह-श्वेतमिति । सांद्रं घनम्, नीरुजं पीडारहितम्॥७२॥रक्तस्रावमाह-रक्तेति । रक्तस्रावः शोणितोत्थ इति ग्रहणं प्रभूतस्रावसूचनार्थम् । पुनः सरक्तमुष्णमिति यत्प्रकुपितरक्तजत्वप्रतिपादनार्थम् पित्तस्रावमाह-हरिद्राभमिति । पीतलोहिताभम्, पीतमिति पृथगुक्तेः । संधिमध्यादिति अविशेषोक्तेः सर्वसंधिमध्याद् वातजः स्रावः, कुतो नोक्तः? वातेन स्रावाभावात् । विदेहेन चत्वार एव स्रावा उक्ताः । तद्यथा-"सन्निपातात्कफाद्रक्तात्पित्तात्स्रावोक्षिसंधिषु" इति॥७३॥

१ "पिच्छिलम्" इत्यत्र "नीरुजम्" इति पा० ।

२ "रक्तस्रावः शोणितोत्थः सरक्तमुष्णं नाल्पं संस्रवेन्नातिसांद्रम्" इति पाठा० ।

**ताम्रा तन्वी दाहशूलोपपन्ना रक्ताज्ज्ञेया पर्वणी वृत्तशोथा ॥**
**जाता सन्धौ कृष्णशुक्लेऽलजी स्यात्तस्मिन्नेव ख्यापिता पूर्वलिङ्गैः ७४**
**क्रिमिग्रन्थिर्वर्त्मतः पक्ष्मणश्च कण्डूं कुर्युः क्रिमयः सन्धिजाताः ॥**
**नानारूपा वर्त्मशुक्लान्तसन्धौ चरन्त्यन्तर्लोचनं दूषयन्तः ॥७५॥**

---

मधुकोशव्याख्या ।

क्ताः,–सन्निपातात् कफाद्रक्तात् पित्तात् स्रावोऽक्षिसान्धिषु"–इति ॥ ७३ ॥ तदेवमसाध्यानां चतुर्णां स्रावाणां लक्षणममिधाय पर्वणीलक्षणमाह—ताम्रेत्यारभ्य कृष्णशुक्ल इत्यन्तेन । इयं रक्तजा कफानिलजा च, रक्तजत्वमत्र सुश्रुते दर्शितमाधिक्येन ॥ अलजीलक्षणमाह—अलजी स्यादित्यादि । तस्मिन्नेवेति शुक्लकृष्णसन्धौ, पूर्वलिङ्गैः पर्वणीलक्षणैरुपेतेत्यर्थः । ननु, एवं सति स्थानलक्षणयोरभेदेनानयोरभेदः स्यादिति चेत्; न, तनुत्वस्थूलत्वाभ्यां पर्वणीकालज्योर्भेदात् । तथाह विदेहः,–"शुक्लकृष्णान्तःसन्धौ तु चीयन्तेऽसृक्कफानिलाः । पर्वणीपिडका तैस्तु जायते त्वङ्कुरोपमा ॥ ताम्रा सदाहचोषोष्णपीतकाश्रुसमाकुला । कफपित्ते तु संमूर्च्छ्य सह रक्तेन मारुतः ॥ शुक्लकृष्णान्तःसन्धौ तु जनयेद्गोस्तनाकृतिम् । पिडकामलजीं तां तु विद्धि तोदाश्रुसंकुलाम्" इति । कार्तिकस्त्वभेदानुपपत्तिं शंकमानः पूर्वलिङ्गैरित्यन्यथा व्याचष्टे, पूर्वोक्तायाः प्रमेहपिडकायाः अलज्या लिङ्गैरित्यर्थः । इयं त्रिदोषजा असाध्या ॥ ७४ ॥ क्रिमिग्रन्थिलक्षणमाह–क्रिमिग्रन्थिर्वर्त्मत इत्यादि । प्रथमं वर्त्मशुक्लयोः सन्धौ भूत्वा क्रमेण वर्त्मतः पक्ष्मतश्च सन्धिजाताः संभावितं प्राप्ताः क्रिमयो यत्र कण्डूं कुर्युः स क्रिमिग्रन्थिः । स चायं क्रिमिग्रन्थिर्वर्त्मशुक्लयोः सन्धौ भवति, तथैव स्थित्वा अन्तर्लोचनं नयनस्याभ्यन्तरं चरन्ति भक्षयन्ति दूषयन्तः सन्त इत्यर्थः । अत्रैव विदेहः–"वर्त्मशुक्लस्य सन्धौ तु ग्रन्थिः पित्तकफात्मकः।

आतङ्कदर्पणव्याख्या ।

ताम्रा इत्यारभ्य कृष्णः शुक्ल इत्यंतं पर्वणीलक्षणमाह–ताम्रेति । ताम्रा अरुणा तन्वी सूक्ष्मा, वृत्तशोफा वर्तुलाकारशोथा ॥ अलजीलक्षणमाह–तस्मिन्नेवेति । कृष्णशुक्लसंधावेव, पूर्वलिंगैरिति पर्वणीकालक्षणैः भेदश्चानयोः–तन्वी पर्वणीका, स्थूलालजीति वदंति । तथा च विदेहः–"पर्वणी पिडका तत्र जायते त्वंकुरोपमा । शुक्लकृष्णांतःसंधौ च जनयेद्गोस्तनाकृतिम् ॥ पिडकामलजीं तां तु विद्धि तोदाश्रुसंकुलाम् ॥" इति ॥ ७४ ॥ क्रमिग्रंथिमाह । वर्त्मतः पक्ष्मणश्च कंडूं कुर्युरित्युक्तेः क्रमिग्रंथिः पक्ष्मवर्त्मसंधावेव प्रतीयते । तेनायमर्थः क्रमयो वर्त्मनः पक्ष्मणश्च संधिजाताः संतः कंडूं

---

१ 'अन्ये तु पूर्वलिङ्गैरित्यनेन प्रमेहपिडकाकथितैरलजीलिङ्गैरिति ब्रुवते, सुश्रुते प्रमेहनिदाने रक्ताश्रितेत्यादिलिङ्गैः ख्यापिता याऽलजी तद्वदियमपीत्यर्थः । तेन स्थानसाम्येऽपि भिन्नलक्षणतया पर्वणीतो विलक्षणत्वम्' इति पाठान्तरम् । २ एतादृशपाठाभ्युपगमेन ।

**अभ्यन्तरमुखी ताम्रा बाह्यतो वर्त्मनश्च या ॥**
**सोत्सङ्गोत्सङ्गपिडका सर्वजा स्थूलकण्डुरा ॥ ७६ ॥**

मधुकोशव्याख्या ।

ऊष्मणा पच्यते गाढं तत्र मूर्च्छन्ति जन्तवः ॥ सुसूक्ष्मजातचरणा वर्त्मपक्ष्मसमाश्रयाः । ततस्ते पूयसंसृष्टाः पतन्ति क्रिमयस्तथा ॥ लक्षणैर्विविधैर्युक्ताः सन्निपातसमुत्थिताः । क्रिमिग्रंथिं तु तं विद्याद्देहिनां नेत्रदूषणम्'' इति । कार्तिकस्त्वन्यथा पठित्वा व्याचष्टे—वर्त्मनः पक्ष्मणश्चापि कण्डूं कुर्युरित्यभिधानात् क्रिमिग्रन्थिः पक्ष्मवर्त्मसन्धौ भवतीतिगम्यते, अन्यथान्यत्रावस्थितैः क्रिमिभिः कथमन्यत्र कण्डूर्जन्यते इति एतच्च न सम्यक्, वर्त्मशुक्लान्तःसन्धाविति विरोधप्रसंगात् ॥ ७५ ॥ अथ सन्धिगतरोगाभिधानानन्तरं पारिशेष्यात् वर्त्मशुक्लान्तःसन्धावित्यत्र वर्त्मनिर्देशेन तद्गतरोगनिदानारम्भः । नयनगोलकावरकं निमेषोन्मेषाश्रयं पटलद्वयं वर्त्म उच्यते । सुश्रुते प्रथमोद्दिष्टत्वेन उत्सङ्गपिडकालक्षणमाह—अभ्यन्तरमुखीत्यादि । वर्त्मन एवाभ्यन्तरे मुखं यस्याः सा तथा । ननु, कथं बाह्यत इति ? उच्यते, वास्तूत्सेधेन बहिरप्युन्नततया दर्शनाद्बाह्यत्वं, न तु बाह्यमुखत्वेन । बाह्यत इति सप्तम्यर्थे तसिल्, एवं वर्त्मत इत्यत्रापि । इयं विदेहसंवादादधरवर्त्मान्तर्जाता बोध्या । ताम्रा ताम्रवर्णा । सोत्सङ्गा सा उत्सङ्गा उत्सङ्गिनी, अर्शआदित्वादच् । उत्सङ्गपिडकेति उत्सङ्गे क्रोडे बह्वयः पिडका यस्याः सा । स्थूलकण्डुरेति स्थूला चासौ कण्डुरा चेति कर्मधारयः, कण्डुरा कण्डूमती, दोषाणां कफप्राबल्यात् । चकारेणात्र विदेहोक्तकाठिन्यादि संगृ-

आतंकदर्पणव्याख्या ।

कुर्वंति । तथा वर्त्मशुक्लान्तःसंधौ भूत्वांतर्नयनं दूषयंतश्चरंति । अयं सन्निपातजः । तथा विदेहः—''ततः पूयमसृक्सृष्टाः पतंति कृमयस्तथा । लक्षणैर्विविधैर्युक्ताः, सन्निपातसमुत्थिताः ॥ कृमिग्रंथिं तु तं विद्याद्देहिनां नेत्रदूषणम् ॥'' इति । एवं पूयालसः, श्लेष्मोपनाहः, सन्निपातजः, श्लेष्मरक्तपित्तजाः, चत्वारः स्रावाः । पर्वणीका, अलजी, कृमिग्रथिर्नवसंख्या एते संधिजाः ॥७५॥ संधिजानंतरं वर्त्मजा उच्यंते, तत्र वर्त्मोत्संगिनीमाह—अभ्यंतरमुखीति । वर्त्मन एवाभ्यंतरे मुखं यस्याः सा तथा, वर्त्मनो बाह्यतोपि वास्तूत्सेधेनोपलभ्यते इति विदेहगदाधराभ्यां वर्त्मांतर्जाता मन्यंते । यदाह विदेहः—वर्त्मोत्संगादधो जंतोः सन्निपातात् प्रजायते । अभ्यंतरमुखी स्थूला बाह्यतश्चापि दृश्यते ॥ पिडकापिडकाभिश्च चितान्याभिः समंततः । उत्संगपिडका नाम कठिना मंदवेदना ॥'' इति । उत्संगे क्रोडे बद्धाः पिडका यस्यां सा तथा, चकारादत्रापि कुंक्कुटांडरसतुल्यं स्रवणं बोद्धव्यम् ॥ सर्वजेति सन्निपातप्रभवा । स्थूलकंडुरेति । स्थूलाचासौ

वर्त्मान्ते पिडका ध्माता भिद्यन्ते च स्रवन्ति च ॥
कुम्भीकाबीजप्रतिमाः कुम्भीकाः सन्निपातजाः ॥ ७७ ॥
स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः ॥
रुजावत्यश्च पिडकाः पोथक्य इति कीर्तिताः ॥ ७८ ॥
पिडका या खरा स्थूला सूक्ष्माभिरभिसंवृता ॥
वर्त्मस्था शर्करा नाम स रोगो वर्त्मदूषकः ॥ ७९ ॥

---

मधुकोशव्याख्या।

ईतिम्। तथाच विदेहः—"वर्त्मोत्सङ्गेऽधरे जन्तोः सन्निपातात्प्रजायते। अभ्यन्तरमुखी स्थूला बाह्यतश्चापि दृश्यते॥ पिडका पिडकाभिश्च चितान्याभिः समन्ततः। उत्सङ्गपिडका नाम कठिना मन्दवेदना॥ सा प्रभिन्ना स्रवेत्स्रावं कुक्कुटाण्डरसोपमम्॥" इति। सर्वजेति सन्निपातभवा ॥ ७६ ॥ कुम्भीकालक्षणमाह—वर्त्मान्त इत्यादि। पिडका इति बहुवचननिर्देशाद्बह्वयः, भिद्यन्ते विदीर्यन्ते तथा स्रवन्ति च। ध्माता इति भिद्यमाना स्वयमेव पूर्णोदरा भवतीति ध्माता। कुम्भीकाबीजप्रतिमा इति कुम्भीका कच्छदेशोद्भवा दाडिमफलाकारफला लता तद्बीजेन प्रतिमा यासां ता इत्यर्थः, तद्बीजमपि दाडिमफलबीजाकारम्। अन्ये कुम्भीकबीजसदृशा इति पठन्ति, तत्र कुम्भीकः कुम्भाडुलता तद्बीजसदृशाः पिडकाः उच्यन्ते। कुम्भीशब्दात् 'इवे प्रतिकृतौ' इति कन्। एषा त्रिदोषजा असाध्या च ॥ ७७ ॥ पोथकीनां लक्षणमाह—स्राविण्य इत्यादि। स्राविण्यो बहुस्रावाः। गुर्व्य इति गौरवयुताः रुजावत्य इति रक्तसंबन्धात् कफजा अपि वेदनान्विताः ॥ ७८ ॥ वर्त्मशर्करालक्षणमाह—पिडका येत्यादि। खरा खरस्पर्शा। सूक्ष्माभिरभिसंवृतेति सूक्ष्माभिः प्रकरणात्पिडकाभिर्वेष्टिता। अत्रैव विदेहः—"सुसूक्ष्मपिडकाकीर्णा या स्थूला पिडका

आतङ्कदर्पणव्याख्या।

कंडुरा च सा॥ ७६ ॥ कुंभीकामाह—वर्त्मान्त इति। ध्माता इति। भिद्यमानाः स्वयमेव पूर्णोदरा भवंतीत्यर्थः। कुम्भीका बीजप्रतिमा इति। कुम्भीका कच्छदेशे दाडिमाकारफला लता, तद्बीजेन प्रतिमा यासां ताः। "कुम्भीकबीजसदृशाः" इति पाठान्तरम्, तत्र कुम्भीकः कुम्भाण्डुलता, तद्बीजसदृशा इत्यर्थः॥ ७७ ॥ पोथकीलक्षणमाह—स्राविण्य इति। स्राविण्यो बहुस्रावाः, कंडुरा कंडूयुक्ताः, गुर्व्य इति गौरवयुक्ताः, रुजावत्य इति रक्तसंबंधात्, कफजा अपि वेदनान्विता॥ ७८॥

एर्वारुबीजप्रतिमाः पिडका मन्दवेदनाः ॥
श्लक्ष्णाः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते ॥ ८० ॥
दीर्घांकुरः खरः स्तब्धो दारुणोऽभ्यन्तरोद्भवः ॥
व्याधिरेषोऽभिविख्यातः शुष्कार्शो नाम नामतः ॥८१॥
दाहतोदवती ताम्रा पिडका वर्त्मसंभवा ॥
मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साञ्जननामिका ॥ ८२ ॥
वर्त्मोपचीयते यस्य पिडकाभिः समन्ततः ॥
सवर्णाभिः स्थिराभिश्च विद्याद्बहुलवर्त्म तत् ॥ ८३ ॥

मधुकोशव्याख्या ।

खरा । जायते सन्निपाताच्च वर्त्मशर्करिकेति सा" इति ॥ ७९ ॥ अर्शोवर्त्मलक्षणमाह—एर्वारुबीजेत्यादि । एर्वारुः ग्रीष्मकर्कटी । श्लक्ष्णा इत्यकर्कशा । वर्त्मस्था इत्यविशेषिताभिधानादन्तर्बहिश्च वर्त्मनो भवतीति गम्यते । इयं सान्निपातजा । तथाच निमिः—"नीरुजा कठिना वर्त्मपक्ष्मान्तर्बाह्यतोऽपि वा । पिडका सन्निपातेन तदर्शोवर्त्म निर्दिशेत्" इति ॥८०॥ शुष्कार्शोलक्षणमाह—दीर्घांकुर इत्यादि । खरः कर्कशः । स्तब्धः कठिनः, शुष्कत्वात् । दारुणः बहुदुःखदत्वात् । अभ्यन्तरोद्भव इति वर्त्माभ्यन्तरस्थितः।अभिविख्यातः कथितः।नामतः प्रसिद्धितः। सन्निपातजमिदम्।अत्र विदेहः—"वर्त्माभ्यन्तर्गतं त्वर्शः शुष्कं स्थूलं च दारुणम् । जायते सान्निपातेन तच्छुष्कार्शः प्रकीर्तितम्"–इति ॥ ८१ ॥ अञ्जननामिकालक्षणमाह—दाहतोदवतीत्यादि । इयं रक्तजा ॥ ८२ ॥ बहुलवर्त्मलक्षणमाह—वर्त्मोपचीयत इत्यादि । सवर्णाभिस्त्वक्स-

आतङ्कदर्पणव्याख्या ।

वर्त्मशर्करामाह—पिडकेति । खरा कठिना ॥ ७९ ॥ अर्शोवर्त्मलक्षणमाह—एर्वारुबीजेति ॥ एर्वारुर्ग्रीष्मकर्कटिका । श्लक्ष्णा इति अकर्कशाश्च तास्तथा वर्त्मस्था इत्यविशेषिताभिधानादंतर्बहिश्च वर्त्मनो भवतीति गम्यते । सन्निपातजमिदम् । तथा च निमिः—"नीरुजा कठिना वर्त्मपक्ष्मांतर्बाह्यतोपि वा । पिडका संनिपातेन तदर्शोवर्त्म कीर्त्यते" इति । इदं साध्यम् ॥ ८० ॥ शुष्कार्श आह—दीर्घांकुर इति । खरः कर्कशः, स्तब्धः कठिनः, दारुणो बहुदुःखकरः । अभ्यंतरोद्भव इति वर्त्माभ्यंतरस्थितः । एष व्याधिः शुष्कार्शो नाम अभिविख्यातः । कथितः नामतः प्रसिद्धः, सन्निपातजमिदं साध्यं च ॥ ८१ ॥ अंजननामिकामाह—दाहेति । या वर्त्मसंभवा पिडका दाहादिलक्षणा भवति सांजननामिका ज्ञेया, इयं रक्तजा साध्या च ॥८२॥ बहुलवर्त्मलक्षणमाह—वर्त्मेति ।

कण्डूमताल्पतोदेन वर्त्मशोथेन यो नरः ॥
न स संछादयेदक्षि यत्रासौ वर्त्मबन्धकः ॥ ८४ ॥
मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च ॥
अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्मेति तद्विदुः ॥ ८५ ॥
क्लिष्टं पुनः पित्तयुतं शोणितं विदहेद्यदा ॥
ततः क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमः ॥ ८६ ॥

मधुकोशव्याख्या ।

मानवर्णाभिः । एतत् सन्निपातादेव ॥ ८३ ॥ वर्त्मबन्धलक्षणमाह—कण्डूमतेत्यादि । वर्त्मशोथेनोपलक्षितो नरः स चक्षुर्न संछादयेत् सम्यक् छादयितुं न शक्नुयादित्यर्थः । एष सन्निपातजः ॥ ८४ ॥ क्लिष्टवर्त्मलक्षणमाह—मृद्वल्पवेदनमित्यादि ।—रक्तजत्वेऽप्यस्याल्पवेदनत्वमधिककफदूषितत्वाद्रक्तस्य । वर्त्मेति विदेहदर्शनाद्वर्त्मद्वयं ग्राह्यम्, अत एव समं युगपदेवेत्यर्थः । अकस्मादित्यहेतोरनियमेनैवेत्यर्थः । ताम्रमित्यनेनोपात्तेऽपि लौहित्ये रक्तमित्युपादानं हेत्वनियमप्रयुक्तं कादाचित्कं लौहित्यमिति द्योतयति । अत्रैव विदेहः—"श्लेष्मदुष्टेनरक्तेन क्लिष्टं मांसमिवोभयम् । बन्धुजीवनिभं वर्त्म क्लिष्टवर्त्म तदुच्यते"—इति । अन्ये समं यथावदनुच्छूनमिति यावदित्याचक्षते । अत्र पक्षे क्लिष्टत्वं वेदनाभियोगात् ॥ ८५ ॥ वर्त्मकर्दमलक्षणमाह—क्लिष्टं पुनरित्यादि । क्लिष्टमिति प्रोक्तस्य कर्तृत्वेनायमर्थः—क्लिष्टं क्लिष्टवर्त्मैव यदा पित्तलाभ्यासादधिकपित्तं सत् शोणितं विदहेद्विरुद्धदाहेन संयोजयेत् तदा क्लिष्टत्वमापादयति, संक्लेदत्वमापन्नं वर्त्म वर्त्मकर्दम उच्यत इति योज्यम् । ततः कृष्णत्वमापन्नम् इत्यन्ये पठन्ति । तच्च कृष्णत्वं शोणितविदाहेनैव, एवं च सति कृष्णत्वेन कर्दमसंज्ञासमावेशो-

आतङ्कदर्पणव्याख्या ।

सवर्णाभिरिति त्वग्वर्णसदृशाभिः एतत्सन्निपातात् ॥ ८३ ॥ वर्त्मबंधकमाह—कंडूमतीति । कंडूयुक्तेन अल्पशूलेन शोथेनेत्यर्थः।न संछादयेदिति शोथयोगान्न पिदधाति,एष सन्निपातजः ॥८४॥ क्लिष्टवर्त्मलक्षणमाह—मृद्विति । समं त्वेककालम्, रक्तं लोहितं भवति परमकस्मादनियमात्।एतत्कफरक्तजम् । तथा च निमिः "श्लेष्मदुष्टेन रक्तेन क्लिष्टं मांसमिवोभयम् । बंधुजीवनिभं वर्त्म क्लिष्टमांसं तदुच्यते" इति । अन्ये समम् अनुच्छूनम इति व्याख्यानयंति । अत्र क्लिष्टत्वं वेदनाभियोगादवगंतव्यम् ॥८५॥ वर्त्मकर्दममाह—क्लिष्टमिति । प्रागुक्तलक्षणमेव वर्त्म पित्तमिलितं शोणितं कर्तृभूतं यदा विदहेद् दूषयेत् । कफदुष्ट एव रक्ते पित्तलस्योपासनात् पित्तमधिकं तद्गतम् । ततः क्लिन्नत्वमापन्नमिति आर्द्रतां गतं वर्त्मकर्दम उच्यते । "कृष्णत्वमापन्नम्" इति पाठांतरे कृष्णत्वं हि शोणित-

**यद्वर्त्म बाह्यतोऽन्तश्च श्यावं शूलं सवेदनम् ॥**
**तदाहुः श्याववर्त्मेति वर्त्मरोगविशारदाः ॥ ८७ ॥**
**अरुजं बाह्यतः शूनं वर्त्म यस्य नरस्य हि ॥**
**प्रक्लिन्नवर्त्म तद्विद्यात्क्लिन्नमत्यर्थमन्ततः ॥ ८८ ॥**

---

मधुकोशव्याख्या ।

अपि घटत इति । कार्तिकस्त्वन्यथा व्याचष्टे, शोणितमिति कर्तृपदं, तेन शोणितं पित्तयुक्तं कर्तृभूतं, यदा पूर्वोक्तं क्लिष्टमेव दहेदित्यादि सर्वमपरं समानं पूर्वेण । अस्य तु सुश्रुते यत् सान्निपतिकत्वमुक्तं तत् कफपित्तरक्तारब्धत्वात्; वातकारणत्वस्याश्रुतेः ॥ ८६ ॥ श्याववर्त्मलक्षणमाह—यद्वर्त्म बाह्यत इत्यादि । बहिरन्तश्च श्यावत्वं वातकृतम् । अत्रैव शूलं च जायत इत्यस्यान्ते 'सवेदनं च सकण्डूलपक्लेदि त्रिदोषजम्'—इत्यपि केचित् पठन्ति तदप्युपपन्नम्, कण्डूः कफात्, ऊष्मा पित्तात्, अल्पक्लेदि वातात् । अत्रैव विदेहः—"दुष्टं श्लेष्मा मरुत् पित्तं वर्त्मनोश्रयिते यदा । अग्निदग्धनिभं श्यावं श्याववर्त्मेति तद्विदुः"—इति । अत्र वाताधिकत्वं बोद्धव्यम् ॥ ८७ ॥ प्रक्लिन्नवर्त्मलक्षणमाह—अरुजमित्यादि । अरुजमल्परुजम् । बाह्यतः शूनमिति बहिः शोथयुक्तम् । क्लिन्नमत्यर्थमन्तत इति अन्तत उपान्ते क्लेदवत् । गदाधरस्तु क्लिन्नमन्तारिति विवृणोति । एतच्च चक्षुष्येण पिल्लाख्यया पठितम् । तथाहि—"भृशं प्रक्लिद्यते वर्त्म कण्डूमन्मन्दवेदनम् । विद्यात् प्रक्लिन्नवर्त्मेति तत् पिल्लं सन्निपातजम्" इति । यद्येवं कथं विदेहेऽक्लिन्नवर्त्म पिल्लाख्यतया निर्दिश्यते । यथा—"प्रक्षालितेऽथवा मृष्टे आनह्येत पुनःपुनः । अपरिक्लिन्नवर्त्मेति तत्पिल्लमिति निर्दिशेत्" इति । तदेवं चक्षुष्येणाभिधानं विरुध्यते । किंच सुश्रुते प्रक्लिन्नवर्त्म श्लेष्मजसंग्रहे पठितं पिल्लं च सन्निपातजगणे, तत्कथं प्रक्लिन्नवर्त्म पिल्लमिति संगतम् ? उच्यते, अक्लिन्नवर्त्मैव पिल्लमुक्तमस्य सन्निपातजत्वात्, न तु प्रक्लिन्नवर्त्म, तस्य कफात्मकत्वात्, यदि

आतङ्कदर्पणव्याख्या ।

विदाहेनैव । अयं पित्ताधिकसन्निपातजः ॥ ८६ ॥ श्याववर्त्मलक्षणमाह—यद्वर्त्मेति । एतद्वाताधिकदोषत्रयजन्यम् । तथा च निमिः—"दुष्टं श्लेष्माऽनिलः पित्तं वर्त्मनोश्रीयते यदा । अग्निदग्धनिभं श्यावं श्याववर्त्मेति तद्विदुः ॥" इति । अत्र श्यावत्वेन वाताधिक्यं बोद्धव्यम् ॥ ८७ ॥ प्रक्लिन्नवर्त्मलक्षणमाह—अरुजमिति । अरुजमल्परुजम्, शूनं बाह्यत इति बहिः शोथवान् । क्लिन्नमत्यंतमिति । अत्यंतं क्लेदवत्, अंतत इति उपान्ते । गदाधरस्तु क्लिन्नमन्तारिति विवृणोति । तत्र मध्ये क्लेदवदित्यर्थः । चक्षुष्येणैतत्पिल्लाख्यया पठितम् । तद्यथा—"भृशं प्रक्लिद्यते वर्त्म कण्डूमन्मन्दवेदनम् । विद्यात्प्रक्लिन्नवर्त्मेति तत्पिल्लं सन्निपातजम् ॥" इति । तत्पिल्लं वक्ष्यमाणक्लिन-

यस्य धौतान्यधौतानि संबध्यन्ते पुनःपुनः ॥
वर्त्मान्यपरिपक्कानि विद्यादक्लिन्नवर्त्म तत् ॥ ८९ ॥
विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य न मील्यते ॥
एतद्वातहतं वर्त्म जानीयादक्षिचिन्तकः ॥ ९० ॥

मधुकोशव्याख्या ।

च प्रक्लिन्नवर्त्मैव कफोल्बणसान्निपातजं पिल्लत्वेनाभ्युपगम्यते, एतत् ख्यापनाय च तस्य कफजसर्वगणयोर्निवेशः कृत इति स्वीक्रियते, तदा सान्निपातजगणे पित्तेनाक्लिन्नवर्त्म न परिगृहीतं स्यात्; ततस्तदपरिग्रहे तु षट्सप्ततित्वोपसंहारो नेत्ररोगाणां न घटते, पञ्चसप्ततेरभिधानात्, पिल्लस्य प्रक्लिन्नवर्त्मस्वरूपत्वेनापृथक्त्वात् । ननु, एवं तर्हि कथं 'विद्यात् प्रक्लिन्नवर्त्मेति तत् पिल्लं सन्निपातजम्' इति समर्थयितव्यम् ? उच्यते, अस्यायमर्थः प्रत्येतव्यः—यदातदेव प्रक्लिन्नवर्त्म श्लेष्मात्मकमेव सत् वातपित्ताभ्यां विशेषकाभ्यामुपनिरुध्यते तदा सन्निपातजं सत् अपरिक्लिन्नवर्त्मार्थान्तरमासादायत् पिल्लमित्यभिधीयते, तथा चोभयोरप्यविरोधः, उभाभ्यामेव परिक्लिन्नवर्त्मन एव पिल्लाख्यत्ववर्णनादिति । अयं च वाग्भटे कफोत्क्लिन्नताख्यतया निरुद्धः, किंच यदि प्रक्लिन्नवर्त्म पिल्लं तत्पृथक्त्वेन चाक्लिन्नवर्त्म अभविष्यत्, तदान्यौपद्रविके सुश्रुतः दोषात्मकत्वेन साध्यादिभेदेन चाभिधानमकरिष्यत्, न च कृतम्, तस्मादक्लिन्नवर्त्म पिल्लं, तच्च प्रक्लिन्नवर्त्मनोऽवस्थान्तरमिति ॥ ८८ ॥ अपरिक्लिन्नवर्त्मनो लक्षणमाह—यस्य धौतानीत्यादि । एतद्वाग्भटे पिल्लाख्यम् । संबध्यन्ते अन्योन्यं लग्नानि भवन्तीत्यर्थः, तदिदं संबद्धत्वं किं पूयसंपर्कादेव तथा च प्रक्लिन्नत्वमेव स्यात्तदर्थमाह—अपरिपक्कानीति । एतदेव पिल्लाख्यम् । अन्यत्र क्वचिच्च पिल्लाख्यमन्यथा पठितम्,—"पित्तश्लेष्मप्रकोपेण वर्त्मान्तः परिपाठ्यते । ताम्रं निर्लोम तच्चापि विशिष्टं पिल्ललक्षणम्"—इति । एतदनादृतं, टीकाकृद्भिरव्याख्यातत्वात् । वाग्भटेन कुकूनकादीनामष्टादशानां पिल्लाख्या कृता । वर्त्मानीति बहुवचनं नेत्रद्वये वर्त्मचतुष्टयत्वन संगच्छते, तेन नेत्रद्वयगत एवायं व्याधिरिति कार्तिकः ॥ ८९ ॥ वातहतवर्त्मलक्षणमाह—विमुक्तसन्धीत्यादि । विमुक्तो विश्लिष्ट

आतङ्कदर्पणव्याख्या ।

वर्त्मनोऽवस्थांतरमवगंतव्यम् ॥ ८८ ॥ अक्लिन्नवर्त्मलक्षणमाह—यस्येति । यस्य वर्त्मानि बहिरंतश्चापरिक्लिन्नानि तथापि संबध्यन्ते आनह्यंते, पिल्लोपदेहेन संलग्नानि भवंतीत्यर्थः ॥ पक्कान्यपि धौतानि पूयेनाबद्धानि भवन्तीति तन्निरासायाह—अपरिपक्कानीति धौतान्यधौतानीति कोर्थः पुनःपुनः प्रक्षालितानि । बहुवचनमिह नेत्रद्वयस्य द्वयमितिख्यापनार्थम् ॥ एतद्विदेहे पिल्लाख्यया पठ्यते ॥ ८९ ॥ वातहतवर्त्मलक्षणमाह—विमुक्तेति । अक्षिचिंतकः इति शालाक्यसिद्धांतवादी,

वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् ॥
आचक्षीतार्बुदमिति सरक्तमविलम्बितम् ॥ ९१ ॥
निमेषिणीः शिरा वायुः प्रविष्टो सन्धिसंश्रयाः ॥
चालयत्यक्षिवर्त्मानि निमेषं नाम तद्विदुः ॥ ९२ ॥
यः स्थितो वर्त्ममध्ये तु लोहितो मृदुरंकुरः ॥
तद्रक्तजं शोणितार्शश्छिन्नंछिन्नं प्रवर्धते ॥ ९३ ॥

मधुकोशव्याख्या ।

वर्त्मशुक्लगतः सन्धिर्यस्मात् तत्तथा। निश्चेष्टं निमेषोन्मेषराहितम्। सन्धिविश्लेषादेव तदाश्रयाणां निमेषोन्मेषकारिणां शिराणामपि विश्लेषणनिमेषोन्मेषरहितत्वमित्यभिप्रायः। अत एवोक्तं न मील्यते न संकुचतीत्यर्थः। निमील्यत इति पाठान्तरं, तेन निमीलितमेव तिष्ठतीत्यर्थः, इदं युक्तं, दृष्टत्वात्। एतन्न साध्यं, सुश्रुते असाध्यप्रकरणे पठितत्वादिति ॥ ९० ॥ अर्बुदलक्षणमाह—वर्त्मान्तरस्थमित्यादि। वर्त्मनोऽभ्यन्तरस्थं, बाह्येऽप्युन्नतत्वदर्शनाद्विषमम्। ग्रन्थिभूतं ग्रन्थिरूपेण स्थितम्। अवेदनमिति ईषदर्थे नञ्, तेन ग्रन्थिरिवाल्पवेदनमित्यर्थः, वेदना च वातानुबन्धेनैव। सरक्तमिति किंचिद्रक्तं पित्तानुबन्धात्। अविलम्बितं शीघ्रजन्मेत्यर्थः। केचिदत्र क्रियाविशेषणं ब्रुवते, तेनायमर्थः—अविलम्बितं शीघ्रमाचक्षीत, अर्बुदमिति; किंत्वेतन्न सङ्गतम्, अस्य व्याख्यानस्य निष्प्रयोजनत्वात्। अन्ये तु विलम्बितमिति पठन्ति। एतत् सन्निपातात् अपाकीत्यर्थः। तच्च कफेन ॥ ९१ ॥ निमेषलक्षणमाह—निमेषिणीरित्यादि। निमेषिणीः निमेषकारिकाः शिराः। संधिसंश्रया इति वर्त्मशुक्लगता इत्यर्थः। अयमसाध्यो वातजः चक्षुष्येण चोन्मेषणीः शिरा इत्युक्तं, यदाह—"उन्मेषणीः शिरा वायुः प्रविश्य चावतिष्ठते। अत्यर्थं चालयेद्वर्त्म निमेषः स न सिध्यति"—इति ॥ ९२ ॥ शोणितार्शोलक्षणमाह—यः स्थित इत्यादि। अ-

आतङ्कदर्पणव्याख्या ।

विमुक्तसंधि स्वस्थानच्युतसंधि, निश्चेष्टं निष्क्रियम्, निमेषोन्मेषरहितमित्यर्थः। अत एव, निमील्यते न संकोच्यते। एतद्वातजमसाध्यं च ॥ ९० ॥ अर्बुदलक्षणमाह—विषमम् अवर्तुलम्, ग्रंथिभूतं ग्रंथिरूपेण स्थितम्, अवेदनम् अल्पवेदनम्, सरक्तम् ईषल्लोहितम्। अविलंबितम् अस्रस्तम्, शीघ्रजन्मेत्यन्ये ॥ अन्ये "अविलंबि च" इति पाठांतरं पठंति। एतत् सन्निपातात् आचक्षीत कथयेत् ॥ ९१ ॥ निमेषमाह—निमेषिणीरिति। व्यानो वायुः, निमेषिणीः निमेषकारिकाः, शिराः प्रविष्टो वर्त्मानि चालयति विसंस्थलयति। यदुक्तं विदेहे "उन्मेषणीः शिरा वायुः प्रविश्य व्यवतिष्ठते। अत्यर्थं चालयेद्वर्त्म निमेषः स न सिध्यति ॥" इति ॥ ९२ ॥ शोणितार्शो लक्षणमाह—य इति। एतद्रक्तजमसाध्यम्। तथा च विदेहः—"वायुः शोणितमादाय शिराण-

अपाकी कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः ॥
नगणो नाम स व्याधिर्लिङ्गतः परिकीर्तितः ॥ ९४ ॥
त्रयो दोषा बहिः शोथं कुर्युश्छिद्राणि वर्त्मनोः ॥
प्रस्रवन्त्यन्तरुदकं बिसवद्बिसवर्त्म तत् ॥ ९५ ॥
प्रचालितानि वातेन पक्ष्माण्यक्षि विशन्ति हि ॥
घृष्यन्त्यक्षि मुहुस्तानि संरम्भं जनयन्ति च ॥ ९६ ॥

मधुकोशव्याख्या ।

ङ्कुराकारो मांसोच्छ्रयोऽङ्कुरः । अत्रैव विदेहः—"वायुः शोणितमादाय शिराणां प्रमुखे स्थितः॥ जनयत्यङ्कुरं ताम्रं वर्त्मनि छिन्नरोहणम् । तच्छोणितार्शोऽसाध्यं स्याद्रक्तस्राव्यथ नीरुजम्"----इति ॥ ९३ ॥ नगणलक्षणमाह—अपाकी काठिन इत्यादि। अपाकित्वादिकं श्लेष्मारब्धत्वादेव । अत्रैव सात्यकिः,—"वर्त्मोपरिष्टाद्यो ग्रन्थिः कठिनो न विपच्यते। नीरुजो नगणो नाम रोगः श्लेष्मसमुद्भवः"--इति ॥ ९४ ॥ बिसवर्त्मलक्षणमाह—त्रयो दोषा इत्यादि । बहिःशोथमिति बहिरुच्छूनत्वं यथा भवति तथा वर्त्मनोश्छिद्राणि दोषास्त्रयः कुर्युरित्यर्थः। तानि छिद्राणि अन्तर्मुखान्येव यदाह—प्रस्रवन्त्यन्तरुदकमिति । छिद्राणीति बहुवचननिर्देशाद्बहुमुखानि, अत्रापि दोषाः कुर्युरिति संबन्धः । अत एव बिसवत् मृणालवत्, यचानेकच्छिद्रयुक्तं भवति तद्वत् । अत्रैव चन्द्रिकाकारः सुश्रुते पठति,—"शूनं यद्वर्त्म बहुभिः सूक्ष्मैश्छिद्रैः समन्वितम् । वर्त्मान्तरे बिसमिव बिसवर्त्मेति तत् स्मृतम्"—इति । सात्यकिरप्याह—"बिसस्यापाचितस्येव बाहुमांसशिरामुखम् । बिसवर्त्मेति जानीयाद्भिषकित्स्यं त्रिदोषजम्" इति ॥९५॥ पक्ष्मकोपलक्षणमाह—प्रचालितानीत्यादि ।पक्ष्माणि वर्त्मरोमाणि वातचालितानि सन्ति नेत्रं प्रविशन्ति अन्तर्मुखानि वर्त्मन इत्यर्थः। तान्यसिते कृष्णमण्डले सितभागे शुक्लमण्डले वा अक्षि घृष्यन्ति घर्षयन्तीत्यर्थः । अत एव संरम्भं

आतङ्कदर्पणव्याख्या ।

प्रमुखे स्थितः । जनयत्यंकुरं ताम्रं वर्त्मनि च्छिन्नरोहिणम् ॥ तच्छोणितार्शोऽसाध्यं स्याद्रक्तस्राव्यथ नीरुजम्' इति ॥ ९३ ॥ नगणलक्षणमाह—अपाकीति । श्लेष्मजनितः । अरुजः पीडारहितः ॥ ९४ ॥ बिसवर्त्मलक्षणमाह—त्रय इति । शोथं कुर्युः । छिद्राण्यपि कुर्युरिति संबध्यते । बिसवदिति बिसं मृणालं यथाऽनेकछिद्रमभ्यंतरस्थिते जले सति स्रवति, तद्वत् । "प्रस्रवति"[1] इति पाठे तद्बिसवर्त्म प्रस्रवतीति संबध्यते ॥ ९५ ॥ पक्ष्मकोपमाह—प्रचालितानीति । मूलस्याना-

1 एतादृशपाठाभिप्रायेण ।

असिते सितभागे च मूलकोषात्पतन्त्यपि ॥
पक्ष्मकोपः स विज्ञेयो व्याधिः परमदारुणः ॥ ९७ ॥
वाताद्या वर्त्मसंकोचं जनयंति मला यदा ॥
तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः ॥ ९८ ॥
वर्त्मपक्ष्माशयगतं पित्तं रोमाणि शातयेत् ॥
कण्डूं दाहं च कुरुते पक्ष्मशातं तमादिशेत् ॥ ९९ ॥

मधुकोशव्याख्या ।

शोथं जनयन्ति । मूलकोषात् पक्ष्मकोशात्, पतन्त्यपीति पक्ष्माणीति शेषः, अपिशब्दान्न पतन्ति च । त्रिदोषजश्चायम् । प्रचालने वातमात्रकारणत्वमुक्तं तथा च चन्द्रिकाकारः पाठान्तरं पठति—"पक्ष्माशयगता दोषास्तीक्ष्णाग्राणि खराणि च । निर्वर्तयन्ति पक्ष्माणि तैर्घृष्टं चाक्ष दूयते । उद्धृतैरुद्धृतैः शान्तिः पक्ष्मभिश्चोपजायते"—इति । अत्र पक्ष्माशयो वर्त्म । विदेहोऽप्याह—"यस्य वातसंबन्धेन दोषाः प्रकुपितास्त्रयः"—इत्यादिनेति । कल्याणविनिश्चये उपपक्ष्म पठ्यते—"पक्ष्मोपरोधो वातेन कोठोऽन्तर्मुखरोगवान् । रोमैरन्तर्मुखैरन्यैरुपपक्ष्म मलैस्त्रिभिः"—इति । उपपक्ष्माणि यादृशी पूर्वसिद्धा तादृशी वापरान्तर्मुखी पक्ष्मपंक्तिरिति भेदः, अस्य पक्ष्मोपरोधविशेषत्वात् समानचिकित्स्यत्वाच्च पृथगिहानभिधानम् ॥ ९६ ॥ ९७ ॥ कुञ्चनलक्षणमाह—वाताद्या इत्यादि । मला इत्यस्याभिधानं दुष्टत्वप्रतिपादनार्थं, यतो मलिनीकरणात् मला उच्यन्ते । कुञ्चनं च कस्यापि तन्त्रस्य माधवकरेण लिखितं न सौश्रुतं, तेन सुश्रुतोक्तषट्सप्ततिसंख्या न हीयते, एवं वक्ष्यमाणेऽपि पक्ष्मपाते बोद्धव्यम् ॥ ९८ ॥ पक्ष्मशातलक्षणमाह—वर्त्मेत्यादि । पक्ष्माशयोऽत्र पक्ष्ममूलं, शातये-

आतङ्कदर्पणव्याख्या ।

त्पतंत्यपीति पक्ष्माणीति शेषः । अपिशब्दान्न पतंत्यपि । अयं सन्निपातजो याप्यः ॥ ९६ ॥ ॥ ९७ ॥ कुंचनमाह—वाताद्या इति । मला इत्यस्याभिधानं दुष्टत्वप्रतिपादनार्थम्, मलिनीकरणान्मला इत्युच्यंते । कुंचनं च कस्यापि तंत्रस्य माधवकारचार्येण लिखितं न सौश्रुतम्, तेन सुश्रुतोक्ता षट्सप्ततिसंख्या न हीयते, एवं पक्ष्मशातेऽपि बोद्धव्यम् । यदाह सुश्रुतः--"उत्संगिन्यपि कुंभीका पोथकी वर्त्मशर्करा । तथार्शोवर्त्म शुष्कार्शस्तथैवांजननामिका ॥ बहलं वर्त्मजश्चापि व्याधिवर्त्मविबंधकः । क्लिष्टकर्दमवर्त्माख्यौ श्याववर्त्म तथैव च ॥ प्रक्लिन्नमपरिक्लिन्नं वर्त्म वातहतं च यत् । अर्बुदं निमिषश्चापि शोणितार्शश्च यत्स्मृतम् ॥ लगणं बिसनामा च पक्ष्मकोपस्तथैव च । एकविंशतिरित्येते विकारा वर्त्मसंश्रयाः" इति ॥ ९८ ॥ पक्ष्मशातलक्षणमाह—वर्त्मेति । पक्ष्माशयः पक्ष्ममूलम्, शातयेत्, उत्पाटयेत् कंडूरक्तपित्तप्रकोपिवरक्तात् । तं पक्ष्मशातं

( नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः ॥
शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः ॥ १ ॥
सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु ॥
बाह्यजौ द्वौ समाख्यातौ रोगौ परमदारुणौ ॥
भूय एतान्प्रवक्ष्यामि संख्यारूपचिकित्सितैः ॥ २ ॥ )

इति श्रीमाधवकरविरचिते माधवनिदाने नेत्ररोगनिदानं समाप्तम् ॥ ५९ ॥

---

# अथ शिरोरोगनिदानम् ६०.

शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः ॥
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥
सूर्यावर्तानन्तवातार्धावभेदकशंखकैः ॥ १ ॥

---

मधुकोशव्याख्या ।

दुन्मूलयेदित्यर्थः । अयं च कफपैत्तिकः कण्डूदाहवत्त्वात् । अत्र कृच्छ्रोन्मीलनं वाग्भटः पठति–"रोगान् कुर्युश्चलस्तत्र प्राप्य वर्त्माश्रयाः शिराः । सुप्तोत्थितस्य कुरुते वर्त्मस्तम्भं सवेदनम् । पांशुपूर्णाभनेत्रत्वं कृच्छ्रोन्मीलनमश्रु च । विमर्दनात्स्याच्च शमः कृच्छ्रोन्मीलं वदन्ति तम्"–इत्यस्य चकारेण संग्रहः । इति वर्त्मगता एकविंशतिर्व्याधयः समाप्ताः ॥ ९९ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां नेत्ररोगनिदानं समाप्तम् ॥ ५९ ॥

अथ कर्णनासानेत्राणामधिष्ठानत्वेन शिरसः नयनरोगानन्तरं शिरोरोगनिदानारम्भः । शिरोरोगाश्चैकादश, तत्र कारणभेदेन शिरोरोगभेदं दर्शयन्नाह–शिरोरोगास्त्वित्यादि । वातपित्तकफैरित्युक्ते गम्यत एव त्रिभिरिति तत्कथं

आतङ्कदर्पणव्याख्या ।

व्याधिमादिशेत् कथयेत् । अयमपि वर्त्मरोगः पक्ष्मणां वर्त्माश्रयत्वात् ॥ इति वर्त्मजाः ॥ ९९ ॥ इत्यातंकदर्पणे निदानव्याख्यायां नेत्ररोगनिदानम् ॥ ५९ ॥

शिरआश्रितश्रवणनासारोगास्तु जायंते, तानभिधायाश्रयभूतशिरोरोगाभिधानम् । शिरोरोगाश्चैकादश भवंति, तानाह–शिर इति । वातपित्तकफैरित्युक्ते त्रित्वमभ्युपगम्यत एव । यत्पुनस्त्रिभिरिति ग्रहणं तत्सर्वेषां शिरोरोगाणां सन्निपातजत्वख्यापनार्थम् । वातादिभेदश्चोत्कर्षात् । यदुक्तं–"सर्व एव शिरोरोगाः सन्निपातसमुद्भवाः । औत्कट्याद्दोषलिंगानां कीर्तितास्तद्विदादश ॥"

**यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम् ॥**
**बन्धोपतापैः प्रशमश्च यत्र शिरोऽभितापः स समीरणेन ॥ २ ॥**
**यस्योष्णमङ्गारचितं यथैव भवेच्छिरो धूप्यति चाक्षिनासम् ॥**
**शीतेन रात्रौ च भवेच्छमश्च शिरोऽभितापः स तु पित्तकोपात् ॥ ३ ॥**

मधुकोशव्याख्या ।

तदुक्तिः ? उच्यते,–सर्वेषां शिरोरोगाणां सन्निपातजत्वख्यापनार्थं, वातादिभेदश्चोत्कर्षात्; तदुक्तं शालाक्ये–"सर्व एव शिरोरोगाः सन्निपातसमुत्थिताः । औत्कट्याद्दोषलिङ्गैस्ते कीर्तितास्तद्विदा दश"–इति । त्रिभिः सन्निपातेनेति पदद्वयेन प्रकृतिविकृतिसमवेतसन्निपातद्वयमाहुरन्ये । अत्र पक्षे सन्निपातजत्वादेकत्वगणनया न संख्यातिरेकः । त्रिभिरिति पदं पृथक्त्वद्योतनार्थमिति गदाधरः । क्षयेणेति असृग्वसादीनां क्षयेण, क्षयजोऽयं धातुक्षयजनितवातकोपेन सहसाकृतवातजन्यत्वेनाचयपूर्वकः, वातजस्तु संचयप्रकोपजनित इति भेदः, अत एवानुपशयोऽप्यस्य संस्वेदनादिना शुक्रक्षयकृदेवोपन्यस्तः । शिरोरोगशब्देन शिरोगतशूलरूपा रुजाभिधीयते, तेन सूर्यावर्तानन्तवातार्धावभेदकशंखकैरित्यभिधानमुपपद्यते, अन्यथा तेषामेव शिरोरोगत्वात् तैः शिरोरोगा जायन्त इत्यसंगतं स्यात् ॥ १ ॥ वातिकलक्षणमाह–यस्यानिमित्तमित्यादि । अनिमित्तम् अतर्कितनिमित्तं, वायोर्विषमक्रियत्वात्; तेन निमित्तानुषङ्गिना कालादिनेत्यर्थः । निशि चातिमात्रमिति रात्रौ शीतेन वायोराधिक्यान्महती रुजा भवति, शीतयोनित्वाद्वायोः । बन्धोपतापैरिति बन्धो बन्धनं वस्त्रादिभिः, उपतापः स्नेहस्वेदादिभिः, व्यक्त्यपेक्षया बहुवचनम्, एतेनोपशयो दर्शितः । शिरोऽभितापः शिरोरुजा ॥ २ ॥ पित्तजलक्षणमाह–यस्योष्णमङ्गारचितमित्यादि । अङ्गारचितं यथैवेति ज्वलदंगाराच्छन्नमिवेत्यर्थः । धूप्यति धूपायते धूम-

आतङ्कदर्पणव्याख्या ।

इति । क्षयेणेति । असृग्वसादीनां क्षयेण क्षयजः तथैव चेति चकारेण तंत्रांतरोक्तमनंतवातमुपलभ्यते । शिरोरोगशब्देन शिरोरोगगतशूलरूपा शिरोरुजाभिधीयते । तेन सूर्यावर्तानंतवातार्धावभेदकशंखावित्यभिधानमुपपद्यते ॥ १ ॥ तत्र वातिकमाह–यस्येति । अनिमित्तम् अतर्कितनिमित्तम् । (वायोःपित्तवातयोः) विषमक्रियत्वात् । अत्र तीव्रा इत्यभिधानात् पित्तेन मध्या, कफेन मंदा रुजा । निशि चातिमात्रं बंधप्रतापैश्च भवेद्विशेषः । शिरोभिताप इति गम्यते । निशि चातिमात्रमिति रात्रौ शैत्याद्वायोराधिक्यात् ॥ बंधप्रतापैरिति बंधः उष्णीषादिना, प्रतापः स्वेदेन शिरोभितापः । इति शिरोरुजा ॥ २ ॥ पैत्तिकमाह–यस्येति । अंगारचितमिवोष्णं शिरो भवति ।

---

१ "सूर्यावर्त्तार्द्धभेदाभ्यां शंखकेन तथैव च" इति पा० । २ अस्यायमेवेष्टः पाठः ।

**शिरो भवेद्यस्य कफोपदिग्धं गुरु प्रतिष्टब्धमतो हिमं च ॥**
**शूनाक्षिकूटं वदनं च यस्य शिरोऽभितापः स कफप्रकोपात्॥४ ॥**
**शिरोऽभितापे त्रितयप्रवृत्ते सर्वाणि लिङ्गानि समुद्भवन्ति ॥**
**रक्तात्मकः पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च ॥५॥**
**असृग्वसाश्लेष्मसमीरणानां शिरोगतानामिह संक्षयेण ॥**
**क्षयप्रवृत्तः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम् ॥**
**संस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति ॥ ६ ॥**

मधुकोशव्याख्या ।

पूर्णमिव भवतीत्यर्थः । धूप्यतीति दिवादेराकृतिगणत्वात् । अक्षि च नासा च इत्यक्षिनासं, प्राण्यङ्गत्वादेकवद्भावः।उपशयं दर्शयति—शीतेन रात्रौ चेत्यादि ॥ ३ ॥ श्लेष्मजलक्षणमाह—शिरो भवेदित्यादि । कफोपदिग्धमिति कफलिप्तम् । गुरु गौरवयुतम् । प्रतिष्टब्धं बद्धमिव । हिमं हिमस्पर्शम् । शूनाक्षिकूटमिति वदनविशेषणम् । तथाहि चरकः—'शिरो मन्दरुजं तेन गुरुस्तिमितभारिकम्' इति । अत्रापि स्वेदादिनोपशयो ज्ञेयः ॥ ४ ॥ सान्निपातिकलक्षणमाह—शिरोऽभिताप इत्यादि । सर्वाणि लिङ्गानि अनन्तरोक्तानि वातादिलिङ्गानि । अयं च सन्निपातो विकृतिविषमसमवेतो ज्ञेयः, अन्यथा सर्वेषामेव शिरोरोगाणां त्रिदोषजत्वात् पृथगभिधानं व्यर्थं स्यात्, अस्य च विकृतिविषमसमवेतत्वं कारणभेदात् ज्ञेयं, न तु विरुद्धलक्षणतया; स चायं कारणभेद उत्कटसर्वदोषजत्वादेव विज्ञेयः । यथा त्रिदोषजे राजयक्ष्मणि स्वरभेदादिजनकानां वातादीनामुत्कटत्वमिति । उक्तं हि चरके—"वाताच्छूलं भ्रमः कम्पः पित्ताद्दाहो मदस्तृषा । कफाद्गुरुत्वं तन्द्रा च शिरोरोगे त्रिदोषजे", इति ॥ रक्तजलक्षणमाह—रक्तात्मक इत्यादि । पित्तसमानलिङ्ग इति पित्तजशिरोरुक्तुल्यलक्षणः । पैत्तिकलिङ्गाधिकमिह स्पर्शासहत्वम् ॥ ५ ॥ क्षयजलक्षणमाह—असृगित्यादि । वसासृजोः सर्वदेहस्थितत्वात् शिरसि स्थितिः, श्लेष्मणः स्थानमेव शिरः,

आतङ्कदर्पणव्याख्या ।

नासा धूमावृता भवति । "धूप्यति चापि नासा"[1] इति चाह । शिर इति पित्तं संतापयतीत्यर्थः ॥ ३ ॥ कफजमाह—शिर इति । कफोपदिग्धं कफेन लिप्तम्, गुरु गौरवयुक्तम्, प्रलब्धं[2] बद्धमिव । शूनाक्षिकूटमिति । वदनविशेषणम् ॥ ४ ॥ सन्निपातजमाह—शिर इति । त्रितयप्रवृत्ते दोषत्रयसंभूते, उक्तवातादिलिंगानां मुहुर्मुहुर्भवनात् । रक्तजमाह—रक्तात्मक इति । पित्तजशिरोरोगलक्षणम् । अत्र तु स्पर्शासहत्वमधिकम् ॥ ५ ॥ क्षयजमाह—असृगिति । वसासृजोः सर्वांग-

१ "धूमवती च नासा" इति पा० ॥ २ "प्रलब्धं च तथा हिमं च इति पा० ।"

**निस्तुद्यते यस्य शिरोऽतिमात्रं संभक्ष्यमाणं स्फुरतीव चान्तः ॥ घ्राणाच्च गच्छेत्सलिलं सपूयं शिरोऽभितापः क्रिमिभिः सघोरः ७**

मधुकोशव्याख्या ।

उदानवायोरूर्ध्वगतित्वात् शिरस्यवस्थानं, तेषां क्षयेण उग्ररुजत्वं व्याधिप्रभावात् यतो वृद्धे वायावुग्ररुजा युज्यते न तु क्षीणे, तदुक्तम्–"वातपित्ते कफे चैव क्षीणे लक्षणमुच्यते । कर्मणः प्रकृतेर्हानिः" इति । अन्यैरपि पुनरयं पाठः सुश्रुते स्वीकृतः, यथा–वसाबलासक्षयसंभवानामिति । युक्तश्चायं पाठः वातक्षये हि कफवृद्धौ कफजः शिरोरोगः स्यात्, वृद्धिर्वापि विरोधिनामिति वचनात् । किं चैतस्य चिकित्सायामुक्तं–'पाने नस्ये च सर्पिः स्याद्वातघ्नमधुरैः शृतम्' इति । ततः समीरणपाठो न संगतः, नहि क्षीणे वायौ शमनमुक्तम्, अपि तर्हि वर्धनविधिः यदुक्तं–'क्षीणा वर्धयितव्याः' इति । वसा, देहस्नेहस्योपलक्षणं, तेन मेदोमज्जशुक्रमस्तिष्काण्यपि अवरुध्यन्ते, तेषां देहस्नेहत्वात् । पित्तमांसादिक्षयजस्तु चयादिक्रमजक्षयकृतवातशिरोरोग एवावरुध्यते, इति गदाधरः । शिरोभितापः शिरोरुजा । संस्वेदनच्छर्दनधूमनस्यैः कफक्षयः, नागरादितीव्रधूमेन वसामस्तिष्कादिक्षयः, शिरामोक्षादिभिरसृक्क्षयः, अतएवैतैः संस्वेदनादिभिः क्षयजस्य वृद्धिः । अयं विदेहेऽपि पठ्यते । "शून्यं भ्रमति तुद्येत शिरोविभ्रान्तनेत्रता । मूर्च्छा गात्रावसादश्च शिरोरोगे क्षयात्मके" चक्षुष्योऽप्याह–"स्त्रीप्रसंगादभिघातादथवा देहकर्मणा । क्षिप्रं संजायते कृच्छ्रः शिरोरोगः क्षयात्मकः । वातपित्तात्मकं लिंगं व्यामिश्रं तत्र लक्षयेत्" इति ॥ ६ ॥ क्रिमिजमाह–निस्तुद्यत इत्यादि । निस्तुद्यते सूचीभिरिव तुद्यते । संभक्ष्यमाणं क्रिमिभिरिति शेषः, प्रकरणात् । स्फुरतीव मनाक् चलतीव । घ्राणाच्चेति चकारो भिन्नक्रमेण सलिलमित्यत्र संबध्यते, तेन सलिलं पूयं च गच्छेत् तथा क्रिमयश्च कदाचिद्गच्छं-

आतङ्कदर्पणव्याख्या ।

गतत्वात् शिरसि स्थितिः, कफस्य च तत्स्थानमेव लक्षयेत् । उग्ररुजत्वं व्याधिप्रभावादित्येके । शिरसोभिताप इति शिरोरुजा । संस्वेदनच्छर्दनतीव्रनस्यैः कफस्य क्षयः । नागरादितीव्रधूमेन मस्तिष्कवसादिक्षयः । अत एव तैः संस्वेदनादिभिः क्षयजस्य वृद्धिः । अयं विदेहेऽपि पठ्यते– "शून्यं भ्रमति रुज्येत शिरोविभ्रांतनेत्रता । मूर्छा गात्रावसादश्च शिरोरोगे क्षयात्मके ॥" इति ॥ ६ ॥ क्रिमिजमाह–निस्तुद्यत इति । संभक्ष्यमाणमित्यत्र क्रिमिभिरिति शेषः । स्फुरतीव मनाक् चलतीव । घ्राणाच्च गच्छेदित्यत्र चकारेण क्रिमयश्च गच्छंतीति द्रष्टव्यम् ॥ ७ ॥

१ अयमेवैतद्दिष्टः पाठः ।

**सूर्योदयं वा प्रति मन्दमन्दमक्षिभ्रुवं रुक्समुपैति गाढम् ॥**
**विवर्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्तते च ॥**
**सर्वात्मकं कष्टतमं विकारं सूर्यापवर्तं तमुदाहरन्ति ॥ ८ ॥**

मधुकोशव्याख्या ।

तीति, तथाच चरकः—"क्रिमीणां दर्शनेन च" इति ॥ ७ ॥ सूर्यावर्तलक्षणमाह—सूर्योदयमित्यादि । सूर्योदयं प्रति लक्षीकृत्य या रुक् अक्षिभ्रुवं समुपैतीति संबन्धः। अक्षिभ्रुवाविति पाठान्तरे प्राण्यङ्गत्वेन प्राप्तैकवद्भावस्याभावः, नासिकास्तनयोरितिवत् । लक्षणव्यभिचारात् । सूर्योदये प्रातर्मन्दं मन्दं यथा स्यात् तथा रुजा समुपैति अंशुमता च सूर्येण सह गाढं यथा भवति तथा वर्धते । अयमर्थः—यथा सूर्यो वर्धते तथा वेदना प्रवृद्धा भवति सूर्यस्यापवृत्तौ सायाह्ने विनिवर्तते शाम्यतीत्यर्थः । सर्वात्मकमिति सन्निपातजम् । व्याधिस्वभावाच्च कालविशेषनियमः । कष्टतमं कृच्छ्रसाध्यम् । ननु, अयं सुश्रुते वातपित्ताभ्यां पठ्यते, तद्यथा—"आवर्तसंज्ञः स तु सूर्यपूर्वो व्याधिर्मतः पित्तसमीरणाभ्याम् । शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाच्च" इति । तत्कथं सर्वजत्वम् ? उच्यते,—सुश्रुते औत्कर्षेण व्यपदेश इति न विरोधः । ननु, एवं कथं रात्रौ वायुसमानगुणशीतप्रादुर्भावे वेदना लीनता, दिवसस्याद्यन्तयोर्मन्दरुक्त्वं च ? उच्यते—अत्रापि पित्तस्य प्रबलतमत्वात् । यत्तु चिकित्सायां शिरीषमूलपिप्पलीमूलवचावपीडाद्यभिहितं, तद्व्याधिप्रत्यनीकत्वात् । अथ वातपित्तजत्ववर्णनेन विशिष्टकालभवने हेतुर्दर्शितो भवति । यतो वातपित्तयोः शीतोष्णात्मकत्वात् पूर्वाह्णे सूर्यवृद्धिक्रमेण स्रोतसां संकोचक्रमादवरुद्धमार्गयोर्वेदनाकरत्वम् । अपराह्णे निवर्तमाने सूर्ये तु स्रोतसां विवृतत्वात् स्वमार्गव्यावातविरहेण वेदनाया अजनकत्वमिति युक्तः कालविशेषनियमः । तथा चाह निमिः—"सूर्यसोमात्मकौ नित्यमहेतू पित्तमारुतौ । कुर्वाते वेदनां तीव्रां दिनात्पूर्वाह्ण एव तु । आदित्यतेजसा युक्ते निवृत्तेऽपि च भास्करे । स्रोतसां विवृतत्वाच्च ततः श्लेष्माधिगच्छति । उद्गतो मातरिश्वा च स्वमार्गं प्रतिपद्यते । तस्मान्मध्यदिनादूर्ध्वं वेदनात्र प्रशाम्यति" इति । वातपित्तजत्वमस्याधिकत्वेन व्यपदेश इति न्यायात्; तेन पूर्वेण समं न

आतङ्कदर्पणव्याख्या ।

सूर्यावर्त्तमाह—सूर्योदयमिति।सूर्योदयं प्रति लक्षीकृत्य या रुक् अतार्किताक्षिभ्रुवं समुपैतीति संबंधः । "अक्षिभ्रुवौ" इति पाठांतरं पठंति । तत्र गूढा रात्रौ लीना भवति । सर्वात्मकं सन्निपातजम् । सुश्रुतेऽयं वातपित्ताभ्यां पठ्यते, तत्कथं सर्वजत्वमित्युच्यते ? तत्रौत्कट्येन निर्देशादविरोधः । नन्वेवं रात्रौ कथं वायोः समानगुणशीतप्रादुर्भावे वेदना लीयते, दिवसस्याद्यंतयोर्मंदा रुक् ? उच्यते,—

**दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य घाटासु रुजां सुतीव्राम् ॥**
**कुर्वन्ति योऽक्षिभ्रुवि शंखदेशे स्थितिं करोत्याशु विशेषतस्तु ॥९॥**
**गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान् ॥**
**अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् ॥ १० ॥**

**रूक्षाशनाध्यशनप्राग्वातावश्यायमैथुनैः ॥**
**वेगसन्धारणायासव्यायामैः कुपितोऽनिलः ॥ ११ ॥**

---

मधुकोशव्याख्या ।

विरोधः । विदेहे सूर्यावर्तविपर्ययोपि पठ्यते--"तत्र वातानुगं पित्तं चितं शिरसि तिष्ठति । मध्याह्ने तेजसार्कस्य तद्विवृद्धं शिरोरुजम् ॥ करोति पैत्तिकीं घोरां संशाम्यति दिनक्षये । अस्तंगते प्रभाहीने सूर्ये वायुर्विवर्धते ॥ पित्तं शान्तिमवाप्नोति ततः शाम्यति वेदना । एष पित्तानिलकृतः सूर्यावर्त्तविपर्ययः"--इति ॥ ८ ॥ अनन्तवातलक्षणमाह—दोषा इत्यादि । मन्या ग्रीवाशिराद्वयं, तां संपीड्य; घाटासु ग्रीवापश्चाद्भागेषु, दोषास्त्रय एव रुजां वेदनां सुतीव्रां कुर्वन्ति, तथा अक्षिभ्रुवि शंखदेशे च स्थितिमारब्धत्वं यो विशेषतः करोति, तथा गण्डपार्श्वे कम्पं हनुग्रहादिकं च यः करोति, तमनन्तवातमुदाहरन्तीति योज्यम् । हनुग्रहो वातव्याधिविशेषः । अमुं च सुश्रुते अन्यतो वातेनैव तुल्यत्वादनन्तवातं परित्यज्य दश शिरोरोगा अभिहिताः, एवं तन्त्रान्तरेऽपि 'कीर्तितास्तद्विदा दश'—इत्यभिधानं, माधवकरेण तु त्रिदोषजत्वेन तदधिककम्पहनुग्रहलिङ्गयोगाच्च केवलवातजादन्यतो वाताद्विलक्षण एवायमिति अनन्तवातोऽधिकः पठितः, भेदो हि भेदवतां कारणभेदाद्विरुद्धधर्माध्यासाच्च भवतीति ॥ ९ ॥ १० ॥ अर्धावभेदलक्षणमाह—रूक्षाशनेत्यादि—अध्यशनमजीर्णे भोजनम् । अवश्यायेति अवश्यायो हिममुच्यते, छन्दोऽनुरोधेन ह्रस्वत्वं चेति व्याचक्षते ।

आतङ्कदर्पणव्याख्या ।

अत्रापि पित्तस्य प्रबलतमत्वात् ॥ ८ ॥ अनंतवातमाह—दोषा इति । स्वरुजां स्वांस्वां रुजाम् ॥ ९ ॥ गंडस्य पार्श्वे गंडस्योपांतदेशे । सुश्रुतेनानंतवातं परित्यज्य दश शिरोरोगा उक्ताः । तंत्रांतरेऽपि दश "कीर्तितास्तद्विदा दश" इत्यभिधानात् ॥ १० ॥ अर्द्धावभेदकमाह—रूक्षेति । अध्यशनम् अजीर्णभोजनम्, । प्राग्वातः, अवश्यायो निशाजलम् ॥ शस्त्रारणिनिभामिति । शस्त्रच्छेदननिभाम्, अरणिः अग्न्युत्पादनं काष्ठयंत्रम्, तत्कृतमंथननिभां वेदनां करोति । सुश्रुते त्वयं दोषत्रयजः पठितः—"यस्योत्तमांगं रुजतेऽर्द्धमात्रं सतोदभेदभ्रममोहशूलैः । पक्षाद्दशाहादथ वाप्यकस्मात्स्यादर्द्धभेदे त्रितयाद्व्यवस्येत् ॥" इति । अत्र तु केवलोऽनिलः सकफ इत्युक्तः

केवलः सकफो वार्धं गृहीत्वा शिरसो बली ॥
मन्याभ्रूशंखकर्णाक्षिललाटार्धेऽतिवेदनाम् ॥ १२ ॥
शस्त्रारणिनिभां कुर्यात्तीव्रां सोऽर्धावभेदकः ॥
नयनं वाथवा श्रोत्रमतिवृद्धो विनाशयेत ॥ १३ ॥
रक्तपित्तानिला दुष्टाः शंखदेशे विमूर्च्छिताः ॥
तीव्ररुग्दाहरागं हि शोथं कुर्वन्ति दारुणम् ॥ १४ ॥

मधुकोशव्याख्या।

कदापि सश्लेष्मवातजत्वमिति विकल्पं दर्शयाति—केवल इत्यादिना। शस्त्रारणिनिभां शस्त्रच्छेदनिभां अरिणिनिभां च, अरणिरग्न्युत्थापनकाष्ठयन्त्रम्, तस्य मन्थनवत् पीडा, किंवा अरणिना कारणेन अग्निरेवोच्यते, तेनाग्निनिभां च वेदनाम्। सुश्रुते त्वयं त्रिदोषजः पठितः। तद्यथा—"यस्योत्तमाङ्गं रुजतेऽर्धमात्रं सतोदभेदभ्रममोहशूलैः। पक्षाद्दशाहादथवाप्यकस्मात्स्यादर्धभेदं त्रितयाद्व्यवस्येत्"—इति अत्र तु केवलोऽनिलः सकफो चेति औत्कष्यार्दाभिधानं; 'सोऽर्धभेदः कफानिलात्' इति विदेहेऽप्येवं बोद्धव्यम्। अयमुपेक्ष्यमाणो नयनादिकं हन्यादित्याह—नयनमित्यादि। अत्रैव विदेहः—"शिरसोऽन्यतरे पार्श्वे कुपितो मारुतो यदा। श्लेष्मणा रुध्यते जन्तोस्तोदस्फुटनदालनैः॥ शूलावदारणैर्गाढमर्धं तदवरुध्यते। नयनं चावदीर्येत सोऽर्धभेदः कफानिलात्॥ तथा त्र्यहात्स पञ्चाहात्पक्षान्मासाच्च देहिनाम्"—इति। सुश्रुते पवनात् सपित्तादिति केचित् पठन्ति। तेन वातपित्तजत्वमस्य। सात्यकिना वायुः शिरःशंखभ्रूनेत्रमवगृह्येत्यादिना वातजत्वमस्य दर्शितम्। अन्ये तु सन्निपाताधिकारात् सन्निपातजं पठन्ति, तथाच सुश्रुतः,—"त्रितयाद्व्यवस्येत्" इति। व्याधिस्वभावादचिरानुबन्धकरत्वं सान्निपातिकत्वेऽपि ॥ ११–१३ ॥ शंखकलक्षणमाह—रक्तपित्तानिला इत्यादि। दुष्टाश्चयादिमन्तः। मूर्च्छिताः अन्योऽन्यमेकीभूताः। कफोऽप्यत्र बोद्धव्यः, तथाच सुश्रुतः,—'शंखाश्रितो वायुरुदीर्णवेगः कृतानुतापः कफपित्तरक्तैः'—इति। मारकत्व-

आतङ्कदर्पणव्याख्या।

"सोऽर्द्धावभेदकः सकफानिलात्" इति विदेहेऽप्येवमेव बोद्धव्यम्। अयमुपेक्ष्यमाणोऽतिप्रवृद्धः श्रोत्रे नेत्रे हंति ॥ ११–१३ ॥ शंखकमाह—पित्तेति[२]। मूर्च्छिताः प्रवृद्धाः। "शंखाश्रितो वायुरुदीर्णवेगः कृताऽनुतापः कफपित्तरक्तैः" इति सुश्रुतवचनात् कफोऽप्यत्रावगंतव्यः। त्रिरात्रात्परतो जीवितं हंति। त्रिरात्रं कुशलवैद्याधिष्ठिते जीवति। त्र्यहादिति त्र्यहं प्राप्य। भेडेप्युक्तम्—

१ एवंपाठाभिप्रायेण। २ "रक्तपित्त—" इत्यत्र "पित्तरक्त—" इति पाठा०।

स शिरो विषवद्वेगी निरुध्याशु गलं तथा ॥
त्रिरात्राज्जीवितं हन्ति शंखको नामतः परम् ॥
त्र्यहाज्जीवति भैषज्यं प्रत्याख्याय समाचरेत् ॥ १९ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने शिरोरोगनिदानं समाप्तम् ॥ ६० ॥

---

## अथासृग्दरनिदानम् ६१.

विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च ॥
यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च ॥
तं श्लेष्मपित्तानिलसन्निपातैश्चतुष्प्रकारं प्रदरं वदन्ति ॥ १ ॥

---

मधुकोशव्याख्या ।

माह—त्रिरात्राज्जीवितं हन्तीति । कुशलेनोपक्रमे क्रियमाणे त्रिरात्रात् परतो जीवत्येवेत्यत आह—परं त्र्यहाज्जीवतीति । अत्र अहःसंबन्धिनी रात्रिरुपलक्ष्यते, तेन त्रिरात्रात् परं जीवतीत्यर्थः । तत् किमस्य त्रिरात्राभ्यन्तरे साध्यत्वमसाध्यत्वं वेत्यत आह—भैषज्यमित्यादि । तदनेन त्रिरात्राभ्यन्तरे विकल्पितासाध्यत्वं, त्रिरात्रात् परं साध्यत्वं दर्शितम् । तत्रैव विदेहः—"चीयते तु तदा पित्तं शंखयोरनिलाचितम् । निरुणद्धि ततो मर्म परिपूरितमुल्बणम् ॥ ततः शंखौ प्रयुज्येत दह्येत इव वह्निना । सूचीभिरिव तुद्येते निकृत्येते इवासिना ॥ शंखको नाम शिरसि व्याधिरेष सुदारुणः । तृष्णामूर्च्छाज्वरकरस्त्रिरात्रात् परमन्तकृत् । कुशलेन तूपक्रान्तस्त्रिरात्रादेवजीवति"—इति ॥ १४ ॥ १९ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां शिरोरोगनिदानं समाप्तम् ॥ ६० ॥

स्त्रीपुंसां साधारणान् विकारानभिधाय पुंप्रतिनियतस्योपदंशादेरुक्तत्वात् स्त्रीनियतरोगाभिधानम् । तत्र च योनिव्यापत्तिविशेषेऽप्यार्तवप्रवृत्तिसद्भावात् प्रथमं दुष्टार्तवप्रवृत्तिस्वरूपस्य प्रदरस्य निदानमुच्यते—विरुद्धेत्यादि । विरुद्धमद्यं दुष्टमद्यम्, अथ-

आतङ्कदर्पणव्याख्या ।

"कुशलेनानुपक्रांतस्त्रिरात्रादेव जीवति" । एवं सुश्रुतोक्ता दश शिरोरोगा उक्ताः, अनंतवातस्त्वत्राधिकः ॥ १४ ॥ १९ ॥ इत्यातंकदर्पणे निदानव्याख्यायां शिरोरोगनिदानम् ॥ ६० ॥

अथ प्रदरनिदानारंभः । तस्य निदानमाह—विरुद्धेति । विरुद्धमद्यं व्यापन्नं मद्यम्, किंवा विरुद्धं क्षीरमत्स्यादि मद्यं च ॥ उपद्रवानाह—तस्येति । अतिप्रवृत्तौ अतिप्रवृद्धौ दौर्बल्यादयः । वातजा

असृग्दरं भवेत्सर्वं साङ्गमर्दं सवेदनम् ॥
तस्यातिवृत्तौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा ॥
दाहः प्रलापः पाण्डुत्वं तन्द्रारोगाश्च वातजाः ॥ २ ॥
आमं सपिच्छाप्रतिमं सपाण्डु पुलाकतोयप्रतिमं कफात्तु ॥
सपीतनीलासितरक्तमुष्णं पित्तार्तियुक्तं भृशवेगि पित्तात् ॥ ३ ॥
रूक्षारुणं फेनिलमल्पमल्पं वातार्ति वातात्पिशितोदकाभम् ॥
सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं त्रिदोषात् ॥
तं चाप्यसाध्यं प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक् चिकित्साम् ॥४
शश्वत्स्रवन्तीमास्रावं तृष्णादाहज्वरान्विताम् ॥
क्षीणरक्तां दुर्बलां च तामसाध्यां विनिर्दिशेत् ॥ ५ ॥

---

मधुकोशव्याख्या।

वा विरुद्धं संयोगादिविरुद्धं, मद्यं च स्वरूपतः। अजीर्णादपक्वभोजनात्। अतिकर्षणात् लङ्घनाद्यतियोगेन क्षीणधातुत्वात्। तं श्लेष्मपित्तानिलसन्निपातैरित्यत्र श्लेष्मणोऽग्रेऽभिधानं श्लेष्मजेऽपि वेदनासूचनार्थम् ॥ १ ॥ सामान्यरूपमाह—असृग्दरमित्यादि। सवेदनं सशूलम्, असृग् दीर्यते च्यवते यस्मिन्नित्यसृग्दरम्, तन्त्रान्तरमत्र—"तदेवातिप्रसङ्गेन प्रवृत्तमनृतावपि। असृग्दरं विजानीयात्पुरस्तादुक्तलक्षणम्" इति। तदेवेति आर्तवम् ॥—आर्तवातिप्रवृत्तौ उपद्रवानाह—तस्यातिवृत्तौ दौर्बल्यमित्यादि। रोगाश्च वातजा इति आक्षेपककम्पादयः ॥ २ ॥ श्लैष्मिकादिभेदेन विशेषलक्षणान्याह—आममित्यादि। आमम् आमरसानुविद्धम्। सपिच्छाप्रतिममिति पिच्छा शालमल्यादिनिर्यासः, तत्सदृशं पिच्छिलमित्यर्थः। पुलाकतोयप्रतिमं प्रक्षालितपललतोयसदृशम्, अन्ये पुलाकं गवेधुकमाहुः। पित्तार्तियुक्तं दाहचिमिचिमादियुक्तम्। भृशवेगि बहुवेगिं। वातार्ति तोदादिलक्षणम्। पिशितोदकाभं प्रक्षालितमांसजलसदृशम्। सक्षौद्रसर्पिर्हरितालवर्णमिति नानावर्णत्वं त्रिदोषकोपादेव। मज्जप्रकाशं मज्जा

आतंकदर्पणव्याख्या।

इति। आक्षेपापतानकंपादयः। तस्य संख्यासंप्राप्तिमाह—तमिति। वृद्धाः वृद्धवैद्याः ॥ १ ॥ २ ॥ तत्र श्लेष्मजमाह—आममिति। आमम् आमरससंयुक्तम्, सपिच्छाप्रतिमम्, सद्यः शाल्यादिमंडतुल्यम्, पिच्छिलमित्यर्थः। पुलाकतोयप्रतिमं गवेधुकान्नवारिवत्, पूयरसः। अन्ये पुलाकं तुच्छधान्यमाहुः। पित्तजमाह—सेति। पित्तार्त्तियुक्तं संतापादियुक्तम्, भृशवेगि बहुधारं भूरिप्रवृत्ति ॥ ३ ॥ वातिकमाह—रूक्षेति। पिशितोदकाभं मांसप्रक्षालनोदकवर्णम्। त्रिदोषमाह—सेति। क्षौद्रवर्णमनाक्पिलम्। सर्पिर्वर्णं विलीनघृतवत्, हरितालवर्णं पीतम्, मज्जप्रकाशं मज्जास्थिस्नेहः तत्समम्, कुणपं शवगंधि,

मासान्निष्पिच्छदाहार्ति पञ्चरात्रानुबन्धि च ॥
नैवातिबहुलात्यल्पमार्तवं शुद्धमादिशेत् ॥ ६ ॥
शशासृक्प्रतिमं यच्च यद्वा लाक्षारसोपमम् ॥
तदार्तवं प्रशंसन्ति यच्चाप्सु न विरज्यते ॥ ७ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने असृग्दरनिदानं समाप्तम् ॥६१ ॥

मधुकोशव्याख्या ।

अस्थिस्नेहः तत्समम् । कुणपं शवगन्धि ॥ ३-५ ॥-चिकित्सानिवृत्त्यर्थं शुद्धार्तवलक्षणमाह-मासादित्यादि । निष्पिच्छदाहार्तीति अपिच्छिलमदाहमशूलादिवेदनम्, एतेन विकृतवातादिलिङ्गरहितमित्यर्थः । पञ्चरात्रानुबन्धीति पञ्चरात्रं प्रभूतप्रवृत्त्या अनुबध्नाति यदित्यर्थः । अल्पप्रवृत्त्या पञ्चरात्रात् परतोऽप्यनुबध्नाति । तदुक्तं हारीते-'षोडशदिवसान्यृतुकालः' इति । विदेहेऽप्युक्तम्,-"स्त्रीणामृतुर्भवति षोडशवासराणि"-इति । शशासृगित्यादिना वर्णद्वयं वातादिप्रकृतिभेदात् । यच्चाप्सु न विरज्यते इति येनार्तवेन रञ्जितं वस्त्रम् अप्सु प्रक्षालितं सल्लोहितं न भवति तद्विशुद्धम् । तथा च हिरण्याक्षः,'सुरेन्द्रगोपसङ्काशं स्निग्धं च मधुगन्धि च । अपिच्छिलमशीतं च यद्वासो न विरञ्जयेत्" ॥६ ॥ ७ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायामसृग्दरनिदानं समाप्तम् ॥ ६१ ॥

आतङ्कदर्पणव्याख्या ।

चाप्यसाध्यमिति चिकित्सानिवृत्त्यर्थम् ॥ ४ ॥ ५ ॥ शुद्धार्त्तवलक्षणमाह-मासेति । अपिच्छदाहार्तीति । अपिच्छिलम्,- अदाहम्, अशूलादिवेदनम्, एतेन विकृतवातादिलक्षणरहितमित्यर्थः । पंचरात्रानुबंधीति पंचरात्रं प्रभूतप्रवृत्त्यनुबध्नाति यदित्यर्थः । अल्पप्रवृत्त्या पंचरात्रात्परतोप्यनुबध्नाति । यदुक्तं हारीते-"षोडशदिवसान्यृतुकालः" इति । विदेहोऽप्युक्तवान्-"स्त्रीणामृतुर्भवति षोडश वासराणि" ॥ ६ ॥ पुनश्च शुद्धलक्षणमाह-शशेति । वर्णद्वयाभिधानं वातादिप्रकृतिभेदेन वर्णभेदात् ॥ यच्चाप्सु न विरज्यत इति यदार्त्तवं कर्पटगतं सत् अप्सु जलेषु संयुज्यमानेषु न विवर्णं भवति । अयमर्थः । यत् धौतं सत् वासो न विरंजयति । यदुक्तं हिरण्याक्षे-"इंद्रगोपकसंकाशं स्निग्धं च मधुगंधि च । अपिच्छिलमशीतं च यद्वासो न विरंजयेत् ॥" इति ॥ ७ ॥ इत्यातंकदर्पणे निदानव्याख्यायां प्रदरनिदानम् ॥ ६१ ॥

१ एतादृशपाठाभिप्रायेण ।

# अथ योनिव्यापन्निदानम् ६२.

विंशतिर्व्यापदो योनौ निर्दिष्टा रोगसंग्रहे ॥
मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्तवेन च ॥ १ ॥
जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् ॥
सा फेनिलमुदावर्ता रजः कृच्छ्रेण मुञ्चति ॥ २ ॥
वन्ध्यां नष्टार्तवां विद्याद्विप्लुतां नित्यवेदनाम् ॥
परिप्लुतायां भवति ग्राम्यधर्मेण रुग् भृशम् ॥ ३ ॥

मधुकोशव्याख्या ।

स्त्र्यधिकारानुवृत्तेः प्रदुष्टार्तवकार्यत्वाच्च योनिव्यापन्निदानमाह—विंशतिरित्यादि । रोगसंग्रह इति अष्टोदरीये । मिथ्याचारेण असम्यगाहाराचारेण, चरतेर्गतिभक्षणार्थत्वात् प्रदुष्टेनार्तवेनेति वातादिदुष्टरजसेत्यर्थः, तेन वन्ध्यादिष्वार्तवदुष्टिरपि कारणं भवति । बीजदोषान्मातापित्रोरारम्भकबीजदोषात् । दैवात् प्राक्तनाधर्मात् कारणात् दैवस्य सर्वत्र कारणत्वे सिद्धेऽत्र विशेषेण कारणत्वमुक्तम् ॥ १ ॥ श्लैष्मिका आह—सा फेनिलमित्यादि । सा योनिः फेनवदार्तवं मुञ्चति । उदावर्तेति ऊर्ध्वमावर्तः समन्ताद्वर्तनं वाय्वोर्यत्र सा तथेति, अर्शआदित्वादच् । विप्लुतामिति विप्लुतां वातवेदनया विप्लुतत्वात् । नित्यवेदनाम् अतिकुपितेनैव वातेनेति । परिप्लुतायामिति परि सर्वतो वातविकारेण प्लुतत्वात् परिप्लुतासंज्ञा । परिप्लुतायां बाह्याभ्यन्तरवातवेदनादियुक्तायाम् । ग्राम्यधर्मेण रुग्भृशमित्यत्र ग्राम्यधर्मे रुचिर्भृशमिति पा-

आतङ्कदर्पणव्याख्या ।

योनिप्रवृत्तत्वादसृग्दरस्यानंतरं योनिव्यापन्निदानमाह—विंशतिरिति । व्यापदो रोगाः । रोगसंग्रह इति अष्टोदरीये चरकोक्तेः । मिथ्याचारतः असम्यगाहाराचारतः । प्रदुष्टेनार्तवेनेति । कुपितवातादिदुष्टेनार्त्तवेन, वंध्यासु आर्त्तवदुष्टिरपि कारणं भवति ॥ १ ॥ बीजदोषादिति । गर्भारंभकबीजगतार्तवदोषात् । दैवादिति । दैवे सर्वत्र साधारणं विशिष्टादृष्टकारणादर्शने सति कार्यदर्शनादुन्नेयम् । पूर्वं योनेर्विंशतिव्यापद उक्तास्तासु उदावर्तमाह—सा फेनिलमिति । उद् ऊर्ध्वम् । आ समंतात् वृत्ता वर्त्तुला योनिर्यत्र सा तथा । "उदावर्त्ते" इति पाठांतरम् । तत्राप्ययमेवार्थः । सा योनिः फेनेनार्त्तवं मुंचति ॥ २ ॥ वंध्यामाह—नष्टनार्त्तवं रजो यस्यां सा तथा । विप्लुतामाह—वातवेदनाविप्लुतत्वात् नित्यवेदनां वातजनिततोदनादिवेदना युक्तम् । परिप्लुतामाह—परिप्लुतायामिति । परि सर्वतो वातविकारपरिप्लुतत्वात्परिप्लुतेति संज्ञा । ग्राम्यधर्मे मैथुने मूर्छा

१ एवमेतस्य पाठः ।

वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता ॥
चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥ ४ ॥
सदाहं क्षीयते रक्तं यस्यां सा लोहितक्षया ॥
सवातमुद्गिरेद्बीजं वामिनी रजसा युतम् ॥ ५ ॥
प्रस्रंसिनी स्रंसते च क्षोभिता दुष्प्रजायिनी ॥
स्थितं स्थितं हन्ति गर्भं पुत्रघ्नी रक्तसंक्षयात् ॥ ६ ॥
अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता ॥
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥ ७ ॥

---

मधुकोशव्याख्या ।

ठान्तरं, तत्र रुचिरभिलाषः । वातलेत्यादि—योनिविशेषणं, वातलया सह पञ्चयोनिव्यापदः । वातलायाः पृथगभिधानं वातवेदनाप्रादुर्भावार्थम् । एवं पित्तलादिष्वपि बोद्धव्यम् । चतसृष्विति उदावर्तावन्ध्याविप्लुतापरिप्लुतासु ॥ २-४ ॥ पैत्तिका आह—सदाहमित्यादि । क्षीयते रक्तमिति अतिप्रवृत्त्या रक्तस्य क्षयः । वामिन्युद्गिरेद्बीजमिति शुक्रं वमतीत्यर्थः । प्रस्रंसिनी स्रंसते इति स्वस्थानाच्च्यवते निःसरतीति यावत् । अत एव क्षीरस्निग्धं प्रवेशयेदिति चिकित्सितम् । क्षोभिता अनिलार्दिता । दुष्प्रजायिनी दुःखप्रसवा । रक्तसंक्षयादार्तवस्य वायुना क्षयात् । यद्यपि सर्वस्यैवापत्यस्य नाशस्तथापि पुत्रस्य प्राधान्यात् पुत्रघ्नीव्यपदेशः । पित्तलाया सह पञ्च पित्तजाः । दाहपाकेत्याद्युपलक्षणं, तेन नीलपीतासितार्तवा च भवतीत्यर्थः । यदुक्तमन्यत्र,—"व्यापल्लवणकट्वम्लक्षाराद्यैः पित्तजा भवेत् । दाहपाकज्वरोष्णार्ता नीलपीतासितार्तवा"—इति । आद्यास्विति रक्तक्षयावामिनीप्रस्रंसिनीपुत्रघ्नीषु ॥ ५-७ ॥

आतङ्कदर्पणव्याख्या ।

पीडा भवति । "ग्राम्यधर्मेऽरुचिः" इति पाठांतरम् । तत्रारुचिरनभिलाषः ॥ ३ ॥ वातजामाह—वातला कर्कशा स्तब्धाः शूलनिस्तोदपीडितेति वातलेति योनिविशेषणम् । वातलया सह पंचयोनिव्यापदः । वातलेति । पृथग्विधानम् अत्यर्थवातवेदना प्रादुर्भावार्थम् । एवं पित्तलादिष्वपि व्याख्येयम् । आद्यासु चतसृषु वातानुबंधिमाह—चतसृष्वपीति । उदावर्त्ता वंध्या विप्लुतापरिप्लुतासु चतसृषु वातवेदना ज्ञेया, वातलायामधिकाऽतः संज्ञा ॥ ४ ॥ अथ वातानुबंधिन्यः । तत्र रक्तक्षयामाह—सदाहमिति । अतिप्रवृत्त्या रक्तस्य क्षयः, तेन रक्तक्षयेतिसंज्ञा । वामिनीमाह—सवातमिति । सुगमम् ॥ ५ ॥ प्रस्रंसिनीमाह—स्रंसते स्वस्थानाच्च्यवते, निःसरतीत्यर्थः । क्षोभिता विमर्दिता, दुष्प्रजायिनी दुःखप्रसवा । पुत्रघ्नीमाह—स्थितमिति ॥ पुत्रघ्नीति । सर्वा अपि अपत्यविनाशिन्यस्तथापि पुत्रस्य प्राधान्यादत्र पुत्रघ्नीति व्यपदेशः ॥ ६ ॥ पित्तलामाह—अत्यर्थमिति ।

अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति ॥
कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां च जायते ॥ ८ ॥
मैथुनेऽचरणात्पूर्वं पुरुषादतिरिच्यते ॥
बहुशश्चातिचरणा तयोर्बीजं न विन्दति ॥ ९ ॥
श्लेष्मजा पिच्छिला योनिः कण्डूग्रस्तातिशीतला ॥
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् ॥ १० ॥
अनार्तवास्तनी षण्डी खरस्पर्शा च मैथुने ॥
अतिकायगृहीतायास्तरुण्यास्त्वण्डली भवेत् ॥ ११ ॥

---

मधुकोशव्याख्या ।

वातिका आह—अत्यानन्दायां ग्राम्यधर्मेण मैथुनेन । कर्णिन्यां कर्णिकेति कर्णिका-मांसकन्दाकारग्रन्थिः । पूर्वं पुरुषादतिरिच्यते इति अचरणात् सम्यङ्मैथुनाचर-णात् पूर्वं प्रथमं, पुरुषादतिरिच्यते विरमति, तेन बीजं न गृह्णाति । अत्र अचरणश-ब्देनोपचारात् तद्वती स्त्री भण्यते । बहुशश्चातिचरणेति बहुशो मैथुनाचरणादतिच-रणा, सा च श्लेष्मजनितकण्डूभिराजगेव (?) बहुमैथुनाचरणाद्बीजं न धत्ते । अत उक्तं—तयोर्बीजं न विन्दतीति । तयोरिति अचरणातिचरणयोः । श्लेष्मलायाम-तिशीतलेत्युपलक्षणं, तेन सवेदनादिकमपि ज्ञेयम् । तथाच तन्त्रान्तरे,—"कफोऽभि-ष्यन्दिभिर्वृद्धो योनिं चेद् दूषयेत् स्त्रियाः । स कुर्यात्पिच्छिलां शीतां कण्डूग्रस्तां सवेदनाम्"—इति ॥ ८–१० ॥ सन्निपातिका आह—अनार्तवा रजःशून्या । आस्तनी

आतङ्कदर्पणव्याख्या ।

दाहपाकज्वरान्वितेत्युपलक्षणम्, तेन नीलपीतसितार्त्तवा च भवतीत्यवगंतव्यम् । तथा च तंत्रांतरे—"व्यापल्लवणकट्वम्लक्षाराद्यैः पित्तजा भवेत् । दाहपाकज्वरोष्णार्त्ता नीलपीताऽसितार्त्तवा ॥" इति । चतसृष्वपि पित्तानुबंधमाह—रक्तक्षयावमिनीप्रस्रंसिनीपुत्रघ्नीषु पित्तलया सह पंचपि-त्तानुबन्धिन्यः ॥ ७ ॥ अथ श्लेष्मानुबंधिन्यः । तंत्रात्यानंदामाह—अतीति । कर्णिनीमाह—कर्णि-न्यामिति ॥ ८ ॥ बहुशो मैथुनाचरणादतिचरणा, सा च श्लेष्मजनितकंडुयोगाद्बहुमैथुनाचरणाद-तिचरणा बीजं गर्भांकुरजननं न लभते । अत एवोक्तं—तयोर्बीजं न विंदतीति । तयोरिति चरणातिचरणयोः ॥ ९ ॥ श्लेष्मलामाह—श्लेष्मलेति । अतिशीतलेत्युपलक्षणम्, तेन वेदनेत्यपि बोद्धव्यम् । यदुक्तं तंत्रांतरे—"कफोऽभिष्यन्दिभिर्वृद्धो योनिं दूषयते स्त्रियाः । स कुर्यात्पिच्छिलं शीतं कंडुग्रस्तां सवेदनाम् ॥" इति । चतसृष्वपि श्लेष्मानुबंधत्वमाह—चतसृष्वपीति । अत्यानंदाक-र्णिनीचरणातिचरणासु । एवं श्लेष्मानुबंधिन्यः पंच ॥ १० ॥ सन्निपातजादयः पंच । तत्र षंडीमाह—अनार्त्तवा अरजस्का, अस्तनी ईषत्स्तनी । अंडिनीमाह—अतिकायो बृहन्मेहनपुरुषः

विवृता च महायोनिः सूचीवक्त्रातिसंवृता ॥
सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ॥ १२ ॥
चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रयो भवेत् ॥
पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः ॥ १३ ॥
इति श्रीमाधवकरविरचिते माधवनिदाने योनिव्यापन्निनिदानं समाप्तम् ६२॥

## अथ योनिकन्दनिदानम् ६३.

दिवास्वप्नादतिक्रोधाद्व्यायामादतिमैथुनात् ॥
क्षताच्च नखदन्ताद्यैर्वाताद्याः कुपिता यदा ॥ १ ॥

मधुकोशव्याख्या ।

ईषत्स्तनी । अतिकायगृहीताया महामेहनेन गृहीतायाः । अण्डली अण्डवन्निःसृता विवृता महायोनिः विवृतमुखी । सूचीवक्त्रा अतिसंवृता । सर्वलिङ्गसमुत्थानेति सर्वदोषलिङ्गानां समुत्थानं निदानं च यत्र सा तथा । अन्ये त्वाहुः—सर्वदोषलिङ्गा सर्वदोषसमुत्था चेति । चरकोक्ता अधिका रक्तयोन्यादयस्तासां सुश्रुतोक्तानामदूरान्तरत्वेनावबोद्धव्याः ॥ ११--१३ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां योनिव्यापन्निदानं समाप्तम् ॥ ६२ ॥

योन्याश्रयत्वात् कन्दनिदानमाह—दिवास्वप्नादित्यादि । नखदन्ताद्यैरित्यत्रादिशब्दात् कण्टकादिपरिग्रहः । वाताद्याः कुपिता इति यथानिदानं प्रत्येकं वातादयः कुपिताः । निकुचाकृतिसन्निभमिति वर्तुलमित्यर्थः, अस्यानन्तरं गुडकमिति द्रष्टव्यं,

आतङ्कदर्पणव्याख्या ।

तेन गृहीताया इति अप्रगल्भायाः, अण्डली अंडवन्निःसृता योनिः ॥ ११ ॥ विवृतामाह—अतिविवृता । सूचीवक्त्रामाह—अतिशयेन सूचीवत्संकीर्णमुखी संवृता । सन्निपातजामाह—सर्वलिंगेति । सर्वलिंगानां समुत्थानं यत्र सा तथा॥ १२ ॥ चतसृष्वपि सर्वलिंगानुबंधमाह—चतसृष्विति । षण्ढ्यण्डलीविवृतासूचीवक्त्रासु । त्रिदोषजाः पंच आसामसाध्यतामाह—पंचेति ॥ १३ ॥ ईत्यातङ्कदर्पणे निदानव्याख्यायां योनिव्यापन्निदानम् ॥ ६२ ॥

इहैव योनिसंश्रितत्वेन कंदनिदानमाह—दिवेति । नखदन्ताद्यैरित्युपलक्षणम् । आदिग्रहणात् कंटकादिपरिग्रहः । वाताद्याः कुपिता इति यथानिदानेन वातादयः प्रत्येकं कुपिताः ।

१ एतच्च मधुकोषानुसारेण एतट्टीकाकृता तु वक्ष्यमाणयोनिकन्दनिदानेन सहैवाग्रे समाप्तिः कृता दृश्यते।

पूयशोणितसंकाशं निकुचाकृतिसन्निभम् ॥
जनयन्ति यदा योनौ नाम्ना कन्दः स योनिजः ॥ २ ॥
रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् ॥
दाहरागज्वरयुतं विद्यात् पित्तात्मकं तु तम् ॥ ३ ॥
नीलपुष्पप्रतीकाशं कण्डूमन्तं कफात्मकम् ॥
सर्वलिङ्गसमायुक्तं सन्निपातात्मकं विदुः ॥ ४ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने योनिकंदनिदानं समाप्तम् ॥६३॥

## अथ मूढगर्भनिदानम् ६४.

भयाभिघातात्तीक्ष्णोष्णपानाशननिषेवणात् ॥
गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत् ॥ १ ॥

मधुकोशव्याख्या ।

तेन नपुंसकलिङ्गता सङ्गता भवति । कन्दः प्रायेण जरन्नारीयोनिगतो निकुचाकारो रोगः ॥ १ ॥ २ ॥ वातजादिभेदेन रूपमाह—नीलपुष्पप्रतीकाशम् अतसीकुसुमादिवर्णम् । कफजेऽपि नीलो व्याधिप्रभावादेव । अन्ये तु पैत्तिकलक्षण एव संवभ्रन्ति योग्यत्वात् ॥ ३ ॥ ४ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां योनिकन्दनिदानं समाप्तम् ॥ ६३ ॥

योनिस्थानविकारानुवृत्तेः स्त्रीरोगनिदानारम्भः । तत्र गर्भपातनिदानमाह—भयाभिघातादित्यादि । एतच्चोपलक्षणं, तेनान्येऽपि सुश्रुतोक्ता ग्राम्यधर्मयानवाहनप-

आतङ्कदर्पणव्याख्या ।

लकुचाकृतिसन्निभमेतस्यानंतरं गुडकमिति द्रष्टव्यम् । कन्दः प्रायेण जरन्नारीयोनिगतो लकुचाकारो रोगः ॥ १ ॥ २ ॥ वातजमाह—रूक्षमिति । सुगमम् ॥ पैत्तिकमाह—दाहेति । सुगमम् ॥ ३ ॥ श्लैष्मिकमाह—नीलेति । अतसीकुसुमादिवर्णम् । एवंविधवर्णता च कफजेपि रोगप्रभावात्, अन्ये त्वेतत्पैत्तिके एव सम्बभ्रन्ति, योग्यत्वाद् । वदंति च "दाहरागज्वरयुतम्" इत्यभिधानादिकल्पितमेतदवगंतव्यमिति । सन्निपातिकमाह—सर्वेति । सुगमम् ॥ ४ ॥ इत्यातंकदर्पणे निदानव्याख्यायां योनिव्यापद्योनिकंदनिदानम् ॥ ६३ ॥

अथ स्त्रीविकाराधिकारात्स्त्रीरोगनिदानम् । तत्र गर्भपातहेतुमाह—भयेत्यादि । एतच्चोपलक्षणम् । तेनान्येपि सुश्रुतोक्ता ग्राम्यधर्मयानवाहनपतनस्खलनादयो ग्राह्याः । पततीति स्रंसमाने, सशूलं

१ एतादृशपाठमेवायमूरीकरोति ।

आचतुर्थात्ततो मासात्प्रस्रवेद्गर्भविद्रवः ॥
ततः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः ॥ २ ॥
गर्भोऽभिघातविषमाशनपीडनाद्यैः
पक्वं द्रुमादिव फलं पतति क्षणेन ॥
मूढः करोति पवनः खलु मूढगर्भं
शूलं च योनिजठरादिषु मूत्रसङ्गम् ॥ ३ ॥

मधुकोशव्याख्या ।

तनस्खलनादयो बोद्धव्याः । पततीति स्रंसमाने, तेन स्रावपातयोरपि सशूलं रक्तद्-र्शनं भवति, एतत्तु पूर्वरूपमिति दर्शयति ॥ १ ॥ एतयोः कालभेदमाह—आचतुर्था-दित्यादि । गर्भविद्रव इति अनतिघनावयवत्वेन विशेषेण द्रवरूपतया गर्भविद्रवो भण्यते, यत्तु भोजेऽभिहितम्—"आतृतीयात्ततो मासाद्गर्भः स्रवति शोणितम् । ऊर्ध्वं संघातभूतस्तु गर्भः पतति योषिताम्"—इति । संघातभूतः कोमलाङ्गः पिण्डितावस्थ इत्यर्थः । अत एव सुश्रुते चतुर्थमासेऽप्यदृढत्वात् स्रावः कथितः । स्थिरशरीरस्येति कठिनशरीरावयवस्य । पञ्चमषष्ठयोरिति सप्तमे अनुगुणजनने जीवनदर्शनायोक्तं, विगुणजनने तु सप्तमादिमासे पातः । अन्ये तु पञ्चमषष्ठयोरेव पातः, सप्तमादिषु दोषवैगुण्याद्धि प्रसव इति आचार्यप्रामाण्याद्व्यवहाराच्च मन्यन्ते ॥२ ॥ गर्भस्याका-लपाते निदानपूर्वकं दृष्टान्तमाह—गर्भोऽभिघातेत्यादि । पक्वं द्रुमादिवेति दृष्टान्तेनैव दर्शयति यथा वृन्तलग्नं पक्वफलमभिघातेनाकाल एव पतति, तथा उक्तहेतुभिरकाले गर्भपातः ॥—उचितप्रसवकाले यथा मूढो गर्भः स्यात्तदाह—मूढः करोतीत्यादि । मूढो व्यासक्तगतिः, शूलं च योनिजठरादिषु मूत्रसंगं करोतीति संबध्यते ॥ ३ ॥

आतङ्कदर्पणव्याख्या ।

रक्तदर्शनं भवति पूर्वरूपकथनम् ॥ १ ॥ स्रावपातयोरिदानीं कालनियममाह—आचतुर्थादिति । अनतिघनावयवत्वेन विशेषेण द्रवरूपतया गर्भविद्रवो भण्यते । यदुक्तं भोजे—"आतृतीयात्ततो मासाद्गर्भः स्रवति शोणितम् । ऊर्ध्वं संघातभूतस्तु गर्भः पतति योषिताम् ॥" इति तच्चतुर्थे मासि संघावरूपतया अनभिव्यक्तदृष्टांगतया सुश्रुतेन स्रावपक्षे निक्षिप्तम् । स्थिरशरीरस्येति कठिन-शरीरावयवस्य । पंचमषष्ठयोरिति सप्तमे अनुगुणजनने जीवनदर्शनायोक्तिः । विगुणजनने तु सप्तमादिमासेष्वतिपातः सप्तमादिषु तु दोषवैगुण्याद्धि प्रसव इति । आचार्यप्रामाण्याद्व्यवहाराच्च मन्यंते ॥ २ ॥ गर्भस्याचिरपातं सदृष्टांतमाह—गर्भ इति । पूर्णसर्वावयवस्तु प्रसवः समुचिते काले । यथा मूढो गर्भो भवति तदाह—मूढ इति । मूढो व्यासक्तगतिः पवनो मूढगर्भं करोति ।

भुग्नोऽनिलेन विगुणेन ततः स गर्भः
संख्यामतीत्य बहुधा समुपैति योनिम् ॥
द्वारं निरुध्य शिरसा जठरेण कश्चित्
कश्चिच्छरीरपरिवर्तितकुब्जदेहः ॥ ४ ॥
एकेन कश्चिदपरस्तु भुजद्वयेन
तिर्यग्गतो भवति कश्चिदवाङ्मुखोऽन्यः ॥
पार्श्वापवृत्तगतिरेति तथैव कश्चि-
दित्यष्टधा गतिरियं ह्यपरा चतुर्धा ॥ ५ ॥

मधुकोशव्याख्या ।

विगुणानिलत्वादसंख्येयत्वेऽपि विशेषादष्टौ गतीराह—भुग्नोऽनिलेनेत्यादि । भुग्नो विगुणीकृतः । बहुधेति कथितप्रकारादप्यधिकं दर्शयति । द्वारं निरुध्य शिरसेत्येकप्रकारः, शिरसा विपुलेन योनिद्वारं योनिमुखं पिधाय लग्नो भवतीत्यर्थः । जठरेण कश्चिदित्यपरः, जठरेणोदरेण योनिद्वारं पिधाय सक्तो भवतीत्यर्थः । कश्चित् शरीरपरिवर्तितकुब्जदेह इति शरीरपरिवर्तनेन कुब्जदेहः कश्चित् सक्तो भवति, अनेनान्तः कुब्जपृष्ठयोः परिग्रहः । एकेनेति बाहुना, अयं चतुर्थः । तिर्यग्गतः इति अर्गलायमानः । कश्चिदवाङ्मुखोऽन्य इति ग्रीवाभङ्गादधः संलग्नः । पार्श्वापवृत्तगतिरिति पार्श्वभङ्गेन विगुणीकृतः पार्श्वनत इति यावत् । एतीति स्वस्थानादपैति, तथैवेति अवाङ्मुखः सन् । सुश्रुते त्वष्टधा गतिरेव पठ्यते । यथा,—"कश्चिद्द्वाभ्यां सक्थिभ्यां योनिमुखं प्रपद्यते, कश्चिदाभुग्नैकसक्थिरेकेन सक्थ्ना, कश्चिदाभुग्नसक्थिशरीरः स्फिग्देशेन तिर्यग्गतः, कश्चिदुदरपृष्ठपार्श्वानामन्यतमेन योनिद्वारं पिधायावतिष्ठते, अन्तः पार्श्वापवृत्तशिराः कश्चिदेकेन बाहुना, कश्चिदाभुग्नशिरो बाहुद्वयेन,

आतंकदर्पणव्याख्या ।

योनिजठरादिषु शूलं च करोति । मूत्रसंगं च करोतीति संबध्यते॥३॥ विगुणानिलयोगादसंख्यायां गतिमाह—भुग्न इति । भुग्नो विपरीतीकृतः बहुधेति उक्तं प्रकाराद्धिकम् । तत्र व्यवहारयोग्यानष्टौ प्रकारानाह—द्वारमिति । विपुलेन शिरसा योनिमुखं पिधाय लग्नो भवति, इत्येकः प्रकारः। अपरो ध्मातेन जठरेणोदरेण योनिमुखं पिधाय सक्तो भवतीति द्वितीयः प्रकारः। कश्चित् शरीरपरिवर्त्तनेन विपरीतवर्त्तनेन कुब्जदेहः सक्तो भवति । अनेन चांतः कुब्जपृष्ठकुब्जयोः परिग्रहः,अयं तृतीयः प्रकारः । कश्चिदेकेन बाहुना इति चतुर्थः प्रकारः। अपरो बाहुद्वयेनेति पंचमः प्रकारः। पार्श्वापवृत्तगतिरिति । पार्श्वभंगेन विगुणीकृतः पार्श्वनत इति यावत् । एतीति स्वस्थानादपैति।

संकीलकः प्रतिखुरः परिघोऽथ बीज-
स्तेषूर्ध्वबाहुचरणैः शिरसा च योनिम् ॥
सङ्गी च यो भवति कीलकवत्सकीलो
दृश्यैः खुरैः प्रतिखुरं स हि कायसङ्गी ॥
गच्छेद्भुजद्वयशिराः स च बीजकाख्यो
योनौ स्थितः सपरिघः परिघेण तुल्यः ॥ ६ ॥

मधुकोशव्याख्या ।

कश्चिदाभुग्नमध्यो हस्तपादशिरोभिः, कश्चिदेकेन सक्थ्ना योनिमुखमभिप्रपद्यते, 'अपरेण पायुम्' इति ॥ ४ ॥ ५ ॥ चतुः प्रकारेण गतिविशेषाः पठिताः तानाह—संकीलक इत्यादि । सम्यक् कीलवत् संकीलकः, स्वार्थे कन् । तेनोर्ध्वबाहुचरणशिरोभिः कीलकवल्लग्नो कीलबन्धनः । पृष्ठेन योन्यां तथैतद्विपरीतेन दृश्यैः हस्तपादशिरोभिः प्रतिखुरः, खुरसाधर्म्यात्, खुरशब्देन हस्तपादावुच्येते । गच्छेद्भुजद्वयशिरा इति भुजद्वयोपहितं शिरो यस्य स तथा, तथाभूतः सन् यो गच्छेत् स बीजकः कायसङ्गी । भोजेऽप्येता गतयः पठ्यन्ते । तथाहि—"ऊर्ध्वबाहुशिरःपादो रुन्ध्याद्योनिमुखं तु यः । प्रतिकीलोपमास्थित्या संकील इति संज्ञितः ॥ अधस्तात्पार्श्वतो वापि तथैवाकुञ्चितोऽपि वा । यो निःसृत्य मुखं योनेर्ज्ञेयः प्रतिखुरस्तु सः ॥ योनिद्वारात्तु निर्गच्छेद्यश्चैकः सशिरोभुजः । तमाहुर्बीजकं नाम मूढं गर्भचिकित्सकाः । योनिमावृत्य यस्तिष्ठेत्परिघो गोपुरं यथा । तथान्तर्गर्भमायान्तं विद्या

आतङ्कदर्पणव्याख्या ।

तथैवेत्यवाङ्मुखः सन्, एवमष्टधा गतिर्भवति । गर्भस्य चतुरः प्रकारान्पुनराह—अप्यपराश्चतुर्द्धा इति । संकीलकादिभेदेन अपरा वक्ष्यमाणाश्चतुःप्रकाराः ॥ ४ ॥ ५ ॥ तानाह—संकीलक इति । ऊर्द्ध्वबाहुचरणशिरोभिः कीलितैः योन्यां कायलग्नः संकीलकः । योनिमिति । योनिं प्रतिखुरैरिति खुरसाधर्म्यात्खुरशब्देन हस्तपादा उच्यंते, तेन हस्तपादैः बहिर्गतैः प्रतिखुर उच्यते, स प्रतिखुरः कायसंगी निरुद्धकायो भवति । बीजकमाह—गच्छेदिति । भुजद्वयोपहतं शिरो यस्य स तथाभूतः सन् यो गच्छेत् स बीजकः । परिघमाह—यो योनिमावृत्य तिष्ठत्स परिघः परिघेण तुल्य इति । परिघोऽर्गलादंडः । भोजेप्येता गतयः पठ्यंते—"ऊर्द्धबाहुशिरःपादो रुजन्योनिमुखं तु यः प्रतिकीलोपमः स्थित्या संकील इति संज्ञितः ॥ अधःपार्श्वगतो वापि तथैवाकुंचितोपि वायो निःसृत्य मुखं योनेर्ज्ञेयः प्रतिखुरस्तु सः । योनिद्वारात्तु निर्गच्छेद्यश्चैकांसशिरोभुजः । तमाहुर्बीजकं नाम मूढं गर्भचिकित्सकाः । योनिमावृत्य यस्तिष्ठेत्परिघो गोपुरं यथा । तथांतर्गर्भमायान्तं

अपविद्धशिरा या तु शीताङ्गी निरपत्रपा ॥
नीलोद्धतशिरा हन्ति सा गर्भं स च तां तथा ॥ ७ ॥
गर्भास्पन्दनमावीनां प्रणाशः श्यावपाण्डुता ॥
भवेदुच्छ्वासपूतित्वं शूनतान्तर्मृते शिशौ ॥ ८ ॥
मानसागन्तुभिर्मातुरुपतापैः प्रपीडितः ॥
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च निपीडितः ॥ ९ ॥
योनिसंवरणं सङ्गः कुक्षौ मक्कल्ल एव च ॥
हन्युः स्त्रियं मूढगर्भा यथोक्ताश्चाप्युपद्रवाः ॥ १० ॥

---

मधुकोशव्याख्या।

त्परिघसंज्ञितम्" इति ॥ ६ ॥ असाध्यमूढगर्भगर्भिण्योर्लक्षणमाह--अपविद्धशिरा या त्वित्यादि। अपविद्धशिरा शिरो धारयितुमशक्तेत्यर्थः, अवनतशिरा इति गदाधरः। निरपत्रपा लज्जाशून्या। नीलोद्गतशिरा इति नीला उद्गता च शिरा कुक्षौ यस्याः सा तथा। स चेति गर्भः ॥ ७ ॥ मृतगर्भलक्षणमाह--गर्भास्पन्दनमित्यादि। अस्पन्दनं निश्चलत्वम्, आवीनां प्रणाशः प्रसववेदनानामभावः, अथवा आवीशब्देन प्रसवलिङ्गान्युच्यन्ते, तानि मूत्रकफप्रसेकादीनि तेषां नाशः। शूनतेति उच्छूनता अन्तर्गतस्य मूढगर्भस्याध्मायनेन ॥ ८ ॥ मानसागन्तुदुःखव्याधिभेदेन द्विविधं मरणहेतुमाह--मानसागन्तुभिरित्यादि। उपतापैः दुःखैः ॥ ९ ॥ अपरमसाध्यगर्भिणीलक्षणमाह--योनिसंवरणमित्यादि। योनिसंवरणं तन्त्रान्तरपठितो रोगः। तथाहि--वातलान्यन्नपानानि ग्राम्यधर्मप्रजागरम्। अत्यर्थं सेवमानाया गर्भिण्या योनिमा-

आतङ्कदर्पणव्याख्या।

विद्यात्परिघसंज्ञितम् ॥ ६ ॥ असाध्यमूढगर्भगर्भिण्योर्लक्षणमाह—अपविद्धेति। अपविद्धशिराः शिरो धारयितुमशक्ताः। अवनतशिरा इति गदाधरः। निरपत्रपा लज्जारहिता। नीलोद्गतशिरेति। नीला। उद्गताःशिराः कुक्षौ यस्याः सा तथा, सा गर्भं हंति। स चेति स गर्भस्तामित्यर्थः ॥ ७ ॥ अथ गर्भिणीरक्षार्थं मृतस्य मूढगर्भस्य परिपीड्याकर्षणार्थं लक्षणमाह—गर्भेति। गर्भास्पंदनं गर्भस्याऽचलत्वम्, आवीनां प्रणाश इति, प्रसववेदनानामभावः। अथवा—आवीशब्देन प्रसवलिंगानि भण्यंते, तानि च मूत्रकफप्रसेकादीनि, तेषां नाशः। शूनतेति उद्धतता मृतस्य गर्भस्याध्मायनेन ॥ ८ ॥ तस्यांतर्मृतस्य मानसागंतुदुष्टव्याधिभेदेन द्विविधं हेतुमाह—मानसेति। उपतापैरिति दुखैः, तथागंतुभिरपि पीडितः ॥ ९ ॥ अपरमसाध्यगर्भिणीलक्षणमाह—योनीति। योनि-

"वायुः प्रकुपितः कुर्यात्संरुध्य रुधिरं स्रुतम् ॥
सूताया हृच्छिरोबस्तिशूलं मक्कल्लसंज्ञकम् ॥ ११ ॥"

इति श्रीमाधवकरविरचिते माधवनिदाने मूढगर्भनिदानं समाप्तम् ॥६४॥

---

मधुकोशव्याख्या ।

गगः ॥ मातरिश्वा प्रकुपितो योनिद्वारस्य संवृतिम् । कुरुते रुद्धमार्गत्वात्पुनरन्तर्गतोऽनिलः ॥ निरुणद्ध्याशयद्वारं पीडयन्गर्भसंस्थितम्॥ निरुद्धवदनोच्छ्वासो गर्भश्चाशु विपद्यते । बद्धां संरुद्धहृदयां नाशयत्येव गर्भिणीम् ॥ योनिसंवरणं विद्याद्व्याधिमेनं सुदारुणम् । अन्तकप्रतिमं घोरं नारभेत चिकित्सितम्"-इति । सङ्गः कुक्षाविति योनिसंवरणे सति प्रविद्धो वायुर्गर्भाशयं यदा निरुणद्धि तदा गर्भः कुक्षौ सक्तो भवति । मक्कल्लो रक्तमारुतजः शूलविशेषः यद्यपि प्रसूतायाः शूलं मक्कल्लमुक्तं यदुक्तं सुश्रुते,-"प्रजातायाश्चोत्तरं कालं तीक्ष्णैरविशोषितं शरीरं मक्कल्लं करोति"-इति; तथापि प्रजातायाश्चेति चकारेणाप्रजातायाअपि शूलं मक्कल्लमिति यथोक्ताश्चाप्युपद्रवा इति यथोक्ता येये उक्तास्ते पुनराक्षेपकश्वासादयः ॥ १० ॥

इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां मूढगर्भनिदानं समाप्तम् ॥ ६४ ॥

आतङ्कदर्पणव्याख्या ।

संवरणे सति प्रतिनिवृत्तो वायुर्गर्भाशयद्वारं यदा रुणद्धि, तदा गर्भः कुक्षौ सक्तो भवति स उच्यते-संगः कुक्षाविति । मक्कल्लो रक्तमारुतजः शूलविशेषः । योनिसंवरणं तंत्रांतरे रोगविशेषः । यथा वातलान्यन्नपानानि ग्राम्यधर्मं प्रजागरम् । अत्यर्थं सेवमानायां गर्भिण्यां योनिमार्गगः॥ मातरिश्वा प्रकुपितो योनिद्वारस्य संवृतिम् । कुरुते रुद्धमार्गत्वात्पुनरंतर्गतोऽनिलः । निरुणद्ध्याशयद्वारं पीडयन्गर्भसंस्थितम् । निरुद्धवदनोच्छ्वासो गर्भश्चाशु विपद्यते ॥ विपन्नः शूनसर्वांगः सर्वाण्येवायनानि च । बद्धां संरुद्धहृदयां नाशयत्याशु गर्भिणीम् ॥ योनिसंवरणं नाम व्याधिमेनं सुदारुणम् । अंतकप्रतिमं घोरं नारभेत चिकित्सितम् ॥" इति ॥ यथोक्ताश्चाप्युपद्रवास्ते च पुनराक्षेपककासश्वासादयः । "पूतिगंधि तथा स्वेदो जिह्वा तालु च शुष्यति । वेपते भ्राम्यति तथा जीवितं चोपरुध्यते ॥ एतैर्लिंगैर्विजानीयान्मूढगर्भं चिकित्सकः" ॥ १० ॥ मक्कल्लमाह-वायुः प्रकुपित इति । यद्यपि प्रसूतायाः शूलं मक्कल्लमुक्तम् । यदुक्तं सुश्रुते-"प्रजातायाश्चोत्तरकालं तीक्ष्णैरवशोषितं रक्तं मक्कल्लं करोति" इति, तथापि प्रजातायाश्चेति चकारेणाप्रजाताया अपि शूलं मक्कल्लमिति ॥ ११ ॥ इत्यातंकदर्पणे निदानव्याख्यायां मूढगर्भनिदानम् ॥ ६४ ॥

---

१ इमं श्लोकं केचित्सूतिकारोगनिदानस्यादौ पठन्ति ।

# अथ सूतिकारोगनिदानम् ६५.

अङ्गमर्दो ज्वरः कम्पः पिपासा गुरुगात्रता ॥
शोथः शूलातिसारौ च सूतिकारोगलक्षणम् ॥ १ ॥
मिथ्योपचारात्संक्लेशाद्विषमाजीर्णभोजनात् ॥
सूतिकायाश्च ये रोगा जायन्ते दारुणाः स्मृताः ॥ २ ॥
ज्वरातीसारशोथाश्च शूलानाहबलक्षयाः ॥
तन्द्रारुचिप्रसेकाद्याः कफवातामयोद्भवाः ॥ ३ ॥
कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाश्रिताः ॥
ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः ॥ ४ ॥

इति श्रीमाधवकरविरचिते माधवनिदाने सूतिकारोगनिदानं समाप्तम्॥६५॥

---

मधुकोशव्याख्या।

क्रमप्राप्तत्वात् सूतिकारोगनिदानारम्भः, सूतिकारोगलक्षणमिति सूतिकारोग एव लक्षणम्, अङ्गमर्दादिव्यतिरिक्तानां रोगाणामनभिधानात्। अङ्गमर्द इत्यादि। एतेऽङ्गमर्दादयः प्रायेण सूतिकाया भवन्तः सूतिकारोगत्वेन लक्ष्यन्ते इत्यर्थः ॥ १ ॥ सूतिरोगनिदानमाह—मिथ्येत्यादि। संक्लेशादिति संक्लिश्यते उत्क्लिश्यते दोषोऽनेनेति संक्लेशः दोषजनकमन्नम्। विषमाजीर्णभोजनादिति विषमभोजनादजीर्णभोजनाच्च। ज्वरातीसारादीनामङ्गमर्दादिभ्यः पृथक्च पुनरुपादानं रोगाधिक्यं कृच्छ्रत्वमुपद्रवत्वं च ख्यापयितुम्। कफवातामयोद्भवा इत्यस्य तन्द्रारुचिप्रसेकाद्या इति विशेषणम्। कफवातजे विकारे सति येषामुद्भवस्ते कफवातामयोद्भवाः ज्वरातीसारादयः कृच्छ्रसाध्या इत्यर्थः। ते सर्वे सूतिकानाम्नेति ते ज्वरातीसारादयः सर्वे सूति-

आतङ्कदर्पणव्याख्या।

सूतिकारोगलक्षणमाह—अंगमर्द इति। सूतिकारोग एव लक्षणम्। अंगमर्दादिव्यतिरिक्तस्य रोगस्यानभिधानात्। एतेऽगमर्दादयः प्रायेण सूतिकाया भवंति। सूतिकारोगत्वेन लक्ष्यंत इत्यर्थः॥१॥ मिथ्योपचारादिति। मिथ्योपचारादिभिः सूतिकाया ये रोगा जायंते ॥ संक्लेशादिति। संक्लिश्यते उत्क्लिश्यते दोषोऽनेनेति संक्लेशो दोषजनकमन्नम्। विषमाजीर्णभोजनादिति विषमभोजनाजीर्णभोजनाच्च। ज्वरातीसारादीनामगमर्दादिभ्यः पृथगुपादानं कृच्छ्रत्वमुपद्रवत्वं च ज्ञापयितुम् ॥ २ ॥ फकवातामयोद्भवा इति। ते तंद्रारुचिप्रसेकादयः कृच्छ्रसाध्या इत्यर्थः ॥ ३॥ ते सर्वे सतिकानाम्नेति। ज्वरातीसारादयः सर्वे सूतिकामयत्वेनाश्रयाश्रितयोरभेदोपचारात्सूतिकानाम्नो

# अथ स्तनरोगनिदानम् ६६,

**सक्षीरौ वाप्यदुग्धौ वा प्राप्य दोषः स्तनौ स्त्रियाः ॥**
**प्रदूष्य मांसरुधिरं स्तनरोगाय कल्पते ॥ १ ॥**
**पञ्चानामपि तेषां हि रक्तजं विद्रधिं विना ॥**
**लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥ २ ॥**

इति श्रीमाधवकरविरचिते माधवनिदाने स्तनरोगनिदानं समाप्तम् ॥६६॥

---

मधुकोशव्याख्या ।

काभवत्वेनाश्रयाश्रितयोरभेदोपचारात् सूतिका इति नाम्नोच्यंते । ते चाप्युपद्रवाः उक्तानां रोगाणामन्यतमं प्रधानीकृत्य भवन्ति ॥ २-५ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां सूतिकारोगनिदानं समाप्तम् ॥ ६५ ॥

सूतिकारोगाधिकारात् स्तनरोगा उच्यन्ते । पारिभाषिकस्तनरोगसंप्राप्तिमाह—सक्षीरौ वापीत्यादि । सक्षीरौ गर्भवत्याः, अदुग्धौ वेति दोहदायोगेन प्रसूतायाः, स्तनौ प्राप्येति विवृतधमनीमुखेनाविश्य, स्तनरोगशब्देन स्तनकोप इति प्रसिद्धो रोग उच्यते ॥ १ ॥ तेषां वातपित्तकफसन्निपातागन्तुजानामतिदेशेन लक्षणमाह—पञ्चानामपीत्यादि । एतत् सुबोध्यम् । आगन्तुस्तनरोगोऽभिघातेन शल्येन च । रक्तजस्यासंभवो व्याधिस्वभावात् ॥ २ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां स्तनरोगनिदानं समाप्तम् ॥ ६६ ॥

आतंकदर्पणव्याख्या ।

च्यंते । ते चाप्युपद्रवा इति, ते उपद्रवाश्च भवंति । रोगाणामन्यतमं प्रधानीकृत्य भवन्ति ॥ ४ ॥ इत्यातंकदर्पणे निदानव्याख्यायां सूतिकारोगनिदानम् ॥ ६५ ॥

सूतिकारोगाधिकारात्स्तनरोगा उच्यंते । पारिभाषिकस्तनरोगसंप्राप्तिमाह—सक्षीराविति । गर्भवत्याः सक्षीरौ चेति । अदुग्धौ वेति दोहदायोगेन प्रसूतायाः । स्तनौ प्राप्येति । विवृतधमनीमुखेन प्रविश्य स्तनरोगशब्देनात्र स्तनकोप इति प्रसिद्धो रोग उच्यते ॥ १ ॥ तेषां वातकफपित्तसंनिपातागंतुजानामतिदेशेन लक्षणमाह—पंचानामिति ॥ सुगमम् ॥ २ ॥ इत्यातंकदर्पणे निदानचिकित्सायां स्तनरोगनिदानम् ॥ ६६ ॥

# अथ स्तन्यदुष्टिनिदानम् ६७.

"विशंस्तेष्वपि गात्रेषु यथा शुक्रं न दृश्यते ॥
सर्वदेहाश्रितत्वाच्च शुक्रलक्षणमुच्यते ॥ १ ॥
तदेव चेष्टयुवतेर्दर्शनात्स्मरणादपि ॥
शब्दसंश्रवणात्स्पर्शात्संहर्षाच्च प्रवर्त्तते ॥ २ ॥
सुप्रसन्नं मनस्तत्र हर्षणे हेतुरुच्यते ॥
आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः ॥ ३ ॥
तदेवापत्यसंस्पर्शाद्दर्शनात्स्मरणादपि ॥
ग्रहणाच्च शरीरस्य शुक्रवत्संप्रवर्त्तते ॥
स्नेहो निरंतरस्तत्र प्रसवे हेतुरुच्यते ॥ ४ ॥

---

आतङ्कदर्पणव्याख्या ।

"अदृश्यस्यापि स्तन्यप्रसिद्धोपमानेन प्रवर्तने हेतुं दर्शयन्नाह—विशन्निति । शुक्रलक्षणं स्तनमुच्यत इति शेषः । कुत इत्याह—यथा शुक्रं विशंस्तेषु छिन्नेष्वपि गात्रेषु न दृश्यते, तस्माद्धेतोः । द्वितीयं हेतुमाह—सर्वदेहाश्रितत्वादिति । शुक्रवत्समस्तशरीराश्रितत्वात् ॥ १ ॥ शुक्रदृष्टांतेन स्तन्यस्याभ्यंतरदर्शनं प्रतिपाद्य तेनैव दृष्टांतेन बहिःप्रवर्त्तनं प्रतिपादयन्नाह—तदिति । तदेव शुक्रं प्रवर्त्तते बहिर्निःसरति । संहर्षात् विशिष्टसंकल्पलक्षणात्संहर्षे हेतुचष्टयं निर्दिशन्नाह—इष्टयुवतेरिति ॥ २ ॥ इष्टयुवतिदर्शनादिहेतुचतुष्टयेन यः संहर्षः, स सुप्रसन्न एव मनसि भवति, इति मनसोपि प्रसन्नस्य कारणत्वं दर्शयन्नाह—सुप्रसन्नेति । तत्र हर्षणे हेतुः सुप्रसन्नमीर्ष्याद्यनभिभूतं मन उच्यते । शुक्रेण सह प्रस्तुतस्य स्तन्यस्य साधर्म्याद्धेतुं दर्शयन्नाह—आहारेति । पूर्वं स्तन्यमपि स्त्रियाः प्रवर्तते । शुक्रमाहाररसयोनित्वात्प्रवर्त्तते । स्तन्यमपि तथा तस्मात्प्रवर्त्तते ॥ ३ ॥ ननु शुक्रमाहाररसयोन्यपि संहर्षात्कारणात्प्रवर्त्तते । अत्र च किं कारणमित्याह—तदेवेति । तदेव स्तन्यं शुक्रवत् संवर्त्तते । अपत्यसंस्पर्शादिकारणचतुष्टयेऽपि स्नेहो मूलकारणमिति तदेव दर्शयन्नाह—स्नेह इति । प्रसवे स्तन्यस्रवणे अत्रापि चत्वारो हेतवः परमेष्टयुवतिस्थानेऽत्रापत्यग्रहणम्, मूलहेतुहर्षस्थाने स्नेहः, प्रसन्नस्थाने निरंतरः ॥ ४ ॥"

---

१ इयं श्लोकचतुष्टयी मधुकोशकृता न गृहीता ।

गुरुभिर्विविधैरन्नैर्दुष्टैर्दोषैः प्रदूषितम् ॥
क्षीरं मातुः कुमारस्य नानारोगाय कल्पते ॥ १ ॥
कषायं सलिलप्लावि स्तन्यं मारुतदूषितम् ॥
कट्वम्ललवणं पीतराजीमत्पित्तसंज्ञितम् ॥ २ ॥
कफदुष्टं घनं तोये निमज्जति सपिच्छलम् ॥
द्विलिङ्गं द्वन्द्वजं विद्यात्सर्वलिङ्गं त्रिदोषजम् ॥ ३ ॥
अदुष्टं चाम्बुनिक्षिप्तमेकीभवति पाण्डुरम् ॥
मधुरं चाविवर्णं च प्रसन्नं तत्प्रशस्यते ॥ ४ ॥

**इति श्रीमाधवकरविरचिते माधवनिदाने स्तन्यदुष्टिनिदानं समाप्तम् ॥ ६७ ॥**

---

मधुकोशव्याख्या ।

स्तनाश्रितत्वेन स्तन्यदुष्टिमाह—गुरुभिर्विविधैरित्यादि । गुरुभिरन्नैर्हेतुभूतैर्ये दुष्टा दोषास्तैः प्रदूषितम् ॥ १ ॥ स्तन्यदुष्टिलक्षणमाह कषायमित्यादि । सलिलप्लावीति सलिले यदुत्प्लवते लाघवात् तत् सलिलप्लावि । एतदुपलक्षणं, तेन तनुत्वाद्यपि बोद्धव्यम् । कट्वम्ललवणमिति, कटु तिक्तं तिक्तेऽपि कटुशब्दप्रवृत्तेरिति वदन्ति । पीतराजीमदिति पीतरेखायुक्तम्, । अत्रापि नीललोहिताश्च राज्यो ज्ञेयाः । पित्तसंज्ञितमिति पित्तदुष्टसंज्ञितम् । संज्ञितमित्यत्र संयुतमिति पाठान्तरम् । तोये निमज्जति गुरुत्वात् । अतिमाधुर्याद्यपि बोध्यम् । प्रसन्नस्य तु साधारणं मधुरपाण्डुत्वम् । अभिघातेनापि स्तन्यं दुष्टं संभवत्येव, किन्तु तस्य वातिकस्तन्यलक्षणैरेव संग्रहणं कर्तव्यम् । स्तन्यस्वरूपं च सुश्रुतेनोक्तम् । तद्यथा,—"रसप्रसादो मधुरः पक्वाहारनिमित्तजः । कृत्स्नदेहात्स्तनौ प्राप्तः स्तन्यमित्यभिधीयते"—इति ॥ २ ॥ ३ ॥ अविकृतस्तन्यमाह—अदुष्टमित्यादि । अम्बुनिक्षिप्तमेकीभवति सर्वात्मना जलेन स-

आतङ्कदर्पणव्याख्या ।

स्तनाश्रितत्वेन स्तन्यस्य दुष्टिमाह—गुरुभिरन्नैर्हेतुभूतैर्ये दुष्टा दोषास्तैः प्रदूषितं धात्र्याः क्षीरं कुमारस्य नानारोगाय कल्पते । नानारोगानुत्पादयतीत्यर्थः ॥ १ ॥ वातिकमाह—कषायमिति । सलिलप्लावि सलिले यदुत्प्लवते लाघवात्, एतदुपलक्षणम्, तेन तनुत्वाद्यप्यनुक्तं बोद्धव्यम् । पैत्तिकमाह—कट्विति । कटु तिक्तम्, तिक्तेऽपि कटुशब्दस्य प्रवृत्तेरिति वदंति पीतराजीमदिति । पीतरेखायुक्तम्, अत्रापि नीललोहिताश्च राज्यो बोद्धव्याः । पित्तसंज्ञितमिति पित्तदुष्टमिति संज्ञितम् ॥ २ ॥ श्लैष्मिकमाह—कफदुष्टमिति । तोये निमजतीति गुरुत्वात् । अति माधुर्याद्यपि बोद्धव्यम् । सांसर्गिकसांनिपातिकावाह—द्विलिंगमिति । सुगमम् ॥ ३ ॥ अविकृतं स्तन्यमाह—अदुष्टमिति । अंबुनिक्षिप्तमेकी भवति । स सर्वात्मना जलेन सहैकीभूतं भवतीति

# अथ बालरोगनिदानम् ६८.

वातदुष्टं शिशुः स्तन्यं पिबन्वातगदातुरः ॥
क्षामस्वरः कृशाङ्गः स्याद्बद्धविण्मूत्रमारुतः ॥ १ ॥
स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान् ॥
तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन् ॥ २ ॥
कफदुष्टं पिबन्क्षीरं लालालुः श्लेष्मरोगवान् ॥
निद्रान्वितो जडः शूनवक्त्राक्षश्छर्दनः शिशुः ॥ ३ ॥
द्वन्द्वजे द्वन्द्वजं रूपं सर्वजे सर्वलक्षणम् ॥
शिशोस्तीव्रामतीव्रां च रोदनाल्लक्षयेद्रुजम् ॥ ४ ॥

---

मधुकोशव्याख्या।

हैकीभवतीति बोध्यम्, वातादिदुष्टस्याप्येकदेशेनैकीभावोपलम्भात् अविवर्णमिति अविद्यमानवातादिदुष्टवर्णम्। एतत् समदोषप्रकृतिक्षीरस्य प्रसन्नस्य लक्षणम्। अन्ये त्वविवर्णमित्यत्र नञ् ईषदर्थे. तेन यद्वातादिप्रकृतिवर्णाल्लुविद्धमपि पाण्डुरमल्पदुष्टत्वात्तद् गृह्णन्ति। केचित् पाण्डुरस्थाने सर्वश इति पठन्ति, तदा सर्वात्मना जलेन सहैकीभवतीति व्यक्तोऽर्थः। अत्र पक्षे: अविवर्णमित्यनेनैवादुष्टशुक्लवर्णता ज्ञेया प्रसन्नं प्रवृत्तिस्थम्॥ ४ ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां स्तन्यदुष्टिनिदानं समाप्तम्॥ ६७॥

बालरोगाणां दुष्टस्तन्येन संभवात्तदनन्तरं तानाह—वातदुष्टमित्यादि। वातगदातुर इति वक्ष्यमाणक्षामस्वरादियुक्तः। तृष्णालुरिति तृष्णावान्। लालालुरिति लालास्रावयुक्तः। छर्दन इति स्तन्यवान्तिकरः ॥ १-३ ॥ शिशोर्वक्तुमक्षमस्यान्तर्गतवेदनाज्ञानोपायमाह—शिशोरित्यादिना। तीव्रां रुजां बहुरोदनात्, अतीव्रामल्परोद-

आतङ्कदर्पणव्याख्या।

बोद्धव्यम्। अविवर्णमिति अविद्यमानवातादिदुष्टवर्णम्॥ ४ ॥ इत्यातंकदर्पणे निदानव्याख्यायां स्तन्यदुष्टिनिदानम्॥ ६७ ॥

दुष्टस्तन्यपानसंभवात्। स्त्रीरोगानंतरं बालरोगमाह—वातदुष्टमिति। सुगमम्॥ १ ॥ पित्तदुष्टमाह—स्विन्न इति। तृष्णालुः तृष्णावान्॥ २ ॥ कफदुष्टमाह—कफदुष्टमिति। लालालुः लालावान्, तथा श्लेष्मरोगयुक्तः, निद्रया पीडितः, जडः अपविद्धांगः, शूनवक्त्राक्षः, सशोफमुखनयनः, छर्दन इति स्तन्यवांतिकरः॥ ३ ॥ शिशोर्वक्तुमक्षमस्यांतर्गतवेदनाज्ञानोपायमाह—शिशो-

स यं स्पृशेद्भृशं देशं यत्र च स्पर्शनाक्षमः ॥
तत्र विद्याद्रुजं मूर्ध्नि रुजं चाक्षिनिमीलनात् ॥ ५ ॥
"हृदि जिह्वौष्ठदशनश्वासमुष्टिनिपीडनैः ॥"
कोष्ठे विबन्धवमथुस्तनदंशान्त्रकूजनैः ॥
आध्मानपृष्ठनमनजठरोन्नमनैरपि ॥ ६ ॥
वस्तौ गुह्ये च विण्मूत्रसंगोत्रासदिगीक्षणैः ॥
स्रोतांस्यङ्गानि सन्धींश्च पश्येद्यत्नान्मुहुर्मुहुः ॥ ७ ॥
कुकूणकः क्षीरदोषाच्छिशूनामक्षिवर्त्मनि ॥
जायते तेन तन्नेत्रं कण्डूरं च स्रवेन्मुहुः ॥ ८ ॥
शिशुः कुर्याल्ललाटाक्षिकूटनासावघर्षणम् ॥
शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः ॥ ९ ॥

---

मधुकोशव्याख्या ।

नात् लक्षयेत् ॥ ४–७ ॥ बालानामेव दुष्टस्तन्यपानाद्वर्त्मरोगमाह–कुकूणक इत्यादि । कुकूणकः कोथयेति ख्यातः । स्रवेन्मुहुरिति पिच्छिलस्रुतियुक्तं भवतीत्यर्थः ।

आतङ्कदर्पणव्याख्या ।

रिति । अतिरोदनेन किंचिद्रोदनेन च यदा रुजं पीडां विद्यादित्यर्थः । स शिशुर्यं देहदेशं भृशमत्यर्थं स्पृशेत्, यत्र च देहदेशे स्पर्शनाक्षमः स्यात्स्पर्शं न सहते, तत्र देहदेशे वेदनां जानीयात्, अक्षिनिमीलनात् । नेत्रयोः संकोचनाच्छिरसि पीडां विद्यात् । जिह्वौष्ठदशनादिभिर्बालस्य हृदि पीडां विद्यात् । विबंधादिभिराध्मानादिभिश्च कोष्ठे रुजं विद्यात् ॥ ५ ॥ ६ ॥ वस्तौ गुह्ये च विण्मूत्रयोः संगेन, तथा त्रासेन दिगीक्षणेन च बालस्य रुजं विद्यात् ॥ ७ ॥ बालानामेव दुष्टस्तन्यपानाद्वर्त्मरोगमाह–कुकूणक इति । क्षीरदोषात्कुकूणको नाम रोगः शिशूनामेव वर्त्मनि जायते, न महतां पुंसाम् । तथा च वाग्भटः–"कुकूणकः शिशोरेव दंतोत्पत्तिनिमित्तजः" इति । कुत्सिते कूणिते निमीलिते नेत्रे यस्माद्रोगादसौ कुकूणकः, लोके कोथय इत्याख्यातः । तेन कुकूणकेन नेत्रं कंडूयुक्तं जायते । तथा तन्नयनं स्रवेन्मुहुरिति । पिच्छलस्रुतियुक्तं भवतीत्यर्थः ॥ ८ ॥

---

१ केवलमधुकोशयुतपुस्तके नैतदुप लभ्यते ।

मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि ॥
कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः ॥ १० ॥
युज्यते कोष्ठवृद्ध्या च तमाहुः पारिगर्भिकम् ॥
रोगं परिभवाख्यं च युञ्ज्यात्तत्राग्निदीपनम् ॥ ११ ॥
तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् ॥
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥ १२ ॥
तालुपातः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम् ॥
तृडक्षिकण्ठास्यरुजा ग्रीवादुर्वहता वमिः ॥ १३ ॥
विसर्पस्तु शिशोः प्राणनाशनो वस्तिशीर्षजः ॥
पद्मवर्णो महापद्मनामा दोषत्रयोद्भवः ॥ १४ ॥

मधुकोशव्याख्या ।

न वर्त्मोन्मीलनक्षम इति न वर्त्मचालनक्षमः ॥ ८ ॥ ९ ॥ पारिगर्भिकमाह—मातुरित्यादि । पिबन्नपीति अपिशब्दादपिबन्नपि । तमाहुः पारिगर्भिकमिति पारिगर्भिकोऽहिण्डीति ख्यातः; तस्यैव परिभवाख्य इति नामान्तरं, बालं परिभवतीति परिभवः, स एव आख्या यस्य तम् । उपशयेनापि तज्ज्ञानमाह—युञ्ज्यादित्यादि ॥ ॥ १० ॥ ११ ॥ तालुकण्टकमाह—तालुमांस इत्यादि । अस्यैव लक्षणं तालुपात इत्यादि । तालुपात इत्यभ्यन्तरे तालुनोऽधःपातः । कृच्छ्रात् पानमित्यत्र स्तन्यस्येति शेषः । शकृद्द्रवं भिन्नपुरीषता । ग्रीवादुर्वहता ग्रीवाया दुःखेन धारणम् । वमिः स्तन्यस्य वान्तिः ॥ १२ ॥ १३ ॥ महापद्मनामानं विसर्पमाह—विसर्पस्त्वित्यादि ।

आतङ्कदर्पणव्याख्या ।

ललाटादिमर्दनं कुर्यात्, न वर्त्मोन्मीलनक्षम इति न वर्त्मचालनपटुः ॥ ९ ॥ पारिगर्भिकमाह—मातुरिति । कुमारी गर्भिण्या मातुः प्रायो वायोर्बाहुल्येन स्तन्यं पिबन्नपीति अपिशब्देन अपिबन्नपि कासादिभिस्तथा कोष्ठवृद्ध्या युज्यते युक्तो भवति । तदाहुः पारिगर्भिका अहिण्डीति लोके ख्यातम्, तस्यैव नामांतरं परिभवाख्यमिति । उपशयेनापि तस्य ज्ञानमाह—युंज्यात्तत्राग्निदीपनमिति ॥ १० ॥ ११ ॥ तालुकंटकमाह—तालुमांस इति । कंटकाकारत्वेन तालुकंटकनिम्नता गर्ताकारता ॥१२॥ तालुपातमाह—तालुपात इति । तालुपाताख्यो रोगः, तालुनः पतनं संशो यत्र रोगे स तथा।कृच्छ्रात्पानमित्यत्र स्तन्यस्येति शेषः । शकृद्द्रवं भिन्नपुरीषता, ग्रीवादुर्द्धरता ग्रीवाया दुःखेन धारणम्, वमिः स्तन्यस्य वांतिः ॥१३॥महापद्मनामानं विसर्पमाह—विसर्प इति।

१ अस्यायमेव पाठः ।

शङ्खाभ्यां हृदयं याति हृदयाद्वा गुदं व्रजेत् ॥
क्षुद्ररोगे च कथिते त्वजगल्ल्यहिपूतने ॥ १५ ॥
ज्वराद्या व्याधयः सर्वे महान्तो ये पुरेरिताः ॥
बालदेहेऽपि ते तद्वद्विज्ञेयाः कुशलैः सदा ॥ १६ ॥
क्षणादुद्विजते बालः क्षणात्त्रस्यति रोदिति ॥
नखैर्दन्तैर्दारयति धात्रीमात्मानमेव वा ॥ १७ ॥

---

मधुकोशव्याख्या ।

वस्तिशीर्षज इति वस्तिजः शीर्षजश्च, शीर्ष शिरः । पद्मवर्ण इति लोहितपद्मवर्णः । शंखाभ्यां हृदयं यातीति शीर्षजः । पद्मपत्रवर्णता मुखतालुनि बहिर्देशेषु च वदन्ति । हृदयाद्गुदं यातीति वस्तिजः, ऊर्ध्वं हृदयं गत्वा गुदं यातीत्यर्थः । अत्र पद्मसवर्णता वस्तिदेशे गुदे च । वाशब्दश्चात्र व्यवस्थितविकल्पवचनः ॥ १४ ॥ १५ ॥ अन्येऽपि विकारा बालानां संभवन्तीत्यतिदेशेन तानाह-ज्वराद्या इत्यादि । पुरेरिता इति पूर्वोक्ताः । ते तद्वदिति ज्वरादयस्तादृशा ज्ञेयाः । कुशलैरिति विज्ञैः ॥ १६ ॥ प्रायेण शौचभ्रंशादिना स्कन्दग्रहादयो नव बालेष्वाश्रयं कुर्वन्त्यतस्तत्परिज्ञानाय सामान्यलक्षणमाह-क्षणादुद्विजते बाल इत्यादि । एते ग्रहाः पूजार्थं बालान् हिंसन्ति । यदुक्तं सुश्रुते-"धात्रीमात्रोः प्राक् प्रदिष्टापचाराच्छौचभ्रष्टान्मङ्गलाचाररहीनान् । त्रस्तान्हृष्टांस्तर्जितान्क्रन्दितान्वा पूजाहेतोर्हिंस्युरेते कुमारान्"--इति ।

आतङ्कदर्पणव्याख्या ।

वस्तिशीर्षज इति वस्तिजः, शीर्षजश्च, शीर्ष शिरः, तत्र जातः । पद्मवर्ण इति लोहितपद्मवर्णतुल्यः । शंखाभ्यां हृदयं यातीति शीर्षजः । अत्र पद्मवर्णता वस्तिदेशे गुदे च वा शब्दोत्र व्यवस्थितविकल्पवचनः । हृदयाद्गुदं यातीति वस्तिशीर्षजः, ऊर्ध्वं हृदयं गत्वा गुदे यातीत्यर्थः ॥ अन्यौ द्वौ विकारौ बालानां भवतस्तावाह-क्षुद्र इति । स्निग्धाः सवर्णाः, इत्यादिना-जगल्लिका । "कण्डूयनात्ततः क्षिप्रम्" इत्यादिनाहिपूतनम् ॥ १५ ॥ अन्ये विकारा बालानां भवंति, तानतिदेशेनाह-ज्वराद्या इति । ते तद्वत् ते ज्वरादयस्तादृशा ज्ञेया इत्यर्थः ॥१६॥ प्रायेण शौचभ्रंशादिना स्कंदग्रहादयो नव बालेष्वाविशंति, तत्परिज्ञानार्थं सामान्यलक्षणं विशेषलक्षणं च व्याचष्टे । तत्र सामान्यलक्षणमाह-क्षणादिति । एते ग्रहाः पूजाहेतोर्बालान्हिंसंति । यदुक्तं चरके-"धात्रीमात्रोः प्राकप्रदिष्टापचाराच्छौचभ्रष्टान्मंगलाचारहीनान् । क्लिष्टांस्तांस्तांस्तर्जितांस्ताडितांश्च पूजाहेतोर्हिंस्युरेते कुमारान् ॥" इति । उद्विजत इति उद्विग्नो विह्वलो भवति; न तु

ऊर्ध्वं निरीक्षते दन्तान्खादेत्कूजति जृम्भते ॥
भ्रुवौ क्षिपति दन्तौष्ठं फेनं वमति चासकृत् ॥ १८ ॥
क्षामोऽति निशि जागर्ति शूनाक्षो भिन्नविट्स्वरः ॥
मांसशोणितगन्धिश्च न चाश्नाति यथा पुरा ॥ १९ ॥
सामान्यं ग्रहजुष्टानां लक्षणं समुदाहृतम् ॥
एकनेत्रस्य गात्रस्य स्रावः स्पन्दनकम्पनम् ॥ २० ॥
ऊर्ध्वं दृष्ट्या निरीक्षेत वक्रास्यो रक्तगन्धिकः ॥
दन्तान्खादति वित्रस्तः स्तन्यं नैवाभिनन्दति ॥ २१ ॥

---

मधुकोशव्याख्या।

उद्विजत इति उद्विग्नो भवति; उद्विग्नो विह्वलः, न तु बिभेतीत्यर्थः, त्रस्यतीत्यनेन पौनरुक्त्यप्रसंगात्। कूजत्यार्तनादं करोति। भ्रुवौ क्षिपतीति भ्रूभङ्गं रचयति, दन्तौष्ठमित्यत्र क्षिपतीति संबध्यते। क्षिपति खादति, धातूनामनेकार्थत्वात्। भिन्नविट्स्वर इति भिन्नविट् भिन्नशकृत्, भिन्नस्वरः स्वरभेदवान्। मांसशोणितगन्धिरिति विस्रगन्धिः। न चाश्नाति यथा पुरेति पूर्ववन्न भक्षयतीत्यर्थः॥१७–१९—सामान्यलिङ्गमभिधाय विशेषलिङ्गमाह—एकनेत्रस्येत्यादि। एकनेत्रस्य वामस्य दक्षिणस्य वा स्रावः स्रुतिः प्रभावात्, गात्रस्य स्रावो घर्मयुक्तगात्रतेत्यर्थः। स्पन्दनकम्पनमिति स्पन्दनं मनाक् चलनं, कम्पनं महता वेगेन वेपनं, स्पन्दनं कम्पनं वा भवतीत्यर्थः। वक्रास्यो वक्रमुखः। रक्तगन्धिक इत्येतत् सामान्यलक्षणलब्धमप्यतिशयार्थमुक्तम्, एवमन्यत्रापि सामान्यलक्षणे पुनरुक्ते व्याख्येयम् ॥ २० ॥ २१ ॥—

आतङ्कदर्पणव्याख्या।

बिभेतीत्ययमस्यार्थः, त्रस्यतीत्यस्योपात्तत्वात् ॥ १७ ॥ कूजतीति अव्यक्तनादं, करोति भ्रुवौ क्षिपति भ्रूभंगं रचयति, दंतौष्ठमित्यत्र क्षिपतीति संबध्यते। क्षिपति खादति, धातूनामनेकार्थत्वात् ॥ १८॥ भिन्नविट्स्वर इति। भिन्नविट् भिन्नमलः, भिन्नस्वरः स्वरभेदवान्। मांसशोणितगंधिरिति विस्रगंधिः। न चाश्नातीति पूर्ववन्न भक्षयतीत्यर्थः। एतत्सर्वं ग्रहाणां सामन्यलक्षणम्। विशेषलिंगं तत्र स्कंदग्रहगृहीतलक्षणमाह—एकेति। स्कंदोऽत्र स्कंदविनोदार्थं रुद्रेण सृष्टो ग्रहः, न पुनर्भगवान् कार्तिकेयः। एकनेत्रस्य वामस्य दक्षिणस्य वा स्रावोऽश्रुस्रुतिर्भवति प्रभावात्, गात्रस्य स्रावो घर्मयुक्तगात्रतेत्यर्थः ॥ स्पंदनं कंपनमिति। स्पंदनं मनाक् चलनम्, कंपनं महता वेगेन वेपनं वा भवतीत्यर्थः ॥ १९ ॥ २० ॥ वक्रास्य इति वक्रमुखः। रक्तगंधिक इत्येतेन सामान्य-

स्कन्दग्रहगृहीतानां रोदनं चाल्पमेव च ॥
नष्टसञ्ज्ञो वमेत्फेनं संज्ञावानतिरोदिति ॥
पूयशोणितगन्धित्वं स्कन्दापस्मारलक्षणम् ॥ २२ ॥
स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः
सास्रावव्रणपरिपीडितः समन्तात् ॥
स्फोटैश्च प्रचिततनुः सदाहपाकै-
र्विज्ञेयो भवति शिशुः क्षतः शकुन्या ॥ २३ ॥
व्रणैः स्फोटैश्चितं गात्रं पङ्कगन्धं स्रवेदसृक् ॥
भिन्नवर्चा ज्वरी दाही रेवतीग्रहलक्षणम् ॥ २४ ॥

---

मधुकोशव्याख्या ।

स्कन्दापस्मारलक्षणमाह—नष्टसंज्ञो मूर्च्छितः सन् फेनं वमेत्, यथा नष्टसंज्ञो फेनं वमेत् तथा संज्ञावानतिरोदिति ॥ २२ ॥ शकुनीलक्षणमाह—स्रस्ताङ्ग इत्यादि । स्रस्ताङ्ग इति अङ्गस्रंसवद्व्यथावान् । भयचकित इति भयहेतुर्भयं भयानकमुच्यते, ततश्चकितः, असति भयहेतौ त्रस्यतीत्यर्थः । विहङ्गगन्धिरिति विहङ्गस्येव गन्धो यस्य स तथा, उपमानाच्चेति समासान्त इमत्ययः । विहङ्गशब्देन जलचरा मांसादाश्च पक्षिणो गृह्यन्ते, विस्रगन्धित्वात् । हिरण्याक्षेऽप्युक्तम्,—"संस्रावदाहपाकाद्यैश्चितः स्फोटैर्भयान्वितः । स्रस्ताङ्गो विस्रगन्धिः स्याच्छकुन्या पीडितः शिशुः"—इति । सास्रावव्रणपरिपीडित इति स्फोटैरेव विदीर्णैर्व्रणरूपमापन्नैः परिपीडितः । स्फोटैश्च प्रचिततनुरिति नवनवैः स्फोटैर्व्याप्ततनुः । क्षत इत्यभिभूतः ॥ २३ ॥ रेवतीग्रहलक्षणमाह—व्रणैरित्यादि । व्रणैः स्फोटैश्चितं गात्रं पङ्कगन्धं स्रवेदसृगिति व्रणैः पुराणैः,

आतङ्कदर्पणव्याख्या ।

लक्षणलब्धमप्यतिशयार्थमुक्तम् ॥ २१ ॥ स्कंदापस्मारलक्षणमाह—नष्टेति । नष्टसंज्ञः सन् फेनं वमति, संज्ञावान् ज्ञानवान् अतिरोदिति नष्टसंज्ञो मूर्च्छितः ॥ २२ ॥ शकुनीग्रहलक्षणमाह—स्रस्तेति । स्रस्तांगः अंगस्रंसनव्यथावान् । भयचकित इति । भयहेतुर्भयम् , भयानकमुच्यते । ततः चकितः, असति भयहेतौ त्रस्यतीत्यर्थः । विहङ्गशब्देन जलचरा मांसादाश्च पक्षिणो गृह्यन्ते, विस्रगंधित्वात् । हिरण्याक्षेप्युक्तं—"संस्रावदाहपाकाद्यैश्चितः स्फोटैर्भयान्वितः । स्रस्तांगो विस्रगंधिः स्याच्छकुन्या पीडितः शिशुः" इति । सास्रावव्रणपरिपीडित इति स्फोटैरेव विदीर्णैर्व्रण-रूपतामापन्नैः परिपीडित इत्यर्थः । स्फोटैश्च प्रचिततनुरिति नवनवैः स्फोटैर्व्याप्ततनुः क्षत इत्य-भिभूतः ॥ २३ ॥ रेवतीग्रहलक्षणमाह—व्रणैरिति । व्रणैः पुराणैः, स्फोटैर्नवैः, पंकगंधं कर्दमगं.

अतीसारो ज्वरस्तृष्णा तिर्यक्प्रेक्षणरोदनम् ॥
नष्टनिद्रस्तथोद्विग्नो ग्रस्तः पूतनया शिशुः ॥ २५ ॥
छर्दिः कासो ज्वरस्तृष्णा वसागन्धोऽतिरोदनम् ॥
स्तन्यद्वेषोऽतिसारश्च अन्धपूतनया भवेत् ॥ २६ ॥
वेपते कासते क्षीणो नेत्ररोगा विगन्धिता ॥
छर्द्यतीसारयुक्तश्च शीतपूतनया शिशुः ॥ २७ ॥
प्रसन्नवर्णवदनः शिराभिरभिसंवृतः ॥
मूत्रगन्धी च बह्वाशी मुखमुण्डतिकाग्रही ॥ २८ ॥
छर्दिस्पन्दनकण्ठास्यशोषमूर्च्छाविगन्धिता ॥
ऊर्ध्वं पश्येद्दशेद्दन्तान्नैगमेयं ग्रहं वदेत् ॥ २९ ॥
"प्रस्तब्धाक्षः स्तनद्वेषी मुह्यते चानिशं मुहुः ॥
तं बालमचिराद्धंति ग्रहः सम्पूर्णलक्षणः ॥
विपरीततमं साध्यं चिकित्सेदचिरार्दितम् ॥ ३० ॥"[1]

**इति श्रीमाधवकरविरचिते माधवनिदाने बालरोगनिदानं समाप्तम् ॥ ६८ ॥**

मधुकोशव्याख्या ।

स्फोटैरविदीर्णैर्नूतनैः चितं व्याप्तम् । गात्रमिति कर्तृपदम् । पङ्कगन्धं कर्दमगंधम्, समासविधेरनित्यत्वादिप्रत्ययो न भवति ॥२४॥ पूतनालक्षणमाह—अतिसार इत्यादि । ग्रस्तः पूतनया शिशुरिति ग्रस्त इति गृहीत इत्यर्थः ॥ २५-३० ॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां बालरोगनिदानं समाप्तम् ॥ ६८ ॥

आतङ्कदर्पणव्याख्या ।

धम् असृक् स्रवेत् ॥ २४ ॥ पूतनाग्रस्तलक्षणमाह—अतीसार इति । तिर्यक् वा दक्षिणनेत्रप्रांतस्यावलोकनम्, उद्विग्नो व्यग्रचित्तः, ग्रस्तो गृहीतः ॥ २५ ॥ अंधपूतनया ग्रस्तमाह—छर्दिरिति । वसाया मांसस्नेहस्य गंधवान् ॥ २६ ॥ शीतपूतनाग्रस्तलक्षणमाह—वेपत इति । सुगमम् ॥ २७ ॥ मुखमंडलिकाग्रस्तलक्षणमाह—प्रसन्नेति । उद्धतशिराभिर्व्याप्तशिराः, मूत्रगंधीति वस्तमूत्रगंधः, बह्वाशी बहुभक्षणशीलः ॥ २८ ॥ नैगमेषु ग्रस्तलक्षणमाह—छर्दिरिति । स्यन्दनं लालास्रावः, अथवा घर्मांबुस्रावः ॥ २९ ॥ साध्यासाध्यलक्षणमाह—प्रस्तब्धाक्ष इति ॥ ३० ॥ इत्यातंकदर्पणे निदानव्याख्यायां बालरोगनिदानम् ॥ ६८ ॥

---

१ एतत्सार्धपद्यं केवलमधुकोशयुतपुस्तके नोपलभ्यते ।

# अथ विषनिदानम् ६९.

**स्थावरं जङ्गमं चैव द्विविधं विषमुच्यते ॥**
**मूलाद्यात्मकमाद्यं स्यात्परं सर्पादिसंभवम् ॥ १ ॥**

मधुकोशव्याख्या ।

पारिशेष्याद्विषनिदानमुच्यते—स्थावरमित्यादिना । विषादजनकत्वाद्विषं, तच्च द्विविधं स्थावरं जङ्गमं च । मूलाद्यात्मकमिति आद्यं स्थावरं मूलादिरूपं दशविधं, यदुक्तं सुश्रुते,—"मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च । निर्यासो धातवश्चैव कन्दश्च दशमः स्मृतः"—इति । तत्र क्लीतकाश्वमारकगुञ्जासुगन्धगर्गरकरघाटविद्युच्छिखाऽनन्ताविजयानीत्यष्टौ मूलविषाणि । विषपत्रिकालम्बासुरदारुकरम्भमहाकरम्भाणि पञ्च पत्रविषाणि । कुमुद्वतीवेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्मरीभगन्धासर्पघातिनन्दनकंकोलसारपाकानि द्वादश फलविषाणि । वेत्रकादम्बवल्लीजकरम्भमहाकरम्भाणि पञ्च पुष्पविषाणि । अन्त्रपाचककर्तरीयशैलेयकरम्भनन्दनकरघाटवराटकानि सप्त त्वङ्निर्याससारविषाणि । कुमुदघ्नीस्नुहीजालक्षीरीणि त्रीणि क्षीरविषाणि । फेनाश्मभस्म हरितालं च द्वे धातुविषे । कालकूटवत्सनाभसर्षपकपालकर्दमकवैराटकमुस्तकमहाविषप्रपौण्डरीकमूलकहलाहलश्रृङ्गिमर्कटकानि त्रयोदश कन्दविषाणि । एतानि प्राणहराणि, एवं पञ्चपञ्चाशत् स्थावराणि विषाणि भवन्ति । एषां च व्याधपुलिन्दादिभ्यो व्यक्तिज्ञानं कर्तव्यम् । परं सर्पादिसम्भवमिति

आतङ्कदर्पणव्याख्या ।

पारिशेष्याद्विषनिदानमुच्यते । विषादजनकत्वाद्विषम्, तच्च द्विविधं—स्थावरं जंगमं च । तद्वैविध्यमाह—स्थावरमिति ॥ मूलाद्यात्मकमिति । आद्यं प्रथमम् अदनीयमाद्यमित्यन्ये । स्थावरं मूलादिस्वरूपं दशविधम् । यदुक्तं सुश्रुते—"दशाधिष्ठानमाद्यं स्याद्वितीयं षोडशाश्रयम्" ॥ इति, "मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च । निर्यासो धातवश्चैव कंदश्च दशमः स्मृतः ॥" इति च । तत्र क्लीतकाश्वमारकगुंजासुगंधगर्गरकरघाटकविद्युच्छिखाऽनंताविजयानीत्यष्टौ मूलविषाणि । विषपत्रिकालंबासुरदारुकरंभमहाकरंभाणि पंच पत्रविषाणि । कुमुद्वतीवेणुकाकरंभमहाकरंभकर्कोटकरेणुकखद्योतकचर्मरीभगन्धासर्पघातिचन्दनकंकोलसारपाकानि द्वादश फलविषाणि । वेत्रकादंबवल्लीकरम्भमहाकरंभाणि पंच पुष्पविषाणि । अन्त्रपाचककर्तरीयशैलेयकरंभनंदनकरघाटवराटकानि सप्त त्वङ्निर्याससारविषाणि । कुमुदघ्नीस्नुहीजालक्षीरीणि त्रीणिक्षीरविषाणि । फेनाश्मभस्म हरितालं च द्वे धातुविषे । कालकूटवत्सनाभसर्षपकपालकर्दमवैराटकमुस्तकश्रृंगीप्रपौण्डरीकमूलकहालाहलमहाविषमर्कटकानीति त्रयोदश कंदविषाणि । एवं पंचाशत्स्थावरविषाणि भवंति । एषां व्याधपुलिंदादिभ्यो व्यक्तिज्ञानं कर्तव्यम् ॥ परं सर्पादिसंभवमिति । परं जंग-

निद्रां तन्द्रां क्लमं दाहमपाकं लोमहर्षणम् ॥
शोथं चैवातीसारं च जङ्गमं कुरुते विषम् ॥ २ ॥
स्थावरं च ज्वरं हिक्कां दन्तहर्षगलग्रहम् ॥
फेनच्छर्द्यरुचिश्वासं मूर्च्छां च कुरुते विषम् ॥ ३ ॥
इङ्गितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः ॥
जानीयाद्विषदातारमेभिर्लिङ्गैश्च बुद्धिमान् ॥ ४ ॥

मधुकोशव्याख्या ।

परं जङ्गमं; तच्च षोडशाभिधानं, दृष्टिनिःश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालास्पर्शमुखसंदंशपर्दितगुदास्थिपित्तशूकशवभेदात् । पर्दितं पायुकृतः कुत्सितशब्दः, 'पर्द' कुत्सिते शब्दे, इत्यस्य प्रयोगात् । तत्र दृष्टिनिःश्वासविषाः दिव्याः सर्पाः, भौमाः सर्पा दंष्ट्राविषाः, मार्जारमकरव्याघ्रादयो दंष्ट्रानखविषाः, पिच्चिटकौण्डिन्यादयो मूत्रपुरीषविषाः, मूषिकाः शुक्रविषाः, वृश्चिकवरटीचिङ्गटादय आराविषाः, लूता लालास्पर्शविण्मूत्रशुक्रमुखसंदंशविषाः, चित्रशीर्षकशतदारुकशारिकादयो मुखसंदंशदंष्ट्रापर्दितगुदपुरीषविषाः, विषहतास्थिमत्स्यास्थिप्रभृतयोऽस्थिविषाः, शकुनीमत्स्यादयः पित्तविषाः, सूक्ष्मतुण्डभ्रमरादयः शूकविषाः, कीटसर्पदेहा गतासवः शवविषाः, । एषां च सुश्रुतस्य कल्पस्थाने विस्तरो द्रष्टव्यः ॥ १ ॥ अत्र च जङ्गमविषस्य बह्वधिष्ठानत्वेन प्राधान्यात् सर्वरोगानुगतं सामान्यलिङ्गमाह—निद्रामित्यादि । एतत् सुबोध्यम् ॥२॥ स्थावरसामान्यलिङ्गमाह—स्थावरं चेत्यादि । फेनच्छर्दिरिति फेनस्य छर्दिः ॥ ३ ॥ विषदातृलक्षणमाह—इङ्गितज्ञ इत्यादि । अभिप्रायसूचकं ईहितमिङ्गितं तज्ज्ञो वैद्यो वाचा क्रियया मुखवैकृत्यादिना विषदातारं जानीयात् । एभिर्वक्ष्यमाणलक्षणैः । न

आतङ्कदर्पणव्याख्या ।

मम्; तच्च षोडशाभिधानम् । दृष्टि निःश्वासदंष्ट्रानखमूत्रपुरीषशुक्रलालास्पर्शमुखसंदंशविशर्धितगुदास्थिपित्तशूकशवभेदात् । पर्दितं विशर्धितं पायुकृतः कुत्सितः शब्दः 'शृधुशब्दकुत्सायाम्' इत्यस्य प्रयोगात् । तत्र दृष्टिनिःश्वासविषा दिव्याः सर्पाः, भौमास्तु दंष्ट्राविषाः । मार्जारश्वमकरव्याघ्रादयो दंष्ट्रानखविषाः । पिच्चिटकौडिन्यादयो मूत्रपुरीषविषाः । सर्पलादयो मूषिकाः शुक्रविषाः वृश्चिकवरटीमत्स्योचिङ्गटादया आराविषाः । लूता लालास्पर्शविण्मूत्रशुक्रार्त्तवमुखसंदंशविषाः, मक्षिकाजलायुकादयो मुखसंदंशविषाः, चित्रशीर्षकशतदारुकसारिकादयो मुखसंदंशदंष्ट्राविशर्धितगुदपुरीषविषाः । विषहतास्थिमत्स्यास्थिप्रभृतयोऽस्थिविषाः, शकुनीमत्स्यादयः पित्तविषाः, सूक्ष्मतुंडभ्रमरादयः शूकविषाः, कीटसर्पदेहा व्यसवः शवविषा इति । एषां च सुश्रुतस्य कल्पस्थाने विस्तरो द्रष्टव्यः ॥ १ ॥ तत्र जंगमविषस्य सामान्येन लिंगमाह—निद्रामिति ॥ २ ॥ फेनच्छर्दीति फेनस्य छर्दिरित्यवगम्यते ॥ ३ ॥ अवनीपतेः परिकर्मिणो विषमवचारयंतीति तेषां विषदातॄणां लक्षणमाह—इंगितज्ञ इति । अभिप्रायसूचकमीहितमिंगितं तज्ज्ञो वैद्यः वाचा क्रियामुख-

न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च ॥
अपार्थं बहु संकीर्णं भाषते चापि मूढवत् ॥ ५ ॥
हसत्यकस्मात्स्फोटेदङ्गुलीर्विलिखेन्महीम् ॥
वेपथुश्चास्य भवति त्रस्तश्चान्योन्यमीक्षते ॥ ६ ॥
विवर्णवक्त्रो ध्यामश्च नखैः किंचिच्छिनत्त्यपि ॥
आलभेतासनं दीनः करेण च शिरोरुहम् ॥ ७ ॥
वर्तते विपरीतश्च विषदाता विचेतनः ॥
उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ॥ ८ ॥
जृम्भणं वेपनं श्वासो ज्ञेयं पत्रविषेण तु ॥
मुष्कशोथः फलविषैर्दाहोऽन्नद्वेष एव च ॥ ९ ॥
भवेत्पुष्पविषैश्छर्दिराध्मानं श्वास एव च ॥
त्वक्सारनिर्यासविषैरुपयुक्तैर्भवन्ति हि ॥ १० ॥

---

मधुकोशव्याख्या ।

ददात्युत्तरं पृष्ट इति स्वीयासत्कर्मजनितव्यामोहात् । अपार्थमित्यनर्थकम् । संकीर्णमित्यस्फुटम् । हसत्यकस्मादिति अहासाद्धेतोरपि हसति । भयजवायुजनितपर्वव्यथापनोदनायांगुलीः स्फोटयति । क्रियान्तरकरणसूचनाय महीं विलिखति । ध्याम इति दग्धसमवर्णः किंचित्तृणादिकम् ॥ ४–७ ॥ वर्तते विपरीतमिति वारंवारं परिवर्त्य तिष्ठति मूलादिविषाणां प्रमादादुपयुक्तानां प्रत्येकं लक्षणमाह—उद्वेष्टनमित्यादि । उद्वेष्टनं दण्डादिमर्दनवद्व्यथा । मूलविषैरित्यष्टविधैरपि; एवं पत्रादीनामुक्तानां यावत्संख्याकानामेकं सामान्यलक्षणमवगन्तव्यम् । प्रायेण कालघातीनीति एतानि नव

आतङ्कदर्पणव्याख्या ।

वैवर्ण्यादिभिर्विषदातारं जानीयात्, एतैर्लिंगैश्चेति वक्ष्यमाणैः ॥ ४ ॥ तान्येव लिंगान्याह—नेति । आत्मीयाऽसत्कर्मजनितव्यामोहात्, अपार्थमिति निरर्थकम्, संकीर्णमिति अस्फुटम् ॥ ५ ॥ हसत्यकस्मादिति । अहासहेतोरपि हसति, भयजवायुसंभूतपर्वव्यथापनोदायांगुलीः स्फोटयति । क्रियांतरकरणसूचनाय महीं किंचिल्लिखति । त्रस्तश्चान्योन्यमीक्षत इति । स्वपापकर्मोपलंभभयेनान्योन्यमीक्षते ॥ ६ ॥ ध्याम इति दग्धसमवर्णः । मलिनवस्त्रवर्ण इति डल्हनः ॥ ७ ॥ नवानां मूलादिविषाणां प्रमादादुपयुक्तानां प्रत्येकलक्षणमाह—उद्वेष्टनमिति । उद्वेष्टनं दंडादिमर्दनवद्व्यथा । मूलविषैरष्टविधैरपि ॥ ८ ॥ पत्रविषलक्षणमाह—जृंभणमिति । जृंभणं जृंभाबाहुल्यम् । फलविषलक्षणमाह—मुष्कयोः श्वयथुः ॥ ९ ॥ पुष्पविषलक्षणमाह—त्वक्सारेति त्वग्विषैः सार-

आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवाः ॥
फेनागमः क्षीरविषैर्विड्भेदो गुरुगात्रता ॥ ११ ॥
हृत्पीडनं धातुविषैर्मूर्च्छादाहश्च तालुनि ॥
प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत् ॥ १२ ॥
सद्यः क्षतं पच्यते यस्य जन्तोः स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम् ॥
कृष्णीभूतं क्लिन्नमत्यर्थपूति क्षतान्मांसं शीर्यते चापि यस्य॥१३॥
तृष्णा मूर्च्छा ज्वरदाहौ च यस्य दिग्धाहतं तं पुरुषं व्यवस्येत् ॥
लिङ्गान्येतान्येव कुर्याद्यमित्रैर्व्रणे विषं यस्य दत्तं प्रमादात् ॥१४॥
सपीतं गृहधूमाभं पुरीषं योऽतिसार्यते ॥
फेनमुद्वमते चापि विषपीतं तमादिशेत् ॥ १५ ॥
वातपित्तकफात्मानो भोगिमण्डलिराजिलाः ॥
यथाक्रमं समाख्याता व्यन्तरा द्वन्द्वरूपिणः ॥ १६ ॥

---

मधुकोशव्याख्या ।

मूलादिविषाणि कालान्तरेण मारकाणि भवन्तीत्यर्थः । कन्दविषं तु दशममतितीक्ष्णत्वाद्व्यवायिविकाश्यादिगुणयोगात्तदात्वेन मारकम् ॥ ८—१२ ॥ विषलिप्तशस्त्रहतस्य लिङ्गमाह—सद्य इत्यादि । पच्यते चाप्यभीक्ष्णमिति सद्यस्तावत् पच्यते पश्चादपि पुनःपुनः पाकमेति ॥ १३—१५ ॥ स्थावरमभिधाय जङ्गमेष्वतितीक्ष्णत्वेन सर्पविषे वाच्ये तदाश्रयान् सर्पानाह—वातपित्तकफात्मान इत्यादि । भोगी

आतङ्कदर्पणव्याख्या ।

विषैर्निर्यासविसविषैः पृथक् त्रिभिः ॥ १० ॥ पारुष्यं खरस्पर्शत्वम्, मुखस्यैव कफसंस्रवः । श्लेष्मास्रावः । क्षीरविषलक्षणमाह—फेनेति । सुगमम् ॥ ११ ॥ धातुविषमाह—हृदिति । धातुविषैः हरितालादिकैः । एषां कालावधिमाह—प्रायेणेति । एतानि नव मूलादिविषाणि कालांतरेण घ्नंति । कंदविषमपि दशममतितीक्ष्णत्वाद्व्यवायिविकाश्यादिगुणयोगात्तदात्वेन मारकम् ॥ १२ ॥ विषलिप्तशस्त्रहतस्य लिंगमाह—सद्य इति । सद्यस्तावत् पच्यते पश्चादपि पुनःपुनः पाकमेति । दिग्धाहतं विषलिप्तशस्त्रहतम् । शत्रुभिर्व्रणसंचारितविषलक्षणमाह—लिंगानीति । एतान्येव पूर्वोक्तानि, अमित्रैः शत्रुभिः, व्रणे शस्त्रव्रणे, प्रमादात् अनवधानात् । तंत्रांतरे विषपीतलक्षणम्—"सपीतं गृहधूमाभं पुरीषं योतिसार्यते । फेनमुद्वमते चापि विषपीतं तमादिशेत्" इति ॥ १३—१५ ॥ स्थावरमभिधाय जंगमेष्वतितीक्ष्णत्वेन सर्पविषे वाच्ये तदाश्रया सर्पानाह—वातेति । भोगी फणी.

**दंशो भोगिकृतः कृष्णः सर्ववातविकारकृत् ॥**
**पीतो मण्डलिजः शोथो मृदुः पित्तविकारवान् ॥ १७ ॥**
**राजिलोत्थो भवेद्दंशः स्थिरशोथश्च पिच्छिलः ॥**
**पाण्डुः स्निग्धोऽतिसान्द्रासृक् सर्वश्लेष्मविकारकृत् ॥ १८ ॥**
**अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु ॥**
**याम्ये च दष्टाः परिवर्जनीया ऋक्षे शिरामर्मसु ये च दष्टाः ॥**
**दर्वीकराणां विषमाशुघाति सर्वाणि चोष्णे द्विगुणीभवन्ति ॥१९॥**

---

मधुकोशव्याख्या ।

फणी, मण्डली मण्डलवद्रथाङ्गलाङ्गलादिरूपमण्डलयुक्तः,। राजिलश्चित्रदीर्घरेखावान्, एते यथाक्रमं वाताद्यात्मानः वातादिप्रकृतयः। व्यतिकरजान् सर्पान् दर्शयति—द्व्यन्तरा द्वन्द्वरूपिण इति । द्वयोरन्तरं विशेषो येषु ते तथा । यथा—फणिना मण्डलिन्यां गोनसा जाताः, मण्डलिना गोनसेन च फणिन्यां कृष्णसर्पाः, एवमन्येऽपिजातिसंकरा ऊह्याः । व्यन्तरा इति पाठे स एवार्थः,विशब्दस्य द्व्यर्थत्वात्, तथा विभवान्महानाकाश इत्यत्र व्याख्यातं, विभवादिति द्विभावात् द्विभावश्च सर्वमूर्तद्रव्यैः संयोगः सर्वत्र सर्वोपलम्भश्चेति । द्वन्द्वरूपिण इति द्वयोः फणिमण्डलिनोर्वातपित्तप्रकृतयोर्यत् प्रकृतिरवं तन्मिलितप्रकृतस्त्वमेषामित्यर्थः, वातपित्तप्रकृतयोरथवा द्वयोर्यद्दोषयो रूपं तद्रूपमित्यर्थः ॥ १६ ॥ भोगिप्रभृतिभिः कृतदंशेषु वातादीनां लिङ्गमाह—दंशो भोगिकृत इत्यादि । सर्ववातविकारकृदित्यनेनैव कृष्णत्वे सिद्धे तदुक्तिरवश्यं भवनख्यापनार्थम्, एवमुत्तरत्रापि पीताद्यभिधानम् ॥ १७ ॥ १८ ॥ विशिष्टदेशादिदष्टस्यासाध्यत्वमाह—अश्वत्थेत्यादि । याम्ये चेति भरण्याम् ऋक्षे नक्षत्रे । मर्मास्विति

आतङ्कदर्पणव्याख्या ।

मंडली रथांगलांगलादिरूपमंडलयुक्तः, राजिलश्चित्रदीर्घरेखावान्, एते यथाक्रमं वातपित्तकफप्रकृतयः । व्यतिकरजान् सर्पान्दर्शयति—द्व्यंतरा द्वंद्वरूपिण इति । द्व्यंतराः द्वयोरंतरं विशेषो येषु ते तथा, यथा—फणिना कृष्णसर्पेण मंडलिन्यां गोनसा जाताः, मंडलिना वा गोनसेन च । फणिन्यां कृष्णसर्पाः, एवमन्येपि जातिव्यतिकरा ऊह्याः । द्वंद्वरूपिण इति द्वयोर्यो भावः; तद्वन्त इत्यर्थः ॥ १६ ॥ भोगिप्रभृतिभिः कृतदंशेषु लक्षणं वातादीनामाह—दंश इति । सर्ववातविकारकृदित्यनेनैव कृष्णत्वे सिद्धे तदुक्तिरवश्यंभाविता ख्यापनार्थम् । एवमुक्तत्रापि पीताद्यभिधानम् ॥ १७ ॥ १८ ॥ विशिष्टदेशनक्षत्रदष्टस्यासाध्यत्वमाह—अश्वत्थेति । याम्ये चेति भरण्याम्, याम्ये इत्यत्र "पित्र्ये" इति पाठः । पित्र्ये मघायाम्, ऋक्षे नक्षत्रे । ये च मर्मसु

**अजीर्णपित्तातपपीडितेषु बालेषु वृद्धेषु बुभुक्षितेषु ॥**
**क्षीणक्षते मेहिनि कुष्ठयुक्ते रूक्षेऽबले गर्भवतीषु चापि ॥ २० ॥**

मधुकोशव्याख्या ।

आशुघातिषु । याम्ये चेति चकारेणार्द्राश्लेषामघामूलकृत्तिकानां ग्रहणम् । यदुक्तमन्यत्र,—"चैत्यायतनवल्मीकश्मशानेषु चतुष्पथे । आर्द्राश्लेषामघामूलकृत्तिकाभरणीषु च ॥ पञ्चम्यां सन्ध्ययोर्दंशे मर्मस्वाशुहरेषु च । दष्टाः कष्टेन जीवन्ति यदि दूतादिसंपदः"—इति । दर्वीकराणां विषमाशुघातीति अश्वत्थादौ विशेषेण दर्वीकराणां विषमाशुमारकं दर्वीकराः फणिनः । सर्वाणि चोष्णे द्विगुणीभवन्तीति उष्णसंयोगे सति सर्वाणि विषाणि स्वरूपतो द्वैगुण्यं भजन्ते; सर्वाणि चोक्तानि यथाक्रमेणेति पाठान्तरे अयमर्थः—सर्वाणिभोगिमण्डलिराजिलविषाणि यथाक्रमेण यथोद्दिष्टक्रमेण उक्तान्यश्वत्थादिष्वाशुघातीनि । दर्वीकरविषस्य पृथगुपादानं विशेषार्थम् ॥ १९ ॥— एवमपरेष्वपि आशुघातित्वं संभवति तानाह—अजीर्णेत्यादि । अजीर्णपित्तातपपीडितेष्विति अजीर्णिनि दोषत्रयप्रकोपात् पित्तातपपीडितयो रौक्ष्यात्, बालवृद्धयोरसंपूर्णक्षीणधातुत्वेन विषवेगासहत्वात्, बुभुक्षितेष्विति वातपित्तवृद्ध्या उष्णदेहत्वात्, क्षीणक्षत इति क्षतक्षीणे बहुलवातदुष्टेः, मेहिनि दोषत्रयप्रकोपात्, कुष्ठयुक्ते रक्तादिदोषात्, रूक्षे वातकोपात् अबले क्लेशासहत्वात्, गर्भवतीषु गर्भेणो-

आतङ्कदर्पणव्याख्या ।

दष्टाः स्युस्तेपि त्याज्याः । मर्मस्विति आशुघातिषु । याम्ये चेति चकारेणार्द्राश्लेषामघामूलकृत्तिकादीनां समुच्चयनम् । यदुक्तमन्यत्र—"चैत्यायतनवल्मीकश्मशानेषु चतुष्पथे । आर्द्राश्लेषामघामूलकृत्तिकाभरणीषु च ॥ पंचम्यां संध्ययोर्दंशे मर्मस्वाशुहरेषु च । दष्टाः कष्टेन जीवंति यदि दूतादिसंपदः ॥" इति । दर्वीकराणामिति । अश्वत्थादौ विशेषेण दर्वीकराणां विषमाशुघातकम्, दर्वीकराः फणिनः । सर्वाणि चोष्णे विगुणीभवंतीति । उष्णसंयोगे सर्वाणि विषाणि स्वरूपतो वैगुण्यं भजंते "सर्वाणि चोष्णे द्विगुणीभवंति" इति पाठे सर्वाण्यशेषाणि विषाण्यदनकाले द्विगुणीभवंति द्विगुणशक्तीनि भवंति । "सर्वाणि चोर्द्ध्वे द्विगुणीभवंति" इत्यपरे पठंति । ऊर्ध्वे देश इत्यर्थः । "सर्वाणि चोक्तानि यथाक्रमेण" इति पाठांतरम्, तदायमर्थः—सर्वाणि । मंडलिराजिलविषाणि यथाक्रमेण. यथोपदिष्टक्रमेणोक्ताऽश्वत्थादिष्वाशुघातीनि । दर्वीकरविषस्य पृथगुपादानं विशेषार्थम् ॥ १९ ॥ अपरेषु येषु यथाशुघातित्वं संभवति तानाह—अजीर्णेति । अजीर्णिनि दोषत्रयप्रकोपाद्विषमाशुघाति, पित्तातपपीडितयो रौक्ष्यात्, बालवृद्धयोरसंपूर्णक्षीणधातुत्वेन विषवेगासहत्वात् । बुभुक्षितेष्विति वातपित्तवृद्ध्योष्णदेहत्वात् । क्षीणक्षत इति । क्षतक्षीणे बहुलवातदुष्टेः, मेहिनि दोषत्रयकोपात्, कुष्ठजुष्टे रक्तादिदोषात्, रूक्षे वातकोपात्,

१ अस्यायमेव पाठः । २ एतादृशपाठाभिप्रायेण ।

शस्त्रक्षते यस्य न रक्तमेति राज्यो लताभिश्च न संभवन्ति ॥
शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्जयेत्तम् ॥ २१ ॥
जिह्मं मुखं यस्य च केशशातो नासावसादश्च सकण्ठभङ्गः ॥
कृष्णः सरक्तः श्वयथुश्च दंशे हन्वोः स्थिरत्वं च विवर्जनीयः२२॥
वर्तिर्घना यस्य निरेति वक्त्राद्रक्तं स्रवेदूर्ध्वमधश्च यस्य ॥
दंष्ट्रानिपाताश्चतुरश्च यस्य तं चापि वैद्यः परिवर्जयेच्च ॥ २३ ॥
उन्मत्तमत्यर्थमुपद्रुतं वा हीनस्वरं वाप्यथ वा विवर्णम् ॥
सारिष्टमत्यर्थमवेगिनं च ज्ञात्वा नरं कर्म न तत्र कुर्यात् ॥ २४ ॥

मधुकोशव्याख्या ।

त्क्षिप्तदोषत्वात्, एषु विषमाशुघातीति ॥ २० ॥– इदानीं सर्वथा वर्जनीयमाह–शस्त्रक्षत इत्यादि । राज्यो लताभिश्चेति राज्यो लेखाः लताभिस्ताडनान्न भवन्ति । तदुक्तमलम्बायने,–"नैति रक्तं क्षतायस्य लताघातैर्न राजिकाः । न लोमहर्षः शीताद्भिर्वर्जयेत्तं विषार्दितम्"–इति॥२१॥जिह्मं वक्रं,स्तब्धमिति कार्तिकः।केशशात इति कर्षणात् केशोत्पाटः ।कण्ठभङ्गो ग्रीवाया अधारणम्। हन्वोः स्थिरत्वं हनुद्वयस्य लग्नत्वम्॥२२॥ वर्तिर्घनेति लालारूपा वर्तिः । रक्तं स्रवेदूर्ध्वमधश्च यस्येति मुखनासागुदादिभ्यः शोणितस्रावः दंष्ट्रानिपाताश्चतुरश्चेति चत्वार इति प्राप्ते चतुर इति निर्देशःअमागमविधेरनित्यत्वात् यथा–अग्रतश्चतुरो वेदा इत्यादि॥२३॥उन्मत्तमत्यर्थमुपद्रुतमिति उन्मत्तमत्यर्थमुन्मादवन्तम्, उपद्रुतं ज्वरातिसारादिभिरत्यर्थमुपद्रुतम् । हीनस्वरं वक्तुमसमर्थम् । विवर्णं कृष्णवर्णम् । सारिष्टं नासाभङ्गादियुक्तम् । अवेगिनं गमनादिवेगरहितम्,

आतङ्कदर्पणव्याख्या ।

अबले वेगासहत्वात्, गर्भवतीषु गर्भेणोत्क्षिप्तदोषत्वात् । एषु विषमाशुघातीति ॥ २० ॥ सर्वथा वर्जनीयमाह–शस्त्रेति । राज्यो लेखाः लताभिताडितेऽङ्गे न संभवंति नोच्छलंति । अत्रालम्बायनेप्युक्तम्–"नैति रक्तं क्षतायस्य लताघाते न राजिकाः । न लोमहर्षः शीताद्भिर्वर्जयेत्तं विषार्दितम् ॥" इति ॥ २१ ॥ अपरं वर्ज्यमाह–जिह्ममिति । जिह्मं वक्रम्, स्तब्धमिति कार्तिकः । केशशातः घर्षणात्केशोत्पाटः, कंठभंगेन ग्रीवाया अधारम्, हन्वोः स्थिरत्वं हनुद्वयस्य लग्नत्वम् ॥ २२ ॥ अपरमपि वर्ज्यमाह–वर्त्तिरिति । लालारूपा वर्तिर्यस्य मुखान्निर्गच्छति । रक्तं स्रवेदूर्ध्वमधश्चेति मुखनासागुदमेढ्रादिभ्यः शोणितस्रावः ॥ दंष्ट्रानिपाताश्चतुर इति । चत्वार इति प्राप्तेऽनित्यत्वादागमाभावः ॥ २३ ॥ अन्यमपि वर्ज्यमाह–उन्मत्तमिति । उन्मत्तम्, उन्मादवन्तम्, ज्वरातिसारादिभिरत्यर्थमुपद्रुतं च हीनस्वरं वक्तुमसमर्थम, विवर्णं कृष्ण-

**जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा ॥**
**स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति ॥ २५ ॥**
**वीर्याल्पभावान्न निपातयेत्तत् कफान्वितं वर्षगणानुबन्धि ॥**
**तेनार्दितो भिन्नपुरीषवर्णो वैगन्ध्यवैरस्ययुतः पिपासी ॥ २६ ॥**
**मूर्च्छां भ्रमं गद्गदवाग्वमिं च विचेष्टमानोऽरतिमाप्नुयाद्वा ॥**
**आमाशयस्थे कफवातरोगी पक्वाशयस्थेऽनिलपित्तरोगी ॥**
**भवेत्समुद्ध्वस्तशिरोरुहाङ्गो विलूनपक्षस्तु यथा विहङ्गः ॥ २७ ॥**

मधुकोशव्याख्या ।

विण्मूत्रवेगादिरहितमिति कार्तिकः ॥ २४ ॥ स्थावरजङ्गमविषमेव जीर्णत्वादिभिर्विशेषैर्दूषीविषसंज्ञां लभते; तदाह—जीर्णमित्यादि । विषघ्नौषधिभिरिति अगदादिभिः । दावाग्निवातातपशोषितं वेति दावाग्निर्वनाग्निः । स्वभावतो वा गुणविप्रहीनमिति स्वभावादेव किमपि विषं व्यवायिविकासिप्रभृतिषु दशसु गणेषु मध्ये एकद्वित्रिगुणहीनं यदि भवति तदा दूषीविषतामुपैति॥२५॥गुणहीनतामेव कार्येण दर्शयति—वीर्याल्पभावादित्यादि । न निपातयेदिति न मारयेत् सद्यश्चिरेण वा । कफान्वितमिति कफान्वितं सत् मन्दीभूतौष्ण्यादिगुणं न मारयेत्।वर्षगणानुबन्धीति अपाकाच्चिरस्थायि। तेनार्दितो भिन्नपुरीषवर्ण इति तेन दूषीविषेणार्दितो, भिन्नशब्दोऽत्र पुरीषवर्णाभ्यां प्रत्येकमभिसंबध्यते । भिन्नवर्णो विवर्णः । वैगन्ध्यवैरस्ययुत इति विरुद्धगन्धमुखवैरस्य युक्तः । विचेष्टमानो विरुद्धां चेष्टां कुर्वन्, अरतिमसुखं लभते ॥२६॥ स्थानविशेषेण विशिष्टलिङ्गमाह—आमाशयस्थ इत्यादि । कफावृतत्वेन वातकोपः आमा-

आतङ्कदर्पणव्याख्या ।

वर्णम्, सारिष्टं नासाभंगादियुक्तम्, अवेगिनं प्रथमादिवेगरहितम्, विण्मूत्रम् वेगरहितमिति कार्त्तिकः ॥ २४ ॥ स्थावरजंगमविषमेव जीर्णत्वादिभिः कारणैर्दूषीविषसंज्ञां लभते । तदाह—जीर्णमिति । विषघ्नौषधिभिरिति अगदादिभिर्हतवीर्यम्, दावाग्निवातातपशोषितं चेति दावाग्निर्वनाग्निः । स्वभावत इति स्वभावादेव किमपि विकाशिव्यवायिप्रभृतिषु दशसु गुणेषु मध्ये एकद्वित्र्यादिगुणहीनं सद् दूषीविषतां प्राप्नोति ॥ २५ ॥ तामेव गुणहीनतां कार्येण दर्शयति—वीर्येति । तद्वीर्यस्याल्पत्वात् । न निपातयेत् न मारयेत्, सद्यश्चिरेण वा । कफान्वितं सन्मंदीभूतौष्ण्यादिगुणात् न मारयति वर्षगणानुबन्धि अपाकाच्चिरस्थायि । तेन गररूपेण ये दोषा भवंति, तान्दर्शयन्नाह—तेनेति ।तेन गररूपेण विषेण पीडितो भिन्नपुरीषवर्णादिकः स्यात्, भिन्नशब्दोऽत्र पुरीषवर्णाभ्यां प्रत्येकं संबध्यते । भिन्नवर्णो विवर्णः । विगंधवैरस्ययुत इति, विरुद्धगंधमुखवैरस्ययुक्तः, विचेष्टमान इति विरुद्धां चेष्टां कुर्वन् अरतिम् असुखं लभते ॥ २६ ॥ स्थानविशेषेण विशिष्टलिंगमाह—आमाशयस्थ इति । कफावृतत्वेन वातकोपः आमाशये, तेन कफवातरोगी—

१ एवमवास्य पाठः ।

स्थितं रसादिष्वथ वा यथोक्तान् करोति धातुप्रभवान् विकारान्॥
कोपं च शीतानिलदुर्दिनेषु यात्याशु पूर्वं शृणु तस्य रूपम् ॥२८॥
निद्रागुरुत्वं च विजृम्भणं च विश्लेषहर्षावथवाङ्गमर्दम् ॥
ततः करोत्यन्नमदाविपाकावरोचकं मण्डलकोठजन्म ॥ २९ ॥

मधुकोशव्याख्या ।

शये, तेन कफवातरोगीत्युक्तम्। अनिलपित्तरोगीति पक्काशये दुष्टवातसंबन्धेन प्रत्यासन्नाशयस्य पित्तस्य कोपः । भवेत् समुद्ध्वस्तशिरोरुहाङ्ग इति अत्राङ्गशब्दात् परं रुहशब्दो द्रष्टव्यः, तेनायमर्थः—समुद्ध्वस्तशिरोरुहाङ्गरुहः, शिरोरुहः केशः, अङ्गरुहं लोम, तदुक्तमलम्बायने—"सीदन्ति केशा लोमानि तस्मिन् पक्काशयं गते" इत्यादि। विलूनपक्षस्तु यथा विहङ्ग इति मुण्डितपक्षशकुनिसदृशः. एतत् पक्काशयगतस्यैव लिङ्गम् ॥ २७ ॥ तस्य रसादिधातुगतस्य लिङ्गमाह—स्थितं रसादिष्वित्यादि। यथोक्तान् करोति धातुप्रभवान् विकारानिति सुश्रुते व्याधिसमुद्देशीयाध्यायोक्तानन्नाश्रद्धादीन् करोति । कोपं च शीतानिलदुर्दिनेषु यातीति कफसंबन्धात् शीतादौ काले कोपं याति। पूर्वं शृणु तस्य रूपमिति पूर्वरूपं शृण्वित्यर्थः ॥ २८ ॥ तदेवाह निद्रेत्यादि। विश्लेषहर्षाविति विश्लेषो गात्रस्य शैथिल्यं, हर्षो रोमहर्षः. एतानि वातकफजानि लिङ्गानि। तत इति पूर्वरूपादनन्तरम्। अन्नमदाविपाकाविति अन्नमदः अन्ने भुक्ते मदो हर्षः अन्नमदः, कार्तिकस्त्वन्नविक्षेपणमन्नमदमाह, अन्नमदो रसा-

आतङ्कदर्पणव्याख्या ।

त्युक्तम्। अनिलपित्तरोगीति पक्काशये दुष्टवातसंबंधेन प्रत्यासन्नाशयस्य पित्तस्य कोपः ॥ भवेत्समुद्ध्वस्तशिरोरुहांग इति। अत्रांगशब्दात् परं रुहशब्दो द्रष्टव्यः। तेनायमर्थः—समुद्ध्वस्तशिरोरुहांगरुहः। शिरोरुहः केशः, अङ्गरुहं लोमेत्यर्थः। तदुक्तमलंबायने—"सीदंति केशलोमानि तस्मिन् पक्काशयं गते" इति। विलूनपक्षस्तु यथाविहंग इति मुंडितपक्षशकुनिरिव। एतेन पक्काशयगतस्यैव लिंगम् ॥ २७ ॥ तस्य रसादिधातुगतस्य लिंगमाह—स्थितमिति। यथोक्तान् सुश्रुते व्याधिसमुद्देशीयोक्तान् अन्नाऽश्रद्धादीन् करोति। कोपं च शीतेत्यादि कफसंबंधात् शीतादौ काले शीघ्रं कोपं याति। पूर्वं शृणु तस्य रूपमिति पूर्वरूपं शृण्वित्यर्थः ॥ २८ ॥ तदेवाह—निद्रेति। विश्लेषो गात्रशैथिल्यम्, हर्षो रोमहर्षः, अंगमर्दो वेदनाविशेष एतानिं वातकफजानि। तत इति पूर्वरूपादनंतरं अन्नमदाविपाकाविति अन्ने भुक्ते मदो हर्षोन्नमदः। कार्तिकस्तु अन्नविक्षेपणमन्नमदमाह—अन्नमदो रसाजीर्णमिति गदाधरः। अविपाकोऽन्नस्य पाका-

मांसक्षयं पादकरप्रशोथं मूर्च्छां तथा छर्दिमथातिसारम् ॥
दूषीविषं श्वासतृषाज्वरांश्च कुर्यात्प्रवृद्धिं जठरस्य चापि ॥ ३० ॥
उन्मादमन्यज्जनयेत्तथान्यदानाहमन्यत्क्षपयेच्च शुक्रम् ॥
गाद्गद्यमन्यज्जनयेच्च कुष्ठं तांस्तान्विकारांश्च बहुप्रकारान् ॥ ३१ ॥
दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः ॥
यस्मात्संदूषयेद्धातूंस्तस्माद्दूषीविषं स्मृतम् ॥ ३२ ॥
साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम् ॥
दूषीविषमसाध्यं स्यात्क्षीणस्याहितसेविनः ॥ ३३ ॥

मधुकोशव्याख्या ।

जीर्णमिति गदाधरः। अविपाकोऽन्नस्यापाकः ॥ २९ ॥ पादकरप्रशोथमिति पादे करे च प्रकृष्टं शोथं करोति । मूर्च्छां तथा छर्दिमथातिसारमित्यस्य स्थाने प्रलेपकं छर्दिमित्यादि पाठान्तरे, प्रलेपकं स्वेदप्रवृत्त्या पिच्छिलं गात्रं, ज्वरविशेषं वा ॥ ३० ॥ तदेव नानाप्रकारं यद्यत्करोति तत्तदाह—उन्मादमन्यदित्यादि । क्षपयेच्च शुक्रमिति षाण्ढ्यं करोतीत्यर्थः । तांस्तानिति विसर्पविस्फोटकादीन् ॥ ३१ ॥ दूषीविषस्य निरुक्तिमाह—दूषितमित्यादि । देशकालान्नदिवास्वप्नैरिति देशः प्रचुरानिलशीतवृष्टिरानूपादिः, कालः शीतानिलदुर्दिनादिः, अन्नं यवतिलकुलत्थादि, तैर्दूषितं कोपितम्, अभीक्ष्णशः पुनःपुनर्धातुदूषकत्वेन दूषीविषम् । कृत्रिमं विषं द्विविधम्; एकं सविषाविषसंयोगकृतं कृत्रिमसंज्ञम्, अपरं निर्विषद्रव्यकृतं गरसंज्ञम् । यदाह वृद्धकाश्यपः—"संयोगजं च द्विविधं तृतीयं विषमुच्यते । गरः स्याद्विषं तत्र सविषं कृत्रिमं मतम्" इति । अत एव रसायने चरकः—"दंष्ट्रा-

आतङ्कदर्पणव्याख्या ।

भावः ॥ २९ ॥ पादकरप्रशोथमिति । पादेकरे च प्रकृष्टं शोफं करोति । मूर्च्छां तथा छर्दिमथातिसारमित्यस्य स्थाने "प्रलेपकं छर्दिमथातिसारम्" इति पाठान्तरम् । तत्र प्रलेपकं पिच्छिलस्वेदप्रवृत्त्या गात्रलिप्तिं, ज्वरविशेषं वा करोति ॥ ३० ॥ तदेव नानाप्रकारं यद्यत्करोति तत्तदाह—उन्मादमिति । गाद्गद्यं गद्गदवाक्यताम् । तांस्तानिति विस्फोटकादीन् ॥ ३१ ॥ दूषीविषलक्षणमाह—दूषितमिति । देशः प्रचुरानिलशीतवर्षातपः, कालः शीतानिलदुर्दिनादिः, अन्नं यवतिलकुलत्थादि अन्नस्योपलक्षणत्वाद्व्यवायव्यायामक्रोधादयोऽपि ग्राह्याः । तैर्दूषितं कोपितम्, अभीक्ष्णशः पुनःपुनः धातुदूषकत्वेन दूषीविषम् ॥ ३२ ॥ इदानीं साध्ययाप्यप्रत्याख्येयं च दर्शयन्नाह—साध्यमिति । सुगमम् । कृत्रिमविषं द्विविधम् । एकं सविषाऽविषसंयोगकृतं कृत्रिमविषम्, अपरं निर्विषद्रव्यकृतं गरसंज्ञम् । यदाह—वृद्धकाश्यपः—"संयोगजं च द्विविधं तृतीयं विषमुच्यते ।

सौभाग्यार्थं स्त्रियः स्वेदं रजो नानाङ्गजान्मलान् ॥
शत्रुप्रयुक्तांश्च गरान्प्रयच्छन्त्यन्नमिश्रितान् ॥ ३४ ॥
तैः स्यात्पाण्डुः कृशोऽल्पाग्निर्गरश्चास्योपजायते ॥
मर्मप्रधमनाध्मानं हस्तयोः शोथलक्षणम् ॥ ३५ ॥
जठरं ग्रहणीदोषो यक्ष्मा गुल्मः क्षयो ज्वरः ॥
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥ ३६ ॥
यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदबिन्दवः ॥
तस्माल्लूतास्तु भाष्यन्ते संख्यया ताश्च षोडश ॥ ३७ ॥

मधुकोशव्याख्या ।

विषे मूलविषे सगरे कृत्रिमे विषे" इति ॥ ३२ ॥ ३३ ॥ एतद्वयमपि दर्शयितुमाह— सौभाग्यार्थमित्यादि । स्त्रियः सौभाग्यार्थं शत्रुप्रयुक्त्या वा सविषजन्तूनां स्वेदं, रजश्चूर्णं, नानाङ्गजान् नानागरकरान् मलान्, अन्नादौ ददति ॥ ३४ ॥ तैरिति स्वेदरजःप्रभृतिभिः । गरश्चास्येति अपाकाज्जठरावस्थितस्वेदादिरेव गरः; अत एव तस्योदरामयः, किंवा वक्ष्यमाणमर्मप्रधमनादिलक्षणो व्याधिर्गरः । मर्मप्रधमनं मर्मव्यथा । शोथलक्षणमिति शोथ एव लक्षणम् ॥ ३५ ॥ जठरमुदरम् । अन्यस्य व्याधेर्लिङ्गानि दर्शयेदिति अन्यस्य विस्फोटादेर्लिङ्गं दर्शयति ॥ ३६ ॥ संप्रति लूतानां घोरविषत्वप्रतिपादनार्थमैतिह्यमाह—यस्माल्लूनं तृणमित्यादि । इति किल श्रुतिः—'विश्वामित्रो नरपतिः कामधेनोर्बलात्कारपरिग्रहेण मुनिसत्तमं वशिष्ठं कोपयां-

आतङ्कदर्पणव्याख्या ।

गरः स्यादविषं तत्र सविषं कृत्रिमं मतम्" इति । अत एव रसायने चरकः—"दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे" इति । आत्मवतः पथ्याशिनः । क्षीणस्य क्षीणधातोः ॥ ३३ ॥ एतद्द्वयमपि दर्शयितुमाह—सौभाग्यार्थमिति । स्त्रियः सौभाग्यार्थं शत्रुप्रयुक्त्या वा सविषजंतूनां स्वेदम्, रजः चूर्णम्, नानांगजान्मलान् अन्नादौ ददति ॥ ३४ ॥ तैरिति स्वेदरजःप्रभृतिभिः । गर एवास्योपजायत इति । अपाकात् जठरावस्थितस्वेदादिरेव गरः, अत एव तस्योदरामयः । मर्मप्रधमनं मर्मव्याधि । शोथलक्षणमिति । शोथ एव लक्षणम् ॥ ३५ ॥ जठरम् उदरम्, अन्यस्य व्याधे रक्तपित्तादिः ॥ ३६ ॥ संप्रति लूतानां घोरविषत्वप्रतिपादनार्थमैतिह्यमाह—यस्मादिति । यस्मात् कारणात् मुनेः प्रस्वेदबिंदवो लूनं तृणं प्राप्ताः, तस्माल्लूता भाष्यंते, ता लूताः संख्यया षोडश भवंति । इति किल श्रुतिः । 'यत्कामधेनोर्बलात्परिग्रहेण विश्वामित्रो नृपतिर्वशिष्ठं कोपयामास, तेन च कुपितेनांतर्ज्वलनविरलकोपानलज्वलितं कुकुलयुगलमिव बहलपाटलं

ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च ॥
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ॥ ३८ ॥
पिडका विविधाकारा मण्डलानि महान्ति च ॥
शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा ॥
सामान्यं सर्वलूतानामेतद्दंशस्य लक्षणम् ॥ ३९ ॥

मधुकोशव्याख्या ।

चकार, कुपितेन तेनान्तर्ज्वलनविरलकोपानलज्वलितं कुकुलयुगलमिव बहलपाटलं लोचनद्वयं वहता भगवान् रविरवलोकितः । ततस्तस्य भ्रूकुटिलोद्भवो भयङ्करो ललाटतटप्रस्यन्दी स्वेदबिन्दूत्करः प्रचण्डतरः प्रत्यासन्नलूनतृणे धेन्वर्थमुपात्ते निपतितो लूताऽभूत् इति । तास्तु षोडश । यदाह सुश्रुतः—"त्रिमण्डला तथा श्वेता कपिला पीतिका तथा । लालामूत्रविषा रक्ता कठिना चाष्टमी स्मृता । सौवर्णिका लाजवर्णा जालिन्येकपदी तथा । कृष्णाग्निवक्त्रा काण्डा च मालागुण्यष्टमी मता" इति ॥३७॥ तासां सामान्यलक्षणमाह—ताभिर्दष्ट इत्यादि । दंशकोथ इति दंशदेशे पूतिभाव इत्यर्थः । प्रवृत्तिः क्षतजस्येति रक्तस्य प्रवर्तनम् ॥ ३८ ॥ सर्वलूतानामिति असाध्याष्टविधसौवर्णिकादिलूतानामेव सामान्यलक्षणं ज्ञेयम् । यतस्त्रिमण्डलानां कृच्छ्रसाध्यत्वं, ताभिर्दष्टे शिरोदुःखमित्यादिना सामान्यलक्षणमभिधाय सौवर्णिकाद्यनन्तरमेतत् पठितवान् सुश्रुतः । माधवकरेण तु षोडशानां लूतानां सामान्यलक्षणमेतदित्यभि-

आतङ्कदर्पणव्याख्या ।

नयनयुगलं वहता भगवान् रविरवलोकितः । ततस्तस्य भृकुटिभयंकरललाटतटप्रस्यंदिस्वेदबिंदूत्करः प्रचंडतरः प्रत्यासन्नलूनतृणे धेन्वर्थं संभृते निपतितो लूताभूत्' इति । तास्तु षोडश । यदाह सुश्रुताचार्यः—"त्रिमंडला तथा श्वेता कपिला पीतिका तथा । लालामूत्रविषा रक्ता कठिना चाष्टमी स्मृता ॥ सौवर्णिका लाजवर्णा जालिन्येणीपदी तथा । कृष्णा स्निग्धमुखी कांडा मालातुण्ड्यष्टमी तथा ॥ तासामष्टौ कृच्छ्रसाध्या वर्ज्यास्तावत्य एव तु" इति । मतांतरेणोत्पत्तिरन्यथा वर्ण्यते—"अन्ये वदंति भुक्तस्य दुष्टस्यान्नस्य मूर्च्छनात् । संभवंति विषस्फोटा ये लूताकीटलक्षणाः ॥ यथास्वं धारयंतस्ते लूताकीटास्तु कीर्तिताः" ॥ ३७ ॥ तासां सामान्यदंशलक्षणमाह—ताभिरिति । दंशकोथः दंशदेशे पूतिभाव इत्यर्थः । प्रवृत्तिः क्षतजस्येति रक्तप्रवर्त्तनम् ॥ ३८ ॥ सर्वलूतानामिति । असाध्याष्टविधसौवर्णिकादिलूतानामेतत्सामान्यलक्षणमिति प्रत्येतव्यम् । यतः कृच्छ्रसाध्यत्वम्, अष्टविधत्रिमंडलादिलूतानाम् । "ताभिर्दष्टे शिरोदुःखं कंडूर्दंशे च वेदना । भवंति च विशेषेण गदाः श्लैष्मिकवातिकाः ॥" इति । एवं सामान्यलक्षणमभिधाय सौवर्णिकाद्यनंतरमेतत्, ताभिर्दष्टे 'दंशकोथ' इत्यादिकं पठितवान् सुश्रुतः । माधवकरेण तु षोड-

दंशमध्ये तु यत्कृष्णं श्यावं वा जालकाचितम् ॥
ऊर्ध्वाकृति भृशं पाकक्लेदशोथज्वरान्वितम् ॥
दूषीविषाभिर्लूताभिस्तद्दष्टमिति निर्दिशेत् ॥ ४० ॥
शोथः श्वेता सिता रक्ता पीता वा पिडका ज्वरः ॥
प्राणान्तिकाश्च जायन्ते श्वासहिक्काशिरोग्रहाः ॥ ४१ ॥
आदंशाच्छोणितं पाण्डुमण्डलानि ज्वरोऽरुचिः ॥
लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्दिते ॥ ४२ ॥
मूर्च्छाङ्गशोथवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ॥
शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यमूषिकैः ॥ ४३ ॥

---

मधुकोशव्याख्या ।

प्रायेण पठितमिति ॥ ३९ ॥ त्रिमण्डलादयोऽष्टौ दूषीविषास्तासां लक्षणमाह- दंशमध्ये त्वित्यादि । ऊर्ध्वाकृतीति ऊर्ध्वगस्वरूपम्, अन्ये दग्धाकृतीति पठन्ति तद्व्यक्तार्थम् । दूषीविषाभिरिति कालान्तरप्रकोपिविषाभिः । दष्टमिति दंशनम् ॥ ४० ॥ सौवर्णिकादीनामष्टानामसाध्यानां प्राणहराणां सामान्यलक्षणमाह--शोथ इत्यादि । प्राणान्तिका इति प्राणहराः ॥ ४१ ॥ आखुदूषीविषलक्षणमाह—आदंशादित्यादि । आदंशात् शोणितमित्यत्र गलतीति शेषः । आखवः शुक्रविषाः । यदुक्तं—'शुक्रं पतति यत्रैषां शुक्रस्पृष्टाः स्पृशन्ति यत्' इति ॥ ४२ ॥ प्राणहरमूषिकलक्षणमाह—मूर्च्छेत्यादि । अङ्गशोथेति मूषिकाकार एवाङ्गशोथो ज्ञेयः । यदुक्तमन्यत्र—'चीयते

आतङ्कदर्पणव्याख्या ।

शल्लूतानां सामान्यलक्षणमेतदित्यभिप्रायेण पठितमिति ॥ ३९ ॥ त्रिमंडलादयोऽष्टौ दूषीविषास्तासां लक्षणमाह—दंशमध्य इति । ऊर्ध्वाकृति ऊर्ध्वगस्वरूपम् । दूषीविषाभिरिति कालांतरे प्रकोपिविषाभिः, दष्टमिति दंशनम् ॥ ४० ॥ सौवर्णिकादयोऽष्टावसाध्याः प्राणहराः, तासां लक्षणमाह— शोथ इति । अन्ये "श्वेता सिता रक्ता पित्तं च" इति पठंति । तत्र पिडका ज्वरश्च । प्राणांतिकाः प्राणहराः ॥ ४१ ॥ आखुदूषीविषलक्षणमाह—आदंशादिति । आदंशाच्छोणितमित्यत्र गलतीति शेषः ॥ ४२ ॥ प्राणंहरमूषकलक्षणमाह—मूर्च्छेति । अंगशोथेति । मूषिकाकारेऽङ्गशोफो बोद्धव्यः । यदुक्तमन्यत्र "चीयते ग्रंथिभिश्चांगमाखुशावकसन्निभैः" इति । मंदश्रुतिरिति । बाधिर्य्यम् । अन्ये "मंदारुचिः" इति पठंति । असाध्यमूषिकैः मारणा-

---

१ एवंपाठाभिप्रायेण ।

काष्र्ण्यं श्यावत्वमथ वा नानावर्णत्वमेव वा ॥
मोहोऽथ वर्चसो भेदो दष्टे स्यात्कृकलासकैः ॥ ४४ ॥
दहत्यग्निरिवादौ च भिनत्तीवोर्ध्वमाशु च ॥
वृश्चिकस्य विषं याति दंशे पश्चात्तु तिष्ठति ॥ ४५ ॥
दष्टोऽसाध्यश्च हृद्घ्राणरसनोपहतो नरः ॥
मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसून् ॥ ४६ ॥
विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि च ॥
लक्षणं कणभैर्दष्टे दंशश्चैवावसीदति ॥ ४७ ॥
हृष्टलोमोच्चिटिङ्गेन स्तब्धलिंगो भृशार्तिमान् ॥
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते ॥ ४८ ॥

---

मधुकोशव्याख्या ।

ग्रन्थिभिश्चाङ्गमाखुशावकसन्निभैः" इति ॥ ४३ ॥ कृकलासैः दष्टलिङ्गमाह—काष्र्ण्यमित्यादिना ॥ ४४ ॥ वृश्चिकविषलिङ्गं तद्विषावरसंख्यां चाह—दहत्यग्निरित्यादिना । स च आराविषः । दष्टोऽसाध्यश्च हृद्घ्राणरसनोपहतो नर इति यदा हृदयनासाजिह्वोपहतस्तदा तद्दष्टो न साध्यः । मांसैः पतद्भिरत्यर्थं वेदनार्तो जहात्यसूनित्यादिनाऽयमपरोऽसाध्यप्रकारः । दष्टोऽसाध्यैस्त्विति पाठपक्षेऽसाध्यैः सद्यःप्राणहरै वृश्चिकैर्दष्टो यथोक्तलिङ्गो भवति । चरकेऽप्ययमेव पाठः ॥ ॥४५॥ ४६ ॥ कणभदष्टलिङ्गमाह—विसर्प इत्यादिना । कणभः कीटविशेषः ॥४७॥

आतङ्कदर्पणव्याख्या ।

त्मकैः ॥ ४३ ॥ कृकलासदष्टलक्षणमाह—वर्च्चसो भेद इति । अतिसारः, कृकंटकः कृकलासः ॥ ४४ ॥ वृश्चिकदष्टलक्षणमाह—दहतीति । ऊर्ध्वम् उपरिष्टादाशु याति पश्चाच्च दंशे तिष्ठति ॥ ४५ ॥ वृश्चिकदष्टासाध्यलक्षणमाह—हृद्घ्राणरसनोपहतो नर इति । यदा हृदयनासाजिह्वोपघातो भवति, तदा दष्टो न साध्यः । मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसूनित्ययमपरोसाध्यः । "दष्टोऽसाध्यैः" इति पाठे असाध्यैः सद्यः प्राणहरैर्वृश्चिकैर्दष्टो यथोक्तलिंगो भवति॥४६॥ कणभदष्टलक्षणमाह—विसर्प इति । कणभः कीटविशेषः, विशीर्यते गलति ॥ ४७ ॥ उच्चिटिङ्गदष्टलिंगमाह—हृष्टरोमेति । उच्चिटिंगनाम्ना वृश्चिकेन दष्टः पुमान्, हृष्टरोमा कंटकितदेहः, स्तब्धमेहनः, तथा भृशार्तियुक्तः । शीतोदकेनेवांगानि सिक्तानि मन्यते । सुश्रुतस्तु उच्चिटिंगं कीट-

---

१ "स्याच्च कृकंटकैः" इति पाठा० । २ "दंशश्चैव विशीर्यते" इति पाठा० ।

एकदंष्ट्रार्दितः शूनः सरुजः पीतकः सतृड् ॥
छर्दिर्निद्रा च सविषैर्मण्डूकैर्दष्टलक्षणम् ॥ ४९ ॥
मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं रुजं तथा ॥
कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः ॥ ५० ॥
विदाहं श्वयथुं तोदं स्वेदं च गृहगोधिका ॥
दंशे स्वेदं रुजं दाहं कुर्याच्छतपदीविषम् ॥ ५१ ॥
कण्डूमान्मशकैरीषच्छोथः स्यान्मन्दवेदनः ॥
असाध्यकीटसदृशमसाध्यं मशकक्षतम् ॥ ५२ ॥
सद्यः प्रस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता ॥
पिडका मक्षिकादंशे तासां तु स्थगिकाऽसुहृत ॥ ५३ ॥

मधुकोशव्याख्या ।

उच्चिटिङ्गदष्टलिङ्गमाह—हृष्टरोमेत्यादि ॥ ४८ ॥ सविषमण्डूकदष्टलिङ्गमाह—एकदंष्ट्रार्दित इत्यादि । स्वभावादेकयां दंष्ट्रया कृतो दंशो भवति ॥ ४९ ॥ ॥ ५० ॥ गृहगोधिकादष्टलिङ्गमाह—विदाहमित्यादि । गृहगोधिका ज्येष्ठी, अन्ये तु भ्रामरकमाहुः । अत्र वक्ष्यमाणं कुर्यादिति संवन्धनीयं, तेन विदाहादीनां कर्मत्वम् ॥ शतपदीदष्टलक्षणमाह—कुर्याच्छतपदीविषमिति । शतपदी कारुण्डिका ॥ ५१ ॥ मशकदष्टलिङ्गमाह—कण्डूमानित्यादि । असाध्यकीटसदृशमिति असाध्यकीटैर्लूतादिभिः समलक्षणमिति । असाध्यं पञ्चसु मशकेषु मध्ये पर्वतीयमशकक्षतमसाध्यम् । यदाह सुश्रुतः—"पर्वतीयैस्तु कीटैश्च प्राणहरैस्तुल्यलक्षणम्"—इति ॥ ५२ ॥ मक्षिकादष्टलिङ्गमाह—तासां च स्थगिकाऽसुहृदिति काण्डारिकादिसुश्रुतोक्तषण्म-

आतङ्कदर्पणव्याख्या ।

विशेषमाह ॥ ४८ ॥ सविषमंडूकदष्टलक्षणमाह—एकेति । स्वभावादेकदंष्ट्रया कृतो दंशो भवति ॥ ४९ ॥ सविषमत्स्यलक्षणमाह—मत्स्या इति । सुगमम् ॥ सविषजलौकादष्टलक्षणमाह—कुर्युरिति । पूर्वक्रियासंबंधः ॥ ५० ॥ गृहगोधिकादष्टलक्षणमाह—विदाहमिति । गृहगोधिका ब्राह्मणीति लोके । अन्ये भ्रमरकमाहुः । अत्र 'वक्ष्यमाणं कुर्यात्' इति संबंधनीयम् । शतपदीविषं दंशे स्वेदं रुजं दाहं कुर्यात् । शतपदी कारंडी ॥ ५१ ॥ मशकदष्टलक्षणमाह—सुगमम् । असाध्यकीटसदृशमिति । असाध्यकीटैर्लूतादिभिः समवेदनमित्यर्थः । असाध्यं मशकक्षतमिति पंचसु मशकेषु पर्वतीयमशकक्षतमसाध्यम् । सुश्रुतेऽप्युक्तम्—"पर्वतीयैस्तु कीटकैः प्राणहरैस्तुल्यलक्षणम् ॥" इति ॥५२॥ मक्षिकादष्टलक्षणमाह—सद्य इति । तासां तु सुश्रुतोक्तानां मध्ये स्थगिकाख्या मक्षिका

चतुष्पद्भिर्द्विपद्भिश्च नखदन्तविषं च यत् ॥
पूयते पच्यते वापि स्रवति ज्वरयत्यपि ॥ ५४ ॥
श्वशृगालतरक्ष्वृक्षव्याघ्रादीनां यदानिलः ॥
श्लेष्मप्रदुष्टो मुष्णाति संज्ञां संज्ञावहाश्रितः ॥ १ ॥
तदा प्रस्नस्तलांगूलहनुस्कंधोतिलालवान् ।
अव्यक्तबधिरांधश्च सोऽन्योन्यमभिधावति ॥ २ ॥
प्रमूढोऽन्यतमस्त्वेषां खादन्विपरिधावति ॥
तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेण तु ॥ ३ ॥
सुप्तता जायते दंशे कृष्णं चातिस्रवत्यसृक् ॥
दिग्धविद्धस्य लिङ्गेन प्रायशश्चोपलक्षितः ॥ ४ ॥
येन चापि भवेद्दष्टस्तस्य चेष्टां रुतं नरः ॥
बहुशः प्रतिकुर्वाणः क्रियाहीनो विपश्यति ॥ ५ ॥

---

मधुकोशव्याख्या ।

क्षिकासु मध्ये स्थगिका प्राणहरेत्यर्थः ॥ ५३ ॥ चतुष्पाद्भिरिति चतुष्पदा व्याघ्रा-

आतङ्कदर्पणव्याख्या ।

असुहृत्, प्राणहर्तेत्यर्थः ॥ ५३ ॥ चतुष्पदद्विपददष्टलक्षणमाह—चतुष्पद्भिरिति । चतुष्पदा व्याघ्रादयः, द्विपदा मानववानरादयः, तैर्यत् नखक्षतं दंतक्षतं च, तच्छ्रूयते शोफयुक्तं भवति, तथा पच्यते, तथा स्रवति, तथा ज्वरयति ॥ ५४ ॥ अत्र केचित् विषाधिकारसामान्यात् श्वादीनामपि व्याघ्रादीनां भक्षकानां विषलक्षणं भणंति । तदाह—श्वेति । श्वा कुक्कुरः, शृगालः प्रसिद्धः ॥ तरक्षुर्मृगशत्रुर्व्याघ्रविशेषः, चरख इति लोके । ऋक्षो भल्लूकः अतिलोमशः, ऋच्छ इति लोके प्रसिद्धः । आदिशब्दाद् वृकचित्रादयो हिंस्राः पशवो ग्राह्याः । श्वादीनां यदा अनिलो वायुः। श्लेष्मप्रदुष्टः सन् संज्ञावहाश्रितः संज्ञावहस्रोतोगतः संज्ञां सम्यग्ज्ञानं मुष्णाति हरति । सम्यग्ज्ञानहरणाच्च हीदृशो भवतीत्याह—तदेत्यादि । प्रस्नस्तं स्थानच्युतम्, लांगूलं वालधिः, मेहनं च । प्रस्नस्तशब्दो लांगूलादिभिः प्रत्येकं संबंधनीयः । अतिलालावान् अतिशयेन लालास्रावयुक्तः । अव्यक्तबधिरोंधश्च न व्यक्तो बधिरोंधो वेत्यर्थः । अन्योन्यमभिधावति परस्परदंष्टुमभिधावति । हनुस्कंधस्थाने 'शूलस्कंधः' इति केचित्पठंति । "प्रमूढोऽन्यतमस्तेषां खादन्विपरिधावति" इत्यत्रोत्तरार्द्धं केचित्पठंति । एषां मध्येऽन्यतम एकतमः प्रमूढः सन् खादन् विशेषेण परिधावति । तेनेति दंष्ट्रिणा । सुप्तता बाधिर्यम्, उपलक्षितो युक्त इत्यर्थः ॥ १–४ ॥ इदानीं श्वादिदष्टस्य रिष्टमाह—येनेति । चेष्टां क्रियाम्, रुतं शब्दम्, बहुशः अनेकवारम्, प्रतिकुर्वाणः

---

१ ह्रस्वता छन्दोऽनुरोधेन । २ "पूयते" इत्यत्र "शूयते" इति पा० ।

दंष्ट्रिणा येन दष्टश्च तद्रूपं यस्तु पश्यति ॥
अप्सु चादर्शबिंबे वा तस्य तद्रिष्टमादिशेत् ॥ ६ ॥
त्रस्यत्यकस्माद्योऽभीक्ष्णं दृष्ट्वा स्पृष्ट्वापि वा जलम् ॥
जलत्रासं तु तं विद्याद्रिष्टं तदपि कीर्त्तितम् ॥ ७ ॥
अदृष्टो वा जलत्रासी न कथंचन सिद्ध्यति ॥
[1]सुप्तो वोत्थितो वापि स्वस्थस्त्रस्तो न सिद्ध्यति ॥ ८ ॥
प्रशान्तदोषं प्रकृतिस्थधातुमन्नाभिकामं सममूत्रविट्कम् ॥
प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम् ॥ ५५ ॥

मधुकोशव्याख्या ।

दयः । द्विपदा वनमानुषवानरादयः ॥ ५४ ॥ विषातुरः कीदृशो निर्विषो भवतीति दर्शयितुमाह–प्रशान्तदोषमित्यादि । अन्नाभिकाममित्यनेन प्रकृतिस्थाग्नितोक्ता ।

आतङ्कदर्पणव्याख्या ।

अनुकुर्वन् । क्रियाहीनः स्वकीयकायादिव्यापाररहितः ॥ ५ ॥ इदानीमपरमप्यरिष्टं निर्दिशन्नाह–दंष्ट्रिणेति । तद्दंष्ट्रिरूपदर्शनमरिष्टं मरणलक्षणम् ॥ ६ ॥ पुनरपरमरिष्टं निर्दिशन्नाह–त्रस्यतीति । अकस्माज्जलत्रासहेतुं विना, अपिशब्दात् श्रुत्वाऽपि जलत्रासरोगं जानीयात्तस्येति संबंधः । रिष्टमित्यादि तदपि जलत्रसनमरिष्टं मरणं कीर्त्तितम् । एतच्चारिष्टं दष्टस्य । अत्रार्थे तंत्रांतरे व्याधितेन श्वादिना दष्टस्य श्लेष्मा कुपितः स्रोतोवाहिनीर्धमनीरनुप्रविश्य संज्ञानाशमापादयति । ततो नरः स्पृष्ट्वा दृष्ट्वा श्रुत्वा च जलं त्रस्यति, तस्यापि तद्रिष्टं जानीयादिति ॥ ७ ॥ एवमदष्टस्यापि जलत्रासो रिष्टमेवेति दर्शयन्नाह–अदष्ट इति । अस्मिन्नर्थे तंत्रांतरे–"अदष्टस्यापि जंतोर्हि जलत्रासो भवेद्यदि । तस्यारिष्टं हि भिषजो ब्रुवते विषचिंतकाः ॥ जलं विना जलत्रासो जायते श्लेष्मसंचयात्" इति । अथ चोक्तम् । "बुद्धिस्थानं यदा श्लेष्मा केवलः प्रतिपद्यते । तदा बुद्धौ निरुद्धायां श्लेष्मणाधिष्ठितो नरः ॥ जाग्रत्सुप्तोऽथवात्मानं मज्जंतमिव मन्यते । सलिलात्त्रस्यति तदा जलत्रासं तु तं विदुः ॥ श्लेष्मघ्नं तत्र कर्त्तव्यं शोधनं शमनानि च । आहारस्य विधानेन यावत्स प्रकृतिं व्रजेत् ॥" इति । अयं जलत्रासः कुपितकफस्य भवतीति रिष्टं न भवति । अत एवाऽत्र चिकित्सोपदेशः । दष्टस्य तु रिष्टमेव, तथा स्वस्थस्य जाग्रतो वा जलमंतरेण त्रासो रिष्टमेवेति दर्शयन्नाह–प्रसुप्त इति । सुगमम् ॥ ८ ॥ अविषो नरः कीदृशो भवति तद्दर्शयितुमाह–प्रसन्नदोष मिति । प्रसन्नदोषं स्वभावस्थितवातादिकम् । प्रकृतिस्थधातुमिति । दधतीति धातवो रसादयो मलादयश्च । अन्नाभिकामं भोजनाभिलाषम्, अन्नाभिकाममित्यनेन प्रकृतिस्थाग्नितोक्ता । यदाह चरकः–"प्रायेणोपहताग्नित्वात्सपिच्छमतिसार्यते । प्राप्नोति चास्यवैरस्यं न चान्नम-

१ अस्यायमेवेष्टः पाठः ।

( दर्शनस्पर्शनप्रश्नैः परीक्षा त्रिविधामता ॥
वयोवर्णशरीराणामिन्द्रियाणां च दर्शनात् ॥ १ ॥ )

इति श्रीमाधवकरविरचिते माधवनिदाने विषनिदानं समाप्तम् ॥ ६९॥

# अथ विषयानुक्रमणिका ।

ज्वरोऽतिसारो ग्रहणी चार्शोऽजीर्णं विसूचिका ॥
अलसश्च विलम्बी च क्रिमिरुक्पाण्डुकामलाः ॥ १ ॥

मधुकोशव्याख्या ।

यदाह चरकः—"प्रायेणोपहताग्नित्वात् सापिच्छमतिसार्यते । म्रामाति चास्यवैरस्यं न चान्नमभिनन्दति"—इति। सममूत्रविट्कमिति अक्षीणानतिरिक्तमूत्रपुरीषम् । अन्य सममूलजिह्वमिति पठन्ति तदायमर्थः—सममविकृतं मूलं जिह्वा च यस्य स तथा, एतेन विषजुष्टा जिह्वा न रसबोधिनी भवति, मूलमपि जिह्वायाः विषप्रभावेण विकृतं भवतीत्यर्थः। जिह्वाग्रहणेनैव मूलग्रहणे सिद्धे, तस्य च रसग्रहणे अर्थगुणत्वप्रतिपादनार्थं पृथगुपादानम् । अनेन श्लोकेन समदोषः समाग्निश्चेत्यादिश्लोकस्य सकल एवार्थ उपबद्धः॥५९॥ इति श्रीकण्ठदत्तकृतायां मधुकोशव्याख्यायां विषनिदानं समाप्तम् ॥६९॥

सूक्तिमुक्तावलीग्रन्थे गुरुणा यन्न गुम्फितम् ॥
मया समस्तमग्रन्थि तद्गिरा शुद्धियुक्तया ॥ १ ॥

गुणनिधिगुरुबद्धे दाम्नि वाङ्मालतीनां परमपरिमलश्रीधाम्नि लब्धावलम्बम् ॥
स्फुरति वचनकुन्दं मन्दसौरभ्यलेशाद्वचनमपि मदीयं किंचिदेतत्कदाचित् ॥ २ ॥
इति श्रीविजयरक्षितश्रीकण्ठदत्ताभ्यां विरचिता मधुकोशव्याख्या समाप्ता ॥

आतङ्कदर्पणव्याख्या ।

भिनंदति ॥" इति । सममूत्रविट्कमिति अक्षीणानतिरिक्तमूत्रपुरीषम् । अन्ये "सममूलजिह्वम्" इति पठंति, तदायमर्थः—समम् अविकृतं मूलं जिह्वा च यस्य स तथा । एतेन विषदुष्टजिह्वा रसवेदिनी न भवति, मूलमपि जिह्वावत् विषप्रभावेण विकृतं भवतीति प्रतिपादयति । जिह्वाग्रहणेनैव मूलग्रहणे सिद्धे, तस्य रसग्रहणेऽर्थगुणत्वप्रतिपादनार्थं पृथगुपादानम् । अनेन श्लोकेन "समदोषः समाग्निश्च" इत्यादेः श्लोकस्य सकल एवार्थो निबद्धः ॥[1] वैद्योऽवगच्छेदविषं मनुष्यमिति । उक्तलक्षणः पुरुषोऽविषो भवति, विपरीतलक्षणस्तु विषातुरः । तथाहि—"प्रवृद्धदोषाऽप्रकृतिस्थधातुमनन्नकांक्षं शतमूलजिह्वम् । विरुद्धवर्णेंद्रियचित्तचेष्टं वैद्योऽवगच्छेत्सविषं मनुष्यम् ॥" इति । इदं सविषाविषलक्षणमिति ॥ ५९ ॥ इत्यातंकदर्पणे निदानव्याख्यायां विषनिदानम् ॥

अस्मिन् ग्रंथे रोगसंग्रहमाह—ज्वरातिसाराविति । ग्रहण्यश्चतस्रः । एकस्मिन्नजीर्णनिदाने विसू-

१ एवमेवास्येष्टः पाठः ।

हलीमकं रक्तपित्तं राजयक्ष्मा उरःक्षतम् ॥
कासो हिक्का सह श्वासैः स्वरभेदस्त्वरोचकः ॥ २ ॥
छर्दिस्तृष्णा च मूर्च्छाद्या रोगाः पानात्ययादयः ॥
दाहोन्मादावपस्मारः कथितोऽथानिलामयः ॥ ३ ॥
वातरक्तमूरुस्तम्भ आमवातोऽथ शूलरुक् ॥
पक्तिजं शूलमानाह उदावर्तोऽथ गुल्मरुक् ॥ ४ ॥
हृद्रोगो मूत्रकृच्छ्रं च मूत्राघातस्तथाश्मरी ॥
प्रमेहो मधुमेहश्च पिडकाश्च प्रमेहजाः ॥ ५ ॥
मेदस्तथोदरं शोथो वृद्धिश्च गलगण्डकः ॥
गण्डमालापचीग्रन्थिरर्बुदः श्लीपदं तथा ॥ ६ ॥
विद्रधिव्रणशोथौ च द्वौ व्रणौ भग्ननाडिके ॥
भगन्दरोपदंशौ च शूकदोषस्त्वगामयः ॥ ७ ॥
शीतपित्तमुददश्च कोठश्चैवाम्लपित्तकम् ॥
विसर्पश्च सविस्फोटः सरोमान्त्यो मसूरिकाः ॥ ८ ॥
क्षुद्रास्यकर्णनासाक्षिशिरःस्त्रीबालकामयाः ॥
विषं चेत्ययमुद्दिष्टो रुग्विनिश्चयसंग्रहः ॥ ९ ॥
सुभाषितं यत्र यदस्ति किंचित्तत्सर्वमेकीकृतमत्र यत्नात् ॥
विनिश्चये सर्वरुजां नराणां श्रीमाधवेनेन्दुकरात्मजेन ॥ १० ॥
यत्कृतं सुकृतं किंचित्कृत्वैवं रुग्विनिश्चयम् ॥
मुञ्चन्तु जन्तवस्तेन नित्यमातङ्कसन्ततिम् ॥ ११ ॥
इति श्रीमाधवकरविरचितं माधवनिदानं समाप्तम् ॥

आतंकदर्पणव्याख्या ।

चिकादिविलंबिका ज्ञेया ॥ [१] १ ॥ २ ॥ पानात्ययादयः पानविभ्रमादयः ॥ ३ ॥ ४ ॥ पिडकाः प्रमेहोक्ताः ॥ ५ ॥ मेदोदोषो रोगः ॥ ६ ॥ उपदंशो मेढ्ररोगः, त्वगामयः कुष्ठरोगः ॥ ७ ॥ रोमांतो मसूरिकाभेदः॥८॥आस्यं मुखम् । रुग्विनिश्चये अयम् उद्देशः ॥ ९॥ ग्रंथकारः स्वपक्षमाह— 'सुभाषितं यत्र यदस्ति किंचित्तत्सर्वमेकीकृतमत्र यत्नात् । विनिश्चये सर्वरुजां नराणां यन्माधवेनेंदुकरात्मजेन' ॥१०॥११॥ इति श्रीवैद्यवाचस्पतिविरचितातंकदर्पणाख्या माधवनिदानटीका समाप्ता ॥

---

१ एतादृशपाठाभिप्रायेण । २ अयमेवमेव पाटमङ्गीकरोति ।

# माधवनिदान परिशिष्टम् ।



## अथ शीतलानिदानम् ।

देव्या शीतलयाक्रान्ता मसूर्यः शीतला बहिः ॥
ज्वरयेयुर्यथा भूताधिष्ठितो विषमज्वरः ॥ १ ॥
ताश्च सप्तविधाः ख्यातास्तासां भेदान्प्रचक्ष्महे ॥
ज्वरपूर्वा बृहत्स्फोटैः शीतला बृहती भवेत् ॥ २ ॥
सप्ताहान्निःसरत्येव सप्ताहात्पूर्णतां व्रजेत् ॥
ततस्तृतीये सप्ताहे शुष्यति स्खलति स्वयम् ॥ ३ ॥
वातश्लेष्मसमुद्भूता कोद्रवा कोद्रवाकृतिः ॥
तां कश्चित्प्राह पक्वेति सा तु पाकं न गच्छति ॥ ४ ॥
जलशूकवदङ्गानि सा विध्यति विशेषतः ॥
सप्ताहाद्वा दशाहाद्वा शान्तिं याति विनौषधम् ॥ ५ ॥
ऊष्मणा तूष्मजारूपा सकण्डूः स्पर्शनप्रिया ॥
नाम्ना पाणिसहा ख्याता सप्ताहाच्छुष्यति स्वयम् ॥ ६ ॥
चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी ॥
नाम्ना सर्षपिका ज्ञेयाऽभ्यङ्गमत्र विवर्जयेत् ॥ ७ ॥
किञ्चिदूष्मनिमित्तेन जायते राजिकाकृतिः ॥
एषा भवति बालानां सुखं शुष्यति च स्वयम् ॥ ८ ॥
कोष्ठवज्जायते षष्ठी लोहितोत्ततमण्डला ॥
ज्वरपूर्वा व्यथायुक्ता ज्वरस्तिष्ठेद्दिनत्रयम् ॥ ९ ॥
स्फोटानां मेलनादेषा बहुस्फोटापि दृश्यते ॥
एकस्फोटे च कृष्णा च बोद्धव्या चर्मजाभिधा ॥ १० ॥

इति शीतलानिदानम् ।

---

१ राजिकाकृतिः ।

# अथ फिरङ्गरोगनिदानम् ।

फिरङ्गसंज्ञके देशे बाहुल्येनैव यद्भवेत् ॥
तस्मात्फिरङ्ग इत्युक्तो व्याधिर्व्याधिविशारदैः ॥ १ ॥
गन्धरोगः फिरङ्गोऽयं जायते देहिनां ध्रुवम् ॥
फिरङ्गिनोऽङ्गसंसर्गात्फिरङ्गिण्याः प्रसंगतः ॥ २ ॥
व्याधिरागन्तुजो ह्येष दोषाणामत्र संक्रमः ॥
भवेत्तल्लक्षयेत्तेषां लक्षणैर्भिषजांवरः ॥ ३ ॥
फिरङ्गस्त्रिविधो ज्ञेयो बाह्य आभ्यन्तरस्तथा ॥
बहिरन्तर्भवश्चापि तेषां लिङ्गानि च ब्रुवे ॥ ४ ॥
तत्र बाह्यः फिरङ्गः स्याद्विस्फोटसदृशोऽल्परुक् ॥
स्फुटितो व्रणवद्वैद्यैः सुखसाध्योऽपि सोप्यसौ मतः ॥ ५ ॥
सन्धिष्वाभ्यन्तरः स स्यादामवात इव व्यथाम् ॥
शोफं च जनयेदेष कष्टसाध्यो बुधैः स्मृतः ॥ ६ ॥
कार्श्यं बलक्षयो नासाभङ्गो वह्नेश्च मन्दता ॥
अस्थिशोषोऽस्थिवक्रत्वं फिरङ्गोपद्रवा अमी ॥ ७ ॥
बहिर्भवो भवेत्साध्यो नवीनो निरुपद्रवः ॥
आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः ॥
बहिरन्तर्भवश्चापि क्षीणस्योपद्रवैर्युतः ॥
व्याप्तो व्याधिरसाध्योऽयमित्याहुर्मुनयः पुरा ॥ ८ ॥

इति फिरङ्गनिदानं समाप्तम् ॥

---

# अथ क्लैब्यनिदानम् ।

बीजध्वजोपघाताभ्यां जरया शुक्रसंक्षयात् ॥
क्लैब्यं संपद्यते तस्य शृणु सामान्यलक्षणम् ॥ १ ॥
संकल्पप्रवणो नित्यं प्रियां वश्यामपि स्त्रियम् ॥
न याति लिङ्गशैथिल्यात्कदाचिद्याति वा यदि ॥ २ ॥

श्वासार्तः स्विन्नगात्रश्च मोघसंकल्पचेष्टितः ॥
म्लानशिश्नश्च निर्बीजः स्यादेतत्क्लैब्यलक्षणम् ॥
सामान्यलक्षणं ह्येतद्विस्तरेण प्रवक्ष्यते ॥ ३ ॥
शीतरूक्षाल्पसंक्लिष्टविरुद्धाजीर्णभोजनात् ॥
शोकचिन्ताभयत्रासात्स्त्रीणां चात्यर्थसेवनात् ॥ ४ ॥
अभिचारादविस्रम्भाद्रसादीनां च संक्षयात् ॥
वातादीनाञ्च वैषम्यात्तथैवानशनाच्छ्रमात् ॥ ५ ॥
नारीणामरसज्ञत्वात्पञ्चकर्मापचारतः ॥
बीजोपघाताद्भवति पण्डुवर्णः सुदुर्बलः ॥ ६ ॥
अल्पप्राणोऽल्पहर्षश्च प्रमदासु भवेन्नरः ॥
हृत्पाण्डुरोगतमककामलाश्रमपीडितः ॥ ७ ॥
छर्द्यतीसारशूलार्त्तः कासज्वरनिपीडितः ॥
बीजोपघातजं क्लैब्यं ध्वजभङ्गकृतं शृणु ॥ ८ ॥
अत्यम्ललवणक्षारविरुद्धाजीर्णभोजनात् ॥
अत्यम्बुपानाद्विषमात्पिष्टान्नगुरुभोजनात् ॥ ९ ॥
दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात् ॥
कन्यानां चैव गमनादयोनिगमनादपि ॥ १० ॥
दीर्घरोगां चिरोत्सृष्टां तथैव च रजस्वलाम् ॥
दुर्गंधां दुष्टयोनिं च तथैव च परिस्रुताम् ॥ ११ ॥
ईदृशीं प्रमदां मोहाद्यो गच्छेत्कामहर्षितः ॥
चतुष्पदाभिगमनाच्छेफसश्चाभिघाततः ॥ १२ ॥
अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात् ॥
काष्ठप्रहारनिष्पेषाच्छूकानाञ्चातिसेवनात् ॥
रेतसश्च प्रतीघाताद्ध्वजभङ्गः प्रवर्त्तते ॥ १३ ॥
भवन्ति यानि रूपाणि तस्य वक्ष्याम्यतः परम् ॥
श्वयथुर्वेदना मेढ्रे रागश्चैवोपलक्ष्यते ॥
स्फोटाश्च तीव्रा जायन्ते लिङ्गपाको भवत्यपि ॥ १४ ॥

मांसवृद्धिर्भवेच्चास्य व्रणाः क्षिप्रं भवन्त्यपि ॥
पुलकोदकसङ्काशः स्रावः श्यावारुणप्रभः ॥ १५ ॥
वलयीकुरुते चापि कठिनश्च परिग्रहः ॥
ज्वरस्तृष्णा भ्रमो मूर्च्छा छर्दिश्चास्योपजायते ॥ १६ ॥
रक्तं कृष्णं स्रवेच्चापि नीलमाविललोहितम् ॥
अग्निनेव च दग्धस्य तीव्रो दाहः सवेदनः ॥ १७ ॥
वस्तौ वृषणयोर्वापि सीवन्यां वंक्षणेषु च ॥
कदाचित्पिच्छिलो वापि पांडुस्रावश्च जायते ॥ १८ ॥
श्वयथुश्च भवेन्मन्दः स्तिमितोल्पपरिस्रवः ॥
चिराच्च पाकं व्रजते शीघ्रं वाथ प्रमुच्यते ॥ १९ ॥
जायंते कृमयश्चापि क्लिद्यते पूतिगन्धि च ॥
विशीर्यते मणिश्चास्य मेढ्रमुष्कावथापि च ॥ २० ॥
ध्वजभङ्गकृतं क्लैब्यमित्येतत्समुदाहृतम् ॥
एवं पञ्चविधं केचिद्ध्वजभङ्गं वदन्त्यपि ॥ २१ ॥
क्लैब्यं जरासम्भवं हि प्रवक्ष्याम्यथ तच्छृणु ॥
जघन्यमध्यप्रवरं वयस्त्रिविधमुच्यते ॥ २२ ॥
अथ प्रवयसां शुक्रं प्रायशः क्षीयते नृणाम् ॥
रसादीनां संक्षयाच्च तथैवावृष्यसेवनात् ॥ २३ ॥
बलवीर्येन्द्रियाणांच क्रमेणैव परिक्षयात् ॥
परिक्षयादायुषश्चाप्यनाहाराच्छ्रमात्क्लमात् ॥ २४ ॥
जरासम्भवजं क्लैब्यमित्येतैर्हेतुभिर्नृणाम् ॥
जायते तेन सोऽत्यर्थं क्षीणधातुः सुदुर्बलः ॥ २५ ॥
विवर्णो विह्वलो दीनः क्षिप्रं व्याधिमथाश्नुते ॥
एतज्जरासम्भवं हि चतुर्थं क्षयजं शृणु ॥ २६ ॥
अतिप्रचिन्तनाच्चैव शोकात्क्रोधाद्भयादपि ॥
ईर्ष्योत्कण्ठादथोद्वेगात्सदा विशति यो नरः ॥ २७ ॥

कृशो वा सेवते रूक्षमन्नपानमथौषधम् ॥
दुर्बलप्रकृतिश्चैव निराहारो भवेद्यदि ॥ २८ ॥
असात्म्यभोजनाच्चापि हृदये यो व्यवस्थितः ॥
रसः प्रधानधातुर्हि क्षीयेताशु नरस्ततः ॥ २९ ॥
रक्तादयश्च क्षीयन्ते धातवस्तस्य देहिनः ॥
शुक्रावसानास्तेभ्यो हि शुक्रं धामपरं मतम् ॥ ३० ॥
चेतसो वातिहर्षेण व्यवायं सेवते तु यः ॥
शुक्रं तु क्षीयते तस्य ततः प्राप्नोति स क्षयम् ॥ ३१ ॥
घोरं व्याधिमवाप्नोति मरणं वा स गच्छति ॥
शुक्रं तस्माद्विशेषेण रक्ष्यमारोग्यमिच्छता ॥
एतन्निदानलिङ्गाभ्यामुक्तं क्लैब्यं चतुर्विधम् ॥ ३२ ॥
केचित्क्लैब्ये त्वसाध्ये द्वे ध्वजभङ्गक्षयोद्भवे ॥
वदन्ति शेफसश्छेदाद्वृषणोत्पाटनेन वा ॥ ३३ ॥
मातापित्रोर्बीजदोषादशुभैश्चाकृतात्मनः ॥
गर्भस्थस्य यदा दोषाः प्राप्य रेतोवहाः शिराः ॥
शोषयन्त्याशु तन्नाशाद्रेतश्चाप्युपहन्यते ॥ ३४ ॥
तत्र सम्पूर्णसर्वाङ्गः स भवत्यपुमान्पुमान् ॥
एते त्वसाध्या व्याख्याताः सन्निपातसमुच्छ्रयात् ॥ ३५ ॥

इति क्लैब्यनिदानं समाप्तम् ॥

---

## अथ सोमरोगनिदानम् ।

स्त्रीणामतिप्रसङ्गेन शोकाच्चापि श्रमादपि ॥
अतिसारकयोगाद्वा गरयोगात्तथैव च ॥ १ ॥
आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च ॥
तस्यास्ताः प्रच्युताः स्थानान्मूत्रमार्गं व्रजन्ति हि ॥ २ ॥

---

१ चरके त्रिदोषजप्रदरेऽन्तर्भावितोऽयम् ।

प्रसन्ना विमलाः शीता निर्गन्धा नीरुजः सिताः ॥
स्रवन्ति चातिमात्रं ताः सा न शक्नोति दुर्बला ॥ ३ ॥
वेगं धारयितुं तासां न विन्दति सुखं क्वचित् ॥
शिरःशिथिलता तस्या मुखं तालु च शुष्यति ॥ ४ ॥
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः ॥
भक्ष्यभोज्यैश्चपेयैश्च न तृप्तिं लभते क्वचित् ॥ ५ ॥
सन्धारणाच्छरीरस्य ता आपः सोमसंज्ञिताः ॥
ततः सोमक्षयात्स्त्रीणां सोमरोग इति स्मृतः ॥ ६ ॥

इति सोमरोगनिदानं समाप्तम् ॥

## अथ स्नायुकनिदानम् ।

शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत् ॥
भिनत्ति तत्क्षते तत्र सोष्मस्नायुं विशोष्य च ॥ १ ॥
कुर्यात्तन्तुनिभं जीवं वृत्तं श्वेतद्युतिं बहिः ॥
शनैःशनैः क्षताद्याति छेदात्कोपमुपैति च ॥ २ ॥
तत्पाताच्छोथशान्तिः स्यात्पुनः स्थानान्तरे भवेत् ॥
स स्नायुकेति विख्यातः क्रियोक्ताऽत्र विसर्पवत् ॥ ३ ॥
बाह्वोर्यदि प्रमादेन त्रुटचते जंघयोरपि ॥
संकोचं खञ्जतां चैव च्छिन्नतन्तुः करोत्यसौ ॥ ४ ॥
वातेन श्यावरूक्षः सरुगथ दहनान्नीलपीतः सदाहो-
ऽथ श्वेतः श्लेष्मणा स्यात्पृथुगरिमयुतोऽथ द्विदोषो द्विलिङ्गी।
रक्तेनारक्तकान्तिः समधिकदहनोऽथाखिलैः सर्वलिङ्गो
रोगोऽसावष्टधेत्थं मुनिभिरभिहितः स्नायुकस्तन्तुकीटः॥५॥

इति स्नायुकनिदानं समाप्तम् ।

॥ समाप्तोऽयं ग्रन्थः ॥

पुस्तक मिलनेका ठिकाना—खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम्, प्रेस—मुंबई.

# क्रय्य पुस्तकें (वैद्यक-ग्रन्थाः)

| नाम. | की० रु० आ० |
|---|---|
| अष्टाङ्गहृदय-( वाग्भट ) मूल मोटा अक्षर वाग्भट विरचित .... .... .... .... .... .... | २-८ |
| अष्टाङ्गहृदय-( वाग्भट ) वाग्भटविरचित तथा पं० रविदत्तकृत भाषाटीकासहित और पं० ज्वालाप्रसादजी मिश्र संशोधित। जिसमें-सूत्रस्थान, शारीरस्थान, निदानस्थान, चिकित्सास्थान, कल्पस्थान, उत्तरस्थान, इत्यादिमें संपूर्ण रोगोंकी उत्पत्ति, निदान, लक्षण और क्वाथ, चूर्ण, रस, घी, तैल आदिसे अच्छी प्रकार चिकित्सा वर्णित है ... | ८-० |
| अमृतसागर-हिन्दीभाषामें-विना गुरु छोटे नगरोंमें दवाखाना करसक्ते हैं। इसमें सर्व रोगोंका वर्णन और यत्न लिखेगयेहैं। ग्लेज कागज | २-४ |
| " तथा रफ कागज .... .... ... .... ... ... ... | २-० |
| अर्कप्रकाश-( रावणकृत ) भाषाटीकासमेत। इसमें-नानाप्रकारके यन्त्रासे औषधियोंका अर्क खींचना और गुणवर्णन भलीप्रकार कियागयाहै. ग्लेज कागज. .... .... .... ... ... .... .... .... | १-० |
| " तथा रफ कागज ... .... .... ... ... ... ... | ०-१४ |
| अनुपानदर्पण-भाषाटीकासमेत। इसमें रस-धातु बनानेकी क्रिया और अनुपान देना तथा रोगोंपर औषधोंके क्या २ अनुष्ठान देना यह सब वर्णितहै. ... .... ... .... .... .... ... ... | ०-१२ |
| अनुभूतयोगावली-चिकित्साग्रन्थ। इसमें अनुभव कीहुई हरेक रोगकी उत्तम उत्तम औषाधियां वर्णितहैं .... .... .... ... ... | ०-७ |
| अजीर्णतिमिरभास्कर-भाषामें-चौबे क्याखूब रामप्रसादकृत ... .... | ०-६ |
| अजीर्णमञ्जरी-भाषाटीकासहित। इसमें किन २ चीजोंका अजीर्ण किन २ चीजोंके सेवनसे दूर होताहै इत्यादि विषय भलीप्रकार लिखेहैं ... | ०-४ |
| आयुर्वेदसुषेणसंहिता-भाषाटीकासहित। इसमें-सामान्य औषधीवर्ग, धान्यवर्ग, पयवर्ग इत्यादिकोंका गुण-दोष वर्णित है. .... .... | ०-१४ |
| आयुर्वेदचिन्तामणि-भाषाटीकासहित। पं० बलदेवप्रसाद मिश्र संगृहीत. | १-१२ |
| आरोग्यशिक्षा-पं मुरलीधरशर्मा राजवैद्यसंकलित ( भाषामें )... .... | ०-५ |
| आदिशास्त्र-भाषाटीकासमेत। इस ग्रन्थमें कन्या और पुरुषका लक्षण | |

| नाम. | की० रु० आ० |
|---|---|
| कौन २ प्रकारसे विवाह करना और रोगोंकी दवा: आदिका वर्णन भलीप्रकार है. .... .... ... .... ... .... .... .... | ०-१० |
| इलाजुल गुरबा-नूतन मथुराका छपाहै. .... ... ... ... ... | १-४ |
| औषधीक्रिया-मराठी भाषाटीकासमेत। "आर्यभिषक्पुस्तकावली" मेंसे यह स्वतन्त्र निकालागया है । आर्यवैद्यककी पद्धतिसे औषधोंको किसरीतिसे तैयार करना तथा कौनसे रोगपर किस दवाका उपयोग करना इत्यादि इस पुस्तकद्वारा सहजमें मालुम होसक्ताहै । मराठी-भाषा जाननेवालोंको परमोपयोगीहै ... ... ... ... .... | ०-४ |
| अंजननिदान-भाषाटीकासमेत । इसमें-सुगमतासे रोगोंका निदान लिखाहै. .... ... .... ... ... ... .... ... | ०-७ |
| कल्पपञ्चकप्रयोग-भाषाटीकासमेत। इस ग्रन्थमें चोपचीनिकल्प, रुद्र-वन्तीकल्प, रागदमनीयकल्प, शिवलिंगीकल्प, तथा पलाशकल्पा-त्मक भी हैं.. ... ... ... ... .... ... .... ... | ०-३ |
| करिकल्पलता-छन्दोबद्ध-हिन्दीभाषामें । केशवसिंहजी तअल्लुकेदार रचित। इसमें-हाथियोंके शुभाशुभ लक्षण व उनके रोगनाशार्थ अनेक औषधिविधान चित्रोंसमेत वर्णितहै .... ... .... .... | १-० |
| कामकुतूहल-भाषाटीकासमेत । इसमें-शरीरकी क्षीणतादिमें अपूर्व दवा-इयोंका संग्रहहै. .... .... ... .... ... .... ... | ०-४ |
| कामरत्न-योगेश्वर नित्यनाथप्रणीत और विद्यावारिधि पं० ज्वालाप्रसा-दजी मिश्रकृत भाषाटीकासमेत। इस ग्रन्थमें कामशास्त्रादि विषय और रोगोंकी औषधि तथा वाजीकरण औषधी अनुभूतहै और वशी-करणादि प्रयोगभी हैं..... .... ... .... ... .... .... | १-१२ |
| कालज्ञान-भाषाटीकासमेत। इस ग्रन्थका संपूर्ण अभ्यास करनेसे भूत, भविष्य, वर्तमानका ज्ञान होताहै. ... .... .... .... .... | ०-३ |
| क्याखूबडिबिया-( जर्राहीयोग ) चौबे क्याखूबजीकी बनाई हुई हमेसा पास रखने योग्यहै। देखनेसे मालूम होसकेगा ... .... ... | ०-४ |
| कुमारतन्त्र-रावणकृत मूल तथा भाषाटीकासमेत। इसमें-बालकोंकी दवाइयोंका अपूर्व वर्णन है. ... .... ... .... ... .... | ०-८ |
| कूटमुद्गर-सटीक-संस्कृत. .... .... ... ... .... ... | ०-३ |
| कूटमुद्गर-भाषाटीकासमेत ... .... .... .... .... .... | ०-३ |